# S'RĪ-BHĀṢYA

OR

# BRAHMASŪTRABHĀṢYA

OF

# BHAGAVAD-RĀMĀNUJA

WITH

1. S'rutaprakáśiká by Sudarśanabhaṭṭáraka
2. Bhávaprakáśiká by Raṅgarâmânujamuni
3. S'rutapradípiká by Sudarśanabhaṭṭâraka
4. Nayaprakáśiká by Méghanádáriśúri
5. Tattvaṭiká by Védántadéśika
6. Mūlabhávaprakáśiká by Raṅgarāmānujamuni
7. Nyáyasudarśana by Varadanáráyaṇabhaṭṭáraka
8. Adhikaraṇasárávali by Védántadéśika.
9. Adhikaraṇacintámaṇi by Varadanáthasúri
10. Viṣayavákyadípiká by Raṅgarámánujamuni

## Vol. 2.

EDITED BY

Pandit V. ANANTHACHARYA

Lecturer in Sanskrit, Pachaiappa's College, Madras. (Retired)

AND

Vyakaranasiromani V. KRISHNAMACHARYA

Sanskrit Pandit Presidency College, Madras.

PUBLISHED BY

Pandit A. R. KRISHNAMACHARIAR

*PROPRIETOR*

THE MADRAS SANSKRIT BOOK DEPOT

KRISHNAPURAM, KODAMBAKKAM, MADRAS.

श्रीः

श्रीभगवद्रामानुजमुनिविरचितं

श्रीभाष्यापरनामधेयं

# ब्रह्मसूत्रभाष्यम्

श्रुतप्रकाशिका, तद्व्याख्या भावप्रकाशिका, श्रुतप्रदीपिका, नयप्रकाशिका,
तत्त्वटीका, मूलभावप्रकाशिका, न्यायसुदर्शनम्, अधिकरण-
सारावलिः, तद्व्याख्या अधिकरणचिन्तामणिः,
विषयवाक्यदीपिका,
इत्येतैः समलंकृतम्

## द्वितीयं संपुटम्

ति. न. च. पण्डित वे. अनन्ताचार्येण
वे. कृष्णमाचार्येण च
परिशोध्य

कोडंपाक्कम्
कृष्णापुराग्रहारवास्तव्येन
ए. आर्. कृष्णमाचार्येण
प्रकाशितम्
१९३९

श्रीः

# श्रीभाष्यद्वितीयसंपुटस्योपक्रमनिवेदनम् ।

श्रीभगवद्रामानुजसिद्धान्तनिष्ठानामन्येषां च पण्डितप्रकाण्डानां पुरतः श्रीभाष्यमुद्रणस्यास्य द्वितीयं संपुटं सबहुमानमुपह्रियते । बहोः कालात्पूर्वमुपक्रान्तस्यास्य श्रीभाष्यमुद्रणस्य सर्वश्रेयस्साधारणैर्विविधैर्विघ्नैर्विहतिः सर्वथास्य श्रेयोरूपतां सत्यापयतीव । एतादृशे महति कार्ये निहितपदानामस्मादृशां सेयं लौकिकी वस्तुस्थितिर्महदपरिहार्यं मनःशल्यमावहति—ये पुनरास्तिकाः प्रभवो ग्रन्थमिमं मुद्र्यमाणं तदा तदा मूल्यप्रदानेन ग्रहीतुं कृतादराः तेषामबोधेनोपहतिः ये पुनर्विद्वांसो ग्रन्थस्यास्य पठनपाठनादिभिरस्माकं परिश्रमं सफलयितुमलंकर्माणाः तेषां रिक्ततयोपहतिरिति । अहो गुणानामेकत्र सामग्र्यप्रदर्शने विश्वसृजः पराङ्मुखत्वम् । एवं पदे पदे प्रत्यूहपरंपराभिः प्रतिहतमपीदं मुद्रणकार्यं सर्वत्राप्रतिहतप्रसरा भगवतः कमलाकान्तस्य करुणैव पुनरुत्थापयामासेतीदं भूतार्थकथनमेव । युक्तमेवैतत्—भगवतः सर्वेश्वरस्य स्वरूपरूपादिप्रतिपादने प्रदर्शितैदंपर्यस्यास्य ग्रन्थस्य प्रकाशने प्रत्यूहप्रशमनेनोपकुर्वतानेन परमात्मना आत्मन एवोपकृतं भवति । स्यादेतत् । यदा हि द्वितीयसंपुटस्यास्य संमुद्रणमस्माभिरारब्धं, तदा ग्राहकमहाशयानां सङ्ख्याह्रासान्निर्विण्णा वयं मध्येसमुद्रं भग्ननौका इव गतिमन्यामपश्यन्तो भगवत्या वैदेह्या वदनारविन्दान्निर्गलितायाः " एति जीवन्तम् " इत्यादिपुराणगाथाया भूतार्थतामुत्पश्यन्तः कार्यादस्मात् किंचिदिवोपरता अभूम । ततश्च—

" सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियेषु दारेषु ।
स्वामिनि शक्ते मनुजो निवेद्य खेदं सुखी भवति ॥ "

इति प्राचीनोक्तिमनुसृत्य मनःखेदप्रतीकारचिकीर्षया कतिपयमहाशयमहापुरुषसकाशे विषयमिमं यदा प्रास्ताविष्म, तदा तत्रभवान् सुगृहीतनामधेयः अत्युदारचेताः **यन् . टि. शामण्णाख्यः** प्रख्यातप्रभुवर्यः " न भेतव्यम् " " अनिर्वेदः श्रियो मूलम् " इति प्रोत्साह्य महति कार्येऽस्मिन् पर्याप्तमुपकारं करोमीति प्रतिज्ञाय सद्य एव रौप्याणां पञ्चविंशत्यधिकं शतद्वयं (Rs. 225/—) प्रादात् । तस्य महाशयस्यैवंविधेनौदार्येण महामनस्कतया च मुद्रणकार्यमिदं विसृष्टकल्पमप्यस्माभिः पुनर्गृहीतमभूत् । अनेनैवोपकार-

विशेषेण वयमिदं द्वितीयसंपुटमभिरूपाणां पण्डितानां नयनासेचनकमुपहारीकर्तुं प्राभवाम। नानाविधकुदृष्टिकुहनामुखे पततः परब्रह्मणः पाणिप्रदानप्रवणः भगवान् श्रीभाष्यकारः सुगृहीतनामधेयस्यास्य महाशयस्य **यन्. टि. शामण्णा**ख्यस्य निरवधिकमायुरारोग्यैश्वर्यादिकमनुगृह्य, श्रीभाष्यस्थान् दुरूहानर्थानप्यनायासमवबोधयत्विति संप्रार्थयामहेतमाम्।

संपुटेऽस्मिन् महापूर्वपक्षमारभ्य महासिद्धान्ते स्फोटवादप्रतिक्षेपान्तं श्रीभाष्यं तत्प्रकरणीयव्याख्यानैः सह संमुद्रितमस्ति। **मूलभावप्रकाशिका** तु संविदात्मत्वपक्षनिरसनपराः श्रीभाष्यपङ्क्तीर्व्याख्यायोपरता। उपरितनभागव्याख्या तु महता प्रयत्नेन बहुषु स्थलेष्वन्विष्यमाणापि नाद्यावधि चक्षुषोः कर्णयोर्वा गोचरीभवति। अहो कालस्यानुचितकारिता—यद् रसभरभरितान् विद्वत्कुलजीवातुभूतानेतादृशानपि ग्रन्थानन्तर्धापयति। तत्त्वटीकाप्यत्रान्तिमे भागे बहुत्र समनुभूतग्रन्थपाता न यथापुरं विदुषामविच्छिन्नधारं मोदमुपजनयतीति इयमप्यपरा कालस्याप्रतीकारपरुषा दुर्विदग्धता। आस्तामिदम्; किमनेन निर्वेदेन? अत्र प्रकाशितोंऽशोपि न प्रनष्ट इति संतोष्टव्यमेव।

अस्मिन् संपुटे नयप्रकाशिकाकारैः सहृदयहृदयंगमा अनाग्रहगृहीतहृदयैः सुधीभिः सशिरःकम्पं श्लाघनीया व्याख्यातृभिरितरैरचुम्बिता बहवो विषयाः प्रतिपादिताः दृश्यन्ते। तत्र प्रथमं तदिदमौपनिषदेत्यादिमहासिद्धान्तारम्भपङ्क्तिव्याख्यानावसरे परोपक्षिप्तं कर्मणां भेदावलम्बित्वेन ब्रह्मज्ञानविरोधित्वं दूषयितुमुपक्रम्य त्रिदण्डशिखायज्ञोपवीतधारणादीनां प्रामाणिकत्वं महता प्रपञ्चेन महता संरम्भेण सिद्धान्तितमस्मत्सिद्धान्तस्योपरि बद्धद्वेषाणां परेषामपि हृदयमावर्जयितुं प्रभवेदित्यत्र न वयं संशयलेशस्याप्यवकाशमुत्पश्यामः। तदुपरितनो नयप्रकाशिकाग्रन्थस्तु श्रीभाष्यपङ्क्तिप्रतीकमनुपादायैव सुबहून्विषयानतिप्रौढया शास्त्रसरण्या विचारयीति, अयं भागस्तृतीयसंपुटे नातिचिरादेवास्माभिः प्रचिकाशयिषिते समवतारितो विपश्चित्तल्लजानाह्लादयिष्यतीति प्रथममेव निवेद्यते।

एवमिदं मुद्रणकार्यमितः परमपि प्रतिहतप्रत्यूहमविलम्बेन परिसमाप्तिं प्राप्य एतदारम्भप्रणयिनोऽस्माननन्यांश्च प्राज्ञानानन्दयत्विति, श्रीभाष्यं श्रीभाष्यकारः श्रीभाष्याभिधेयभूतः परमात्मा च प्रसीदन्त्विति।

कृष्णापुरम्,
4-1-1939.

**वे. अनन्ताचार्यः**
**वे. कृष्णमाचार्यः**

## श्रीभाष्यादिग्रन्था एतेषु पृष्ठेषु द्रष्टव्याः

---

श्रीभाष्यम्—४५१, ४७६, ४८८, ५०७, ५२९, ५३९, ५४५, ५५०, ५५८, ५६४, ५८५, ६००, ६०८, ६१४, ६१९, ६२७, ६४३, ७५४, ६५८, ६७३, ६८५, ६९३, ६९७, ७०८, ७१३, ७२२, ७३४, ७३६, ७३७, ७४१, ७४५, ७४७, ७५२, ७५६, ७६०, ७६५, ७६९, ७७१, ७७३, ७७७, ७८१, ७८३, ७८७, ७९०, ७९३, ७९६, ८००, ८०५, ८११, ८२२, ८२७, ८२९, ८३३, ८३५, ८३९, ८४१, ८४३, ८४७, ८५०, ८५२, ८५४, ८५६, ८५८, ८६१, ८६३, ८६६, ८७१, ८७३, ८७८, ८८२, ८८४, ८८७, ८८८, ८९१, ८९४, ८९६, ९०२, ९०६, ९०८, ९१०, ९१२, ९१५, ९१९, ९२२, ९२५, ९३१,

श्रुतप्रकाशिका—४५३, ४७९, ४९९, ५०८, ५२९, ५३९, ५४५. ५५२, ५५८, ५६४, ५८५, ६०१, ६०८, ६१४, ६१९, ६२७, ६३४, ६५४, ६५९, ६७४, ६८५, ६९३, ६९८, ७०९, ७१४, ७३२, ७३४, ७३६. ७३७, ७४१, ७४६, ७४८, ७५३, ७५७, ७६१, ७६६, ७६९, ७७२, ७७४, ७७७, ७८१, ७८४, ७८८, ७९०, ७९३, ७९७, ८०१, ८०५, ८१२, ८२२, ८२८, ८३०, ८३३, ८३५, ८३९, ८४०, ८४१, ८४४, ८४७, ८५०, ८५३, ८५५, ८५६, ८५८, ८६१, ८६३, ८६७, ८७१, ८७३, ८७८, ८८२, ८८५, ८८७, ८८८, ८९१, ८९४, ८९७, ९०२, ९०६, ९०८, ९११, ९१२, ९१६, ९१९, ९२२, ९२५, ९३१,

भावप्रकाशिका—४५९, ४८४, ५०१, ५१६, ५३२, ५४१, ५४७, ५५३, ५६०, ५७१, ५८६, ६०२, ६०९, ६१५, ६२१, ६३०, ६४८, ६५५, ६६३, ६७६, ६८८, ६९४, ७०१, ७१०, ७१९, ७३२, ७३५, ७३८, ७४२, ७४६, ७४९, ७५३, ७५७, ७६२, ७६७, ७७०, ७७२, ७७५, ७७९, ७८२, ७८४, ७८८, ७९१, ७९४, ७९८, ८०२, ८०७, ८१६, ८२४, ८२८, ८३०, ८३४, ८३७, ८३९, ८४१, ८४२, ८४५, ८४८, ८५१, ८५३, ८५९, ८६२, ८६४, ८६८, ८७२,

८७५, ८७९, ८८३, ८८५, ८८९, ८९२, ८९९, ९०४, ९०७, ९०९, ९११, ९१३, ९१७, ९२१, ९२३, ९२८, ९३३,

श्रुतप्रदीपिका—४६३, ४८६, ५०३, ५२०, ५३४, ५४१, ५४८, ५५४, ५६१, ५७६, ५८७, ६०३, ६१०, ६१६, ६२१, ६३०, ६४९, ६५७, ६६६, ६७८, ६८९, ६९५, ७०३, ७११, ७२३, ७३३, ७३५, ७३६, ८३९, ७४२, ७४६, ७५०, ७५४, ७५८, ७६२, ७६८, ७७१, ७७३, ७७५, ७७९, ७८२, ७८५, ७८८, ७९१, ७९५, ७९८, ८०३, ८०८, ८१८, ८२५, ८२८, ८३१, ८३४, ८३८, ८३९, ८४१, ८४२, ८४६, ८४९, ८५२, ८५४, ८५५, ८५७, ८६०, ८६२, ८६५, ८६९, ८७२, ८७७, ८८०, ८८३, ८८६, ८८७, ८९०, ८९३, ८९५, ९००, ९०४, ९०७, ९०९, ९११, ९१४, ९१७, ९२१, ९२४, ९२९, ९३४,

नयप्रकाशिका—५८७, ६०३, ६११, ६१७, ६२१, ६३१,

तत्त्वटीका—४६५, ४८९, ५०४, ५२२, ५३६, ५४२, ५४९, ५५५, ५६२, ५७८, ५९९, ६०६, ६१२, ६१७, ६२५, ६४१, ६५१, ६५७, ६६७, ६७९, ६९०, ६९५, ७०३, ७१२, ७२४, ७३३, ७३५, ७३६, ७३९, ८४२, ७४७, ७५०, ७५४, ७५९, ७६३, ७६८, ७७१, ७७३, ७७६, ७८०, ७८२, ७८६, ७८९, ७९२, ७९५, ७९९, ८०३, ८०९, ८१९, ८२६, ८२९, ८३२, ८३४, ८३८, ८३९, ८४१, ८४३, ८४५, ८४९, ७५२, ८५४, ८५६, ८५७, ८६०, ८६२, ८६५, ८६९, ८७२, ८७७, ८८०, ८८४, ८८६, ८८७, ८९०, ८९३, ८९५, ९०१, ९०५, ९०८, ९१०, ९११, ९१४, ९१७, ९२२, ९२४, ९३०, ९३४,

मूलभावप्रकाशिका—४७२, ४९५, ५०६, ५२६, ५३७, ५४४, ५५०, ५५७, ५६३, ५८३, ६००, ६०८, ६१३, ६१८, ६२६, ६४३, ६५३, ६५८, ६७२, ६८३, ६९२, ६९७, ७०८, ७१२, ७२८, ७३४, ७३५, ७३६, ७४१, ७४१, ७४७ ७५२, ७५६, ७६०, ७६५, ७६९, ७७१, ७७३, ७७७, ७८१, ७८३, ७८७, ७८९, ७९३, ७९६, ८००, ८०४, ८११, ८२१, ८२७, ८२९, ८३३,

न्यायसुदर्शनम्—६९२, ७१३, ७५६, ७६५, ७७७, ७८३, ८२२,

# श्रीभाष्यविषयानुक्रमः

## महापूर्वपक्षः—


ब्रह्मणो निर्विशेषचिन्मात्रत्वे तददतिरिक्तमिथ्यात्वे च प्रमाणतयाभिमतश्रुत्युपपादनम् ४५१
अविद्यायाः स्वरूपं तया ब्रह्मणस्तिरोधानं च ४७६
भेदग्राहिणः प्रत्यक्षस्याभेदश्रुत्या बाधः ४७८
अपच्छेदनयेन भेदावलम्बिनः सगुणत्वबोधकस्य च शास्त्रस्य बाध्यत्वम् ४९८
सत्यज्ञानादिश्रुतिरखण्डार्थपरा ५०७
अखण्डार्थबोधकत्वेऽपि न लक्षणादोषः ५२९
प्रत्यक्षस्य सन्मात्रग्राहित्वम् ५३९
भेदाख्यः पदार्थ एवानुपपन्नः ५४५
निर्विशेषानुभूतिरेव परमार्थः, सैव सती ५५१
भाट्टमतेनानुभूतेः प्राकट्यानुमेयत्वस्योद्भावनम् ५५८
अनुभूतिः स्वयंप्रकाशेति समर्थनम् ५६४
अनुभूतिनित्यत्वाद्यङ्गीकारान्न बौद्धमतप्रवेशः ५८५
आत्मनोऽहंप्रत्ययगोचरत्वं भ्रान्तिसिद्धम् ६०८
अहंकारेणाभिव्यक्तानुभूतिस्तत्स्थतया भासते ६१४


## महासिद्धान्तः—


निर्विशेषवस्तुनोऽप्रामाणिकत्वम् ६४३
शास्त्रस्य न निर्विशेषवस्तुनि प्रामाण्यम् ६५४
प्रत्यक्षस्य न निर्विशेषवस्तुनि प्रामाण्यम् ६५८
प्रसङ्गात् भेदाभेदनिराकरणम् ६७२
अनुमानमपि न निर्विशेषविषयम् ६७४
भेदस्य न दुर्निरूपत्वम् ६८५
प्रत्यक्षस्य न सन्मात्रग्राहित्वम् ६९३
संस्थानस्यैव जातित्वम् ६९७
व्यावर्तमानत्वानुमानभङ्गः ७१२

| | |
|---|---|
| अनुवर्तमानत्वानुमानभङ्गः | ७३२ |
| अनुभूतिसदैक्यनिरासः | ७३४ |
| अनुभूतेरननुभाव्यत्वे परोक्तानुमाननिरासः | ७३७ |
| बौद्धमताप्रवेशाय परोक्तानुभूतिनित्यत्वस्य व्युदासः | ७४५ |
| अनुभूतेः प्रागभावाद्यसंभवस्य निरासः | ७४७ |
| अनुभूतेर्नित्यत्वे तद्विषयाणामपि नित्यत्वप्रसङ्गः | ७५६ |
| परोक्तरीत्या संविदोऽजत्वेऽपि नाविकारित्वं न वा भेदासहत्वम् | ७७१ |
| धर्मधर्मिभावस्थिरत्वास्थिरत्वादिरूपवैषम्यात् नानुभूत्यात्मनोरभेदः | ७८७ |
| अहमर्थस्यात्मत्वम् | ८०० |
| अहमर्थस्यानात्मत्वे परेषां स्ववाग्विरोधः | ८०५ |
| चिद्रूपस्याप्यात्मनश्चैतन्यगुणकत्वमुपपन्नम् | ८११ |
| आत्मनो ज्ञानरूपत्वे ज्ञातृत्वे च श्रुतयः प्रमाणम् | ८२२ |
| अजडत्वात्संविदेवात्मेति परोक्तानुमाननिरासः | ८२९ |
| ज्ञातृत्वाध्यासदूषणम् | ८३५ |
| अहंकारस्य न ज्ञातृत्वसंभवः | ८४३ |
| चिच्छायापत्तिनिरासः | ८५० |
| अहंकारानुभूत्योः व्यङ्क्तृव्यङ्ग्यभावोऽनुपपन्नः | ८५३ |
| अज्ञानस्य न संविदाश्रयत्वम् | ८६३ |
| सुषुप्तावप्यहमर्थस्य स्फुरणम् | ८७१ |
| सुषुप्तावहमर्थस्फुरणं परैरपि भङ्ग्यन्तरेणाङ्गीकृतम् | ८८४ |
| मुक्तावप्यहमर्थोऽनुवर्तत एव | ८८७ |
| अहमर्थत्वेऽपि नात्मनो जडत्वादि | ८९१ |
| वामदेवादिदृष्टान्तेन मुक्तानामप्यहंप्रतीतिः | ८९४ |
| आत्मनोऽहंप्रत्ययविषयत्वे न भगवद्गीतादिवचनविरोधः | ८९६ |
| प्रत्यक्षात् शास्त्रस्य न बलीयस्त्वम् | ९०२ |
| शास्त्रस्य व्यावहारिकप्रामाण्यखण्डनम् | ९१० |
| असत्यात् न सत्यप्रतीतिः | ९१५ |
| स्फोटवादनिरासः | ९२५ |
| असत्यात् सत्याप्रतीतेरुपसंहारः | ९३१ |

# श्रुतप्रकाशिकाविषयसूचिका


मिथ्यात्वलक्षणविचारः ४५७
अपच्छेदनयोपपादनम् ५००
सामानाधिकरण्यलक्षणम् ; सामानाधिकरण्यवाक्यस्याखण्डार्थत्वं च ५१०
वाक्येषु सर्वपदलक्षणाया आवश्यकत्वम् ५३१
अनुभूतेः प्राकट्यानुमेयत्वस्यासंभवः ५६५
अनुभूतेर्न मानसप्रत्यक्षवेद्यत्वम् ५६६
अनुभूतेः स्वयंप्रकाशत्वेऽनुमानम् ५६८
अनुभूतेर्भेदासहत्वे व्याप्तिनिरूपणम् ६०१
महापूर्वपक्षनिगमनम् ६२०
सम्यग्ज्ञानोत्पत्तौ भगवद्भक्तेरपि कारणत्वम् ६२८
प्रथमं निर्विशेषवस्तुनिरासे हेतुवचनम् ६४४
निर्विशेषप्रतिपत्तौ प्रमाणतया शब्दस्योद्भावनं तत्परिहारश्च ६५५
निर्विकल्पकमपि सविशेषविषयमेवेति विस्तरेणोपपादनम् ६६१
सहोपलम्भनियमादेर्न भेदाभेदसाधकत्वम् ६७५
प्रत्यक्षस्यैकक्षणवर्तित्वेऽपि सविशेषविषयत्वमेव ६८६
संस्थानस्यैव जातित्वमिति विस्तरेणोपपादनम् ६९८
जात्यादिरेव भेद इत्युपपादनम् ७०९
व्यावर्तमानत्वानुमाने कालात्ययापदेशसोपाधिकत्वव्याघातानां दोषत्वम् ७१४
अनुवर्तमानत्वानुमाने सिद्धसाधनतादोषोपपादनम् ७३२
अनुभाव्यत्वेऽननुभूतित्वमिति परोक्ते दूषणम् ७४२
अनुभूतिनित्यत्वनिरासे स्वसिद्धान्तव्याकोपस्योद्धारणम् ७४६
अनुभूतेरभावस्य प्रामाणिकत्वम् ७५३
अनुभूतेरनित्यत्वेऽर्थापत्त्युपपादनम् ७५७
अनुभूतेः सजातीयभेदसमर्थनम् ७७४
प्रकाशशब्दार्थनिरूपणम् ७७८
धर्माणामभावरूपत्वं न संभवति ७८१
अनुभूतेर्विषयाश्रयशून्यत्वस्य निरासे न सिद्धान्तविरोधः ७९४
अनुभूतेरात्मत्वेऽनुमानप्रामाण्यनिरासः ७९७
विशीर्णावयवा एव प्रमेति मतस्य विस्तरेण निरासः ८१३
आत्मनो ज्ञातृत्वं सर्वप्रमाणसिद्धम् ८२३

संविदतिरिक्तप्रकाशानभ्युपगमे असिद्धिविरोधयोरुपपादनम् ८३०
विशेषणे विशिष्टाध्यासचोद्यपरिहारः ८३६
अन्तःकरणस्य ज्ञातृत्वानुमाने प्रत्यनुमानानि ८४०
अहंप्रत्ययगोचरत्वेऽनात्मत्वं स्यादिति परोक्तेर्निरासः ८४१
ज्ञानच्छायापत्तिसंपर्कयोर्निरासः ८५३
ज्ञानप्रामाण्याप्रामाण्यविषये पक्षचतुष्टयोपन्यासपूर्वकं स्वतःप्रामाण्यस्थापनम् ८६७
'सुखमहमस्वाप्सम्' इति प्रत्यवमर्शविचारः ८७४
मोक्षदशायामहमर्थाननुवृत्तौ बाह्यमतप्रवेशापातः ८८७
अहमर्थानुवृत्तौ श्रुत्यर्थापत्त्युपपादनम् ८८९
अहंकारशब्दार्थवर्णनम् ८९८
शास्त्रप्रत्यक्षयोः प्राबल्यदौर्बल्यविचारे ज्वालाभेदानुमानस्य न दृष्टान्तता ९०२
तत्त्वशुद्धिकाराद्युक्तप्रत्यक्षदोषनिरासः ९०३
प्रत्यक्षदौर्बल्यशास्त्रप्राबल्यविषये खण्डनकाराद्युक्तिनिरासः ९०९
असत्यात् सत्यप्रतिपत्तिनिरासे स्वाप्नज्ञानविचारः ९२०
स्फोटवादोपन्यासः ९२६
स्फोटवादनिरासः ९२७

———

## नयप्रकाशिकास्थविषयानुक्रमणिका

वासनाभेदबुद्ध्योरन्योन्याश्रयतत्परिहारौ ४९०
सर्वपदलक्षणायामाक्षेपस्तत्परिहारश्च ४९२
सामानाधिकरण्यवाक्यानामखण्डैकरसार्थपरत्वप्रतिपादनम् ४९४
अनुभूतेः स्वयंप्रकाशत्वे भाट्टमतप्रक्रियोपन्यासः ५९७
अनुभूतेरनुमानगम्यत्वनिरासः ६०३
तमसो द्रव्यत्वविचारः ६२३
पूर्वोत्तरभागयोः पौर्वापर्यस्य संग्रहेण विवेचनम् ६३१
कर्मणां ब्रह्मविद्याङ्गत्वम् ६३२
संन्यासिनां त्रिदण्डयज्ञोपवीतादिधारणे प्रमाणानि ६३४
कर्मत्यागवचनानां स्वरूपत्यागपरत्वखण्डनम् ६३७

# तत्त्वटीकाविषयसूची

ब्रह्ममात्रस्य सत्यत्ववर्णनम् ४६६
सद्विद्यायाः प्रथमोपादानस्याभिप्रायः ४६७
प्रपञ्चमिथ्यात्वे विष्णुपुराणसंवादप्रतिपादनम् ४६९
मिथ्यात्वनिर्वचनम् ४७०
अविद्याया अनिर्वाच्यत्वम् ४८९
जीवैक्ये प्रमाणश्रुतयः ४९२
श्रुतीनामविच्छिन्नसंप्रदायत्ववर्णनम् ४९४
वेदान्तेषु पूर्वापरापच्छेदन्यायसंचारः ५०५
निर्गुणवाक्यानां परत्वम् ”
विशेषणानां भेदकत्वनिराकरणम् ५२३
एकार्थाभिधायिनां पदानां पर्यायत्वनिरासः ५२४
सत्यज्ञानादिपदानामर्थवर्णनम् ५२७
“यतो वा इमानि” इत्यादिश्रुत्युपादानस्यावतारिका ५२८
अनुभूतेः स्वतःसिद्धत्वम् ५६२
अनुभूतेः अनुमेयत्वशङ्का ५७८
अनुभूतेः स्वयंप्रकाशत्वसमर्थनम् ५८१
निर्विशेषस्य निष्प्रमाणकत्वम् ६५१
चार्वाकबौद्धयोः प्रमाणविचारः ६६८
निर्विकल्पकसविकल्पकविचारः ६७०
भेदाभेदमतनिरासः ६७९
जातिव्यक्त्योर्भेदाभेदविचारः ६८०
प्रत्यक्षादिप्रमाणविचारः ६८३
भेददूषणनिरासः ६९०
प्रत्यक्षस्य सन्मात्रग्राहित्वम् ६९१
संस्थानस्य जातित्वसाधनम् ७०३

संस्थानपदार्थनिरूपणम्, ७०५
जातेरेव भेदत्वम् ७०७
भेदमिथ्यात्वानुमानभङ्गः ७२७
अनुवर्तमानत्वानुमानभङ्गः ७३३
अनुभूतेः स्वयंप्रकाशत्वानुभाव्यत्वे ७३९
अनुभूतेरननुभाव्यत्वयुक्तिनिरासः ७३९
मानमेययोरविनाभावे विचारः ७५१
संवित्प्रागभावसमर्थनम् ७५४
संविदो निर्विषयत्वनिरासः ७५९
स्मरणाभावनियमस्य अनुभवाभावव्याप्यत्वसमर्थनम् ७६८
अनुभूतेर्विकारान्तराभावानुमानभङ्गः ७७३
अनुभूतेर्विभागासहत्वानुमानभङ्गः ७७६
अनुभूतेः सधर्मकत्वसाधनम् ७८०
संविदात्मत्वनिरासः ७८९
संविदः स्थिरत्वेऽप्यात्मत्वानुपपत्तिः ७९५
अहमर्थस्यानात्मत्वनिराकरणम् ७९९
अहमर्थस्यानात्मत्वे परेषां स्ववचनविरोधोद्धाटनम् ८०९
ज्ञानात्मनोर्धर्मधर्मिभावसमर्थनम् ८१९
प्रभाया द्रव्यत्वतेजस्त्वसमर्थनम् ,,
ज्ञातुरात्मत्वे प्रमाणोपन्यासः ८२६
ज्ञातृत्वाध्यासभङ्गः ८३८
ज्ञातृत्वस्य चेतनासाधारणत्वासिद्धिपरिहारः ८४३
चिच्छायापत्त्या ज्ञातृत्वनिरासः ८५२
संपर्काधीनज्ञातृत्वोपपत्तिनिरासः ८५४
अभिव्यक्तिपक्षनिरासः ८५६
अभिव्यक्तेः विकल्प्य दूषणकथनम् ८६०
अनुभवस्यानुभाव्यत्वाभ्युपगमेऽपि दूषणम् ८६२

| | |
|---|---|
| ज्ञातृत्वाभिव्यक्तिनिरासः | ८६९ |
| सुषुप्तावहंभानसमर्थनम् | ८७२ |
| सुषुप्तावहमर्थविनाशवादनिरासः | ८८० |
| परप्रक्रिययापि सुषुप्तावहमर्थानुवृत्तिसमर्थनम् | ८८६ |
| मुक्तावप्यहमर्थभानसमर्थनम् | ८८७ |
| तत्त्वविदनुभवेनाहमर्थात्मत्वसमर्थनम् | ८९५ |
| शास्त्रस्य प्रत्यक्षाद् बलीयस्त्वभङ्गः | ९०५ |
| असत्यात्सत्यसिद्धिनिरासः | ९१७ |
| रेखानिदर्शनविचारः | ९२४ |
| स्फोटवादनिरासः | ९३० |
| शास्त्रप्राबल्यनिरसननिगमनम् | ९३४ |


---

## मूलभावप्रकाशिकास्थविषयसूचिका

| | |
|---|---|
| यस्यामतमित्यादिश्रुत्यर्थः | ४७३ |
| स्वप्नार्थासत्यत्वविचारः | ४७४ |
| सदसदनिर्वचनीयेत्यस्य विवरणम् | ४७६ |
| तत्त्वंपदार्थयोरद्वैतसिद्धान्तरीत्या विवरणम् | ४९७ |
| पूर्वापरापच्छेदनयविवरणम् | ५०६ |
| "सत्यं ज्ञानमनन्तम्" इत्यस्य भाववर्णनम् | ५२७ |
| अद्वैतमतरीत्या स्वरूपलक्षणतटस्थलक्षणयोः ऐककण्ठ्यप्रदर्शनम् | ५२८ |
| सर्वपदलक्षणावादिनामद्वैतिनामाशयवर्णनम् | ५३८ |
| घटादिप्रत्यक्षाणां सन्मात्रविषयत्वे अनुपपत्तिपरिहारौ | ५४४ |
| निर्विकल्पकत्वादिविचारः | ६७२ |
| जातिव्यक्त्योः भेदाभेदे हेतुचतुष्टयप्रतिपादनम् | ६८४ |
| प्रपञ्चमिथ्यात्वखण्डनप्रपञ्चः | ७२८ |
| आत्मनि दीपसमाधिविचारः | ८२१ |

## ॥ महापूर्वपक्षः ॥

श्रीभाष्यम्

यदप्याहुः—अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः। तदतिरेकि नानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम्। "सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्" "अथ परा यया तदक्षरमधिगम्यते। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः॥" "सत्यं ज्ञानमनन्तं ब्रह्म" "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जम्।" "यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्।" "न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथाः" "आनन्दो ब्रह्म" "इदं सर्वं यदयमात्मा" नेह नानास्ति किंचन" मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयात्। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" यदा ह्येवैष एतस्मिन्नु दरमन्तरं कुरुते, अथ तस्य भयं भवति" "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्"।

"प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥"

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥"

" परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।
यदेतद् दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ "
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥ "
" तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥ "
" यद्यन्योऽस्ति परः कोपि मत्तः पार्थिवसत्तम ।
तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥ "
" वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोस्तथासौ परमात्मनः । "
" सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥ "
" विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ "
" अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत । "
" न तदस्ति विना यत्स्यान्मया भूतं चराचरम् । "

इत्यादिभिर्वस्तुस्वरूपोपदेशपरैः शास्त्रैर्निर्विशेषचिन्मात्रं ब्रह्मैव सत्यम्,

अन्यसर्वं मिथ्येत्यभिधानात्। मिथ्यात्वं नाम प्रतीयमानत्वपूर्वक-यथावस्थितवस्तुज्ञाननिवर्त्यत्वम्; यथा रज्ज्वाद्यधिष्ठानकसर्पादेः। दोष-वशाद्धि तत्र तत्कल्पनम्। एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरि-कल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगद्यथावस्थितब्रह्मस्व-रूपावबोधबाध्यं मिथ्यारूपम्। दोषश्च स्वरूपतिरोधानविविधवि-चित्रविक्षेपकरी सदसदनिर्वचनीयानाद्यविद्या।

श्रुतप्रकाशिका

साधनचतुष्टयस्य पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः। स पूर्वं ब्रह्मस्वरूपा-च्छादिकेत्यादिना प्रतिज्ञातः। तदुपपादनदूषणयोर्बहुग्रन्थकार्यत्वात्तदुभयं पूर्वं न कृतम्। अथ तदुपपादनायोपक्रमते। पूर्वमुपायोपदेशपरवाक्यपर्यालोचनया वस्तुसामर्थ्यव्यतिरिक्त-हेतव उपन्यस्ता निरस्ताश्च। विविदिषितं ज्ञानमिति ह्युक्तम्। वस्तुसामर्थ्यं तु सिद्ध-परवाक्यसिद्धम्; वस्तुस्वरूपोपदेशपरैरिति हि वक्ष्यते: अतः स्वरूपपरवाक्यपर्यालोचना-मुखेन तदुपपादयितुमारभते—**यदप्याहुरिति**; अपिना उपपादयिष्यमाणस्यार्थस्य प्राधान्यं सूच्यते। **आहुरिति** ग्रन्थकारबहुत्वम्। अनेनास्य ग्रन्थस्य तत्तत्प्रबन्धोक्त-सकलार्थगर्भितत्वं दर्शितम्। 'सर्वे वेदान्ता आरभ्यन्त इति यदप्याहुः, तदनादरणीयम्' इत्युपर्यन्वयः। प्रथमं ब्रह्मैकमेव सत्यमिति प्रतिजानीते—**अशेषेति**। **अशेषविशेषाः**; वक्ष्यमाणा ज्ञात्रादयः, विजातीयसजातीयस्वगता वा। स्वगतेष्वप्यन्वयिनो व्यावृत्तिरूपाश्च विशेषा **अशेष**शब्देन विवक्षिताः। **तत्प्रत्यनीकम्**; स्वज्ञानेनैव निवर्तकं, शुक्तिरिव रजत-स्येत्यर्थः। निर्विशेषत्वे शून्यता स्यादित्यत्राह—**चिन्मात्रमिति**। चिच्छब्देन तुच्छत्व-व्यावृत्तिः; स्वयंप्रकाशत्वं हि चित्त्वम्। मात्रचा* ज्ञेयत्वव्यावृत्तिः। यद्वा प्रत्यनीकत्वरूप-धर्मोऽपि मात्रचा व्यावर्त्यते। यद्वा मात्रचा वस्तुतः समस्तविशेषविरहो विवक्षितः। **ब्रह्मैवे**त्येवकारेण सगुणब्रह्मव्यावृत्तिः। **परमार्थः**; तत्त्वावेदकप्रमाणविषयः। सगुण-वाक्यानां न तत्परत्वम्, फलविशेषार्थमुपासनेऽन्यपरत्वादिति भावः। कथं ब्रह्मण एव सत्यत्वम्? अन्यदपि हि प्रतीयत इति शङ्कायां ब्रह्मण एव परमार्थत्वसिद्धये तद्व्यतिरिक्तस्य तज्ज्ञाननिवर्त्यत्वाय च विश्वस्य मिथ्यात्वं प्रतिजानीते—**तदिति** "अथात आदेशो

* **मात्रच उपपत्तिः २२७ तमे पुटे द्रष्टव्या।**

नेति नेति" इत्यादौ "प्रकृतैतावत्त्वम्" इति सूत्रविषये कृत्स्नस्य मिथ्यात्वेन ब्रह्मणोऽपि मिथ्यात्वं परैः पूर्वपक्षीकृत्य निरस्तमिति तदभिप्रायेणोक्तम्—**तदतिरेकीति**। "नेह नानास्ति" इत्यादिनिषेधवाक्यस्य ब्रह्मव्यतिरेकेऽपि निषेध्यनानात्वं सिध्यतीति दर्शितम्—**नानाविधेति**। पूर्वमशेषविशेषशब्दोक्तविशेषविवरणार्थं "नेह नानास्ति" इत्यादिवाक्यगतनानाशब्दविवरणार्थं च नानाविधशब्दवाच्यभेदो विवृतः—**ज्ञातृज्ञेयेति** **तत्कृतज्ञानभेदो** ज्ञातृज्ञेयावच्छिन्नवृत्तिज्ञानभेदः। अनेन वृत्तिस्फुरितचैतन्यभेदस्य स्वरूपप्रयुक्तताव्यावृत्तिः। भेदशब्देनैकैककोटिष्ववान्तरभेदा विवक्षिताः। आदिशब्देन निरसनीयदुःखरूपजन्मजरामरणान्युच्यन्ते। **सर्वमिति**; वक्ष्यमाणश्रुनिगतसर्वशब्दस्यायमर्थ इति भावः। **तस्मिन्निति** निरधिष्ठानभ्रमपक्षव्युदासः। **एव**कारेणाधिष्ठानबहुत्वनिषेधः। तथा सति हि प्रपञ्चस्य तज्ज्ञाननिवर्त्यत्वसिद्धिः। यद्वा तस्मिन्नित्येकवचनेनाधिष्ठानैकत्वसिद्धिः। नानाध्यासा नानाधिष्ठानका दृष्टाः; तत्कथमेकाधिष्ठानकत्वमिति विरोधं स्वयंप्रकाशवस्तुनोऽधिष्ठानत्वविरोधं च स्फोरयत्येवकारः। **मिथ्याभूतम्**; मिथ्याभाववत्; वक्ष्यमाणमिथ्यात्वलक्षणवदित्यर्थः। ब्रह्मण एव सत्यत्वे व्यतिरिक्तमिथ्यात्वे च किं प्रमाणमित्यत्राह—**सदेवेति**। **सदेवेति** विजातीयभेदो व्यावर्त्यते। **एवमेवेति** सजातीयभेदः। **अद्वितीयमिति** स्वगतभावाभावरूपभेदः। षड्विधतात्पर्यलिङ्गोपेतसद्विद्यागतत्वादिदं वाक्यं प्रथममुपात्तम्। अथैवकारफलितनिषेधकण्ठोक्तिमत्परविद्यावाक्यमुपादत्ते—**अथेति**। इदं च कारणत्वशङ्कितदोषव्युदासोपक्रमकारणवाक्यम् "भूतयोनिम्" इत्युक्त्वानन्तरं तस्यैव प्रपञ्चनात्। **अद्रेश्यमग्राह्यम्**; प्रत्यक्षागोचरमनुमानाद्यगोचरम्। अथवा चक्षुरगोचरमिन्द्रियान्तरागोचरम्। **अगोत्रम्**; अनामकम्। **अवर्णम्**; अनैल्यादिकम्। **अचक्षुःश्रोत्रमपाणिपादम्**; ज्ञानकर्मेन्द्रियरहितम्। **नित्यं विभुम्**; कालदेशाभ्यामपरिच्छिन्नम्। **सर्वगतम्**; सर्वेण जगताधिष्ठानतया गतमाश्रितम्; वस्तुपरिच्छेदरहितमित्यर्थः। **सुसूक्ष्मम्**; अदृश्यत्वं न तुच्छत्वदूरत्वादिना, किंतु सुसूक्ष्मत्वादित्यभिप्रायः। वाक्यभेदादनेकयत्तच्छब्दान्वयोपपत्तिः। अथ शोधकवाक्यमुपादत्ते—**सत्यमिति**। अनृतजडपरिच्छिन्नव्यावृत्तनिर्विशेषवस्तुपरमिदं वाक्यम्। कारणवाक्यैकार्थ्यात् शोधकवाक्यान्तरैकार्थ्यात् सामानाधिकरण्यान्यथानुपपत्त्या चेति वक्ष्यते। **निष्कलम्**; कला अवयवाः; निरवयवमित्यर्थः। तत्र

लिङ्गं निष्क्रियत्वम् । **शान्तम् ;** ऊर्मिषट्करहितम् ; अशनायापिपासे शोकमोहौ जरामृत्यू चोर्मयः । **निरवद्यं निरञ्जनम् ;** कर्मसंबन्धतत्फलरहितम् । अनेन सत्यज्ञानादिवाक्यगर्भितव्यावृत्तिः स्फुटीकृता । अथ चिन्मात्रशब्दाभिप्रेतां ज्ञेयत्वव्यावृत्तिमाह—**यस्येति** । **अमतमविज्ञातमिति** श्रवणमननादिरूपज्ञानाविषयत्वोक्तिः । अथ ज्ञातृत्वनिषेधपरं वाक्यमाह—**न दृष्टेरिति** । अत्रापि पूर्वोक्तज्ञानावस्थाभेदो विवक्षितः । अस्य पुरुषार्थत्वायासुखाद्व्यावृत्तिरुच्यते—**आनन्दो ब्रह्मेति** । आनन्दशब्दोऽसुखाद्व्यावृत्तिमात्रपरः । अत एव ह्यानन्दीत्यनुक्तिः ।

इत्थं ब्रह्मणो निर्विशेषचिन्मात्रत्वे श्रुतिवाक्यजातमुपन्यस्तम् । अथ व्यतिरिक्तमिथ्यात्वे प्रमाणमुपन्यस्यते । तत्र प्रथमं मिथ्याभूतस्य जगतो ब्रह्मण्यधिष्ठानेऽध्यस्तत्वं दर्शयति—**इदं सर्वं यदयमात्मेति** सामानाधिकरण्येन । अधिष्ठानेनाध्यस्तसामानाधिकरण्यं हि बाधार्थं दृष्टम् , यथा—'रज्जुः सर्पः' इति । पूर्वं 'सर्वं तस्मिन्नेव' इति प्रतिज्ञातं ब्रह्मणः सर्वाध्यासाधिष्ठानत्वं चानेन वाक्येन दर्शितम् । व्यतिरिक्तनिषेधकण्ठोक्तिं दर्शयति—**नेह नानाति किंचनेति** । नाना पश्यन्नत्यन्ताज्ञ इति दर्शयति—**मृत्योरिति** । अत्र मृत्युरविद्या "तमसो वा एष तमः प्रविशति" इतिवत् । इवशब्देन नानात्वस्यापारमार्थ्यं दर्शितम् । मिथ्याभूतं चेत् कदाचिन्निवृत्तिः स्यादित्यत्राह—**यत्र हीति** । **यत्र ;** यदा । **द्वैतमिव भवति ;** इवशब्दः पूर्ववत् । **तत् ;** तदा । इतर इतरमितरेण पश्यतीत्यर्थः । **केनेति** वक्ष्यमाणत्वादितरेणेत्यध्याहारः । **यत्र त्विति ; यत्र ;** यदा । अस्य सर्वमात्मैवाभूत् ; **तत् ;** तदा । **केन कं पश्येत् ;** क इत्यध्याहार्यम् , इतर इत्युक्तत्वात् । **पश्येद्विजानीयादिति** ज्ञानपर्वभेदोक्तिः । इदं कृत्स्नमिथ्यात्वं दृष्टान्तेनोपपादयन्तीं श्रुतिमुदाहरति—**वाचेति** । विकारो घटादिसंस्थानं नामधेयं च वाचारम्भणं वागालम्बनम् ; व्यावहारिकमित्यर्थः । तस्मान्मृत्तिकेत्येव सत्यम् । ब्रह्मणि नानात्वं पश्यतः पूर्वोक्तमृत्युशब्दाभिहिताज्ञानकार्यं भयं च दर्शयति—**यदा हीति** । **उ दरम् ;** उ अवधारणे " तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् " इतिवत् । **दरम् ;** अल्पम् । यद्वा—उत् अरम् ; उदित्यस्य भवतीत्यनेनान्वयः, "व्यवहिताश्च" इति सूत्रात् । अरं शीघ्रम् । "यदा ह्येव" इत्यादेः पश्चादुपादानं सिद्धान्ते परिहारसौकर्यार्थम् । तच्च पूर्वोक्तवाक्यानामेकन्यायपरिहार्यत्वात् । ब्रह्मणो निर्विशेषचिन्मात्रत्वे व्यतिरिक्तमि-

थ्यात्वे च श्रुतिर्दर्शिता। तत्र निर्विशेषत्वे सूत्रं प्रदर्श्यते—**न स्थानतोऽपीति**। उभयलिङ्गं साकारत्वं साकारनिराकारत्वं च सर्वत्र स्थितस्यापि ब्रह्मणो नास्ति; निराकारमित्यर्थः। अन्यमिथ्यात्वे सूत्रमाह—**मायेति**। स्वाप्नमर्थजातं कार्त्स्न्येन मायामात्रम्; कुत इति चेत्, अनभिव्यक्तस्वरूपत्वात्; दुर्निरूपत्वात्, बाधितत्वादित्यर्थः। स्वाप्नमिथ्यात्वं जगन्मिथ्यात्वदृष्टान्ततया दर्शितम्; अस्मिन्नर्थद्वये उपबृंहणवचनानि दर्शयति—**प्रत्यस्तमितभेदमिति**। **प्रत्यस्तमितभेदम्**; सजातीयविजातीयभेदरहितम्। **सत्तामात्रम्**; स्वगतभेदरहितम्। अत एव **वचसामगोचरम्**। तर्हि तुच्छत्वं स्यात्, न सत्तेत्यत्राह—**आत्मसंवेद्यमिति**; स्वयंप्रकाशमित्यर्थः। **ब्रह्मसंज्ञितमिति**; ब्रह्मेति संज्ञामात्रमेव, न तु बृहत्त्वादिगुणयोग इति भावः। निर्विशेषं चेत् कथं जगदवभास इत्याकाङ्क्षायामुपादत्ते—**ज्ञानस्वरूपमिति**। प्रपञ्चमिथ्यात्वमनेन श्लोकेनोच्यते। **अत्यन्तनिर्मलम्**; सकलविशेषरहितम्। **अर्थस्वरूपेण**; जडस्वरूपेण। अर्थनानात्वस्य भ्रान्तिसिद्धत्वादेक एव परमार्थ इति दर्शयति—**परमार्थस्त्वमिति**। एतद्विवृणोति श्लोकद्वयेन—**यदेतदित्यादिना**। भ्रान्तिश्चेत् कस्यचिन्निवर्तेतेत्याकाङ्क्षायां केषांचित्तन्निवृत्तिं दर्शयति—**ये तु ज्ञानविद इति**। ज्ञानसत्यत्वं जडमिथ्यात्वं चोक्तम्। अथ ज्ञानाकाराणामात्मनामैक्योक्तिं दर्शयति—**तस्येति**। **एकमयम्**; एकम्। आत्मपरनिर्देशकृतभेदशङ्कामपि व्युदस्यति—**यद्यन्योऽस्तीति**। अत्र दृष्टान्तमाह—**वेणुरन्ध्रेति**। अस्योपपादितस्यार्थस्योपदेशं दर्शयति—**सोऽहमिति**। यथोपदिष्टमकरोदित्याह—**तत्याजेति**। अथात्मनां ब्रह्मणैक्योक्तिं दर्शयति—**विभेदजनक इति**। अथ भगवद्गीतायां सर्वात्मनां परस्परं ब्रह्मणा च सहैक्योक्तिमुदाहरति—**अहमात्मेति**। सर्वभूतशब्देन शरीराण्युच्यन्ते। एतत् स्फुटयति—**क्षेत्रज्ञं चेति**। "सर्वक्षेत्रेषु" इत्यनेन भूतशब्दस्य शरीरपरत्वं स्फुटीकृतम्। तत्रैव व्यतिरिक्तमिथ्यात्वोक्तिं दर्शयति—**न तदस्तीति**। **वस्तुस्वरूपोपदेशपरैः**; न तूपायपरैः, अनन्यपरैरिति भावः। **निर्विशेषचिन्मात्रमिति**; पूर्ववदर्थः। '**अभिधानादि**त्यस्य 'अशेषविशेष—'इत्यादिपूर्वप्रतिज्ञावाक्येन सहान्वयः। ननु किमन्यत्र सतोऽन्यत्र ख्यातत्वं मिथ्यात्वम्? उतात्यन्तासत्त्वम्? पूर्वस्मिन् कल्पे क्वचित् पारमार्थ्यमभ्युपगतं स्यात्; द्वितीये तु निवर्त्यमेव नास्तीति शास्त्रवैयर्थ्यम्। अत्यन्तासत्त्वं चानुपपन्नम्। ख्यातेः स्वयंप्रकाशस्य वस्तुनो भ्रमाधिष्ठानत्वं नोपपद्यते;

स्वयाथात्म्याप्रकाशमूलो ह्यध्यासः ; पराधीनप्रकाशस्य जडस्यैव तत्संभवः । अतः प्राक् प्रतिज्ञातं प्रपञ्चमिथ्यात्वं ब्रह्मणो भ्रमाधिष्ठानत्वं चायुक्तमित्यस्मिंश्चोद्यद्वये प्रथमं परिहर्तुं मिथ्यात्वलक्षणमाह—**मिथ्यात्वं नामेति** । निवर्त्यत्वमित्युक्ते मुद्गरादिनिवर्त्यघटादावतिव्याप्तिः ; तत्परिहाराय **ज्ञान**शब्दः । तावतापि शक्तिमदीश्वरादिसंकल्परूपज्ञाननिवर्त्ये वस्तुन्यतिव्याप्तिः । सापि यथावस्थितवस्तुज्ञानमात्रनिवर्त्यत्वस्य विवक्षितत्वात् परिहृता भवति । प्रबलभ्रान्तिज्ञाननिवर्त्यसत्यरजतादिष्वतिव्याप्तिपरिहाराय **यथावस्थित**शब्दः । यथावस्थितज्ञाननिवर्त्यत्वमित्युक्ते समानाधिकरणधीर्जायेत ; तदा भ्रान्तिज्ञाननिवर्त्ये व्यभिचारस्तदवस्थः ; तत्र ज्ञानस्वरूपं हि यथावस्थितम् ; विषयस्यैव ह्ययथार्थत्वम् । अतो 'यथावस्थितं ज्ञानम्' इति सामानाधिकरण्यशङ्काव्यावृत्त्यर्थं **यथावस्थितवस्तुज्ञाननिवर्त्यत्वमित्युक्तम्** । ज्ञानप्रागभावे व्यभिचार इति तद्व्युदासार्थं **प्रतीयमानत्वपूर्वक**पदम् । ज्ञानप्रागभावोऽपि कदाचित् प्रतीयमानत्वपूर्वको निवर्त्यत इति चेत्—न ; नियमस्य विवक्षितत्वात् ; यथा "सिद्धे शब्दार्थसंबन्धे" इत्यत्र 'सिद्धे एव' इत्यवधारणस्य विवक्षितत्वान्नित्यत्वसिद्धिः ; यथा "अब्भक्षो वायुभक्षः" इत्यादौ 'अप एव भक्षयति' इत्यवधारणसिद्धिः, तद्वत् । भूदलनज्ञाननिवर्त्यस्य रज्जुसर्पस्य यथावस्थितवस्तुज्ञाननिवर्त्यत्वाभावादव्याप्तिरिति चेत्—न ; तस्यापि यथावस्थितवस्तुज्ञानेन निवर्तयितुं योग्यत्वात् ; अत एव हि निवर्त्यत्वमित्युक्तम्, न तु निवृत्तत्वमिति । न च सर्पभ्रमजनिते रज्जुधीनिवर्त्ये परमार्थभूते भयेऽतिव्याप्तिरिति वाच्यम्, भयस्य क्षणिकतया स्वयमेव निवृत्तस्य रज्जुज्ञाननिवर्त्यत्वाभावात् ; रज्जुज्ञानं ह्युत्तरभयोत्पत्तिं प्रतिबध्नाति । अतः प्रतीयमानत्वनियमपूर्वकयथावस्थितवस्तुगोचरज्ञानमात्रनिवर्तनीयत्वं मिथ्यात्वमित्यर्थः । अनेन लक्षणेन सदसद्वैलक्षण्यं फलितम् । तत्र प्रतीयमानत्वपूर्वकेत्यसद्व्यावृत्तिः ; शेषेण सद्व्यावृत्तिः । अस्य मिथ्यात्वलक्षणस्य संप्रतिपन्नमिथ्याभूतेष्वनुगतत्वं दर्शयति—**यथेति** । अथोक्तलक्षणस्य पक्षेऽतिदेशे कर्तुमुचितेऽपि स्वप्रकाशे वस्तुन्यध्यासानुपपत्तिरूपं द्वितीयं चोद्यं परिहर्तुमाह—**दोषवशाद्धि तत्र तत्कल्पनमिति** । अजडत्ववज्जडत्वमपि नाध्यासप्रयोजकम्, जडेऽपि दोषाभावे सत्यध्यासादर्शनात् ; अतो दोष एव हि सर्वत्र कल्पकः ; कल्पने दोषाधीने स्वतः परतो वा प्रकाशो भ्रमाधिष्ठानत्वोपयोगी । पुरोवर्तिनि भासमाने हि रजतभ्रम इति दार्ष्टान्तिके परिहर्तुं दृष्टान्ते कल्पनस्य

दोषाधीनत्वमुक्तम् । इत्थं प्रतीयमानत्वपूर्वकं यथावस्थितवस्तुज्ञाननिवर्त्यत्वं मिथ्यात्वं, मिथ्याभूतार्थकल्पनं च दोषवशादिति दृष्टान्ते शिक्षितमर्थद्वयं दार्ष्टान्तिकेऽतिदिशन् शङ्काद्वयं चार्थान्निराकरोति—**एवमिति** । अत्यन्तवैसादृश्यरहितकतिपयाध्यास एकाधिष्ठाने दृष्टः ; यथा—सर्पभूदलनाम्बुधाराद्यध्यासो रज्जुमात्रे । कथमेकस्मिन्नधिष्ठाने युगपन्मिथोऽत्यन्तविसदृशानन्तप्रपञ्चाध्यास इत्येका शङ्का । "यः सर्वज्ञः" इत्यादिषु सर्वज्ञतादिगुणकत्वेन प्रतीते ब्रह्मणि कथं वाध्यास इति द्वितीया । **चिन्मात्रवपुषी**त्यनेन पूर्वोक्तां स्वयंप्रकाशत्वकृतामध्यासानुपपत्तिं स्फोरयति । **परे ब्रह्मणीति** शङ्काद्वयं परिहृतं भवति ; विलक्षणाधिष्ठानत्वात् कृत्स्नाध्यास उपपन्न इति । वैलक्षण्यं च सर्वसाधारणसन्मात्ररूपत्वम् । सर्वज्ञत्वादिगुणा अपरे ब्रह्मणि ; परे ब्रह्मणि तु चिन्मात्ररूपतया सर्वज्ञत्वादिगुणानन्वयादध्यास उपपन्न इति चाभिप्रायः । **इदमिति** प्रतीयमानताकारपरामर्शिना पदेन **यथावस्थितब्रह्मस्वरूपावबोधबाध्यमिति** पदेन च पूर्वोक्तमिथ्यात्वलक्षणमनूदितं भवति । **दोषकल्पितमि**त्यनेन दोषवशादित्यादिनोक्तमतिदिष्टम् । विविधकृत्स्नाध्यासं दर्शयति—**देवेति** । **मिथ्यारूपम्** ; मिथ्यात्वलक्षणोपेतत्वात् रज्जुसर्पवन्मिथ्येत्युक्तं भवति । दोषः कः ? स किं परमार्थः ? उतापरमार्थः ? परमार्थत्वे ज्ञाननिवर्त्यत्वं न स्यात् ; अपरमार्थत्वे प्रपञ्चवत् कल्पकान्तरापेक्षायामनवस्था स्यात् ; स किं ब्रह्मण्यतिरोहिते कल्पयति ? उत तिरोहिते ? अतिरोहिते चेदनुपपन्नम्, रज्जुत्वे प्रकाशमान इवाध्यासोदयविरोधात् ; अविरोधे पश्चादप्यनिवृत्तिः । तिरोहिते चेत्, तिरोधानं किं स्वतः ? किं वा परतः ? यदि स्वतः, अनिवर्त्यत्वम् ; निवृत्तौ स्वरूपोच्छेदो वा । यदि परतः, तत् परं वाच्यम् । किंच नानाध्यासानां नानादोषमूलत्वं दृष्टम् । अतोऽनेकदोषा अभ्युपगन्तव्या इतीमाः शङ्काः परिहर्तुमाह—**दोषश्चेति** । **चः** शङ्कानिवर्तकः । को दोष इत्यस्य प्रतिवचनम्—**अविद्येति** । तस्याः पारमार्थ्यापारमार्थ्यविकल्पे **सदसदनिर्वचनीयेत्य**पारमार्थ्याभ्युपगमः । अनवस्थापरिहारः—**अनादीति** । तिरोहितातिरोहितविकल्पस्य प्रतिवचनं **स्वरूपतिरोधान**शब्देन । तच्च किं स्वतः ? परतः ? इत्यत्र परत इत्यङ्गीकृतम्, तिरोधानस्य हेतुनिर्देशात् । नानाध्यासस्यैकदोषमूलत्वमुक्तं **विविधेत्यादिना** । विक्षेपोऽध्यासः । आच्छादिकाविद्या, विक्षेपिकाविद्येत्यविद्याया एकस्या एवावस्थाद्वयं तदभिमतं तिरोधानविक्षेपहेतुत्ववचनात् सूचितम् ।

भावप्रकाशिका

**अपिनोपपादयिष्यमाणस्येति**; अपिर्हि "पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु" इति समुच्चयार्थकत्वेनान्वाचयार्थकत्वाभावात् प्राधान्यार्थक एवेति भावः। यद्वा निपातानामनेकार्थत्वात् प्राधान्यद्योतकत्वमिति भावः। **वक्ष्यमाणाज्ञात्रादय इति**; विशेषपदविवरणरूपास्त इति भावः। विजातीयादिनिवृत्तिपरस्य "सदेव" इत्यादिवाक्यस्य प्रतिज्ञातार्थप्रमाणतयोदाहरिष्यमाणत्वात् विशेषपदस्य विजातीयादिपरत्वमेवोचितमित्यभिप्रायेणाह—**विजातीयसजातीयस्वगता वेति**। **अन्वयिनो व्यावृत्तिरूपाश्चेति**; भावरूपा अभावरूपाश्चेत्यर्थः। विशेषसहिष्णोर्ब्रह्मणः कथं तत्प्रत्यनीकत्वमित्याशङ्क्याह—**स्वज्ञानेननिवर्तकामिति**। **तुच्छत्वेति**; सर्वप्रमाणानां सविशेषविषयत्वादिति भावः। ज्ञेयत्वस्याप्यशेषशब्देन क्रोडीकृतत्वान्मात्रचा तद्व्यवच्छेदो व्यर्थ इत्यन्यथा व्याचष्टे—**यद्वा प्रत्यनीकेति**; 'प्रत्यनीकम्' इति निर्देशात् प्रत्यनीकत्वरूपो धर्मोऽनुवर्तत इत्याशङ्काया निवर्तनीयत्वादिति भावः। इदमप्यशेषपदसामर्थ्यात् सिध्यतीत्यन्यथा व्याचष्टे—**यद्वा मात्रचा वस्तुतः समस्तेति**। न चाशेषविशेषप्रत्यनीकमित्यनेन सिद्धत्वात् पौनरुक्त्यं शङ्क्यम्, अशेषविशेषप्रत्यनीकमित्यस्याशेषविशेषनिवर्तकज्ञानविषयत्वमर्थः; इह तु सर्वदा तच्छून्यत्वमुच्यत इति भेदात्। **एवकारेण सगुणब्रह्मव्यावृत्तिरिति**; इदमुपलक्षणम्—निर्गुणस्यैव ब्रह्मणः पारमार्थिकत्वकथनात् तद्व्यतिरिक्तसगुणब्रह्मादेः प्रपञ्चस्य पारमार्थिकत्वं व्यावर्त्यत इत्यर्थः। उत्तरत्रैवकारस्य तदतिरेकीत्यादिग्रन्थेन तथा विवरणादिति द्रष्टव्यम्। **निषेध्यनानात्वं सिध्यतीति दर्शितमिति**; नानाशब्दस्य ब्रह्मव्यतिरिक्तनिषेध्येऽपि संभवद्वृत्तिकत्वेन ब्रह्मणोऽपि परामर्शस्यानपेक्षितत्वादिति भावः। **ज्ञातृज्ञेयतत्कृतज्ञानभेदेति**; अत्र ज्ञाता च ज्ञेयं च तत्कृतज्ञानं च ज्ञातृज्ञेयतत्कृतज्ञानानि, तेषां भेदाः; भेदशब्दः प्रत्येकमभिसंबध्यते; अत एवैकैककोटिष्ववान्तरभेदा इति वक्ष्यति। न चैवं भेदशब्दस्य सर्वान्वितत्वे 'तत्कृतज्ञानभेदः ज्ञातृज्ञेयावच्छिन्नवृत्तिज्ञानभेदः' इति भेदशब्दस्य ज्ञानमात्रान्वितत्वप्रदर्शकोत्तरग्रन्थविरोध इति वाच्यम्, तेनाप्यन्वयसंभवेन तथा निर्देशोपपत्तेरिति द्रष्टव्यम्। **अनेन वृत्तिस्फुरितेति**; **अनेन**; तत्कृतेति विशेषणेनेत्यर्थः। तदभावे ज्ञानशब्देन वृत्तिस्फुरितचैतन्यस्यैव ग्रहणं स्यात्, मृषावादिमते ज्ञानशब्दस्य वृत्तिस्फुरितचैतन्य एव प्रसिद्धेः। ततश्च ज्ञातृ-

ज्ञेयस्वरूपभेदवत् ज्ञानस्वरूपभेदस्यापि स्वरूपप्रयुक्तत्वप्रतीतिः स्यादिति तद्व्यावृत्त्यर्थं तत्कृतेत्युक्तमिति भावः । **विरोधं च स्फोरयत्येवकार इति**; न च पूर्वपक्षिग्रन्थे स्वमतविरोधस्फोरकत्वमयुक्तं, स्वव्याघातकत्वादिति वाच्यम्; पूर्वपक्षानुवाददशायां स्वरूपव्याक्रियैव निराक्रियेतेति न्यायेन विरोधमपि स्फोरयन् सान्तर्हासमनुवदतीत्यभिप्रायात् । केचित्तु प्रमाणसिद्धत्वात् विरोधं दोषत्वेन स्फोरयतीति व्याचक्षते । "भूतं प्राण्यतीते समे त्रिषु" इति पाठात् 'पितृभूतोऽसौ' इत्यादिवत् भूतशब्दस्योपमानार्थकत्वशङ्कां व्युदस्यति---**मिथ्याभूतं मिथ्याभाववदिति**; उक्तं हि "प्रमाणभूत आचार्यः" इति भाष्यं व्याकुर्वता कैयटेन--"प्रमाणभूत इति; प्रामाण्यं प्राप्त इत्यर्थः; भू प्राप्तावित्यस्मात् "आ धृषाद्वा" इति णिजभावे रूपम् । वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्तते" इति । तद्वदिहापि मिथ्याशब्दो मिथ्यात्वपरः । ततश्च मिथ्यात्ववदित्यर्थसिद्धिरिति भावः । **सदेवेति विजातीयभेदो व्यावर्त्यते; एकमेवेति सजातीयभेदः; अद्वितीयमिति स्वगतभेद इति**; यद्यपि "एकमेवाद्वितीयम्" इति वाक्य एकशब्देन स्वगतभेदनिरासः, एवकारेण सजातीयभेदव्युदासः, अद्वितीयपदेन विजातीयभेदव्युदास इत्येवं परैर्व्याख्यातम्; उक्तं च--

"वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयः शिलादिभिः ॥
सदसद्वस्तुनोर्भेदत्रयं प्राप्तं निषिध्यते ।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥"

इति; तथाप्यस्यापि प्रकारस्य तत्र तत्र व्याख्यातत्वादित्थमुपन्यस्तम् । अत एव शंकरभाष्ये कल्पतरौ च--'सदेवेति सृष्टेः प्राक् नामरूपादिव्यावर्त्यते; एकमेवेत्यनेन महदादिकं स्वकार्यपतितं नास्तीति निषिध्यते, अद्वितीयमिति निमित्तान्तरं निषिध्यते' इत्युक्तम् । ननु "वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः" इति स्वगतभेदस्य पत्रपुष्पादिप्रतियोगिकत्वप्रतीत्या पत्रपुष्पादिलक्षणो भेद इति न प्रतीयते; अपितु तत्प्रतियोगिकभेद एव प्रतीयते; अत्र ग्रन्थे तु सजातीयरूपो विजातीयरूपो भेद इत्युच्यते; कथमनयोरैकार्थ्यमिति न चोदनीयम्; तथापि परव्यवहारदर्शनाददोष इति द्रष्टव्यम् । **तस्यैव प्रपञ्चनादिति**, "यथोर्णनाभिः" इत्यादिना भूतयोनित्वस्यैव

प्रपञ्चनादित्यर्थः। **यस्येति**, यस्य ब्रह्म अमतमविषय इति निश्चयः, तस्य तद्ब्रह्म मतं सम्यक् ज्ञातम्; यस्य तु विषयतया ब्रह्म मतं, न स ब्रह्म वेद; अविज्ञातं विजानतां विषयत्वेनाविज्ञातं यथावदविजानतां विषयत्वेन विज्ञातमित्यर्थः। **ज्ञातृत्वनिषेधपरमिति**; यद्यपि "न दृष्टेः" इत्यस्य दृष्टेश्चक्षुर्जन्याया अन्तःकरणवृत्तेः द्रष्टारं स्वरूपभेदचैतन्येन व्यापारं तस्या अपि भासकं तद्वारस्यया चक्षुर्जन्यया अन्तःकरणवृत्त्या न पश्येः प्रत्यगात्मा तद्गोचरो न भवतीति ज्ञेयत्वं प्रतिषिध्यत इत्येव परैरर्थो वर्णितः, तथापि ज्ञेयत्वप्रतिषेधे ज्ञातृत्वनिषेधस्यापि सिद्धिमभिप्रेत्योक्तं **ज्ञातृत्वनिषेधपरं वाक्यमाहेति**। केचित्तु—मृषावाद्येकदेशिभिस्तथा व्याख्यातं, तदनुसारेणैतदुक्तम्; योजनान्तरं तु सिद्धान्ते किं दृष्टेरिति पञ्चमी षष्ठी वेति विकल्पमुखेन स्पष्टीकरिष्यतीति न तदनुपपादनं दोष इति मन्यन्ते। **सामानाधिकरण्येनेति** छेदः। **सामानाधिकरण्यं हि बाधार्थं दृष्टमिति**; सामानाधिकरण्यं हि चतुर्धा—अध्यासे सामानाधिकरण्यम्; अपवादे सामानाधिकरण्यम्; विशेषणविशेष्यभावे सामानाधिकरण्यम्; ऐक्ये सामानाधिकरण्यं चेति। अध्यासे सामानाधिकरण्यं नाम "ब्रह्मेत्युपासीत" इत्यादौ। अपवादे सामानाधिकरण्यं नाम 'यद्रजतमभात् सा शुक्तिः' इति, पूर्वोत्पन्नरजतप्रतीत्यपवादार्थत्वात् सामानाधिकरण्यस्य। इदमेव हि बाधार्थसामानाधिकरण्यमित्युच्यते। विशेषणविशेष्यभावेन सामानाधिकरण्यं नीलमुत्पलमित्यादौ। ऐक्यसामानाधिकरण्यं कोकिलः पिक इत्यादौ। **विकारो घटादिसंस्थानं नामधेयं चेति**; अत्र च एवार्थः; स्वार्थे च धेयप्रत्ययः; नामधेयं च नाममात्रमेव हीत्यर्थः। एवं हि शारीरकशांकरभाष्यम्—"वाचारम्भणं विकारो नामधेयम्; वाचा केवलमस्तीत्यारभ्यते। विकारो घटः शराव उदञ्चनं चेति। न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति। नामधेयमात्रं ह्येतदनृतम्; मृत्तिकेत्येव सत्यम्" इति। अतोऽयमपि ग्रन्थस्तदनुवादत्वात् तदनुगुण एव नेतव्यः। ननु "अथ तस्य भयं भवति" इति वाक्यस्य "मृत्योः स मृत्युमाप्नोति" इति वाक्यानन्तरमुपादानं युक्तम्, अनर्थप्रतिपादकत्वसाधारण्यादित्यत्राह—**यदा ह्येवेत्यादेरिति**। **एकन्यायपरिहार्यत्वादिति**; अब्रह्मात्मकनानात्वनिषेधपरत्वेन परिहार्यत्वादित्यर्थः। उभयलिङ्गत्वं साकारत्वं निराकारत्वं चेति पाठः। "न स्थानतोऽपि" इत्यधिकरणे श्रुतिबलात् सविशेषत्वनिर्विशेषत्वरूपलिङ्गद्वयसमुच्चय इति पूर्वपक्षस्य निरस्तत्वादिति

द्रष्टव्यम् । केचित्तु—उभयलिङ्गत्वं साकारनिराकारत्वं साकारत्वं चेत्यन्वयः। तस्मिन्नधिकरणे उभयलिङ्गत्वरूपस्य साकारनिराकारत्वान्यतरलिङ्गत्वसमाश्रयणेऽपि केवलसाकारत्वपक्षस्य साकारनिराकारत्वपक्षस्य च प्रतिक्षिप्तत्वात्तथोक्तम्; न तूभयलिङ्गशब्दार्थतयेति वदन्ति । **दुर्निरूपस्वरूपत्वात्; बाधितत्वादित्यर्थ इति**; बाधितदेशकालनिमित्तकत्वादित्यर्थः । न तावत्स्वल्पापवरकनिद्राणपुरुषदृश्यमानैककोणविश्रान्तगिरिनदीसमुद्रादीनां मुहूर्तमात्रशयितपुरुषानुभूयमानविवाहपुत्रोत्पादनतदुपलालनादीनामुचितो देशः कालो वा संभवति । न वा तदुत्पत्तौ ज्ञप्तौ वोचितं निमित्तमस्ति । अतो देशकालनिमित्तानां दुर्निरूपत्वेन बाधितत्वान्मिथ्यात्वमित्यर्थः । स्वाप्नार्थमिथ्यात्वप्रदर्शकसूत्रोपन्यासस्य प्रपञ्चमिथ्यात्वप्रसाधनदशायामसंगतिमाशङ्क्याह—**स्वाप्नार्थमिथ्यात्वमिति**। "प्रत्यस्तमितभेदम्" इत्ययं श्लोकः षष्ठांशे सप्तमेऽध्याये योगप्रकरणे केशिध्वजवचनम् । "ज्ञानस्वरूपम्" इति श्लोकस्तु प्रथमांशद्वितीयाध्याये नमस्कारश्लोकः । "परमार्थस्त्वमेकः" इतीयं चतुःश्लोकी प्रथमांशे चतुर्थेऽध्याये रोमान्तरस्थानां मुनीनामादिवराहस्तुतौ। "तस्यात्मपरदेहेषु" इति श्लोको "वेणुरन्ध्रविभेदेन" इति श्लोकश्च द्वितीयांशे चतुर्दशाध्याये आदिभरतश्लोकौ । "यद्यन्योऽस्ति" इति श्लोकस्तत्रैवांशे त्रयोदशाध्याये आदिभरतश्लोकः । "सोऽहं स च त्वम्" इति श्लोकस्तत्रैवांशे षोडशाध्याये आदिभरतोपदेशान्ते श्लोकः । "विभेदजनके" इति श्लोकः षष्ठांशे सप्तमाध्याये केशिध्वजस्य योगप्रकरणान्ते वचनम् । "ज्ञानस्वरूपः" इत्यादिश्लोको द्वितीयांशे द्वादशाध्याये पठितः । **शक्तिमदीश्वरसंकल्परूपज्ञाननिवर्त्य इति**; शक्तिमान्य ईश्वरः, तत्संकल्परूपज्ञाननिवर्त्य इत्यर्थः। शक्तिसहकृतज्ञाननिवर्त्य इति यावत् । **ज्ञानमात्रनिवर्त्यत्वस्य विवक्षितत्वादिति**; अत एव छत्रपादुकादिवैधुर्यरूपनियमसहकृतसेतुदर्शननिवर्त्यपापादौ नातिव्याप्तिः । **प्रबलभ्रान्तिज्ञाननिवर्त्येति**; निवृत्तिर्हि अभावः; स च कल्पिताकल्पितसाधारणः; ततश्च भ्रान्तिज्ञानेन प्रबलेन 'शुक्तिर्नास्ति' इति कल्पना भवत्येवेति कल्पितोऽभावस्तज्जन्य इति तन्निवर्त्यत्वं सत्यरजतस्योपपद्यते। यद्वा 'नास्ति' इति प्रतीयमानत्वमेव निवृत्तिः; सा च सत्यरजतस्यापि संभवतीति भावः । **न तु निवृत्तत्वमितीति**; यद्यपि निवृत्तत्वमित्युक्ते निवर्तिष्यमाणमिथ्यापदार्थाव्याप्तिः, तथापि ज्ञानजन्यनिवृत्तिप्रतियोगित्वमिति नोक्तमित्यत्र ता-

त्पर्यात् । प्रतीयमानत्वयथावस्थितज्ञाननिवर्त्यत्वखण्डद्वयेन ख्यातिबाधपर्यवसितेन तत्साध्यमसद्विलक्षणत्वे सति सद्विलक्षणत्वं लक्ष्यते; अतस्तदेव हि लक्षणं विवक्षितमिति स्वसिद्धान्तमाविष्करोति—**अनेन लक्षणेन सदसद्वैलक्षण्यं फलितमित्यादिना । सर्वज्ञत्वादिगुणकत्वेन प्रतीते ब्रह्मणि कथं वाध्यास इति** ; ननु सर्वज्ञस्याध्यासद्रष्टृत्वेन परं विरोधः, न त्वध्यासाधिष्ठानत्वेन ; न च सर्वज्ञत्वादिगुणकत्वेन प्रतिपन्नत्वं किंचिज्ज्ञत्वाध्यासाधिष्ठानत्वविरुद्धमिति वाच्यम् , अध्यासदशायां तथा प्रतीत्यभावात् ; ततश्च कथमयमाक्षेपः ? कथं वा सर्वज्ञत्वगुणानन्वयेन परिहार इति चेत् —न; सर्वज्ञत्वादिगुणकत्वस्य कल्पितत्वेन कथमध्यासाधिष्ठानत्वमिति चोद्याभिप्रायसंभवात् ।

## श्रुतप्रदीपिका

एवं पूर्वपक्षोक्तहेतुषु वस्तुसामर्थ्यव्यतिरिक्तहेतव उपायपरवाक्यालोचनया परिहृताः। वस्तुसामर्थ्यं तूपेयपरवाक्यपर्यालोचनया विस्तरेणोपन्यस्य परिहरणीयमिति कृत्वा तत्पूर्वं न परिहृतम् । अतस्तद्विस्तरेणोपन्यस्यते—**यदप्याहुरित्यादिना सर्वे वेदान्ता आरभ्यन्त इत्यन्तेन** । यदप्याहुरित्यपिशब्दबहुवचनाभ्यामस्यार्थस्य प्राधान्यं बहुग्रन्थकाराभिमतिश्च सूचिते । चिन्मात्रसत्यत्वं तदन्यमिथ्यात्वं च प्रतिजानीते—**अशेषेत्यादिग्रन्थद्वयेन** । अशेषविशेषो ज्ञातृत्वादिर्व्यावृत्तिरूपश्च । प्रत्यनीकत्वं वस्तुतस्तदन्वयानर्हत्वं ज्ञातत्वेन तन्निवर्तकत्वं च । चिच्छब्देन तुच्छत्वं व्युदस्यते । मात्रचा ज्ञातृत्वज्ञेयत्वे । **एवेति** ; सगुणं तु काल्पनिकमिति भावः । चिन्मात्रसत्यत्वं प्रतिज्ञातम् ; अथैवकाराभिप्रेतं तन्मूलबन्धस्य धीनिवर्त्यत्वसिद्धये तदन्यमिथ्यात्वमाह—**तदिति** । तद्व्यतिरेकेण “ नेह नाना ” इत्यादिनिषेधास्तदन्यविषया इति भावः । नानाशब्दविषयं दर्शयति—**ज्ञात्रिति** । **तत्कृतेति** स्वरूपप्रयुक्तताव्यावृत्तिः । **भेदस्त्ववान्तरवैविध्यम्** । **आदिशब्दो** जन्मजरामरणादिपरः । **सर्वमिति** ; अतदधिष्ठानं परमार्थश्च न कश्चिदित्यर्थः । एवेत्यधिष्ठानानेकत्वव्युदासः, स्वप्रकाशत्वरूपविरोधशङ्कास्फोरणं च । प्रतिज्ञातयोर्मानमाह—**सदेवेत्यादि** । षड्विधतात्पर्यलिङ्गकं कारणवाक्यं विजातीयस्वगतभेदाभावपरम् । सदेवेत्येवकारार्थस्पष्टयाय कारणवाक्यान्तरमुदाहरति—**अथ परेति** । **अद्रेश्यमग्राह्यम्** ; प्रत्यक्षानुमित्यगोचरं चक्षुस्तदन्याक्षागोचरं वा । **गोत्रं** नाम । **सर्वगतम्** ; सर्वजगतामधिष्ठानतया श्रुतम् । अथ शोधकवाक्यम्—**सत्यमिति** । कारण-

वाक्यशोधकवाक्यान्तरैकार्थ्यं सामानाधिकरण्यैर्निर्विशेषपराभिप्रेतं सत्यादिवाक्यस्य व्यावृत्तिपरत्वस्पाष्ट्यायाह—**निष्कलमिति**। कला अवयवाः। **शान्तमित्यादि**; षडूर्मिकर्मसंबन्धतत्फलरहितमित्यर्थः। **यस्येति**; ज्ञेयत्वनिषेधः। **न दृष्टेरिति**; ज्ञातृत्वनिषेधः। असुखव्यावृत्तिः—**आनन्द इति**। अथ चिदन्यमिथ्यात्वमाह—**इदं सर्वात्मेति**। 'रज्जुरेव सर्पः' इतिवत् बाधार्थं सामानाधिकरण्यमभिप्रेतम्। 'तस्मिन्नेव' इति प्रतिज्ञातं ब्रह्मणः सर्वाध्यासाधिष्ठानत्वं च सूचितम्। बाधं स्पष्टयति—**नेहेति**। भेददृगज्ञ इत्याह—**मृत्योरिति**। अत्र मृत्युरविद्या। तर्हि कदाचिन्निवृत्तिः स्यादित्यत्राह—**यत्र हीति**। **यत्र** यदा; **तत्** तदा; 'इतरेण, कः' इति च पदद्वयमध्याहर्तव्यम्। दृष्टान्तेनोपपादयति—**वाचेति**। उक्तमृत्युकार्यभेदधीफलं दर्शयति—**यदेति**। अथ चिन्मात्रसत्यत्वं तदन्यमिथ्यात्वपरं सूत्रद्वयं दर्शयति—**न स्थानत इत्यादि**। अथ पुराणोक्तिमर्थद्वयेऽपि दर्शयति—**प्रत्यस्तमितेति**। सजातीयविजातीयस्वगतभेदरहितं सत्तामात्रं व्यावृत्तिरूपभेदरहितम्। तुच्छतां व्युदस्यति—**आत्मसंवेद्यमिति**; स्वप्रकाशमित्यर्थः। तत्र हेतुः—**ज्ञानमिति**। **अत्यन्तनिर्मलम्**; नित्यास्पृष्टदुःखित्वज्ञातृत्वादिभेदम्। अर्थो देवादिः। **नान्योऽस्तीति** जगदपारमार्थ्यमुक्तम्। तद्विवरणम्—**यदेतदिति**। श्लोकद्वयोक्तभ्रमनिवृत्तिस्तत्त्वज्ञानेनेत्याह—**ये त्विति**। जीवैक्यप्रकरणमाह—**तस्येति**। **एकमयम्**; एकम्। आत्मपरशब्दनिमित्तभेदशङ्कां व्युदस्यति—**यदीति**। निदर्शयति—**वेण्विति**। उपदिशति—**सोऽहमिति**। यथोपदेशमनुष्ठानम्—**तत्याजेति**। जीवब्रह्मनिवृत्तिः **विभेदेति**। अर्थद्वयेऽपि श्रीगीतोक्तिः—**अहमात्मेति**। भूतशब्दस्य शरीरमात्रस्पाष्ट्यायाह—**क्षेत्रेति**। अन्यमिथ्यात्वम्—**न तदस्तीति**। अनन्यपरत्वमुक्तम्—**वस्तुस्वरूपेति**। नात्यन्तासत्त्वं मिथ्यात्वम्; ख्यातेर्निरसनीयाभावेन शास्त्रवैयर्थ्यप्रसङ्गात्। न चान्यत्र सतोऽन्यत्र ख्यातत्वम्, क्वापि सत्यत्वप्रसङ्गादित्यत्राह—**मिथ्यात्वमिति**। **प्रतीयमानत्वे**त्यसद्व्यावृत्तिः। **यथावस्थितेति** सद्व्यावृत्तिः। प्रतीयमानत्वपूर्वकेति तन्नियमपूर्वकत्वं विवक्षितम्; 'अब्भक्षः' इतिवत्। **ज्ञाननिवर्त्यत्वमिति**; ज्ञानमात्रनिवर्त्यत्वम्। वस्तुशब्दः कर्मधारयशङ्काव्युदासाय। एवं सति मुद्गरादिनिवर्त्यशक्त्युपबृंहितज्ञाननिवर्त्यभ्रान्तिज्ञाननिवर्त्यसम्यग्रजतनिवर्तकधीप्रागभावव्युदासः। न च भूरन्ध्रधीनिवर्त्यरज्जुसर्पेऽव्याप्तिः, तस्यापि यथावस्थितरज्जुधिया निवर्तनार्हत्वात्। निदर्शयति—**यथेति**। **ननु**

रज्ज्वादौ रज्जुत्वेन स्वरूपानवभासादध्यासः; स्वप्रकाशवस्तुनि तु स कथमित्यत्राह—**दोषेति**। दोष एवाध्यासप्रयोजकः; स्वतः परतो वा भानं त्वध्यासोपयोगि। अधिष्ठाने भाते ह्यध्यास इति भावः। मिथ्यात्वलक्षणं तस्य दोषकल्पितत्वं च दृष्टान्ते दर्शितं दार्ष्टान्तिकेऽतिदिशन् शङ्काद्वयं च शमयति—**एवमिति**। कथमेकत्र बह्वध्यास इति शङ्कां व्युदस्यति—**पर इति**। अधिष्ठानवैलक्षण्यात् रज्जौ सर्पभूरन्ध्रादिभ्रान्तिवदिति भावः। सर्वज्ञे कथं भ्रान्तिरिति च शङ्कां व्युदस्यति—**पर इति**। सर्वज्ञत्वादयः सगुणब्रह्मणः, न तु परस्येत्यर्थः। दोषेत्यादिपदैः प्रागुक्तार्थद्वयातिदेशः। **इदं** प्रतीयमानम्। नानाविधत्वविवरणं देवेत्यादिपदम्। दोषः कः? स सत्यश्चेन्न धीनिवर्त्यः? न चेत् दोषान्तरापेक्षयानवस्था? स चेत् ब्रह्मण्यतिरोहिते कल्प्यते भ्रमानुदयानुच्छेदयोरन्यतरः स्यात्; तिरोहिते चेत्, यदि तिरोधिः स्वतः, अनिवृत्तिः; निवृत्तौ स्वरूपनिवृत्तिः स्यात्। परतश्चेदनवस्था। नानाध्यासा नानादोषमूलाश्च दृष्टा इति बहुशङ्कापरिहारायाह—**दोषश्चेति**। अविद्येति सदसदनिर्वचनीयेत्यनादीति स्वरूपतिरोधानविविधविचित्रविक्षेपकरीतिशब्देषु क्रमादिमाः शङ्काः प्रत्युक्ताः।

**तत्त्वटीका**

एवं "विरोधादप्रमाणत्वात्" इत्याद्युक्तानां कर्मनैरपेक्ष्यहेतूनां साङ्गोपायविधिनिरूपणेन बाधासिद्धिसाधारण्यान्यथासिद्ध्यादिदोषाः प्रदर्शिताः। अथ साधनचतुष्टयस्य पूर्ववृत्तत्वे कर्मणो विरुद्धत्वे वाक्यार्थधियो मोक्षोपायत्वे च हेतुतया समाहारेण प्राक् प्रदर्शितं सामर्थ्यं प्राप्यनिवर्त्यगोचरश्रुतिसमीक्षया निराकर्तुं विस्तरेणानुभाषते—**यदप्याहुरित्यादिना आरभ्यन्ते** इत्यन्तेन।

साधितं त्विह निर्बाधं बाधितं निष्प्रतिक्रियम्।
तथापि पुनरारम्भः शत्रुशेषविमर्दवत्॥ ३३०॥
परपक्षप्रसिद्धत्वं गौरवं व्यक्तभाषणम्।
बहूनामपि संवादो यदप्याहुरितीर्यते॥ ३३१॥
* (अशेषेत्यादिना) ब्रह्मपारमार्थ्यं (प्रतिश्रुतम्)।
तदन्यमिथ्याभावस्तु तदित्यादिभिरुच्यते॥ ३३२॥

---

* **टि—अत्र मातृकासु सर्वत्र 'ब्रह्मपारमार्थ्यं' इत्येतावानेव भाग उपलभ्यते। 'अशेषेत्यादिना ब्रह्मपारमार्थ्यं प्रतिश्रुतम्।' इति अविकलेन पाठेन भाव्यमिति भाति।**

**यच्छब्दः** परगोष्ठीप्रसिद्ध्यर्थः । **अपिर्**दूषितादूषितसमुच्चयार्थः परेष्टगौरवद्योतको वा । **आहुरित्य**नेन कण्ठोक्तिः । बहुवचनं बहुव्याख्यातृसंमतिं तदुक्तकृत्स्नानुवादं च सूचयति । अशेषेत्यादिचिन्मात्रेत्यन्तं प्रागुक्तार्थम् ।

वाक्ययोः सत्यमिथ्यार्थप्रतिज्ञारूपयोरिह ।
यथार्हं हेतुसाध्यत्वं पदार्थेषु विभाव्यते ॥ ३३३ ॥

चिद्रूपतया सजातीयाद्यशेषभेदशून्यं परमार्थस्वप्रकाशं च । तत एव हि तुच्छव्यावृत्तिः । अवधारणेनान्यपरविधिवाक्यसिद्धस्य सगुणत्वस्य कल्पितत्वं मिथ्यात्वसाधकदृश्यत्वस्य व्यतिरेकव्याप्तिश्च व्यज्यते । प्रपञ्चोपलम्भात् विरोधशान्त्यै धीमात्रनिवर्त्यत्वाय चावधारणार्थं व्यनक्ति—**तदतिरेकीति** । स्वतः सिद्धे तस्मिंस्तु प्रकृतैतावत्त्वसूत्रोक्तन्यायेन "अथात आदेशो नेति नेति" "असदेवेदमग्र आसीत्" इत्यादिभिर्न बाधः स्यादिति तच्छब्दाभिप्रायः । ब्रह्मान्यत्त्वाद्भिन्नत्वाज्ज्ञातृत्वाज्ज्ञेयत्वादित्यादयस्तदन्यमिथ्यात्वहेतवः । उक्तेषु वीतावीतेषु शुक्तिरूप्यादिर्घटादिश्च दृष्टान्तः । **नानाविध**शब्देन "**नेह नाना**" इत्यादीनां विषयो दर्शितः । स्वरूपज्ञानव्यावृत्त्यै वृत्तिज्ञानसंगृहीत्यै चन्द्रनीतिव्यक्त्यै ज्ञातृत्वज्ञेयत्वज्ञानक्रियात्वतद्विशेषाणां करणभेदकृतस्मृतित्वानुभवत्वादीनां ब्रह्मण्यध्यस्तत्वसिद्ध्यै च **तत्कृत**शब्दः । कर्मकर्त्रवच्छिन्नं हि ज्ञानमहंकारविकारः क्रियास्वरूपः ; न त्वात्मस्वरूपम् , न च तद्धर्मः । अन्तःकरणतद्वृत्तिस्फुरितचैतन्यभेदस्तु जलचन्द्रभेदकल्प इति भावः । यो विशेषः पूर्ववाक्योक्तस्तत्र भेदशब्दो योज्यः । तत्रैषु नानाविधत्वमवान्तरविशेषैः । आदिशब्देन गोबलीवर्दनीत्या सुखदुःखतद्धेतुजन्मजरादेः कर्मकर्त्रादिविकल्पान्तराणां च संग्रहः । एकस्मिन्नेवैकदैव मिथोविरुद्धानन्ताध्यासो गगनगन्धर्वनगरनीत्या युक्त इत्यभिप्रायेण "सर्वमात्मैवाभूत्" इति श्रुत्यनुसारात् **सर्वं तस्मिन्नेवे**त्युक्तम् । एतेन माध्यमिकयोगाचारोक्तमताभ्यां विशेषः ख्यापितः । एवकारेण निरधिष्ठानभ्रमायोगात्तुच्छव्यावृत्तस्य तस्यैवाधिष्ठानत्वं युक्तमिति व्यज्यते । निरधिष्ठानश्च भ्रमो न युक्तः । शुक्तिरजतादेरध्यस्तद्रव्यधर्माणां चान्ततस्तदेवाधिष्ठानमिति चात्र भावः । निष्कले ब्रह्मण्यविद्यादर्शितानन्तांशे कल्पनाव्याप्तिसूचनाय **परि**शब्दः । **कल्पितम्** ; अविद्यमानत्वेऽपि 'अस्ति' इति प्रतीतम् ; असत्यमित्यर्थः । स्वात्यन्ताभाववन्निष्ठतया प्रतिभातमिति यावत् । तत एव **मिथ्याभूतम्** ; सर्वदैव सदसत्त्वेन

वृत्तमिति यावत् । कल्पितत्वे वक्ष्यमाणमिथ्यात्वं हेतुतयोच्यते इति केचित् । एवं युक्तिसूचके प्रतिज्ञाद्वये श्रुतिसूत्रस्मृतीः प्रमाणयति—**सदेवे**त्यादिना **अभिधानादि**त्यन्तेन । 'शाखाग्रे चन्द्रः' इतिवत्कारणत्वेन ब्रह्मण उपलक्ष्यत्वमभिप्रेत्यादौ शङ्कितदोषनिवर्तकेभ्यः शोधकेभ्यः पूर्वं कारणवाक्योपादानम् । तत्रापि षड्विधतात्पर्यलिङ्गवत्तया बलीयस्त्वात्प्रथमं सद्विद्योक्तिः । अत्र सत उत्पत्तिर्यस्य स्थाप्यते, तस्य सत्त्वेनानूदितस्याप्यसत्यत्वसूचकाभ्याम् "अग्रे" इत्युक्तेऽपि सर्वदा निषेधतत्पराभ्यामवधारणाभ्यामद्वितीयपदेन चाभिप्रेतेऽर्थे कण्ठोक्त्या शङ्कनीयविशेषनिषेधोपक्रमं कारणवाक्यान्तरमुपादत्ते—**अथेति** । **अद्रेश्यम्** ; अदृश्यम्, ऐन्द्रियिकप्रत्यक्षानर्हमित्यर्थः । **अग्राह्यम्** ; अनुमयापि दुर्ग्रहम् ; चक्षुःश्रोत्रादेरगोचर इति वा पदद्वयार्थः । 'ज्ञानकर्मेन्द्रियानर्हत्वमिह विवक्षितम्' इति केचित् । **अगोत्रम्** ; अव्यवधानेन देवादिनामभिरस्पृष्टम् ; सद्ब्रह्मादिशब्दैरपि हि लक्षणयैव प्रदर्श्यते । **अवर्णम्** ; सितरक्तादिशून्यम् ; कुलं च ब्राह्मण्यादि च दूरापास्तम् । **अचक्षुःश्रोत्रं तदपाणिपादमिति** ; इन्द्रियायत्तज्ञानक्रियारहितमिति भावः । **नित्यं विभुम्** ; कालतो देशतश्चानवच्छिन्नम् । एतेन प्रतिज्ञास्थब्रह्मत्वप्रदर्शनम् । **सर्वगतम्** ; स्वव्यतिरिक्तैः सर्वैरध्यस्तैरधिष्ठानतया श्रितम् ; वस्त्वन्तराभावाद्वस्तुपरिच्छेदरहितमित्याशयः । **सुसूक्ष्मम्** ; आकाशादिन्यायेन स्पर्शवत्सु प्रतिघातरहितम्, दृश्यत्वाद्यनुगुणस्थौल्यादिरहितमिति वा ; तेन योग्यानुपलब्धिबाधशङ्कानिरासः । **तदव्ययम्** ; तत्रैवं निरुक्तिः—

" सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ "

इति । एतदेव शब्दे योजितं तद्भक्तैः । **भूतयोनिम्** ; अविद्याशबलितरूपेण भूतरूपविवर्तोपादानमित्यर्थः । अत्र "यथोर्णनाभिः" इत्यादिना तत्प्रपञ्चः । एवं तटस्थलक्षणलक्षितस्य चिन्मात्रप्रतिज्ञानिर्वाहाय 'प्रकृष्टप्रकाशश्चन्द्रः' इतिवदतद्व्यावृत्तितत्परेण स्वरूपलक्षणेन शोधनं व्यनक्ति—**सत्यमिति** । अत्र सामानाधिकरण्यादिबलादन्यव्यावृत्तिपरत्वं कल्प्यम् । विशेषतोऽन्यधर्मव्यावृत्तिकण्ठोक्तिमाह—**निष्कलमिति** । ब्रह्मणश्चिन्मात्रशब्दसूचितं ज्ञेयत्वनिषेधं कस्यचित्स्तुत्यान्यस्य निन्दया च स्थापयति—**यस्येति** ; मननोपासनाद्यविषय इति भावः । ज्ञातृत्वनिषेधमप्याह—**न दृष्टेरिति** । दृष्ट्यादिशब्दो-

पलक्षितज्ञानव्यतिरिक्तज्ञातापि नास्तीति भावः। परप्रेमास्पदत्वादानन्दरूपो जीवः; स्वप्रकाशत्वान्नित्यप्राप्तस्यापि प्राप्यत्वोपचारः। ज्ञानशक्त्या स्वप्रकाशत्वात् सत्यः; तेन ब्रह्मणः सद्वितीयत्वमिति शङ्कानिरासार्थं चासुखाद्व्यावृत्तिमाह—**आनन्द इति**; जीवोऽपि ब्रह्मानतिरिक्ततयैवानन्दरूप इति भावः। न ह्यानन्दस्यानन्दित्वम्; अतश्च निर्गुणत्वसिद्धिः। "ब्रह्मण आनन्दः" इति श्रुतेश्चान्यपरत्वम्। 'सर्वं तस्मिन्नेव परिकल्पितम्' इत्यत्र श्रुतिमाह—**इदं सर्वमिति**। इदंकारविषयं कृत्स्नमनूद्य तद्विरुद्धात्मविधौ "चोरः स्थाणुः" इतिवदनूदितबाधार्थं सामानाधिकरण्यम्। "ब्रह्मैवेदं सर्वम्" "आत्मैवेदं सर्वम्" "पुरुष एवेदं सर्वम्" इत्यादिष्वेतद् व्यक्तम्। अत्र बाधार्थत्वमन्यत्र कण्ठोक्त्या द्रढयति—**नेहेति**। इह; प्रपञ्चे; "यस्मिन्पञ्च पञ्चजनाः" इति प्रस्तुते ब्रह्मणि वा; यन्नानात्वेन भाति तन्न सत्यमित्यर्थः। भेदद्रष्टुः प्रत्यवायोक्त्या भेदनिषेधं द्रढयति—**मृत्योरिति** "तमसो वा एष तमः प्रविशति" इत्यादिवदविद्यागृहीतः पुनरविद्यां तत्फलं वा प्राप्नोतीत्यर्थः। यदि भेदो नास्ति, खपुष्पवन्न दृश्येत; नित्यमसतोऽपि भ्रान्त्या दृश्यत्वे खनैल्यवन्नित्यं किं न दृश्येतेत्यत्र स्वप्नजागरकल्पबद्धमुक्तदशया युक्तायुक्तावस्थया वा नियमोक्तिमाह—**यत्रेति**। कालानुक्तिरियम्। **'नानेव, द्वैतमिव'** इति इवशब्दाभ्यां मिथ्यात्वस्य सिद्धवत्कारः। **तत्**; तदेत्यर्थः। 'इतरेण' इति पूर्वस्मिन्वाक्येऽध्याहार्यम्; परस्मिंस्तु 'कः' इति कर्तृकरणादिकल्पना निरस्ता। **पश्येत् विजानीयादिति** निषेध्यज्ञानावान्तरभेदपरम्। कार्यमिथ्यात्वं कारणसत्यत्वं च लोकदृष्ट्या निदर्शितमाह—**वाचेति**। अत्र दार्ष्टान्तिके सत्यत्वस्थापनाय दृष्टान्ते व्यावहारिकसत्यत्वमात्रम्। अतो न विरोधः। अन्वयव्यतिरेकाभ्यां भेदबुद्धेर्भयहेतुत्वेन त्याज्यत्वं दर्शयितुमाह—**यदा हीति**। अभयहेतुरैक्यधीः पूर्ववाक्योक्ता। उ इत्यवधारणार्थम्; **उ दरमन्तरं कुरुते**; ईषत् अन्तरं भेदं कुरुते मन्यते। उदिति विभज्य उत्कुरुत इति केचित्। उद्भवतीति चान्ये। **अरम्**; द्रुतम्। **अथ**; तदा; अनिरूप्येत्यर्थः। अस्य तु निर्विशेषत्वे सूत्रमादत्ते—**न स्थानत इति**। नोभयलिङ्गमित्यन्वयः। साकारत्वं साकारनिराकारत्वं च नास्ति; किं तु निराकारत्वमेवेत्यर्थः। ब्रह्मान्यमिथ्यात्वे सूत्रमाह—**मायेति**। इदं सूत्रं स्वप्नविषयमपि तन्मुखेन दुर्निरूपत्वाविशेषाद्धीमात्रेतरकृत्स्नमिथ्यात्वपुरस्कारकमिति भावः। इदं पाराशर्योक्तमर्थद्वयं पराशरोक्तश्लोकाभ्यां संवादयति—

**प्रत्यस्तमितभेदमिति** ; सजातीयादिसर्वविशेषरहितमित्यर्थः। तर्हि शून्यं स्यात् ; नेत्याह—**सत्तामात्रमिति**। सर्वत्र निर्बाधानुवृत्तं सत्तामात्रं हि न शून्यं स्यात्। गोबलीवर्दनयेन स्वगतो भेदो वा मात्रचा निषिध्यते। अथवा सत्ताशब्दस्य धर्मवाचितया धर्म्यपेक्षया भेदराहित्यं च धर्मं मात्रचा व्युदस्यति ; स्वाध्यस्तापेक्षया धर्मत्वं धर्मित्वं च कल्पितमिति भावः। तथापि सत्तादिशब्दवाच्यत्वं दुस्त्यजमित्यत्राह—**अगोचरं वचसामिति**। निमित्तभूतधर्माभावे गोत्ववन्निमित्तत्वाभावे च कथं शब्दप्रवृत्तिरिति भावः। अनुपाख्यत्वे तुच्छत्वं स्यादित्यत्र स्वप्रकाशत्वमाह—**आत्मसंवेद्यमिति**। हेतुं व्यनक्ति—**ज्ञानमिति**। **ब्रह्मसंज्ञितम्** ; ब्रह्मत्वाद्यभावेऽपि ब्रह्मशब्देनोपचरितमित्यर्थः। तर्हि 'ब्रह्मास्मि' इति विशिष्टधीः कथमित्यत्रोपसंहारोक्तमेतदुपक्रमानुगुणमित्यभिप्रायेणेमौ घटयति—**ज्ञानस्वरूपमिति**। अजडत्वेन ज्ञेयत्वज्ञातृत्वरहितमिति च भावः। **अत्यन्तनिर्मलम्** ; नित्यास्पृष्टाविद्यादिसर्वदोषम्। तत्रापि हेतुर्ज्ञानस्वरूपत्वम्। **अर्थस्वरूपेण** ; जडरूपदेवादिपिण्डात्मना कृत्स्नप्रपञ्चात्मना वा ; अनेन अन्यमिथ्यात्वं सिद्धम्। **परमार्थत** इत्याद्युपादानं तु पुराणमध्येऽपि सत्यैकत्वसाधकाभ्यासलिङ्गस्फूर्त्यर्थम्। **नान्योऽस्तीत्युक्तं** विवृणोति—**यदेतदिति**। उक्तमेव **ज्ञानस्वरूपमित्यादिना** पुनरपि द्रढयति। **ये तु ज्ञानविद** इत्याद्यपि केषुचिद्बाधप्रदर्शनेन व्यतिरेकेण स्थिरीकरणं, भ्रमनिवृत्तेर्धीमात्रसाध्यत्वख्यापकं च। कर्मशास्त्रनिरूढकर्तृनानात्वोपलम्भविरोधशान्त्यै तत्रैवात्माद्वैतमपि स्थापितमित्याह—**तस्येति**। **एकमयमिति** ; मयडिह स्वार्थिकः। आत्मपरशब्दाभ्यां भेदशङ्कां परिहर्तुं **यदीति** श्लोकः। **वेणुरन्ध्रेत्यादिना** दृष्टान्तमुखेनात्मभेदस्योपाधिकल्पितत्वोक्तिः। निदर्शितस्यैव निर्धार्योपदेशं दर्शयति—**सोऽहमिति**। उक्तमर्थमविसंवादिना यथोक्तकरणेन द्रढयति—**तत्याज भेदमिति** ; भेदमोहमित्यर्थः। जीवानां मिथो भेदधीनिवृत्तिरुक्ता। अथ जीवब्रह्मभेदबुद्धेरज्ञानमूलत्वं तदनुवृत्तौ हेत्वभावात्तन्निवृत्तिं चाह—**विभेदेति**। स्पष्टार्थतया पुराणोक्तिः पूर्वमुदाहृता। ऐतिहासिकं वाक्यमात्मनां परस्परं ब्रह्मणा चैक्ये तदन्यमिथ्यात्वे च दर्शयति—**अहमात्मेति**। अत्र सर्वभूतशब्दस्य जीवविषयत्वशङ्का सर्वक्षेत्रशब्देन प्रशमिता। **न तदस्तीत्यादौ** मया विना यत्स्यात्तन्नास्ति ; मद्व्यतिरिक्तं न परमार्थसदित्यर्थः। **इत्यादिभिरिति** ; भूयसां बलीयस्त्वार्थम्। उपासनविधिपरेषूक्तानां गुणविग्रहादीनां कल्पितत्वव्यक्त्यै **वस्तुस्वरूपोप-**

**देशपरै**रित्युक्तम् । नन्वेतेषु मिथ्याशब्दो न दृष्टः। नानात्वनिषेधादितात्पर्यतस्तत्सिद्धावपि, किमिदं मिथ्यात्वम्—असत्त्वम्, अन्यथाधीगोचरत्वं, सदसदन्यत्वं, चतुष्कोटिमुक्तत्वं वा । आद्यान्त्यौ निवर्त्याभावे निवर्तकशास्त्रादिवैयर्थ्यप्रसङ्गान्निर्बाधास्तिबुद्ध्या च निरस्तौ ; तव चानिष्टौ । अत एव न द्वितीयः, अधिष्ठानस्य मिथ्यात्वप्रसङ्गादारोप्यस्यान्यत्र सत्त्वप्रसङ्गाच्च । न च तृतीयः, सदसद्विध्योरिव व्याघातादप्रसिद्धेश्च । अन्यच्च न युक्तं पश्याम इत्यत्र प्रतिपन्नोपाधौ निषेधप्रतियोगित्वाभिप्रायेण प्रतिवक्ति—**मिथ्यात्वमिति** । नामशब्दः शुक्तिरूप्यादिषु तत्प्रसिद्धिपरः ।

ख्यातत्वादसदन्यत्वं बाध्यत्वेन सदन्यता ।
तेनानिर्वचनीयत्वं स्यादित्यत्राभिसंहितम् ॥ ३३४ ॥

**प्रतीयमानत्वमिह** प्रकाशमानत्वम् । तेन वृत्तिविषयत्वमपि । "साक्षिणः प्रकाशमानायामविद्यायामप्यनुवृत्तेस्तदितरविवक्षयोक्तिः" इति तु मन्दम् । "प्रतीयमानत्वपूर्वकतया बाधकधीप्रागभावादिव्यावृत्तिः" इति केचित् । नियमश्चात्र विवक्षितः ।

तत्त्वधीप्रागभावादिः प्रतिपन्नोऽन्यथापि च ।
तत्त्वबुद्ध्या निवर्तेत व्यावर्त्य इह तेन सः ॥ ३३५ ॥
असदत्र व्यवच्छेद्यं कैश्चिदिष्टं तदा पुनः ।
नास्तिधीगोचरत्वेन धीनिवर्त्यत्वकल्पनम् ॥ ३३६ ॥

भ्रान्तिनिवर्त्यसत्यसर्पादिव्यावृत्त्यै लोकदृष्ट्यनुसारेण **यथावस्थित**शब्दः । सत्यस्य हि निषेधकालस्थितत्वेऽपि तदानीं नास्तीति बुद्ध्या आभिमानिकं निवर्त्यत्वं स्यादिति भावः।

व्यवच्छेद्येषु सत्यत्वमन्वारुह्यात्र लक्षणम् ।
तन्मुखेन प्रबुद्धस्य तेषां बाधोऽपि सेत्स्यति ॥ ३३७ ॥
लक्ष्यमेव व्यवच्छेद्यं लक्षणस्थपदैर्यदि ।
विपक्ष एव पक्षः स्यादस्तु पर्यवसानतः ॥ ३३८ ॥

**वस्तुज्ञाननिवर्त्यत्वमिति** ; अत्र मात्रशब्दो योज्यः ; याथार्थ्यबुद्ध्यैव निवर्त्यमित्यर्थः । तेन मन्त्रादिशक्तिविशेषसहितधीनिवर्त्यविषादिव्युदासः । वेद्यगतविरुद्धाकारग्रहणाग्रहणयोर्बाधादिप्रयोजकत्वव्यक्त्यै सामानाधिकरण्यभ्रमजन्यातिप्रसङ्गशान्त्यै च समा-सविशेषव्यक्त्यर्थो **वस्तु**शब्दः । दण्डादिनिवर्त्यव्यावृत्त्यै ज्ञानोक्तिः । नाशबाधयोरविशेषाभि-

मानाद्वा निषेधबुद्ध्यर्हत्वसाम्याद्वा नाश्यबाध्ययोर्निवर्त्यशब्दानुवृत्तिः। **निवर्त्यत्वम्**; निवर्तनार्हत्वम्; तेन भूरन्ध्रादिभ्रमनिवर्त्यरज्जुसर्पादिष्वव्याप्तिर्निरस्ता। न चात्र बाधकधीनिवर्त्यभयादावतिव्याप्तिः; निवर्तमानदुःखस्य क्षणिकतया तन्निवृत्तौ बाधकधीवैफल्यात् सामग्र्यभावादुत्तरदुःखानुत्पत्तेः। तदिह यन्निष्ठतया प्रतिपन्नं तन्निष्ठात्यन्ताभावप्रतियोगितयापि तत्त्वज्ञानेन विषयीकारार्हत्वमिति तु तात्पर्यविश्रमः। उक्तस्य सर्वसंमत्यर्थमाह—**यथेति**। ननु सारूप्यतत्त्वाग्रहौ सर्वत्र भ्रान्तिनिदानम्। तौ च जडेष्वेव स्तः, न ब्रह्मणि; तस्य निर्विशेषत्वनित्यस्वप्रकाशत्वाभ्युपगमादित्यत्राह—**दोषेति**; अनिर्वचनीयदृष्टान्तस्थापनम्। अत्र हिः प्रसिद्धौ। दुःखाद्यभावेषु सुखादिभावारोपे सारूप्यतत्त्वाग्रहासंभवादिति च हेरभिप्रायः; सारूप्यसद्भावेऽप्यतिरिक्तदोषाभावे भ्रान्त्यभावात्स एव न प्रयोजक इति भावः। निदर्शितं दोषकल्पितत्वं तत्कल्पितमिथ्यात्वलक्षणं च पक्षेऽतिदिशति—**एवमिति**। जडत्वसविशेषत्वपरिच्छिन्नत्वपराक्त्वादिकं नाध्यासाधिष्ठानत्वे प्रयोजकमित्यभिप्रायेण **चिन्मात्र**त्वानूक्तिः। तत्त्वाग्रहश्च ब्रह्मणि स्वरूपविषयविशदवृत्तिज्ञानानुदयात्सिद्धः। स्वतो वा परतो वा प्रकाशमानत्वं चाध्यासापेक्षितं भ्रमविरुद्धत्वेन न शङ्कनीयम्। सर्वज्ञत्वमपि परब्रह्मण्यध्यस्तमिति ज्ञप्त्यै सर्वाध्यासयोग्यत्वाय च **परब्रह्म**शब्दः। अत्र कल्पितत्वमिदंत्वं च बाध्यत्वे हेतुतयाभिप्रेते। अध्यसनीयत्वे सादृश्यवैसादृश्याल्पत्वानन्तत्वादिकं न तन्त्रमिति ज्ञापनार्थं **देवे**त्यादिना कृत्स्नचिदचिद्भेदोक्तिः। न ह्यत्र मिथ्यात्वे साध्ये व्यभिचारस्थलम्; न च प्रत्यनुमानेन सत्यत्वे साध्ये बाह्येषु दृष्टान्तः। ब्रह्मणि तु दृष्टान्तेऽनुवृत्तसत्यहेत्वसिद्धिः। कल्पितस्तु भासमानत्वादिः खपुष्पादावपि कथंचित्स्यादिति भावः।

"यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥"

इत्यादिपरामर्शेन **यथावस्थित**त्यादिकमुक्तम्। **बाध्यम्**; नास्तीति वेद्यमित्यर्थः। एवं मिथ्यालक्षणयोगात् **मिथ्यारूपं** मिथ्याशब्दवाच्यमित्यर्थः; स्वाधिकरणधीविषयनिष्ठात्यन्ताभावप्रतियोगि वा। एवं भ्रान्तिबाधोक्त्या दोषतिरोधानयोः कल्प्यत्वादर्थापत्तिद्वयसिद्धं ज्ञनमिति सूच्यते। नन्वतिरोहिताकारे नाध्यासः; तिरोधौ स्वरूपतदतिरिक्तप्रकाशविकल्पेन स्वप्रकाशात्मस्वरूपनिवृत्तिः सविशेषत्वं वा स्यात्। अतस्तिरोधानार्थमविद्यान्तरं

कल्प्यम् । सदसदादिविकल्पदुःस्था चासौ । तस्य च कल्पितत्वे दोषान्तरापेक्षया अनवस्था । अकल्पितस्तु ब्रह्मस्वरूपान्यत्वानन्यत्वादिविकल्पासहः । न च दोषत्वेन लोकवेदृष्टः कश्चिद्ब्रह्मणि संभाव्यते । एकश्च दोषो न सर्वाध्यासकृदित्याशङ्कयाह—**दोषश्चेति** । **स्वरूपतिरोधाने**त्यादिभिः क्रमाच्छङ्कोद्धारः । अहंत्वेदंत्वादिभिस्तदवान्तरैश्च विक्षेपस्य विचित्रत्वम् । 'स्वरूपतः स्वभावतश्च' इति केचित् । 'आच्छादिका विक्षेपिका चेति विभागश्चैकस्या एवाकारभेदात्' इति केचित् । **विक्षेपिका** ; विशेषप्रतिभासिकेत्यर्थः । दुर्घटस्वभावाविद्यामाहात्म्यात्सर्वमिदं समाहितम् । युगपत्कोटिद्वयारोपात्मकसंशयविशेषहेतुदोषवत् विचित्राध्यासहेतुत्वोपपत्तिः । विरुद्धसमुच्चयभ्रमजनकानेकान्तवादवच्च तिरोधानमपि न वास्तवम् । परमार्थद्वित्वमर्थक्रियाविरहं च परिहर्तुं सदसद्वैलक्षण्योक्तिः ।

## मूलभावप्रकाशिका

पराभिमतं साधनचतुष्टयपूर्ववृत्तत्वस्याथशब्दार्थत्वं प्रतिक्षिप्य शास्त्रारम्भोपयोगिब्रह्मात्मैकत्वलक्षणविषयप्रयोजनविरोधिनः कर्तृत्वाध्यासस्य मिथ्यात्वप्रतिपादनं प्रथमाधिकरणार्थ इति परमतं प्रतिक्षिपति—**यदप्याहुरित्यादिना** । **चिन्मात्रं ब्रह्मैवे**त्यनेन सगुणं ब्रह्म न परमार्थमित्युक्तं भवति । ज्ञानस्य ब्रह्मरूपत्वेन तस्यैकत्वात् तत्कृतज्ञानभेदेत्युक्तम् । 'देवदत्तज्ञानं, घटज्ञानं, पटज्ञानम्' इति ज्ञातृकृतोज्ञेयकृतश्च यो भेद इत्यर्थः । आदिशब्देन जीवभेदो विवक्षितः । उक्तार्थे सद्विद्यावाक्यं प्रमाणयति—**सदेवेति** ; इदं जगदग्रे सृष्टेः प्राक् सदेवासीत् ब्रह्मैवासीत् । कीदृशं ब्रह्मासीदित्यत्राह—**एकमेवेति** । वृक्षस्य शाखापत्रपुष्पाद्यात्मना यः स्वगतो भेदस्तादृशभेद **एक**मित्यनेन निषिध्यते । **एवे**त्यवधारणे ; वृक्षस्य यःसजातीयात् वृक्षान्तराद्भेदस्तादृशो भेदो निषिध्यते । **अद्वितीय**मित्यनेन योवृक्षस्य विजातीयात् शिलादितो भेदस्तादृशो भेदो निषिध्यते । ब्रह्मसजातीयं च नास्ति ; विजातीयं च नास्ति ; ब्रह्मणि शिरःपाणिपादरूपेण ब्रह्मगतोऽपि भेदो नास्ति । ततश्च सजातीयविजातीयस्वगतभेदशून्यं सच्छब्दितं ब्रह्मैवासीदित्यर्थः । उक्तं च—

"वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयः शिलादिभिः ॥

एवं सद्वस्तुनो भेदत्रयं प्राप्तं निषिध्यते ।
ऐक्यावधारणद्वैत प्रतिषेधैस्त्रिभिः क्रमात् ॥ "

इति । **सदेवेति** सृष्टेः प्राक् नामरूपादि व्यावर्त्यते । **एकमेवे**त्यनेन महदादिकं स्वकार्यायेति तन्निषिध्यते । **अद्वितीयमिति** निमित्तान्तरं निषिध्यत इति च व्याख्यातं परैः । ततश्चानेन वाक्येन सजातीयविजातीयस्वगतभेदेषु निषिद्धेषु ब्रह्मणो निर्विशेषत्वं सिध्यतीति परेषामाशयः । ब्रह्मणो निर्विशेषत्वप्रतिपादकं मुण्डकोपनिषद्वाक्यमुदाहरति—**अथ परेति** । अथापरविद्योपदेशानन्तरं परा विद्योपदिश्यते ; यया विद्यया तदक्षरमधिगम्यते प्राप्यते । कीदृशं तदित्याह—**अद्रेश्यमिति** ; अद्रेश्यं ; चक्षुरग्राह्यम् । **अग्राह्यम्** ; इन्द्रियान्तराग्राह्यम् । **अगोत्रम्** ; अनुत्पन्नत्वादेव पितृपितामहादिपरंपरालक्षणगोत्ररहितम् । **अवर्णम्** ; नीलपीतादिवर्णरहितम् । **अचक्षुः श्रोत्रम्** ; ज्ञानेन्द्रियरहितम् । **अपाणिपादम्** ; कर्मेन्द्रियरहितम् । **नित्यम्** ; कालापरिच्छिन्नम् । **विभुम्** ; देशापरिच्छिन्नम् । **सर्वगतम्** ; सर्ववस्तुष्वधिष्ठानतयानुस्यूतम् । **सुसूक्ष्मं** स्थूलत्वकारण रहितम् । **अव्ययम्** ; नाशरहितम् । **भूतयोनिम्** ; भूतोपादानम् । **धीराः पश्यन्ति** ; प्रज्ञाशालिनः पश्यन्तीत्यर्थः । अत्रेन्द्रियगाह्यत्वादिनिषेधात् निर्विशेषत्वसिद्धिरिति भावः । तादृशं तैत्तिरीयोपनिषद्वाक्यमुदाहरति—**सत्यमिति** ; सत्यत्वस्य ब्रह्मलक्षणतया कथनादेवेतरेषामसत्यत्वं फलतीति भावः । **अनन्तमिति** ; त्रिविधपरिच्छेदशून्यत्वकथनाद्वस्त्वन्तरसद्भावे वस्त्वन्तरात् परिच्छेदावश्यंभावेन वस्तुपरिच्छेदराहित्यासंभवात् वस्त्वन्तरशून्यत्वं फलतीति भावः । विशेषनिषेधकं श्वेताश्वतरोपनिषद्वाक्यमुदाहरति—**निष्कलमिति** । कला अवयवाः; चलनक्रियाशून्यम् । **शान्तम्** ; अशनायाद्यूर्मिषट्करहितम् । **निरवद्यम्** ; पापरहितम् । **निरञ्जनम्** ; निर्लेपम् । ज्ञेयत्वनिषेधमुखेन निर्विशेषत्वप्रदर्शकं । तलवकारवाक्यमुदाहरति—**यस्यामतमिति** । यो नामन्यत, स जानाति । ज्ञातमिति यः, स न जानातीत्यर्थः । तदेव विवृणोति—**अविज्ञातमिति** । ज्ञानिनामविज्ञातमिति ज्ञातं भवति ; अज्ञानिनां तु तद्विपरीतमित्यर्थः । ज्ञेयत्वनिषेधकं बृहदारण्यकवाक्यमुदाहरति—**न दृष्टेरिति** । **दृष्टे**श्चक्षुर्जन्यवृत्तेः **द्रष्टारं** स्वरूपचैतन्येन व्यापारम् अन्तःकरणवृत्तेरपि भासकं प्रत्यगात्मानं तद्व्याप्यया चक्षुर्जन्यान्तःकरणवृत्त्या **न पश्येः** ; प्रत्यगात्मा तद्विषयो न भवतीत्यर्थः । **न मते**रित्यस्याप्ययमेवार्थः । आनन्दत्वप्रतिपादनद्वारा कर्तृत्वादिलक्षणमुखेन निषेधकं बृह-

60

दारण्यकवाक्यमुदाहरति—**आनन्दो ब्रह्मेति**। 'यद्रजतमभात् सा शुक्तिः' इति रजतस्य शुक्तित्वोपदेशमुखेन मिथ्यात्वप्रदर्शकवाक्यवत् परिदृश्यमानानात्मप्रपञ्चस्यात्मत्वोपदेशमुखेन मिथ्यात्वप्रदर्शकं वाक्यान्तरमुदाहरति—**इदं सर्वमिति**। परिदृश्यमानं यदिदं सर्वमयमात्मेत्यर्थः। **नेहेति**; इह जगति परिदृश्यमानं नानाभूतं वस्तु न किंचिदप्यस्तीत्यर्थः। भेददर्शनेऽनर्थं दर्शयति—**मृत्योः स मृत्युमाप्नोतीति**। मृत्योः मृत्युम् संसारात्संसारम् अत्यन्तसंसारमाप्नोतीत्यर्थः। इव शब्देनानात्मलक्षणभेदस्यासत्यत्वमुच्यते। **यत्र हीति**; **यत्र**, यदा **द्वैतमिव भवति**; द्वैतप्रतिभासोऽनुवर्तते; आत्मव्यतिरिक्तवस्तु यदास्तीति दृश्यत इति यावत्। **तदा** कश्चित् कंचित् पश्येत्, द्रष्टृदृश्य भेदो भवतीत्यर्थः। **यत्र तु**; यदा तु मोक्षकाले आत्ममात्रं परिशिष्यते, तदा न द्रष्टा, नापि दृश्यं, नापि दर्शनकारणमित्यर्थः। प्रपञ्चमिथ्यात्वप्रतिपादकं सद्विद्या वाक्यमुदाहरति—**वाचेति**। घटशरावादिविकारः सर्वोऽपि वाचारम्भणं वागालम्बनमात्रम्; न हि मृद्व्यतिरेकेण घटशरावादिकं वस्त्वस्तीत्यर्थः। तदेव द्रढयति—**नामधेयमिति**। नाममात्रं ह्येतत्; शब्दव्यतिरेकेणार्थो नास्तीत्यर्थः। अतो **मृत्तिकेत्येव सत्यम्**; इति शब्देन मृत्तिकाया अपि असत्यत्वं सूच्यते। भेददर्शनेऽनर्थप्रदर्शकतैत्तिरीयकवाक्यमुदाहरति—**यदेति**। उशब्दोऽवधारणे। **दरमल्पमपि अन्तरं** भेदं यः **कुरुते** जानाति **तस्य भयं** संसारोभवतीत्यर्थः। निर्विशेषत्वप्रदर्शकं सूत्रं दर्शयति—**न स्थानत इति**। स्थानतोऽपि उपाधितोपि परस्य ब्रह्मणः सविशेषत्वनिर्विशेषत्वरूपलिङ्गद्वयसमुच्चयो नास्तीत्यर्थः। सर्वत्र हि "अशब्दमस्पर्शमरूपमव्ययम्" इत्यादितत्त्वोपदेशकवाक्येषु सर्वत्र निर्विशेषत्वस्यैव तात्पर्यतः प्रतिपादितत्वेन तद्विरुद्धसविशेषत्वासंभवादिति सूत्रार्थः। **माया मात्रमिति**; स्वाप्नार्थदृष्टिर्मायैव; न परमार्थतोऽप्यस्तीत्यर्थः। तत्र हेतुमाह—**कार्त्स्न्येनेति**; परमार्थस्वरूपाभिव्यञ्जकदेशकालनिमित्तबाधानामभावादित्यर्थः। न हि स्वप्नदृष्टरथपर्वतादेरुचितो देशोस्ति; न वा मुहूर्तमात्रशयितपुरुषानुभूयमानविवाहपुत्रोत्पादनतदुपलालनादीनमुचितः कालोऽस्ति, न वा स्वप्नरथादीनामुचितं दार्वादिकं निमित्तमस्ति; न वा स्वप्नार्थानामबाधोऽस्तीति भावः। यद्यपीदं सूत्रं स्वप्नार्थमिथ्यात्वप्रदर्शकं न तु प्रपञ्चमिथ्यात्वप्रदर्शकम्, तथापि प्रपञ्चमिथ्यात्वसाधने दृष्टान्तसिद्ध्यौपयिकतया तदुपयोगोऽप्यस्तीत्यभिप्रेत्य प्रदर्शितम्। श्रीविष्णुपुराणवचनानि दर्शयति—**प्रत्यस्तमितेति**। अयं श्लोकः षष्ठांशे

सप्तमेऽध्याये योगप्रकरणे केशिध्वजवाक्यम्। **प्रत्यस्तमितभेदम्**; निर्विशेषमित्यर्थः। सत्तामात्रमित्यनेन

" अपक्षयविनाशाभ्यां परिमाणाद्धि जन्मभिः।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥ "

इति भावो विवक्षितः। वचसामगोचरम्; **आत्मसंवेद्यम्**; स्वप्रकाशम्। **ज्ञानस्वरूपमिति**। अयं श्लोकः प्रथमांशे द्वितीयाध्याये नमस्कारश्लोकः।

" आधारभूतं विश्वस्याप्यणीयांसमणीयसाम्।
प्रणम्य सर्वभूतस्थमच्युतं पुरुषोत्तमम् ॥ "

" ज्ञानस्वरूपम् " इति श्लोकक्रमः। भ्रान्त्या शैलसागराद्यर्थस्वरूपेण भासमानं ज्ञानस्वरूपमच्युतं प्रणम्येति पूर्वेणान्वयः। **परमार्थ इति**; अस्य श्लोकस्य " तवैषमहिमा येन व्याप्तमेतच्चराचरम् " इत्युत्तरार्धं पूर्वपक्षानुपयुक्तत्वात् न प्रदर्शितम्। **यदेतद्दृश्यत इति**; ज्ञानात्मनस्तव लौकिकैः दृश्यमानं जगदात्मकं मुक्तरूपं योगिनो भ्रान्तिज्ञानेन पश्यन्तीत्यर्थः। एतदेव स्पष्टयति—**ज्ञानस्वरूपमिति**; जगतो ज्ञानमेव स्वरूपम्; ज्ञानव्यतिरिक्तस्वरूपशून्यं जगद्विपरीततया पश्यन्तो मोहसंप्लवे संसारसागरे भ्रमन्तीत्यर्थः। योगिनां तु न तथा मतिरित्याह—**ये त्विति**। **अखिलं जगदिति**; योगिनस्त्वखिलं जगत् ज्ञानात्मकं त्वत्स्वरूपं पश्यन्ति ज्ञानस्वरूपव्यतिरिक्तमर्थस्वरूपं न पश्यन्तीत्यर्थः। इयं चतुःश्लोकी प्रथमांशे चतुर्थाध्याये रोमान्तरस्थानां मुनीनामादिवराहस्तुत्यन्तर्गता। द्वितीयांशे चतुर्दशत्रयोदशषोडशाध्यायगतानादिभरतस्य श्लोकानुदाहरति—**तस्येत्यादिना**। **आत्मपरदेहेषु** सतस्तस्य परमात्मनः स्वरूपभूतम्; **एकमयम्**; एकस्वरूपं यद्विज्ञानं तदेव हि परमार्थः। **द्वैतिनः**; भेददर्शिनः। **अतथ्यदर्शिनः**; भ्रान्ता इत्यर्थः। **यदन्योऽस्तीति**; " कथ्यतां को भवानत्र जालमरूपधरः स्थितः " इति सौवीरराजप्रश्नस्यानुपपत्तिप्रदर्शकमादिभरतस्य वाक्यमिदम्। **वेणुरन्ध्रेति**; एकस्य वायोर्वेणुरन्ध्रविभेदेन निर्गतस्य षड्जादिसंज्ञितस्वरभेदो भवति यथा, तथा ब्रह्मण एवोपाधिभेदादसौ देवमनुष्यादिभेदो भवतीत्यर्थः **सोहमिति**; स्पष्टोऽर्थः। **विभेदजनक इति**; अयं श्लोकः षष्ठांशे सप्तमाध्याये केशिध्वजस्य योगप्रकरणान्ते वचनम्। विभेदजनके अज्ञान इति पदच्छेदः। **आत्मनः**, जीवस्येत्यर्थः। **अहमात्मेत्यादीनि** गीतावचनानि। " अहमात्मा " क्षेत्रज्ञं

चापि मां विद्धि" इति द्वाभ्यां जीवाभेदः प्रतिपाद्यते। **न तदस्ती**त्यनेन मिथ्यात्वं प्रतिपाद्यते। मया विना चराचरात्मकं भूतं नास्ति, मद्व्यतिरिक्तं नास्तीत्यर्थः। **वस्तुस्वरूपोपदेश परैरिति**; अनेन सविशेषप्रतिपादकवाक्यानां न स्वरूपोपदेशपरत्वम्, अपितूपासनपरत्वं निर्विशेषप्रतीत्युपायोपदेशपरत्वं वेति सूच्यते। **प्रतीयमानत्वपूर्वकेति**; प्रतीयमानत्वविशिष्टेत्यर्थः। असतः प्रतीत्यसंभवात् प्रतीयमानत्वपदेनासद्विलक्षणत्वमुच्यते। सतोऽज्ञाननिवर्त्यत्वाभावात् **यथावस्थिते**त्यादिपदेन सद्विलक्षणत्वमुच्यते। लक्षणस्य लक्ष्ये क्वचित्सद्भावं दर्शयति—**यथेति**। ननु देशान्तरस्थितस्य सतो वासतो वा सर्पादेः प्रतीत्युपपत्तौ सदसद्विलक्षण सर्पाद्युत्पत्तिर्नाभ्युपगन्तव्या, सर्पाद्यवयवरूपकृतस्तत्कारणाभावादित्याशङ्क्याह—**दोषेति**। प्रत्यक्षेन्द्रियसंनिकर्षस्य हेतुत्वेनेन्द्रियासंनिकृष्टस्य देशान्तरस्थितस्य सतो वासतो वा प्रत्यक्षाभावात् काचकामलादिदोषदूषितेन्द्रियसंयोगक्षुभिताविद्यारूपकारणसत्त्वेन तत्परिणामरूपसर्पाद्युत्पत्तेरवश्याभ्युपगन्तव्यत्वादिति भावः। **दोषपरिकल्पित**मित्यनेन प्रतीयमानत्वोपपादनद्वारा सद्विलक्षणत्वमुपपादितं भवति। **यथावस्थिते**त्यनेन यथावस्थितज्ञाननिवर्त्यत्वोपपादनद्वारा सद्विलक्षणत्वमुपपादितम्। **स्वरूपतिरोधानकरी**त्यनेन चिन्मात्रात्मकेऽधिष्ठानभूते ब्रह्मस्वरूपे भासमाने कथं तत्र सर्वजगतः परिकल्पनमिति शङ्का पराकृता, भासमानस्याप्यधिष्ठानस्वरूपस्याकृतत्वात्तत्र कर्तृत्वादिनिखिलप्रपञ्चाध्यास उपपद्यत इति भावः। **विक्षेपः**, विपरीतप्रतिभासः। **सदसदनिर्वचनीयेति**; अविद्यायाः सत्त्वेऽद्वैतहानेरसत्त्वे कार्यकरत्वायोगादिति भावः। **अनादीति**; सादित्वे कल्पकान्तरावश्यंभावादनवस्थापत्तेरिति भावः।

### श्रीभाष्यम्

"अनृतेन हि प्रत्यूढाः" "तेषां सत्यानां सतामनृतमपिधानम्" "नासदासीन्नो सदासीत्तानीम्।" "तम आसीत्तमसा गूढमग्रे प्रकेतम्" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" "इन्द्रो मायाभिः पुरुरूप ईयते" "मम माया दुरत्यया" "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" इत्यादिभिर्निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते। यथोक्तम्—

"ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥
यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः॥"

"तस्मान्न विज्ञानमृतेऽस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥"

इति । अस्याश्चाविद्यायाः निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति—"न पुनर्मृत्यवे तदेकं पश्यति । न पश्यो मृत्युं पश्यति" "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति"

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"

"ब्रह्म वेद ब्रह्मैव भवति" तमेवं विदित्वातिमृत्युमेति । नान्यः पन्थाः" इत्याद्याः श्रुतयः । अत्र मृत्युशब्देनाविद्याभिधीयते, यथा सनत्सुजातवचनम्—"प्रमादं वै मृत्युमहं ब्रवीमि सदाप्रमादममृतत्वं ब्रवीमि" इति । "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्यादिशोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मैकत्व-

विज्ञानं च "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद" "अकृत्स्नो ह्येषः," "आत्मेत्येवोपासीत" "तत्त्वमसि" "त्वं वाहमस्मि भगवो देवतेऽहं वै त्वमसि देवते" "तद्योऽहं सोऽसौ योऽसौ सोऽहमस्मि" इत्यादिवाक्यसिद्धम्। वक्ष्यति चैतदेव—"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति। तथा चाह वाक्यकारः—आत्मेत्येव तु गृह्णीयात्सर्वस्य तन्निष्पत्तेः" इति। अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिरुक्ता। ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यविज्ञानेन क्रियते? कथं वा 'रज्जुरेषा न सर्पः' इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते? तत्र द्वयोः प्रत्यक्षयोर्विरोधः; इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत्—तुल्ययोर्विरोधे कथं बाध्यबाधकभावः? पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्यामिति चेत्, शास्त्रप्रत्यक्षयोरपि समानमेतत्। एतदुक्तं भवति—बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणम्, ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात्; तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते। एवं च सति द्वयोः प्रमाणयोर्विरोधे यत्संभाव्यमानान्यथासिद्धि तद्बाध्यम्, अनन्यथासिद्धमनवकाशमितरद्बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय इति। तस्मादनादिनिधनाविच्छिन्नसंप्रदायासंभाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन संभाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धिविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव। संभाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः।

## श्रुतप्रकाशिका

एवं भूतामविद्यां प्रतिज्ञायैतदनुगुणं प्रमाणमाह—**अनृतेनेत्यादिना** । **प्रत्यूढाः** ; प्रतीपंनीताः । प्रत्यूढशब्दवैशद्यार्थमुपादत्ते—**तेषामिति** । नात्र बहुवचने तात्पर्यम् "अदितिः पाशान् प्रमुमोक्तु" इतिवत् । अस्याः सदसदनिर्वचनीयत्वमुच्यते—**नासदासीन्नो सदासीदिति** । किमासीदित्यत्राह—**तम आसीदिति** । तमःशब्देनाच्छादकत्वं विवक्षितम् । तमो नाम "अक्षरं तमसि लीयते" इति प्रकृतिरुच्यत इति शङ्कायामुदाहरति—**मायां तु प्रकृतिमिति** । विविधाध्यासहेतुत्वं दर्शयति—**इन्द्रो मायाभिरिति** । अस्या ऐक्यज्ञानेन विना अनिवर्त्यत्वमाह—**ममेति** । अनादित्वमाह—**अनादीति** । अत्रेशितव्यसापेक्षमहेश्वरत्वेन्द्रत्वबहुवचनश्रवणाद्विजातीयसजातीयस्वगतभेदसाहित्यं प्रतिपन्नमिति तदपनुत्तये व्याचष्टे—**निर्विशेषेति** । सगुणत्वे प्रतिपन्नेऽपि स्वरूपपरवाक्यानुगुण्याद्दोषप्रतिपादनतत्पराणां वाक्यानां न प्रतिपन्नभेदे तात्पर्यमिति भावः । **ब्रह्मैव** ; इन्द्रादिशब्देन प्रतिपन्नमपि स्वरूपपरवाक्योपदिष्टं ब्रह्मैवेति भावः । अनादित्वसदसदनिर्वचनीयत्वतिरोधायकत्वविविधाध्यासकरत्वान्युपात्ततत्तद्वाक्यप्रतिपन्नान्याह—**अनाद्यविद्ययेत्यादिना** । स्वगतशब्देनाधिष्ठानतया संबन्धो विवक्षितः, न तु सजातीयविजातीयसहपठितस्वगतनानात्वम् । एवं दोषवाचिवाक्यगतमिन्द्रमहेश्वरादिपदजातमर्थस्वारस्येन स्वरूपपरवाक्यप्राबल्यान्निर्विशेषवस्तुपरं व्याख्यातम् ; अथ दोषवाचिभिरेवोपबृंहणवाक्यैर्निर्विशेषस्य वस्तुन एव दोषसंबन्धित्वमुक्तमिति दर्शयति—**यथोक्तमिति** । चिन्मात्रब्रह्मणो ज्ञानविजृम्भितत्वं जगतः प्रतिज्ञायते—**ज्ञानस्वरूप इति** । **न तु वस्तु भूतः** ; वक्ष्यमाणशैलाब्धिधरादिवस्तुभूतो न भवतीत्यर्थः । **विज्ञानविजृम्भितानीति** ; **विज्ञान**शब्देन विविधं ज्ञायतेऽनेनेति करणव्युत्पत्त्या अविद्याभिधीयते । प्रतिज्ञातं प्रपञ्चस्याविद्याकल्पितत्वं व्यतिरेकमुखेनोपपादयति—**यदेति** । **शुद्धम्** ; अविद्यारहितम् । **निजरूपि** ; भेददर्शनरहितम् । तन्निमित्तकर्मक्षयेऽपास्तरागादिदोषम् । समन्तात् कल्प्यतेऽनेनेति **संकल्पः** ; अविद्या । **वस्तुषु** ; धर्मिभूतपदार्थेषु । **वस्तुभेदाः** ; आकारभेदाः । मध्ये—"वस्त्वस्ति किम्" "महीघटत्वम्" इति श्लोकद्वयं जगदुपलब्धिप्रकारेण वस्तुभेदासत्यत्वोपपादकत्वेनोपपाद्यप्रमेयाधिक्याभावादत्रानुपात्तम् । तच्च सिद्धान्ते दर्शयिष्यते । विजातीयभेदाभावमुपसंहरति—**तस्मादिति**

**पूर्वार्धेन**। अथात्मबहुत्वस्य काल्पनिकत्वमुच्यते—**विज्ञान**मित्यर्धेन। पूर्वोक्तमात्मैक्यम् "एकं सदैकम्" इत्यत्रैकशब्देनानूद्य स्वगतनानात्वं निषिध्य परमपरेशादिशब्दानामपि वस्तुमात्रपरत्वं प्रतिपादयति—**ज्ञानमिति**। **विशुद्ध**मित्यादिपदैरविद्याराहित्यं तत्कृतभेददर्शनवैधुर्यं, तन्मूलशोकलोभादिविधुरता चोच्यते। **सदैकम्**; जन्मवृद्ध्यादिरहितम्; यतोऽन्यन्नास्ति तद्यथोक्तस्वरूपमित्यर्थः। एतन्न परमतमित्याह—**सद्भाव इति**। एतद्भुवनाश्रितं भुवनेनाधिष्ठानतया आश्रितं ज्ञानम्। **संव्यवहारभूतम्**; समन्ताद्व्यवहारविषयभूतं यद्वर्तते तत्रापि कारणमविद्येत्युक्तम्। तच्च न परमतम्; सद्भाव एवोच्यत इत्यर्थः। एवं सिद्धपरवाक्यपर्यालोचनया ब्रह्मण एव सत्यत्वं व्यतिरिक्तस्याविद्यापरिकल्पितत्वं च तत्त्वमित्युक्तम्; ततः किं प्रस्तुतस्य कर्माङ्गकत्वानर्हवाक्यार्थज्ञानमोक्षोपायत्वस्येति शङ्कायामुपायपरवाक्यानामपि सिद्धपरवाक्यप्रतिपन्नार्थानुगुणोपायपरत्वमाह—**अस्या इति**। चः शङ्कानिवर्तकः। **अस्या** इत्यनेन सदसदनिर्वचनीयत्वादिविशेषणविशिष्टता विवक्षिता। तस्या निवृत्तौ प्रमाणं दर्शयति—**न पुनरिति**। मृत्युरत्राविद्या। तन्निवृत्तिश्चैक्यज्ञानादित्याह—**तदेकं पश्यतीति**। मृत्युकार्यस्य रोगादेरपि निवृत्तिं ज्ञापयति--**न पश्यो मृत्युमिति**। "न रोगं नोत दुःखताम्" इति तच्छेषः। निर्विशेषवस्तुज्ञानानन्तरमेवाभयप्राप्तिं दर्शयति—**यदा हीति**। **अदृश्ये**; प्रत्यक्षाद्यविषये। **अनात्म्ये**; आत्म्यं व्याप्यं शरीरम्; अशरीरे। **अनिरुक्ते**; अनिर्वचनीये। **अनिलयने**; अनाधारे। **अभयम्**; अभयार्थम्; अव्ययीभावसमासः। प्रतिष्ठा निष्ठा वादिभिर्बन्धमूलत्वेनाभ्युपगतस्य कर्मणोऽप्यविद्याकल्पितत्वात् तस्यापि ज्ञानेन निवृत्तिमाह—**भिद्यत इति**। हृदयग्रन्थिरविद्या। पूर्ववाक्येषु किंचिद्भेदः प्रतीत इव भवतीति तद्व्यावृत्तये ज्ञानस्यैक्यविषयत्वज्ञापनायैक्यापत्तिं फलं दर्शयति—**ब्रह्म वेदेति**। यथोपासनं हि फलम्। अत ऐक्यज्ञानमेव बन्धनिवर्तकमिति भावः। उपायान्तरनिषेधार्थमुदाहरति—**तमेवमिति**। नात्राविद्यानिवृत्तिः प्रतीयते, तद्वाचिशब्दाश्रवणादित्यत्राह—**अत्रेति**। "मृत्युर्धावति पञ्चमः" इत्यादौ मृत्युशब्दस्य यमादिषु प्रयोगदर्शनात्तद्व्यावृत्त्यर्थमुक्तम्—**अत्रेति**; बन्धनिवृत्तिपरवाक्येष्वित्यर्थः। तत्र प्रयोगं दर्शयति—**यथेति**। **प्रमादं वै** इति वचनात् पूर्वत्र "मोहो मृत्युः संमतो यः कवीनाम्" इत्युक्तम्। मोहो विपरीतज्ञानं, तन्मृत्युरितिपरमतम्। सनत्सुजातस्य तु प्रमादो मृत्युर्मतः। प्रमादो यथा-

वद्प्रतिपत्तिः । स्वरूपाग्रहणे ह्यन्यथाप्रतिपत्तिः । तस्मान्मोहस्यापि हेतुरात्मन्यनवधानरूपः प्रमाद इति तद्धेतुभूताविद्यैव प्रमादशब्देन विवक्षितेति सैव मृत्युरित्यभिप्रायः। उपात्तेषु वाक्येषु ज्ञानस्याविद्यानिवर्तकत्वं प्रतिपन्नम्; ब्रह्मणो निर्विशेषचिन्मात्रत्वं, तेनात्मन एकत्वविज्ञानं निवर्तकमिति च न प्रतिपन्नमित्यत्राह—**सत्यं ज्ञानमिति** । सत्यज्ञानादिवाक्यं सर्वतो व्यावृत्तत्वज्ञापनार्थमुपात्तम् । पुरुषार्थत्वायासुखाद्व्यावृत्तिज्ञापनार्थमुपात्तम्—**विज्ञानमानन्दमिति** । आदिशब्देन "अस्थूलम्" इत्यादि गृह्यते । एवं ब्रह्मणो निर्विशेषत्वे शोधकवाक्यान्युदाहृतानि । अथ ब्रह्मात्मैक्यप्रतिपत्तौ श्रुतिमुपादत्ते—**अथ य इति** । "अथ योऽन्याम्" इत्यैक्योपासनविधिर्भेदवासनानिरासार्थः । विहितोपासनस्यैक्यविषयतां ज्ञापयितुमैक्योपदेशं दर्शयति—**तत्त्वमसीति** । उपदेशानुगुणमुपासको देवतां प्रत्याह—**त्वं वेति** । उपदिष्टार्थमात्मन्यनुसंधत्ते—**तद्योऽहमिति** । अस्यार्थस्य श्रुतिविवक्षितत्वसिद्धये सूत्रं दर्शयति—**वक्ष्यति चेति** । "आत्मेति तूपगच्छन्ति ग्राहयन्ति च"; आत्मेत्युपासीत; तथा ह्युपगच्छन्ति, मुमुक्षव उपासत इत्यर्थः । ग्राहयन्ति च, ज्ञापयन्ति च तथा शास्त्राणि । सूत्रकाराभिप्रायविदां वाक्यं दर्शयति—**तथा चेति** । **तन्निष्पत्तेः**; तत्र कल्पितत्वादित्यर्थः । न केवलं श्रुतिः; तदनुग्राहकस्तर्कोऽप्यस्तीत्याह—**अनेन चेति** । चः समुच्चये । कर्मनिरपेक्षज्ञाननिवर्त्यत्वायाह—**मिथ्यारूपस्येति** । हेतुत्वं गर्भितम् । **सकारणस्य**; अविद्याभेददर्शनसहितस्य । **बन्धस्य निवृत्तिर्युक्ता**; न हि मिथ्यासर्पनिवृत्तौ 'नायं सर्पो रज्जुरेषा' इति ज्ञानादृते कर्मापेक्षेति भावः । अथानुमानागमयोर्व्याप्तिग्रहणलिङ्गदर्शनधर्मिप्रतिपत्त्यर्थं व्युत्पत्त्यर्थं च प्रत्यक्षसापेक्षत्वात् 'अनुष्णोऽग्निर्द्रव्यत्वात्' "आदित्यो यूपः" "यजमानः प्रस्तरः" इत्यादिष्वनुमानागमौ प्रत्यक्षविरुद्धार्थप्रतिपादनाशक्तौ दृष्टौ; तस्मान्न प्रत्यक्षविरुद्धार्थप्रतिपादनक्षमा श्रुतिरित्यभिप्रायेण भेदवादी चोदयति—**ननु चेति** । श्रुतिवाक्येष्ववान्तरचोद्येषु परिहृतेष्विदमपि चोद्यमस्तीति चार्थः । स्वप्नादिषु सर्पभूदलनादिषु च कतिपयभेदनिवृत्तिर्दृष्टा; तद्व्यावृत्त्यर्थः सकलशब्दः । अत्र किं प्रत्यक्षत्वान्न बाध्यत्वम्; उत परोक्षत्वान्मूलित्वाच्च न बाधकत्वमिति शङ्काद्वयं हृदि निधाय प्रथमं प्रत्यक्षत्वादबाध्यत्वमित्येतत्परिहरति—**कथं चेति** । स तु प्रत्यक्षाभास इति चेत्—न; प्रतीतिदशायामाभासत्वानवगमात् । पश्चात्प्रमाणबाधेन ज्ञायत इति चेत्, तत् प्रपञ्चग्राहिप्रत्यक्षस्यापि तुल्यम्, भेदस्य श्रुतिबाधादित्येतदत्राभिप्रेतम् ।

मूलित्वात् परोक्षत्वाच्च न बाधकं शास्त्रमिति शङ्कते—**तत्रेति** । **इह त्विति**; तुल्यत्वव्यावृत्तये तुशब्दः । **प्रत्यक्षमूलस्येति**; मूलित्वान्न शास्त्रं बाधकमिति भावः । **शास्त्रस्येति**; परोक्षत्वान्न बाधकमिति भावः । तुल्यत्वे प्रयोजके सति बाध्यबाधकभावो विपर्ययेणापि स्यादिति तदप्रयोजकम्; अतस्तत्र बाध्यबाधकभावे प्रयोजकान्तरं त्वया वक्तव्यम्; तदेवास्माकमपि प्रयोजकमित्यभिप्रायेणाह—**तुल्ययोरिति** । बाध्यबाधकभावानियमव्यावृत्तये भेदवाद्यभिमतत्वेन प्रयोजकान्तरं शङ्कते—**पूर्वोत्तरयोरिति** । पूर्वोत्तरयोर्बाध्यबाधकयोस्त्वदुक्तं प्रयोजकमत्रापि तुल्यमित्याह—**शास्त्रेति** । मूलमूलित्वादिसद्भावे मूलस्य प्रत्यक्षस्य बाधकत्वमितरस्य बाध्यत्वं च दृष्टम्; अतो मूलमूलित्वपरोक्षत्वापरोक्षत्वादिवैषम्यराहित्ये सति दुष्टकारणजन्यत्वतदभावौ बाध्यबाधकभावे प्रयोजकाविति शङ्कायामाह—**एतदुक्तमिति** । तुल्यत्वे सति दुष्टकारणजन्यत्वतदभावौ न प्रयोजकावित्यभिप्रायेण तुल्यशब्दः प्रयुक्तः । विशिष्टस्य हेतुत्वे विशेषणांशस्यापि हेतुत्वात् तुल्यशब्देनैकदेशोपादानम् । दुष्टकारणजन्यत्वतदभावविशेषणीभूतं तुल्यत्वं विवक्षितम् । तुल्यत्वे सति विपरीतप्राबल्यदौर्बल्यकारणाभावे सति दुष्टकारणजन्यत्वतदभावौ न प्रयोजकावित्यर्थः । **सापेक्षत्वं निरपेक्षत्वं** मूलमूलिभावः । आदिशब्देन परोक्षापरोक्षभावविलम्बाविलम्बा विवक्षिताः । श्रुतिलिङ्गादिषु विलम्बाविलम्बाभ्यां हि प्राबल्यदौर्बल्ये । यद्वा अप्रयोजकत्वेनोक्तं तुल्यत्वं दृष्टान्ततयानूदितम् । वैषम्यान्तराभावे सति दुष्टकारणजन्यत्वतदभावावप्यादिशब्देन विवक्षितौ । एतेषामप्रयोजकत्वमेकेन दृष्टान्तेनोपपादयति—**ज्वालेति** । 'अन्यथा' इत्यध्याहर्तव्यम् । **प्रत्यक्षोपमर्दायोगादिति**; अयोगप्रसङ्गादित्यर्थः । ज्वालाभेदानुमाने हि मूलमूलिभावोऽस्ति; विलम्बाविलम्बौ च प्रत्यक्षसापेक्षत्वादनुमानस्य । तुल्यत्वे सति दुष्टकारणजन्यत्वतदभावयोः प्रयोजकत्वमप्यनेन व्युदस्तं भवति; तद्राहित्येऽपि बाध्यबाधकभावदर्शनात् । तत्र किंविषयं प्रत्यक्षं बाध्यमित्यत्राह—**तत्र हीति**; ऐक्यग्राहि प्रत्यक्षं बाध्यमित्यर्थः । तर्हि किं प्रयोजकमित्यत्राह—**एवं चेति**; तुल्यत्वादीनां प्रयोजकत्वेऽनुपपन्ने सति । **द्वयोरिति**; प्रत्यक्षयोः, अनुमानयोः, आगमयोः, प्रत्यक्षानुमानयोः, अनुमानागमयोः प्रत्यक्षागमयोर्वेत्यर्थः । **यत्संभाव्यमानान्यथासिद्धीति**; सावकाशत्वादन्यथासिद्धमित्यर्थः, अनन्तरमनन्यथासिद्धमनवकाशमित्युक्तेः । विषयान्तरलाभोऽप्रमाणकोटिनिवेशो

वा सावकाशत्वम् । तेन स्वोपस्थापितार्थविषयप्रामाण्यं विनापि संभावितोदयत्वमन्यथा-सिद्धत्वम् ; विरुद्धार्थप्रमाणाबाधेनापि संभवदुदयत्वमिति यावत् । **अनन्यथासिद्धमनवकाशमिति** ; अनन्यथासिद्धत्वं नाम तदर्थप्रमाणतां विनानुदयत्वम् ; विरुद्धार्थप्रमाणाबाधेनानुदयत्वमिति यावत् । तच्चानवकाशत्वात् । अनवकाशत्वं नाम विषयान्तरालाभोऽप्रमाणकोटिनिवेशाभावो वा । अप्रमाणकोट्यनन्तर्भावविषयान्तरालाभाभ्यां विरुद्धार्थोपस्थापकप्रमाणाबाधेनानुदयत्वमित्यर्थः । **इति सर्वत्र** ; उक्तप्रकारेण सजातीययोर्विजातीययोर्वा प्रमाणयोर्विरोध इत्यर्थः । एवं बाध्यबाधकभावे प्रयोजकमस्तु ; ततः किं प्रस्तुतशास्त्रप्राबल्यस्येत्यत्राह—**तस्मादिति** । **तस्मात्** ; अन्यथासिद्धत्वानन्यथासिद्धत्वयोरेव बाध्यबाधकभावे प्रयोजकत्वात् । **अनादिनिधनाविच्छिन्नसंप्रदायेति** ; अविच्छिन्नसंप्रदायत्वादनादिनिधनम् । संप्रदायाविच्छेदे सति अस्मर्यमाणकर्तृकत्वं ह्यपौरुषेयत्वसाधकम् ।

“ अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः ॥ ”

“ अनादिनिधनं ब्रह्म ” इत्यादिवचनानि चानादिनिधनशब्देन स्मारितानि । अत एवासंभाव्यमानदोषगन्धम् ; पौरुषेयत्वप्रयुक्तं हि भ्रमविप्रलिप्साप्रमादाशक्तिरूपदोषचतुष्टयवत्त्वम् । अत एवानवकाशम् । शास्त्रजन्यशब्दस्यावबोधशब्देनान्वयः । बाध्यबाधकभावाङ्गीकारस्य विरोधसापेक्षत्वाद्विरोधं दर्शयति—**निर्विशेषेत्यादिना** । **नित्यम्** ; कालापरिच्छिन्नम् । **शुद्धम्** ; अविद्यारहितम् । अत एव मुक्तशब्दोऽविद्याकृतजन्मादिराहित्यपरः । **बुद्धम्** ; भासमानम् । **स्वप्रकाशशब्दः** पूर्वं बुद्धशब्दोक्तभासमानत्वस्य पराधीनत्वव्युदासार्थः । स्वयमेव प्रकाशस्वभावत्वं स्वप्रकाशत्वम् । तच्च चिन्मात्रशब्दवाच्यत्वात् । स्वयंप्रकाशत्वं हि चित्त्वम् । चित्स्वरूपत्वं च श्रुतिसिद्धम् । मात्रशब्दो ज्ञेयत्वव्युदासपरः । **ब्रह्मात्मभावावबोधेन**; एवंभूतस्य ब्रह्मणः स्वस्य चैक्यावबोधेनेत्यर्थः । **संभाव्यमानेति** ; संभाव्यमानदोषत्वात् सावकाशम्, अप्रमाणकोटौ लब्धनिवेशम् । अत एवान्यथासिद्धत्वमपि फलितम् । अन्यथासिद्धत्वं विपरीतप्रमाणमबाधित्वाप्युदयसंभवः । **प्रत्यक्षादीति** ; आदिशब्दादनुमानादिकमुच्यते । **विविधेति** ; देवादिरूपेण स्वकार्यजन्मजरामरणादिरूपेण च विविधो ज्ञातृज्ञेयादिविकल्पः, स एव बन्धः, तन्नि-

वृत्तिरित्यर्थः। संभाव्यमानदोषश्च क इत्यत्राह—**संभाव्यते चेति**; भेदप्रपञ्चो भेदसमुदायः। यद्वा, भेदरूपः प्रपञ्चः। **विविधविकल्प**शब्दः प्रपञ्चविशेषणं भेदविशेषणं वा। भेदो ज्ञातृज्ञेयादिः, स च ब्राह्मणादिरूपेण विविधः, देवमनुष्यादिरूपेण विकल्पवान्। अर्वाचीनाः केचित्काचतिमिरादिकं दोषमाचक्षते; तदयुक्तम्, तस्य काचित्कत्वात्। काचादिदुष्टं प्रत्यक्षं सपक्षीकृत्य व्यतिरिक्तस्य काचादिदुष्टत्वमनुमीयत इति चेत्—न; अतिप्रसङ्गात्। अनादिनिधनत्वेन यच्छास्त्रमुक्तं तस्यापि शब्दत्वादिना दुष्टकर्तृकत्वानुमानं हि सुशकम्। तत्र कर्ता योग्यानुपलम्भनिरस्त इति चेत्, तदत्रापि तुल्यमिति काचादेर्दोषत्वकल्पनानुपपत्त्या तद्व्यावृत्त्यर्थमाह—**अनादीत्यादिना**। **भेदवासनादिरूपा**; आदिशब्देन भेदवासनाहेतुभूतं भेददर्शनं विवक्षितम्। अनयोर्हेतुहेतुमद्भावेनान्योन्याश्रयपरिहारायानादिशब्दः। बीजाङ्कुरन्यायादिति भावः। भेददर्शनं भेदवासना च हि कार्याविद्या। अत उक्तम्—**भेदवासनादिरूपाविद्येति**। "आदित्यो यूपः" इत्यादिषु यूपादित्यैक्याद्यप्रतिपादनं न प्रत्यक्षविरोधात्; किं त्वन्यपरत्वात्। "यत्परः शब्दः स शब्दार्थः" इति हि न्यायविदः। अन्यपरत्वं च तात्पर्यलिङ्गाभावादवगम्यते। "आदित्यो यूपः" इति वाक्यं यूपाञ्जनविधिशेषत्वादन्यपरमिति परस्याभिप्रायः।

## भावप्रकाशिका

**नात्र बहुवचने तात्पर्यमिति**; येन तद्बहुत्वं प्रामाणिकं स्यादिति भावः। **अदितिः पाशानिति**; अग्नीषोमीयपशौ "अदितिः पाशान् प्रमुमोक्तु" इति बहुवचनान्तपाशशब्दयुक्तमन्त्रः श्रूयते। स किं पशुगणेषूत्कृष्यते, उत प्रकृतावेव निविशत इति विशये, एकस्मिन् पाशे बहुवचनस्यान्याय्यत्वात् बहुपाशवत्सु पशुगणेषूत्कृष्यत इति प्राप्ते प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणश्चाग्नीषोमीय एव संभवादप्रधानभूतसंख्यानुरोधेनोत्कर्षासंभवात्पाशसंख्या अविवक्षिता; अतो निर्देशमात्रार्थं बहुवचनमिति "विप्रतिपत्तौ विकल्पः स्यात्समत्वात् गुणे त्वन्याय्यकल्पनैकदेशत्वात्" इति नवमे व्यवस्थापितमित्यर्थः। **प्रकृतिरुच्यत इति शङ्कायामिति**; सांख्यमतप्रत्यभिज्ञानादिति भावः। **मायां तु प्रकृतिं विद्यादिति**; मायां सदसद्विलक्षणामविद्यां प्रकृतिमुपादानं विद्यादित्यर्थः। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादौ प्रकृतिशब्दस्योपादानार्थत्वदर्शनात् परैरपि तथा व्याख्यातत्वाचेति द्रष्टव्यम्। केचित्तु प्रकृतिं मायां मिथ्याभूतां विद्यादित्यर्थ इत्यप्युद्देश्यो-

पादेयभावं वर्णयन्ति। **दोषप्रतिपादनतत्पराणामिति ;** निर्विशेषस्यापि ब्रह्मणः प्रपञ्चाधिष्ठानत्वं दोषवशादिति वक्तुं प्रवृत्तानाम् "इन्द्रो मायाभिः" इत्यादीनां न भेदप्रतिपादने तत्परत्वं संभवतीति भावः। **सहपठितस्वगतनानात्वमिति ;** तथा हि सति सजातीयविजातीययोः संग्रहो न स्यादिति भावः। **उपपाद्यप्रमेयाधिक्याभावादिति ;** जगदुपलब्धिमिथ्यात्वोपपादकप्रकारभेदे सत्यप्युपपादनीयांशभेदाभावादित्यर्थः। **अभयम् ; अभयार्थमिति ;** अर्थाभावे "अव्ययम्" इति समासः। ततश्चतुर्थ्याः "नाव्ययीभावात्" इत्यम्भावे रूपम्। **यथोपासनं हीति ;** यद्यपि मृषावादिमते ब्रह्मज्ञानं नोपासनात्मकं, तथापि तुल्यन्यायतया यथाज्ञानं फलमित्येवंपरं तदिति द्रष्टव्यम्। **तद्धेतुभूताविद्येति ;** मोहहेतुभूतयथावदप्रतिपत्तिलक्षणानवधानरूपेत्यर्थः। **ऐक्यविषयतां ज्ञापयितुमिति ;** पारमार्थिकैक्यविषयतां दर्शयितुमित्यर्थः। ततश्च "आत्मेत्येवोपासीत" इत्युपासनविधिवाक्यनिर्दिष्टमैक्यं स्वरूपोपदेशपरवाक्यप्रमितत्वात् पारमार्थिकमिति भावः। **उपदेशानुगुणमुपासको देवतां प्रत्याहेति ;** "तत्त्वमसि" इति छान्दोग्यवाक्यगतस्यैक्यप्रतिपादनपरत्वादेव "त्वं वा अहमस्मि भगवो देवते" इति जाबालवाक्यं "तद्योऽहं सोऽसौ" इत्यैतरेयवाक्यमपि तदनुगुणं दृश्यत इति भावः; न तु "तत्त्वमसि" इत्युपदेशानन्तरं "त्वं वा अहमस्मि" इति देवतां प्रति प्रतिवचनमिति मन्तव्यम्, उभयोर्भिन्नप्रकरणस्थत्वात्। **आत्मेत्युपासीतेति ;** आत्मेति प्रतिपद्येतेत्यर्थः। अत एव हि शांकरभाष्ये "आत्मेति प्रतिपत्तव्यः" इत्युक्तम्, तस्य सूत्रस्य मृषावादिमते वास्तवात्मत्वसमर्थनपरत्वेन 'आत्मेत्युपासीत' इत्यात्मत्वेनोपासनसमर्थनपरत्वाभावात्। केचित्तु वस्तुत आत्मानमेव आत्मेत्युपासीतेत्यर्थः; ततश्च वास्तवात्मत्वसमर्थनद्वारा आत्मोपासनस्य प्रतीकोपासनत्वव्यवच्छेदश्च सिध्यति, तस्य सूत्रस्य वास्तवात्मत्वसमर्थनद्वारा प्रतीकोपासनत्वव्यवच्छेदपरत्वादित्याहुः। 'ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा' इति भाष्यस्यायमर्थः—सकलभेदाभावः प्रत्यक्षविरुद्धः शास्त्रजन्यज्ञानेन कथं विषयीक्रियेत ? कथं शास्त्रप्रतिपाद्यः स्यादिति। एवमुत्तरत्रापि द्रष्टव्यम्।

**दुष्टकारणजन्यत्वतदभावौ बाध्यबाधकभावे प्रयोजकाविति शङ्कायामिति ;** अयमर्थः—क्वचिन्मूलमूलिभावः, क्वचित्परोक्षत्वादिः, क्वचिद्विपरीतप्राबल्यहेतुराहित्यलक्षणतुल्यत्वे सति दुष्टकारणजन्यत्वतदभावावित्यर्थः। उत्तरत्र सर्वेषां प्रयोजकानां

निरसिष्यमाणत्वात् तुल्यत्वे सति दुष्टकारणजन्यत्वदभावयोर्बाध्यबाधकभावप्रयोजकत्वे शङ्किते तुल्यत्वस्य प्रयोजकत्वनिराकरणमनुचितमित्याशङ्क्य व्याचष्टे—**तुल्यत्वे सति दुष्टकारणेत्यादि**। **तुल्यशब्दः प्रयुक्त इति**; तुल्यशब्दः प्रयुक्त इत्यर्थः। **तुल्यशब्देनैकदेशोपादानमिति**; तुल्यत्वस्यापि हेतुत्वप्रसक्तिसद्भावेन तन्निषेधार्थं तुल्यत्वशब्देन विशेषणांशोपादानं युज्यत इत्यर्थः। तुल्यत्वे सतीत्यस्य विवरणं विपरीतप्राबल्यदौर्बल्यकारणाभावे सतीति। तुल्यत्वशब्देन विशेषणवाचिना विशिष्टोपस्थानं क्लिष्टमित्यस्वरसादाह—**यद्वा अप्रयोजकत्वेनेति**। **तुल्यत्वं दृष्टान्ततयानूदितमिति**; केवलतुल्यत्वमित्यर्थः। तर्हि प्राधान्येन शङ्कितस्य तुल्यत्वे सति दुष्टकारणजन्यत्वतदभावरूपप्रयोजकस्यात्रानुपादानात् तस्याप्रयोजकत्वं न प्रतिपादितं स्यादित्यशङ्क्य, आदिशब्देन तदुपादानमित्याह—**वैषम्यान्तराभावे सतीति**। **विविधविकल्पशब्दः प्रपञ्चविशेषणं भेदविशेषणं वेति**; षष्ठीसमासपक्षे प्रपञ्चविशेषणं, कर्मधारये तु भेदविशेषणमिति भावः। **कार्याविद्येति**; उक्तं हि वाचस्पतिना आद्यपद्ये—अनिर्वाच्याविद्याद्वितयसचिवस्य" इति। तद्व्याख्याने च "एकानादिर्भावरूपा देवताधिकरणे वक्ष्यते; अन्या च पूर्वपूर्वविभ्रमसंस्कारः" इति। शंकरभाष्ये च "एवमविरुद्धः प्रत्यगात्मन्यनात्माध्यासः, तमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते" इति भेददर्शनस्याविद्यात्वमाविष्कृतम्। **अन्यपरमिति परस्याभिप्राय इति**; अन्यपरम्, अतो न प्रत्यक्षबाधकमिति परस्याभिप्राय इत्यर्थः।

## श्रुतप्रदीपिका

एवंविधाविद्यायां मानमाह—**अनृतेनेति**। **प्रत्यूढाः**; प्रतिबद्धाः। प्रत्यूढशब्दविवरणायाह—**तेषामिति**। बहुवचनम् "अदितिः पाशान्" इतिवत्। **नासदासीत्** इत्यनिर्वाच्यत्वम्। तमो हि सूक्ष्मावस्था प्रकृतिः, न तु मिथ्यारूपाविद्येत्यत्राह—**मायां त्विति**—बहुभ्रमहेतुत्वमाह—**इन्द्र इति**। धिया विना दुर्निरसत्वमाह—**ममेति**। अनादित्वमाह—**अनादीति**। आदिशब्दः प्रागुक्तस्वरूपपरश्रुतिस्मृतिगणपरः। इन्द्रमहेश्वरादिशब्दैः सविशेषत्वशङ्कां व्युदस्यन् वाक्यानामर्थमाह—**निर्विशेषेति**। स्वरूपपरवाक्यैकार्थ्यात् दोषपरवाक्येष्वपि निर्विशेषं वस्तु दोषाश्रयतया विवक्षितमित्यर्थः। **स्वगतेति**; अधिष्ठानभूतेन स्वेन संबद्धम्। **अवगम्यते**; 'यतः' इति पूरणम्।

स्वरूपपरैरिव वाक्यैर्निर्विशेषं वस्तु दोषाश्रयतया दोषपरस्मृत्यापि ज्ञायत इत्याह—**यथेति**। वस्तुशब्दो वक्ष्यमाणदेवादिपरः। विविधं ज्ञायतेऽनेनेति विज्ञानमविद्या। भेददर्शनस्याज्ञानकार्यत्वं व्यतिरेकेण विवृणोति—**यदेति**। **शुद्धं निजरूपि**; अविद्यातत्कृतभेददर्शनरहितम्। समन्तात्कल्प्यन्ते भेदा अनेनेत्यविद्या संकल्पः। "अविद्यातरुसंभूतिः" इति वक्ष्यते। **वस्तुषु**; देवादिधर्मिषु। देवाद्याकारभेदाः। "वस्त्वस्ति" इत्यादिश्लोकद्वयं सिद्धान्ते वक्ष्यते। विजातीयभेदनिषेधमुपसंहरति—**तस्मादिति**। सजातीयभेदं निषेधति—**विज्ञानमिति**। स्वगतमपि निषेधति—**ज्ञानमिति**। **विशुद्धं विमलम्**; अविद्याभेददृष्टिरहितम्। **सदैकम्**; वृद्ध्यादिरहितम्। नेदं परमतमित्याह—**सादिति**। **एतत्**; ज्ञानम्। **भुवनाश्रितम्**; भुवनेनाधिष्ठानतयाश्रितम्। **संव्यवहारभूतम्**; समन्तात् व्यवहारास्पदं वर्तत इति यत्, तत्र हेतुरविद्येत्युक्त इत्यर्थः। ततः किं ज्ञानस्य कर्मनैरपेक्ष्य इत्यत्राह—**अस्याश्चेति**। अज्ञाननिवृत्तिं दर्शयितुं **न पुनरिति** वाक्यमुपात्तम्। ज्ञानस्यैक्यविषयत्वाय **तदेकमिति**। तथा सत्यभयप्राप्त्यै—**यदेति**। आत्म्यं शरीरम्। **अनिरुक्ते**; अनिर्वचनीये। **अभयम्**; भयाभावाय; अव्ययीभावसमासः। बन्धकत्वेन पराभिमतस्यापि ज्ञाननिवर्त्यत्वायाह—**भिद्यत इति**। अत्र भेदप्रतीतिव्युदासायाह—**ब्रह्मेति**। उपायान्तरं निषेधति—**तमेवेति**। नात्राज्ञाननिवृत्तिः प्रतीतेत्यत्राह—**अत्रेति**। कथमित्यत्राह—**यथेति**। प्रमादमित्यनवधानम्; तद्धेतुरविद्येत्यर्थः। एषु वाक्येषु निर्विशेषब्रह्मात्मैक्यविषयत्वं नावगतमित्यत्राह—**सत्यमिति**। निर्विशेषत्वं शोधकसिद्धम्। तेनात्मन ऐक्यं श्रावयति—**अथ योऽन्यामिति**। भेदधीर्निषिद्धा। अथोपदेशं दर्शयति—**तत्त्वमिति**। तथा देवतां प्रत्याह—**त्वं वेति**। स्वस्मिन्ननुसन्धत्ते—**तद्योऽहमिति**। अस्य सौत्रतामाह—**आत्मेति**। तदभिप्रायज्ञोक्तिमाह—**तथा चेति**। **तन्निष्पत्तेः**; तस्मिन् कल्पितत्वात्। मानानुग्राहकं तर्कं दर्शयति—**अनेनेति**। **मिथ्यारूपस्येति** हेतुगर्भम्। **सकारणस्य**; साविद्यस्य। सर्पभ्रमो हि रज्जुज्ञानेन निवर्त्यं न कर्मणेति भावः। चोदयति—**ननु चेति**। द्विचन्द्रस्वप्नादिव्युदासाय सकलशब्दः। अनुमानागमयोर्व्याप्तिग्रहणलिङ्गधर्मधीव्युत्पत्त्यर्थं प्रत्यक्षसापेक्षत्वादग्न्यनुष्णत्वहेतुद्रव्यत्ववत् यूपादित्यैक्यवाक्यवत् तद्विरुद्धं श्रुतिर्न बोधयेदिति भावः। एतत्परिहरन् किं प्रत्यक्षस्य बाध्यत्वं न संभवतीति मनुषे,

उत परोक्षस्य बाधकत्वं न संभवतीति विकल्पं हृदि निधाय प्रथमं शिरः प्रतिवक्ति—**कथं वेति**। प्रत्यक्षाभासत्वं न प्रतीतिदशायां ज्ञातम्; पश्चाद्बाधस्तुल्य इति भावः। परोक्षस्य मूलिनो न बाधकत्वमिति शङ्कते—**तत्रेति**। तुल्यत्वव्यावृत्तये तुशब्दः। मूलित्वपरोक्षत्वाभिप्रायेण **प्रत्यक्षमूलत्य शास्त्रस्ये**त्युक्तम्। तुल्यत्वे विपर्ययोऽपि स्यादिति प्रयोजकान्तरमभ्युपगमयितुमाह—**तुल्ययोरिति**। तत्र परोक्तं शङ्कते—**पूर्वोत्तरयोरिति**। तदत्रापि तुल्यमित्याह—**शास्त्रेति**। मूलमूलिभावाद्यभावविशेषितौ दुष्टहेतुजत्वतदभावौ तयोः प्रयोजकावित्यत आह—**एतदुक्तमिति**। **तुल्यत्वेति**; तुल्यत्वे सति दुष्टकारणजन्यत्वतदभावावित्यर्थः। आदिशब्दात् परोक्षापरोक्षत्वं पूर्वोत्तरत्वं न विवक्षितम्। कुत इत्यत आह—**ज्वालेति**। अन्यथेत्यध्याहर्तव्यम्। **अयोगात्**; अयोगप्रसङ्गादित्यर्थः। किंविषयं प्रत्यक्षं बाध्यत इत्यत्राह—**तत्र हीति**। किं प्रयोजकमित्यत्राह—**एवं चेति**। त्वदुक्तेऽनुपपन्ने सतीत्यर्थः। **द्वयोः प्रमाणयोरिति**; द्वयोः प्रत्यक्षयोः प्रत्यक्षागमयोः अनुमानयोः अनुमानागमयोर्वेत्यर्थः। अनन्यथासिद्धत्वं विरुद्धविषयमानाबाधेनानुदयत्वम्। तच्च विषयान्तरालाभाप्रमाणकोटिनिवेशाभावरूपादनवकाशत्वात्। **सर्वत्र**; प्रत्यक्षादिषु सजातीययोर्विजातीययोर्वा द्वयोरित्यर्थः। इत्येतदुक्तमित्यन्वयः। ततः किं शास्त्रप्राबल्यस्येत्यत आह—**तस्मादिति**। **अनादी**त्यादिना "अनादिनिधना ह्येषा" इति स्मृतिरपौरुषेयत्वसाधकलिङ्गं च स्मारितम्। यतो दोषसंभावना ततोऽप्रमाणकोटिनिवेशः। अर्थविरोधं दर्शयति—**निर्विशेषेति**। शुद्धिरविद्याविरहः। ततो **मुक्तम्**; अविद्याकार्यबन्धरहितम्। **बुद्धम्**; भासमानम्। तच्च स्वतः; तच्च चिद्रूपतया श्रुतत्वादिति पदार्थः। विविधविकल्परूपो बन्धः। कश्च दोष इत्यत्राह—**संभाव्यते चेति**। **भेदप्रपञ्चः**; भेदसमुदायो ज्ञात्रादिः। स च देवादिरूपेण विविधः; स च ब्राह्मणादिरूपेण विकल्पवानिति विविधविकल्पभेदरूपः। आदिशब्देन भेददर्शनमुक्तम्। तयोरन्योन्याश्रयव्युदासायानादिशब्दः। बीजाङ्कुरवत् प्रवाहानादिः। काचादिव्युदासायाविद्याख्यशब्दः। काचित्केन काचादिना सर्वत्र दोषानुमाने वाक्यत्वात् वेदेऽपि प्रसजेत्। योग्यानुपलब्धिस्तु तुल्येति भावः। आदिशब्दः कारणाविद्याविषयो वा।

तत्त्वटीका

तस्याः स्वरूपं परब्रह्मदोषत्वं तत्फलं च श्रुत्यैव स्थापयति—**अनृतेनेति** ; **प्रत्यूढाः** ; प्रतीपं प्रापिताः ; प्रतिरुद्धा इत्यर्थः। तरङ्गचन्द्रवत्कल्पितजीवभेदविवक्षया बहुवचनम् , पाशवदविवक्षितार्थं वा ; "एतं ब्रह्मलोकं न विन्दन्ति" इत्यत्र प्रत्यूढत्वं हेतुः। इदं पूर्ववाक्योक्तेन विवृणोति—**तेषामिति**। "त इमे सत्याः कामा अनृतापिधानाः" इत्युक्तानां तत्तत्कामोपाधिप्रतियोगिभूतकल्पितार्थव्यावृत्तिरूपाणां ब्रह्मस्वभावानां तदभिन्नतया प्रामाणिकानां सतां मिथ्याभूतमज्ञानमाच्छादकमित्यर्थः। व्यावर्त्यभेदेन व्यावृत्तिभेदकल्पनयात्र बहुत्वोक्तिः। पूर्ववत्पाशन्यायेन वेति केचित्। अविद्याया अनिर्वाच्यत्वं दर्शयति—**नासदासीदिति**। नात्र निषेधमात्रे पर्यवसानम् ; उभयनिषेधेन "तम आसीत्" **इति** विहितमुभयविलक्षणमेव हि स्यादिति भावः। केचिदाहुः—"बन्धमूलमज्ञानं कर्मरूपं प्रवाहानादि ; भ्रान्तिज्ञानमूलं त्वज्ञानमिन्द्रियादिदोषोऽधिष्ठानयाथात्म्यज्ञानप्रागभावश्च। एतत्सर्वं तत्कार्याणि च सदसद्विलक्षणानि। सर्वमूलाविद्या तु पञ्चमाकारा ; तन्निवृत्तिर्हि[१] पञ्चमप्रकारा" इति। तमःशब्देन ज्ञानविरोधित्वं तिरोधायकत्वं च व्यज्यते। **तमसा गूढम् ;** अज्ञानेनावृतम्। अत्र **प्रकेतमिति** विशेष्यं ब्रह्म। ननु सुबालश्रुतौ तमःशब्देनातिसूक्ष्मा मूलप्रकृतिरुच्यते, न त्वविद्याविद्येत्यत्र प्रकृतेर्मायात्वेन मिथ्यात्वमीश्वरस्यापि मायाकल्पितत्वं श्रुतमित्याह—**मायां त्विति**। प्रकृतिं मायां विद्यादिति विपर्यस्यान्वयः। एकस्य सतो मायामरीचिकावीचिकाभिर्विविधत्वेन भानमाह—**इन्द्रो मायाभिरिति**। अत्र इन्द्रः सर्वदृगीश्वरः ; "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" इति पूर्ववाक्यस्वारस्यात्। "स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिति तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण" इत्युपनिषदैव तद्विषयत्वेन निरुक्तेश्चेति भावः। "ज्ञानवान्मां प्रपद्यते। वासुदेवः सर्वमिति" इत्युक्तैक्यज्ञानमन्तरेणास्या मायाया दुस्तरत्वं गीतमित्याह—**मम मायेति**। तदनादित्वं तया तिरोधानं कदाचित्तन्निवृत्तिश्च स्मर्यत इत्याह—**अनादीति**। आदिशब्देन "अविद्यया मृत्युं तीर्त्वा" "भूयश्चान्ते विश्व-

---

१. "न सन्नासन्नसदसन्नानिर्वाच्योऽपि तत्क्षयः।
यक्षानुरूपो हि बलिरित्याचार्या व्यचीचरन्॥" इति न्यायमकरन्दे आनन्दबोधाचार्याः।

मायानिवृत्तिः" "गुणमायासमावृतः" यन्त्रारूढानि मायया" इत्यादिसंग्रहः ; स्वरूपविधिवाक्यसिद्धशुद्धाकारानुरोधेन दोषविधिपरेषु महेश्वरादिशब्दा बहुवचनं च मायोपश्लिष्टविषयतया न विविधभेदसत्यत्वं स्थापयितुं क्षमन्त इत्यभिप्रायेणानुदाहृतानेकवाक्यसंकलितार्थस्य निर्विशेषत्वादेरनूक्तिः । "तदैक्षत बहु स्याम्" "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्यादि प्रमाणं सर्वार्थानां च सच्चिदनुवेधेन भानं चानुसरन् शुक्तिरूप्यादिवद्भ्रमस्य विषयाश्रयभेदशङ्कां च व्युदस्यति—**स्वगतनानात्वमिति** । स्वाध्यस्तं चिदचिद्भेदं वृत्तिसंभेदेन स्मृतित्वमनुभवत्वादिधर्मभेदं चेत्यर्थः । दोषविषयतयोदाहृतश्रुतीनां महेश्वरादिशब्दैरन्यपरत्वशङ्कां निवारयितुं श्रुतितदर्थापत्तिसिद्धमर्थं निर्विशेषवस्तुदोषविषयोपबृंहणेन व्यनक्ति—**यथोक्तमिति** । निर्विशेषोऽपि **भगवा**नित्युपचारः । **अशेषमूर्तिः** ; सर्वत्वेन भ्रान्तिसिद्ध इत्याशयः । **न तु वस्तुभूतः** ; "पुमान्न देवो न नरो न पशुर्न च पादपः" "चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः" इत्यादिवादान्न देवादिजडवस्तुरूपः । यद्वा न वक्ष्यमाणशैलादिकृत्स्नजगद्वस्तुरूपः । अत्र स्वरूपसाक्षिवृत्तिज्ञानानां प्रपञ्चरूपविकृतयोगात् **विज्ञान**शब्दो विविधं ज्ञायतेऽनेनेत्यविद्याविषयः । **विजृम्भितानि** ; अध्यस्तानीत्यर्थः । भेदस्य दोषकल्पितत्वं व्यतिरेकेण द्रढयति—**यदेति** । **शुद्धम्** ; अविद्यामुक्तम् । **निजरूपि** ; तन्मूलभेददृष्टिशून्यम् । तत एव **सर्वकर्मक्षयेऽपास्तदोषम्** ; कर्मसाध्यक्लेशादिरहितम् । **संकल्प** इहाविद्या । "अविद्यातरुसंभूतिस्थानतो दर्शनात्" "विज्ञानविजृम्भितानि" इत्युक्तस्यैव चात्र परामर्शात् ; समन्ताद् ब्रह्मणैकीकृत्य वा कल्प्यन्तेऽनेन भेदा इति व्युत्पत्तिसंभवाच्च । **वस्तुषु वस्तुभेदाः** ; वस्तुत्वेन पृथग्भूतेषु देवादिपिण्डेषु कल्पितेषु जीवेषु वा तद्द्ध्राता देवत्वादयो देवादिपिण्डाश्च न भवन्ति ; देवादिप्रतिभासो न स्यादित्याशयः । उक्तप्रदर्शनमात्रार्थतया "वस्त्वस्ति" इत्यादिश्लोकद्वयमत्र नोपात्तम् । श्लोकचतुष्टयोक्तं विजातीयभेदाभावं निगमयति—**तस्मादिति** । ज्ञानमात्रात्मनि यथादर्शनं तत्तद्वादिभिरुक्तः सजातीयभेदोऽपि भ्रान्तिसिद्धतया मिथ्याभूत इत्याह—**विज्ञानमिति** । विज्ञानशब्दाविह स्वप्रकाशानन्दरूपविलक्षणज्ञानपरौ ; तथापि निरसनीयत्वेनाभिमताः स्वगता भेदा दुस्त्यजा इत्यत्राह—**ज्ञानमिति** । **विशुद्धम्** ; अविद्योज्झितम् । अत एव **विमलम्** ; भेददृष्टितन्मूलकर्मरहितम् । **विशोकम्** ; कर्माभावादेव तत्फलभूतशोकमोहादिशून्यम् । **एक**-

**मिति** पूर्वोक्तात्मानुवादः । **सदैकम्**; सर्वदानाघ्रातविकारषट्कम् । ईदृशस्योत्पत्त्यादिकमप्यन्तःकरणवृत्तिसंभेदादध्यस्तम् । मिथ्यात्वादेवात्र वृद्धिह्रासादिकं निषिध्यते । स्फटिकरागकल्पस्याविद्यादेरवस्तुत्वेऽपि स्वाप्नसर्पादिनीत्या निराचिकीर्षादिकमपि न विरुद्धमिति भावः । **परमः परेश** इत्यादिना सामानाधिकरण्येन जीवेश्वरभेदस्यापि कल्पितत्वोक्तिः । किमसौ दुरारोहः पूर्वपक्ष इत्यत्राह—**सद्भाव इति** । भेददृष्टेरविद्याजन्यत्वशङ्काया निःशेषोन्मूलनाय निगमयति—**एतदिति** । **एतत्**—ज्ञानमात्रस्वरूपं ब्रह्म स्वाप्नप्रपञ्चकल्पेन भुवनेनाधिष्ठानतयाश्रितम् । **संव्यवहारभूतम्**; समन्तादेकीकृत्य वा व्यवहारकर्मभूतमिति यावत्; तत्रापि कारणमविद्येति चोक्तमित्यर्थः । चकारः "सद्भाव उक्तः" इत्यनेन भ्रमहेतूक्तेः समुच्चयार्थः । एवं वा योजना—संव्यवहारभूतं भुवनकोशादिकं तत्राप्येतदेवाध्यासतो भुवनाश्रितं "ज्योतींषि विष्णुः" इत्यादिना तथोक्तमिति । यद्वा—एतत्तु भुवनगतं संव्यवहारभूतं संव्यवहारेण प्राप्तं व्यावहारिकं सत्यत्वं यत्, तत्राप्यध्यास एव कारणमुक्तमिति । तथा च परेष्टानुवादे भाषिष्यते—"तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टम्" इति । चस्त्वर्थः । एतावता प्रकृते किमायातमित्यत्र मुक्त्युपायस्य कर्मनैरपेक्ष्यं सिद्धपरवाक्यानुविधायिमोक्षोपायपरवाक्यशक्त्या व्यनक्ति—**अस्या इति**; अनिर्वाच्यत्वादिविशिष्टाया इत्यर्थः । तत एव ज्ञानमात्रनिवर्त्यत्वं ब्रह्मात्मैकत्वं महावाक्यार्थः । ऐक्यदर्शनमविद्यानिवर्त्तकमित्याह—**न पुनरिति** । एकं पश्यतीति यत् ततो न पुनर्मृत्यव इति योजना; य इति वाध्याहारः । **तदेकं पश्यती**त्यत्र कर्तृकर्मभेदव्युदासोऽप्यभिप्रेतः । शब्दजन्यप्रत्यक्षाभिप्रायेण पश्यतीत्याद्युक्तिः । दृगधीनसिद्धेरविद्यायास्तत्कार्याणां रोगादीनामदर्शनमत्र साध्यमित्याह—**न पश्य इति** । निर्विशेषात्मैक्यबुद्धिदार्ढ्यानन्तरमेव भयनिवृत्त्या तत्कारणाविद्यानिवृत्तिसूचनमाह—**यदा हीति** । **अदृश्ये**; दृक्कर्मत्वरहिते । **अनात्म्ये**; अशरीरे; आत्मना व्याप्यं हि शरीरमात्म्यम् । **अनिरुक्ते**; अशब्दगोचरे । **अनिलयने**; अनाधारे । यद्वा निलीयतेऽस्मिन्नध्यस्तैरिति निलयनमविद्या, तद्रहिते । **अभयमिति** प्रतिष्ठाविशेषणम्; लिङ्गव्यत्ययश्छान्दसः, क्रियाविशेषणं वा; अव्ययीभावेन भयाभावायेति वा; **अथ सोऽभयं गत** इति फलोक्तिसंवादात् । **प्रतिष्ठाम्**; ऐक्यबुद्ध्या स्थितिमित्यर्थः । बन्धकतया सिद्धान्तीष्टानां कर्मपर्यन्तानामपि धीनिवर्त्यत्वेन मिथ्यात्वं

दर्शयति—**भिद्यत इति**। **हृदयग्रन्थिः**; अविद्या। संशयादि तत्कार्यमिति सकार्याविद्यानिवृत्तिरिहोक्ता। ननु "तादृगेव भवति" "निरञ्जनः परमं साम्यमुपैति" "सोऽश्नुते सर्वान्कामान्सह। ब्रह्मणा विपश्चिता" इत्यादिषु फलदशायां तादृक्त्वसाम्यभेदोक्तिस्वारस्यात् "पृथगात्मानम्" इत्युक्तेश्च भेदज्ञानमेव मुक्तिहेतुः स्यादित्यत्राह—**ब्रह्म वेदेति**। अत्राविद्याकृतभेदनिवृत्तिरवधारणद्योत्या। न ह्यत्र तद्भूतस्यातद्भूतस्य वा तद्भावः साध्यः। कर्मसमुच्चयादिनिरासार्थमैक्यज्ञानेनाविद्यातरणव्यक्त्यर्थं चाह—**तमेवेति**। "वेदाहमेतं पुरुषं महान्तम्" इति सर्वलोकप्रत्यक्षसिद्धजीवैक्येन प्रकृतो ह्यत्र 'तम्' इति परामृश्यत इति भावः। इदं वाक्यद्वयं ज्ञानस्यैव साक्षान्मोक्षसाधनत्वाय प्रागुपात्तम्; इह त्वविद्यानिवृत्त्यतिरिक्तसाध्यनिरासार्थम्। "नान्यः पन्थाः" इति कर्मनिषेधपरम्। **आदिशब्देन** "ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्" इत्यादिसंग्रहः। **श्रुतय** इति प्रकृत्या बहुवचनेन च श्रुतस्यैव ग्राह्यत्वं मिथःसंवादेन दार्ढ्यं च सूच्यते। उपात्तवाक्येष्वविद्यानिवृत्तिर्न भाति; मृत्युशब्दस्त्वर्थान्तरेऽपि स्यादित्यत्राह—**अत्रेति**। मोक्षोपायवाक्येषु ज्ञाननिवर्त्यविषयत्वौचित्यादस्याविद्यात्वमिति भावः। प्रसिद्धिविरोधिशङ्कां निरस्यति—**यथेति**। **प्रमादः**; अनवधानता, अज्ञानम्। कार्येण वा कारणलक्षणा। **अप्रमादम्**; अविद्यानिवृत्तिम्। यद्वा अत्रामृतत्वसाधनतयोक्तोऽप्रमादस्तत्त्वज्ञानम्; तत्प्रतिपक्षः प्रमादोऽप्यत्राज्ञानमेव। **अहं ब्रवीमीति** तत्त्ववित्सिद्धान्तख्यापनपरम्। ब्रह्मणो निर्विशेषत्वं जीवतादात्म्यमैक्यज्ञानस्य मुक्तिहेतुत्वं च नैतेषु व्यक्तं भातीत्यत्र शोधकैर्निर्विशेषत्वमुपायपरवाक्यैस्तत्त्वनिर्देशैस्तदनुसन्धानपरैश्च वाक्यैर्जीवैक्यज्ञानसिद्धिं चाह—**सत्यमिति**। **त्वं** वेत्यादिना देवतां प्रत्युक्तस्यैव तदर्थस्य **तद्योऽहमि**त्यादिना स्वस्मिन्ननुसंधानं स्थापयति। उक्तस्य सूत्रकृदिष्टत्वमाह—**वक्ष्यतीति**। **एतदेव**; न त्वदिष्टमिति भावः। **आत्मेति**; स्वानन्यत्वेनेति यावत्। सूत्राभिप्रेतं तद्विदुक्त्या स्पष्टयति—**तथेति**। **सर्वस्य तन्निष्पत्तेः**; भातस्य सर्वस्य तस्मिन्नध्यस्तत्वादित्यर्थः; बाधावस्थायामधिष्ठानभूतब्रह्मात्मतया परिशिष्टत्वादिति भावः। अद्वैतधीकरणस्य वाक्यस्य सूत्रवाक्याभ्यां सूचितमनुग्राहकं वचः "सन्मूलाः" इत्यादिना प्रागुक्तमेव। चोद्योत्थापनायाह **अनेनेति**; असत्यभेदबाधस्वरसेनेनि भावः। चः पूर्ववदुभयार्थः। "द्वितीयाद्वै भयं भवति" इत्यादिसूचनाय ब्रह्मात्मैकत्वोक्तिः। मिथ्या-

भूतस्य ज्ञानेतरकर्मनिवर्त्यत्वे सत्यत्वं स्यात्; तच्च मानविरुद्धम्; न च रज्जुसर्पादिनिवृत्तौ मन्त्रौषधदण्डघाताद्यपेक्षेति भावः। अपुनरङ्कुरत्वाय सकारणत्वोक्तिः। आस्तामनुकूलस्तर्कः, प्रतिकूलस्तु सिद्ध इत्यभिप्रायेण चोदयति—**ननु चेति**। बाधकतयेष्टयोः शास्त्रानुमानयोः शब्दार्थस्वरूपतद्व्युत्पत्तीनां व्याप्तिधर्मलिङ्गादीनां च सिद्ध्यर्थमुपजीव्यं प्रत्यक्षं न ताभ्यां बाध्येत। अन्यथा 'आदित्यो यूपः, पावकोऽनुष्णः' इत्यादेरपि प्रत्यक्षबाधकत्वं स्यात्। चन्द्रादिभेदबाधकस्य तु तन्नोपजीव्यमित्यभिप्रायेण **सकल**शब्दः। सकलभेदबाधे ह्युपजीव्यबाधोऽप्यन्तर्गतः। **कथमिव**; न कथं चित्; प्रत्यक्षविरुद्धं शास्त्रमेव बाधितमुख्यार्थं भाक्तं नेयमिति भावः। अत्र किं प्रत्यक्षत्वान्न बाध्यम्, उत परोक्षत्वान्मूलित्वाच्च न बाधकमिति शङ्काद्वये प्रथमं परिहरति—**कथं वेति**। प्रत्यक्षशब्द इहापरोक्षमात्रपरः; बाधात्पूर्वमनाभासत्वाभिमानो बाधश्च प्रपञ्चरज्जुसर्पभ्रमयोः सम इति भावः। मूलित्वादिना न शास्त्रं बाधकमिति शङ्कते—**तत्रेति**। **प्रत्यक्षयोः**; अपरोक्षयोरित्यर्थः। इदं च मूलमूलित्वरहितयोः प्रत्यक्षपरोक्षयोरप्युपलक्षणम्। अत एवेह दूष्यं निष्कृष्यानुवक्ति—**इहेति**। सकलभेदनिवृत्तावित्यर्थः। वैषम्यव्यक्त्यै तुशब्दः। प्रत्यक्षशब्दोऽत्र प्रत्यक्षप्रमाणविषयः। 'द्वयोः प्रत्यक्षयोः' इत्युक्तस्य तुल्यबलत्वस्य बाधं प्रत्यप्रयोजकत्वात् अन्यथा प्रकरणसमेऽतिप्रसङ्गाद् विपरिवर्तप्रसङ्गाच्चान्यत्प्रयोजकं शिक्षयितुमाह—**तुल्ययोरिति**। चोद्यत्रयनिवृत्त्यै सिद्धान्तीष्टं प्रयोजकं शङ्कते—**पूर्वेति**। **पूर्वोत्तरयो**रिति क्रमो न नियतः। उक्तं प्रयोजकमपि प्रस्तुते तावदस्तीत्याह—**शास्त्रेति**। शास्त्रशब्द इह तज्जन्मधीलक्षकः। धीद्वयविवेकार्थं विशेषविवक्षया वा तत्कारणेऽन्वयोक्तिः। **एतत्**; वैषम्यमित्यर्थः। ननु दुष्टहेतुजत्वस्य बाध्यताहेतुत्वमुपजीव्यत्वाद्यभावेन तुल्यत्वे सति स्यात्; उपजीव्यबाधे चाधर्मत्वसाधकहिंसाद्यपि प्रमाणं स्यादित्यत्राह—**एतदुक्तमिति**। तुल्यत्वोक्तिर्दृष्टान्तार्था। तद्विशिष्टं वा दुष्टहेतुजन्यत्वादिकं विवक्षितम्। आदिशब्देनोपक्रमापच्छेदाधिकरणोक्तनियतानियतपौर्वापर्यादेः परोक्षत्वादेश्च संग्रहः। **अकारणम्**; अप्रयोजकम्; अव्याप्तेरिति शेषः। उक्तमर्थमुदाहरणस्थेन तर्केण द्रढयति—**ज्वालेति**। कारणं चेदित्यध्याहार्यम्। **अयोगादिति** प्रसज्यमानोक्तिः। ननु प्रत्यक्षं वर्तमानग्राहितया ज्वालास्वरूपं गृह्णाति; भिन्नसंततताविव सूक्ष्मदृशामेकसंततावपि ज्वालाभेदः प्रत्यक्षसिद्ध इत्यत्राह—**तत्रेति**। प्रत्यक्षशब्द इह प्रत्यभिज्ञाख्य-

विशेषविषयः। सा चात्र भ्रान्तिरूपा पटुतरदृष्टीनामपि पूर्वापरकालवर्त्यैक्यविषयात्यन्तसादृश्यसादेश्यादिभिर्जायत एव। अतो विरोधो बाधश्चात्र सिद्ध इति भावः। तर्हि प्रसिद्धस्याप्रयोजकत्वे प्रयोज्यं निष्कारणं स्यादित्यत्राह––**एवं च सतीति**। चः शङ्कानिवृत्त्यर्थः समुच्चयार्थो वा; अव्याप्त्या च सह तर्कबाधे च सतीति यावत्। सजातीययोर्विजातीययोर्वेति न निर्बन्ध इत्यभिप्रायेण **द्वयो**रित्युक्तम्। **प्रमाणयोः**; बलविमर्शात्पूर्वं मानत्वेन भातयोरित्यर्थः। **विरोधे**; मिथो विषयापहाररूपे। **अन्यथासिद्धिः**; स्वविषयसत्यत्वमन्तरेणापि स्वरूपलाभः। तत्र हेतुत्वेन सावकाशत्वमाक्रष्टव्यम्। तच्च द्विचन्द्रादिधीवदप्रमाणकोटिनिवेशार्हत्वाद्वा पदाहवनीयादिनयेनाविरुद्धविषयलाभाद्वा स्यात्। **अनन्यथासिद्धम्**; स्वविषयमिथ्यात्वेऽनुपपन्नस्वरूपं विरुद्धमबाधित्वोत्पत्तुमनर्हत्वाद्वा। तत्र हेतुः **अनवकाशत्वम्**; तच्च पूर्वोक्तावकाशद्वयाभावसमुच्चयरूपम्। **इतरत्**; अनादृतसाजात्यादिविशेषमिति भावः। **सर्वत्र**; तुल्यातुल्योदाहरणेषु तार्तीयबाधस्थलेषु चेत्यर्थः। **निर्णयः**; प्रमाणतर्कसिद्धोऽध्यवसायः। **इति**शब्दः पूर्वो हेतौ, उत्तरः समाप्तौ। 'समानमेतत्' इत्यत्राभिप्रेतं शास्त्रप्राबल्यं विवृण्वन् 'एतदुक्तम्' इति प्रकान्तं निगमयति—**तस्मादिति**। अस्मदुक्तस्यैव प्रयोजकत्वादित्यर्थः। यद्यप्यविद्यानिवृत्तौ वेदोऽपि न स्यात्; तथापि सर्गप्रलयकालेषूत्पत्तिनाशाभावात् **अनादिनिधन**त्वोक्तिः। तद्विषयैव "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा" इति स्मृतिरिति भावः। अविच्छिन्नसंप्रदायत्वोक्त्या मन्वन्तरादिष्वविच्छेदेन विप्लवासंभवः सूच्यते। "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" इत्येतदपि कालविशेषाद्यनुगुणशाखाविशेषप्रवर्तनपरम्; अन्यथा "ब्रह्म स्वयंभ्वभ्यानर्षत्" इत्यादिभिर्विरोधात्; स्मर्तव्यत्वे सत्यस्मर्यमाणकर्तृकत्वादित्यपौरुषेयत्वसाधकं चात्र सूचितम्। अत एव वक्तृदोषासंभवः। मन्वाद्याप्तवाक्यानां श्रुतिविरोधे क्वचिद्बाध इष्टः, न तथेत्यभिप्रायेण **गन्ध**शब्दः। एवमप्रमाणकोटिनिवेशोऽपास्तः। विरुद्धविषयोऽपि नास्तीति व्यक्त्यै **निर्विशेष**त्वाद्युक्तिः। **नित्य**शब्दः शुद्धत्वादौ सर्वत्र योज्यः, अबाधपरो वा। **शुद्धम्**; अविद्यासाक्षित्वावस्थायामपि वस्तुतस्तद्रहितम्। तेन **बुद्धम्**; अतिरोहितनित्यप्रकाशम्। तत एव **मुक्तम्**; सर्वदा कर्मतत्फलवियुक्तम्। **स्वप्रकाशम्**; मिथ्यात्वप्रयोजकदृश्यत्वोज्झितम्। तत्र हेतुश्चिद्रूपत्वम्। अत्र निषेधकज्ञानाश्रयत्वस्यापि मिथ्यात्वव्यक्त्यै **मात्र**शब्दः। **ब्रह्मात्मभावः**; ब्रह्मण एव प्रत्यगात्म-

त्वम् । प्रत्यक्षस्य संभाव्यमानदोषत्वं प्राचुर्येणान्यत्र दोषदर्शनादन्यत्रापि दोषशङ्कार्हत्वम् । तत एवानुमानादेरपि शङ्कितदोषत्वाय **आदि**शब्दः । देवादिभेदैस्तदवान्तरैश्च बन्धस्य विविधविकल्परूपत्वम् ; विशेषतः कल्प्यत इति **विकल्पः** । एवकारः प्रतिकूलतर्कासंभवपरः । ननु काचाद्यभावान्निर्दोषत्वेन प्रसिद्धे प्रत्यक्षे दोषो दुर्वचः; तज्जातीये दोषदृष्ट्यान्यत्रापि तत्क्लृप्तौ वेदे वाक्यत्वादिभिस्तथा क्लृप्तिः स्यादित्यत्राह––**संभाव्यत इति** । चः शङ्कानिवृत्त्यर्थः, बाधकप्रत्ययेन सह कारणदोषनिश्चयस्य समुच्चयार्थो वा । **भेदप्रपञ्चः**; निजकर्मभेदविभिन्नचित्तैरविद्याकल्पितश्चिदचिद्विस्तारः । **प्रत्यक्षस्येति** भेदग्राहकमात्रस्योपलक्षणम् । **आदि**शब्देन मूलाविद्यां भेददृष्टिं च संगृह्णाति । एतेषु यथार्हमन्योन्याश्रयादिनिरासाय **अनादि**शब्दः । एतेषां दोषत्वं "वासनारेणुगुण्ठितः" "अविद्यासंचितं कर्म" इत्यादिभिः सिद्धम् ।

## मूलभावप्रकाशिका

**अनृतेनेति** ; "एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः" इति दहरविद्यावाक्यम् । ब्रह्मैव लोको ब्रह्मलोकः । लोक्यत इति लोकः । अनृतेनासत्येनाज्ञानेन प्रत्यूढाः प्रतीपं नीताः, वैपरीत्यं प्राप्ताः; असत्कार्यात्मस्वरूपविरुद्धं कर्तृत्वादिसंसारं प्राप्ताः सन्त एतं ब्रह्मलोकं न विदन्तीत्यर्थः । अनृतेनेत्यनेन सद्विलक्षणत्वं प्रत्यूढ इत्यनेन विक्षेपकरत्वं चोक्तं भवति । आच्छादकत्वे प्रमाणं दर्शयति––**तेषामिति** । "त इमे सत्याः कामा अनृतापिधानास्तेषां सत्यानां सतामनृतमपिधानम्" इत्यपि दहरविद्यावाक्यम् । काम्यन्त इति कामा अपहतपाप्मत्वादयः । सत्याः कामाः । **अनृतापिधाना**; अनृतं सद्विलक्षणमज्ञानमपिधानमावारकं येषां ते तथोक्ताः । तदेव दर्शयति—तेषामिति । सदसद्विलक्षणत्वे प्रमाणं दर्शयति—**नासदासीदिति** । सदसतोरभावकाले तमःसत्त्वप्रतिपादनेन तमसः सदसद्विलक्षणत्वसिद्धिरिति भावः । आवारकत्वे प्रमाणान्तरं दर्शयति—**तमसेति** । सृष्टेः प्राक्काले तमसा अज्ञानेन गूढमावृतं प्रकेतं प्रकृष्टं वासस्थानं ब्रह्मेत्यर्थः ; "कित निवासे" इति हि धातुः । श्वेताश्वतरवाक्यमुदाहरति—**मायां त्विति** । मायां सदसद्विलक्षणतया मायाशब्दवाच्यामविद्यां प्रकृतिमुपादानं विद्यादित्यर्थः । तत्रैव वाक्यान्तरमाह—**इन्द्र इति** । **इन्द्रः** ; परमेश्वरः ; "इदि परमैश्वर्ये" इति हि धातुः । **मायाभिः** ; अविद्याभिः । **पुरुरूपः** ; बहुरूपः । **ईयते** ; क्रियत इत्यर्थः । **ममेति** ;

"दैवी ह्येषा गुणमयी मम माया दुरत्यया" इति गीतावाक्यम् । **गुणमयी**; सत्त्वरजस्तमोमयीत्यर्थः । मायाशब्देन मिथ्यात्वं फलितमिति भावः । अनादित्वे प्रमाणं दर्शयति—**अनादीति** । अविद्याविषये श्रीविष्णुपुराणवचनानि दर्शयति—**यथोक्तमिति** । **न तु वस्तुभूतः**; वक्ष्यमाणशैलाब्धिधरादिवस्तुभूतो न भवतीत्यर्थः । विविधं ज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानशब्दोऽज्ञानपरः । **शुद्धम्**; अविद्यारहितम् । **निजरूपि**; भेददर्शनरहितम् । भेददर्शननिमित्तकर्मक्षये अपास्तरागादिदोषम् । समन्तात् कल्प्यतेऽनेनेति संकल्पमज्ञानम् । वस्तुषु जीवेषु संकल्पतरुशब्दिताविद्याफलभूता वस्तुभेदाः; वसतीति वस्तु; जीवेषु विद्यमाना भेदा न भवन्तीत्यर्थः । यद्वा समित्येकीकारे । एकीकृत्य कल्पनं संकल्पः । देहात्मैक्यभ्रम इति यावत् । देहात्मैक्यभ्रमफलभूता वस्तुभेदाः चिद्वस्तुनिष्ठा भेदा जीवभेदभ्रमा न भवन्तीति यावत् ।

"वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् ।
यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ॥
मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥"

इति सिद्धान्ते व्याख्यास्यमानं मध्ये श्लोकद्वयं लौकिकप्रतीत्यनुसारेणापि जगन्मिथ्यात्वप्रतिपादनपरमित्युक्तार्थप्रपञ्चनपरत्वादनादृतमिति द्रष्टव्यम् । **निजेति**; निजकर्मभेदेन भिद्यमानैरन्तःकरणैर्जीवभेदो भवतीत्यर्थः । ननु "परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते" इति परमेश्वरे वासुदेवे विद्यमाने कथं ज्ञानव्यतिरिक्तस्यानित्यत्वमुच्यत इत्यत्राह—**ज्ञानं विशुद्धमिति** । **सदैकम्**; जन्मवृद्ध्यादिरहितमित्यर्थः । **भुवनाश्रितम्**; भुवनेनाश्रितं, भुवनाधिष्ठानभूतम् । **एतत्** ज्ञानम् । **संव्यवहारभूतम्**; संव्यवह्रियत इति संव्यवहारो जगद्रूपापन्नमिति यत् तत्राप्यविद्यारूपं कारणमुक्तमित्यर्थः । विज्ञानेनैवेत्येवकारेण कर्मानपेक्षितत्वमुक्तमित्यर्थः । **न पुनरिति**; तत् ब्रह्मैकं पश्यति यः स पुनर्मृत्यवे न भवति; न संसारं प्राप्नोतीत्यर्थः । **न पश्य इति**; **पश्यः**; ब्रह्मदर्शीत्यर्थः । **अनात्म्ये**; आत्म्यं शरीरम्; अशरीररूप इत्यर्थः । **अनिरुक्ते**; नामनिर्वचनशून्ये । **अनिलयने**; अनाधारे । **अभयम्**; अभयार्थम् । अथवा अभयमिति सप्तम्यर्थे द्वितीया । **प्रतिष्ठाम्**; "तमेवैकं जानथात्मानम्" इत्युक्तरीत्या तन्मात्रस्थितिम् ।

" अभयमेतदभयममृतमेतद्ब्रह्म " इत्युक्तरीत्या परं ब्रह्माप्नोतीत्यर्थः । **ब्रह्मैव भवतीति ;** ब्रह्मभावाच्छादकाविद्यानिवृत्तिर्भवतीत्यर्थः । **श्रुतय इति;** वदन्तीति पूर्वेणान्वयः । **प्रमादः ;** मोहः, अज्ञानमिति यावत् । सदा अप्रमादमिति छेदः । ननूक्तवाक्येषु ब्रह्मज्ञानस्य वा निर्विशेषब्रह्मज्ञानस्य वा अविद्यानिवृत्तिहेतुत्वप्रतीतावपि निर्विशेषेण ब्रह्मणा आत्मन एकत्वविज्ञानमविद्यानिवृत्तिहेतुरिति न प्रतीयत इत्याशङ्क्य सर्वशाखाप्रत्ययन्यायेनैषु वाक्येषु प्रतीयमानं ज्ञानमैक्यज्ञानतया पर्यवस्यतीत्याह— **सत्यं ज्ञानमित्यादिना ।** द्विविधं हि वेदान्तवाक्यम्—पदार्थनिष्ठं वाक्यार्थनिष्ठं च । पदार्थनिष्ठमपि द्विविधम्— तत्पदार्थशोधकं त्वंपदार्थशोधकं च । सत्यज्ञानादिवाक्यानि ब्रह्मणोऽनृतजडपरिच्छिन्नत्वरूपविशेषप्रतिषेधमुखेन तत्पदार्थभूतब्रह्मस्वरूपशोधकानि । " योऽयं विज्ञानमयः प्राणिषु हृद्यन्तर्ज्योतिः पुरुषः " इत्यादिवाक्यानि देहेन्द्रियान्तःकरणव्यावृत्तिमुखेन तद्धर्मकर्तृत्वादिनिषेधद्वारा त्वंपदार्थशोधकानि । त्वंपदार्थशोधकत्वं नामाभेदविरोधिसर्वज्ञत्वकिंचिज्ज्ञत्वादिधर्मव्युदासकत्वम् । शोधितयोश्चिन्मात्रयोरैक्यं बोध्यत इति तत्सिद्धान्तमर्यादा । तामनुसृत्याह—**इत्यादिशोधकवाक्यावसेयेति ।** आदिपदेन " योऽयं विज्ञानमयः " इत्यादीनि त्वंपदार्थशोधकानि वाक्यान्यभिप्रेतानि । शोधकवाक्यावसेयनिर्विशेषस्वरूपत्वं तत्त्वंपदार्थयोर्ब्रह्मात्मनोर्विशेषणम् । **अथेति ;** " अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम् " इति बृहदारण्यकवाक्यम् । तत्रैव " स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवति । आत्मेत्येवोपासीत । अत्र ह्येते सर्व एकं भवन्ति" इति प्रदेशान्तरस्थवाक्यात् देवतामन्यामुपास्ते अन्यत्वेनोपास्त इत्यर्थः । तदेव दर्शयति—**अन्योऽसावित्यादिना ।** यद्वा अन्यामुपाधिभेदभिन्नामग्नीन्द्रादिदेवतामन्योऽसावन्योऽहमस्मीति य उपास्ते, न स वेद । तस्माद्भिन्नदेवताविषयेऽप्यात्मत्वेनोपासनं कर्तव्यम् , किमुत ब्रह्मविषय इति भावः । **अकृत्स्न इति ;** अनात्मनां परस्परभिन्नत्वादनात्मोपासकस्य कृत्स्नोपासकत्वं नास्ति ; आत्मनि सर्वेषामन्तर्गतत्वादात्मोपासकस्य कृत्स्नोपासकत्वमस्तीति भावः । सद्विद्यावाक्यमुदाहरति—**तत्त्वमसीति ।** जाबालवाक्यमुदाहरति—**त्वं वाहमस्मीति ।** ऐतरेयवाक्यमुदाहरति—**तद्योऽहमिति ।** संसार्यात्मनीश्वरात्मन्यसंसारित्वं चिन्तनीयमिति वाक्यद्वयस्याप्यर्थः । द्विरूपयापि मत्या ऐकात्म्यं चिन्तनीयमिति यावत् । सूत्रकारसंमतिमाह—

**वक्ष्यति चेति** । परमेश्वरः स्वात्मेति प्रतिपत्तव्यः । तथैवाभ्युपगच्छन्ति शास्त्रज्ञाः । "एष त आत्मा" इत्यादिशास्त्राण्यपि जीवं प्रति परमेश्वरस्यात्मत्वं ग्राहयन्ति च ; अत आत्मत्वमस्तीत्यर्थः । **तन्निष्पत्तेरिति ;** सर्वस्य ब्रह्मोपादानकत्वादित्यर्थः । **मिथ्यारूपस्येति ;** हेतुगर्भं विशेषणम् । मिथ्यारूपत्वात् बन्धस्य निवृत्तिर्युक्तेत्यर्थः । निवृत्तिरभाव इत्यर्थः । **क्रियते ;** विषयीक्रियत इत्यर्थः । प्रत्यक्षविरुद्धं सकलप्रपञ्चनिषेधं कथं तदुपजीवि शास्त्रं बोधयेदिति पर्यवसितोऽर्थः । आशयमविद्वान् शङ्कते—**कथं वेति** । **सर्पनिवृत्तिः क्रियते ;** सर्पाभावो विषयीक्रियत इत्यर्थः । आशयमुद्घाटयति—**तत्रेति** । **द्वयोः प्रत्यक्षयोरिति ;** मूलमूलिभावापन्नयोरिति भावः । ननु कथं समानमेतदुच्यते, मूलमूलिभावतदभावरूपवैषम्यसद्भावादित्याशङ्क्याह—**एतदुक्तं भवतीति** । **तुल्यत्वेति;** मूलमूलिभावापन्नत्वं तुल्यत्वम् । **सापेक्षत्वनिरपेक्षत्वम् ;** मूलमूलिभावापन्नत्वम् । एतच्च दृष्टान्तार्थमुक्तम्—यथा बाध्यत्वबाधकत्वयोर्मूलमूलित्वे न प्रयोजके, तथा तुल्यत्वमपि न प्रयोजकमित्यर्थः । **अयोगादिति ;** अयोगप्रसङ्गादित्यर्थः । **तत्र हीति ;** 'सेयं दीपज्वाला' इति प्रत्यक्षस्य 'इयं ज्वाला पूर्वज्वालातो भिन्ना, भिन्नसामग्रीकत्वात्' इत्यनुमानेन बाधदर्शनादिति भावः । **संभाव्यमानेति ;** विषयमन्तरेणापि दोषवशात् संभवदुत्पत्तिकमिति शक्यशङ्कत्वं संभाव्यमानान्यथासिद्धिकत्वम् । अत्र 'सावकाशं च' इति शेषः, उत्तरत्र "अनन्यथासिद्धमनवकाशम्" इति भाषितत्वात् । **अनादीति ;** अनादिनिधनाविच्छिन्नसंप्रदायत्वादसंभाव्यमानदोषगन्धमित्यर्थः । तेन चासंभाव्यमानान्यथासिद्धित्वं दर्शितं भवति । **अनवकाशेत्यनेन** निर्विशेषब्रह्मप्रतिपादकशास्त्रस्य प्रत्यक्षादिवत् व्यावहारिकत्वादिविषयतया सावकाशत्वं नास्तीति दर्शितम् । निर्विशेषत्वादेव **नित्यशुद्धम् ;** अविद्यासंबन्धशून्यम् । **मुक्तम् ;** अविद्याकृतजन्मादिरहितम् । **बुद्धम् ;** भासमानम् । **स्वप्रकाशशब्दः** बुद्धशब्दोक्तभासमानत्वस्य पराधीनत्वव्युदासार्थः । **विकल्परूपेति ;** विविधतया कल्पित इति विकल्पः । अतो बन्धस्य सत्यता व्यावर्त्यते ।

**श्रीभाष्यम्**

**ननु—अनादिनिधनाविच्छिन्नसंप्रदायतया निर्दोषस्यापि शास्त्रस्य "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत । सत्यम् ; पूर्वापरापच्छेदे पूर्वशास्त्रवन्मोक्षशास्त्रस्य**

निरवकाशत्वात्तेन बाध्यत एव । वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः, निर्गुणत्वात्परस्य ब्रह्मणः । ननु च "यः सर्वज्ञः सर्ववित्" "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "सत्यकामः सत्यसंकल्पः" इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम्? निर्गुणवाक्यसामर्थ्यादिति ब्रूमः । एतदुक्तं भवति— "अस्थूलमनण्वह्रस्वमदीर्घम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "निर्गुणम्" "निरञ्जनम्" इत्यादिवाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति; इतराणि च सगुणम्; उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किंचिदपहीनम् ।

## श्रुतप्रकाशिका

यन्निर्दोषमुक्तं तत्रापि बाध्यबाधकभावनिमित्तभूतोऽर्थविरोधोऽस्ति; अतोऽवश्यमन्यतरस्य बाध्यत्वं स्यात्; तत्र यद् बाध्यत्वे प्रयोजकं दुष्टकारणजन्यत्वं तत्तु नास्ति; कथमत्र निर्वाह इत्याशयेन चोदयति—**नन्विति** । प्राबल्यदौर्बल्यहेतुर्नास्तीत्याह—**अनादीति** । अपिर्विरोधसूचकः । अर्थविरोधं दर्शयति—**भेदावलम्बिन इति** । **सत्य**मित्यर्धाङ्गीकारे । भेदावलम्बिनो बाध्यत्वमङ्गीकृतम्, दुष्टकारणजन्यत्वेऽनङ्गीकारः । अन्यथासिद्धत्वानन्यथासिद्धत्वयोरेव बाध्यबाधकभावे प्रयोजकत्वम् । पूर्वोक्तं दुष्टकारणजन्यत्वमपि हि अन्यथासिद्धत्वप्रकारविशेषः । अत्रापि मुखभेदेनान्यथासिद्धिमुपपादयति—**पूर्वापरेत्यादिना** । अपच्छेदन्यायात् बाध्यत्वं प्रत्यक्षस्यापि तुल्यम्; तत्र दोषमूलत्वं च बाध्यत्वेऽधिको हेतुः । अपच्छेदे पूर्वपरशास्त्रयोः पौर्वापर्यं प्रमित्युत्पत्तिक्रमात्, न पाठक्रमात् । "पञ्चर्त्विजः समन्वारब्धाः प्रसर्पन्ति; अध्वर्युं प्रस्तोतान्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः" इति विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तमुच्यते—"बहिष्पवमानं प्रसर्पतां यद्युद्गातापच्छिद्येत, अदक्षिणः

स यज्ञः संस्थाप्यस्तेन पुनर्यजेत ; तत्र तद्दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात् । अथ प्रतिहर्तापच्छिद्येत सर्ववेदसं दद्यात्" इति । तदिदं शास्त्रद्वयं विषयः । अत्रोद्गातृप्रतिहर्त्रोः प्रयोगभेदेनापच्छेदे स्वं स्वं प्रायश्चित्तशास्त्रं प्रवर्तते । एकस्मिन् प्रयोगे यौगपद्येनापच्छेदे सत्युद्गातुः प्रायश्चित्तं प्रवर्तते, तस्य वर्गप्रधानत्वात् प्रधानापच्छेदस्यैव समाधेयत्वात् ; विकल्पेनानुष्ठानं वा । एकस्मिन्नेव पौर्वापर्येणापच्छेदे पूर्वस्य प्रायश्चित्तशास्त्रस्य दौर्बल्यम्, परस्य प्राबल्यं च कर्ममीमांसायामुक्तम् "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति । अत्रासंजातविरोधित्वेन पूर्वमुदयात् पूर्वस्य प्राबल्यं परस्य, सत्प्रतिपक्षतयैवोदयाद्दौर्बल्यमिति पूर्वः पक्षः । राद्धान्तस्तु—पूर्वस्योत्पत्तिकाले विरोध्यभावात्तदबाधेनाप्युत्पत्तिः संभवति, उत्तरस्य तु स्वोत्पत्तिकाले विरोधिसद्भावात्तदबाधेनोत्पत्त्यनुपपत्त्या पूर्वं बाधित्वैवोत्पन्नमित्यनन्यथासिद्धत्वादुत्तरस्य प्राबल्यमिति । "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति" इति हि न्यायविदः । ननूत्तरशास्त्रमुदयेत चेत् पूर्वाबाधेनानुदयः स्यात् ; पूर्वशास्त्रमुत्तरोत्पत्तिप्रतिबन्धकं किं न स्यात् ? नैवम् ; निमित्तस्योत्पन्नत्वान्नैमित्तिकं शास्त्रमुदितमेवेति । तत्रोत्तरस्योद्यतः पूर्वाबाधेनोत्पत्त्यनुपपत्त्या पूर्वं बाधितमेव । किंच यथोदितदक्षिणाकत्वेन कर्मसमापनं हि शास्त्रेण पूर्वमेव स्वतः प्राप्तम् । तत्तु प्रायश्चित्तशास्त्रेणान्यथाकृतम् । एवं पूर्वसिद्धार्थान्यथाकरणप्रकरणत्वादत्रापि पूर्वमेव बाध्यमिति कर्मविचारे निश्चितम् । एवमुत्तरशास्त्रस्यैव मोक्षशास्त्रस्य निरवकाशत्वात् भेदावलम्बि शास्त्रं पूर्वशास्त्रवत् बाध्यत इत्यर्थः । परत्वं च पाठक्रमादर्थक्रमाच्च । त्रिवर्गफलत्वेन हि कर्मणि प्रथमप्रावण्यम् । निरूपकस्य तत्त्वपरस्य हि मुमुक्षा । तादृशपौर्वापर्यरहितेषु विरोधगर्भेषु वेदान्तवाक्येषु सगुणोपासनपरेषु कथं निर्वाह इत्यत्राह—**वेदान्तवाक्येष्वपीति** । अपिः समुच्चये । पूर्वोत्तरभागयोर्विरोधः परिहृतः, उत्तरभागे च विरोधः परिह्रियत इत्यर्थः । कथमत्रापच्छेदन्यायावतार इत्यत्राह—**निर्गुणत्वादिति** । परशब्देनार्वाचीनसगुणब्रह्मव्यावृत्तिः । अपच्छेदन्यायावतरणफलभूतनिर्गुणत्वबोधदर्शनादपच्छेदन्यायोऽवतीर्ण इति बोद्धव्यमित्यर्थः । "जक्षत्क्रीडन् रममाणः" इत्यादिफलश्रुतेस्तात्त्विकत्वातात्त्विकत्वनिरूपणानादरेण प्रथमं सगुणोपासने प्रावण्यम् । निरूपको हि निर्गुणपरब्रह्मवेदनाधिकारीति तत्र पौर्वापर्यमिति भावः । उपासनपरसगुणनिर्गुणवाक्ययोः फलद्वारा पौर्वापर्यमुक्तम् ; तत्तु स्वरूपपरसगुणनिर्गुणवाक्ययोर्नास्तीति कथं तत्र बाध्यबाधकभाव इति चोदयति—**ननु चेति** । विधिनिषेधरूपं

पौर्वापर्यं हृदि निधायाह—**निर्गुणेति**। कानि निर्गुणवाक्यानि? कथं तेषां सामर्थ्यमित्यत्राह—**एतदुक्तमिति**। अस्थूलेत्यादि वाक्यं गुणविशेषनिषेधपरम्। सत्यज्ञानादिवाक्ये व्यावृत्तिर्गर्भिता। निर्गुणमित्यादि वाक्यं गुणसामान्यनिषेधपरम्। आदिशब्देन यत्तदद्रेश्यमित्यादि गृह्यते। विरोधं स्फोरयति—**निरस्तेति**। **कूटस्थ**शब्दो निर्विकारत्ववाची, सर्वाधिष्ठानत्ववाची वा; कूटवत्तिष्ठतीति हि कूटस्थः। **नित्यचैतन्य**मित्यन्तैः पदैरुदाहृतनिर्गुणश्रुत्यर्थः संक्षिप्तः। **इतराणि**; "यः सर्वज्ञः" इत्यादीनि पूर्वोपात्तानि वाक्यानि। चः समुच्चये। सगुणनिर्गुणपरत्वादुभयविधवाक्यविरोधः। **तेनैव**; पूर्वोत्तरभागविरोधे य उत्तरस्य प्राबल्यहेतुरुक्तस्तेनैवेत्यर्थः। निर्गुणवाक्यानां बलीयस्त्वं कुत इत्यत्राह—**गुणापेक्षत्वेन परत्वादिति**। निषेध्यविषयो हि निषेध उदेति; न हि निर्विषयो निषेधः। प्रागेव प्रसक्तस्य विषयस्य प्रतिषेध्यत्वम्। अतो निषेध्यसापेक्षत्वेन निषेधस्य परत्वमित्यर्थः। सगुणवाक्यवैयर्थ्यमप्युपासनविषयत्वात् परिहृतमित्यभिप्रायेण **न किंचिदपहीनमि**त्युक्तम्। यद्वा "यः सर्वज्ञः" इत्यादिवाक्यानामप्युपासनशेषत्वाभिप्रायेणाह—**वेदान्तवाक्येष्वित्यादि**। **उपासनपराणामिति**; तान्यपि वाक्यानि फलविशेषार्थमुपासनपराणि, न तु तत्त्वपराणीति भावः। अपच्छेदन्यायावतारमुपपादयति—**निर्गुणत्वादिति**; पूर्ववदर्थः। निर्गुणत्वमसिद्धं पूर्वापरभावाभावेनापच्छेदनयानवकाशात् गुणानां बाध्यत्वासिद्धेः; अत एव सगुणवाक्यानां वैयर्थ्यपरिहारश्च न घटते, स्वरूपपरतयैव प्रतिपन्नानामुपासनपरत्वकल्पनं हि बाध्यत्वसिद्ध्यधीनमिति चोदयति—**ननु चेति**। परिहरति—**निर्गुणेति**। अन्यत्सर्वं पूर्ववदेव।

### भावप्रकाशिका

ननु भेदावलम्बिनो बाध्यत्वं प्रसज्येतेत्यापादनं न संभवति तस्येष्टापादनत्वादित्याशङ्क्य, तस्यापि बाध्यत्वे तत्प्रयोजकं दुष्टकारणजन्यत्वमपि स्यादित्यनिष्टापादनमाहेत्याह—**यन्निर्दोषमुक्तमिति**। **दुष्टकारणजन्यत्वेऽनङ्गीकार इति**; ननु—बाध्यत्वं वक्तव्यम्; दुष्टकारणजन्यत्वं च न संभवति; अतः कथं निर्वाह इति चोदिते सत्यमित्युक्तेर्बाध्यत्वमङ्गीक्रियत एव; दुष्टकारणजन्यत्वं नास्तीति यदुक्तं तदप्यङ्गीक्रियते; यदुक्तं 'कथं निर्वाहः' इति तन्नाङ्गीक्रियत इत्येव वक्तव्यम्; कथं दुष्टकारणजन्यत्वेऽनङ्गीकार इत्युक्तिरिति चेत्—न; 'कथं निर्वाहः' इत्यस्य दुष्टकारणजन्यत्वमपि स्यादित्यत्र

पर्यवसानमिति प्रागुपपादितत्वेनादोषात् । वस्तुतस्तु ज्योतिष्टोमादिवाक्ये भेदवासनारूपदोषस्य वा तात्पर्यभ्रमरूपपुरुषापराधदोषस्य वा सत्त्वेन दुष्टकारणजन्यत्वमस्तीत्यत्र तात्पर्यम्; दोषाभावेऽप्यप्रमोत्पत्तावप्रामाण्यस्य स्वतस्त्वप्रसङ्गादिति बोध्यम् । केचित्तु— भेदवासनाजन्यतया भेदप्रत्यक्षस्य बाध्यत्वे ज्योतिष्टोमादिवाक्यजन्यभेदज्ञानस्यापि भेदवासनारूपदोषजन्यतया बाध्यत्वं स्यात्; न चेष्टापत्तिः, अपौरुषेयत्वेन निर्दोषत्वस्य त्वयैव प्रतिपादितत्वादित्याशयेन शङ्कत इत्येवं "ननु च" इत्यादिभाष्यावतारिकामाहुः । अस्मिन् पक्षे 'भेदावलम्बिनः' इत्यादिभाष्यस्वारस्यमस्ति । ग्रन्थस्यानिर्धारितान्यतरबाध्यत्वपरत्वे तत्पीडयेतेत्यादि द्रष्टव्यम् । **प्रमित्युत्पत्तिक्रमादिति**; एतस्य प्रयोगशास्त्रतया प्रतिप्रयोगमावृत्त्यैव बोधकत्वात् प्रयोगभेदाश्रयप्रमितिनिबन्धनं पौर्वापर्यं सुवचमिति भावः । **एकस्मिन् प्रयोगे यौगपद्येनापच्छेदे सतीति**; यदोद्गातृप्रतिहर्त्रोर्युगपदपच्छेदो भवति तदा किं प्रायश्चित्तं कर्तव्यं न वेति संशयः । तत्रोभाभ्यां क्रियमाणोऽपच्छेदो नैकेन व्यपदेष्टुं शक्यते; तस्माद्यौगपद्ये निमित्तविघातात् प्रायश्चित्तं न कर्तव्यमिति पूर्वपक्षे प्राप्ते,

"स्यादेवं यदि सापेक्षं कर्तृत्वमुभयोर्भवेत् ।
एकैकस्य तु यत्नेन निरपेक्षेण जायते ॥
विच्छेदस्तेन कर्तृत्वं द्वयोः प्रत्येकमस्ति नः ।"

कालमात्रं परमेकम् । अतः प्रायश्चित्तं कर्तव्यमिति व्यवस्थापितं षष्ठे "विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते" इत्यत्रेति भावः । ननु "तत्र विप्रतिषेधात् विकल्पः स्यात्" इति विकल्पस्यैव सिद्धान्तितत्वाद्विरोध इत्यरुचेराह— **विकल्पेनानुष्ठानं वेति** । **पूर्वशास्त्रमुत्तरोत्पत्तिप्रतिबन्धकं किं न स्यादिति**; असंजातप्रतिपक्षतया प्रक्रमस्य प्राबल्यमित्युपक्रमाधिकरणन्यायादित्यर्थः । **निमित्तस्योत्पन्नत्वादिति**; निमित्ते हि सति तन्निमित्तमपि शास्त्रं दुर्वारप्रवृत्तिकमेव, तस्यैव तत्सामग्रीत्वात् । तत्र विरोधिनि जाते सति यदुत्तरं विरोध्यवश्यं जायते तत्पूर्वोपमर्दकतयैवोदेतीति स्वभावसिद्धम् । अतो वस्तुस्वभावादुत्तरं शास्त्रं पूर्वधीस्थोपमर्दनादेव स्वार्थधीकारणम् । पूर्वं तु जायमानं कस्यचिद्विरोधिनो न बाध्यतया नापि बाधकतया जायते; किंतु स्वरूपेणैव । तत्रैकस्मिन् प्रयोगे द्वयोः शास्त्रार्थयोरशक्तेर्यस्योपमर्दस्तस्य बाध्यत्वं, यस्योपमर्दकत्वं तस्य बाधकत्वमेव युक्तमिति भावः । पूर्वसिद्धार्थस्योत्तरशास्त्र-

णान्यथा करणं न संभवतीति श्रद्धालुं प्रति नैमित्तिकशास्त्रप्रतिबन्दीमाह—**किंच यथोदितेति**। **पूर्वसिद्धार्थान्यथाकरणप्रकरणत्वादिति**; प्रकरणं प्रक्रिया; प्रकार इति यावत्। नित्यपूर्वसिद्धनित्यप्रयोगान्यथाकारिपूर्वनैमित्तिकशास्त्रतुल्यशीलत्वादिति भावः। यदि तूत्तरशास्त्रं पूर्वशास्त्रं न बाधेत, नैमित्तिकशास्त्रमपि नित्यशास्त्रं न बाधेतेत्यर्थः। पाठक्रमस्य स्पष्टतयानुपपादनीयत्वादर्थक्रममुपपादयति—**त्रिवर्गफलत्वेनेति**। **तत्त्वपरस्य हि मुमुक्षेति**; निमित्तपौर्वापर्यान्नैमित्तिकशास्त्रपौर्वापर्यवदधिकारिपौर्वापर्यात् पौर्वापर्यमिति भावः। मुमुक्षानन्तरभाविविचारितवेदान्तवाक्यजन्यज्ञानस्यानादिप्रवृत्तकर्मकाण्डादिजन्यनिखिलभेदज्ञानोपमर्दरूपप्रयोजनाय प्रवृत्तत्वाद्वेदान्तवाक्यानामित्यत्र तात्पर्यम्। अतश्च मृषावादिमते कर्मविचारस्य प्राक् प्रवृत्तिनियमाभावात् तद्भेदोपमर्दो न स्यादिति दूषणमलग्नकं वेदितव्यम्। नन्वपच्छेदन्यायो नावतरतीति वदन्तं प्रति तत्फलस्य दर्शनादित्युक्तिरसङ्गता; न हि तत्फलभूतनिर्गुणत्वप्रदर्शनं परसंप्रतिपन्नमित्यत आह—**जक्षत् क्रीडन्नममाण इत्यादि**। **निरूपको हि निर्गुणपरब्रह्मवेदनाधिकारीति**;

"निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।
ये मन्दास्त्वनुकम्प्यन्ते सविशेषनिरूपणैः॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्॥"

इत्युक्तेरिति भावः। **यद्वा यः सर्वज्ञ इत्यादिवाक्यानामपीति**; अस्यां योजनायां "सगुणब्रह्मोपासनपराणाम्" "ब्रह्मस्वरूपप्रतिपादनपराणाम्" इति भाष्ये वैलक्षण्येन निर्देशस्यास्वारस्यम्। किंच "उपासनपराणाम्" इत्यस्य सर्वेषामुपासनपरत्वादित्यभिप्रायाश्रयणं च क्लिष्टमिति द्रष्टव्यम्।

## श्रुतप्रदीपिका

चोदयति—**नन्विति**। अनन्तरोक्तबाधकत्वप्रयोजकाभावमाह—**अनादीति**। अपिर्विरोधे। बाध्यबाधकताभ्युपगमनिमित्तं विरोधं दर्शयति—**ज्योतिष्टोमेनेति**। बाध्यत्वमङ्गीकुर्वन् दुष्टहेतुकत्वमनुपगच्छन् परिहरति—**सत्यामिति**। सावकाशत्वानवकाशत्वावान्तरविधारूपेण पौर्वापर्येण निर्वाहः। उद्गातृप्रतिहर्त्रपच्छेदयोर्नैमित्तिकत्वेनादक्षिणसंस्थापनसर्वस्वदक्षिणत्वे विहिते; एकप्रयोगे तयोर्विरोधः। तत्र यौगपद्ये विकल्पः।

पौर्वापर्ये तु पूर्वप्राबल्यमसंजातविरोधितयोदयात् परस्य सप्रतिपक्षतयैवोदयाच्चेति पूर्वपक्षितम् । विरोध्यसंनिधानात्तदबाधेन पूर्वस्योदयसंभवः ; उत्तरस्य तु संनिहितविरोध्यबाधेनोदयासंभवात् पूर्वं बाधित्वैवोदय इति प्राबल्यम् ; निमित्तोदयान्नैमित्तिकशास्त्रं चोदितमेवेति सिद्धान्तितम् । तदुक्तम्—"पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति" इति । पाठक्रमात् त्रिवर्गे संसारिणः प्रथमप्रावण्यरूपार्थक्रमाच्च पौर्वापर्यसिद्धिरिति तेन न्यायेन पूर्वबाध इत्यर्थः । तादृशपौर्वापर्याभावात् सगुणोपास्तिशास्त्रेषु नायं निर्वाह इत्यत्राह—**वेदान्तेति** । कुत इत्यत्राह—**निर्गुणत्वादिति** अपच्छेदन्यायफलरूपबाधदर्शनादित्यर्थः । सगुणोपासनस्य जक्षणादिसांसारिकफलश्रवणात् पूर्वत्वमभिप्रैति । विरोध्यसंनिधानात् तदबाधेन पूर्वस्योदयसंभवः ; उत्तरस्य तु संनिहितविरोध्यबाधेनोदयासत्त्वमिति भावः । स्वरूपपरसगुणवाक्येषु कथमिति चोदयति—**ननु चेति** । परिहरति—**निर्गुणेति** । कानि निर्गुणवाक्यानि ? कथं च तेषां सामर्थ्यमित्यत्राह—**एतदुक्तमिति** । **कूटस्थम्** ; निर्विकारम् । **इतराणि** ; "यः सर्वज्ञः" इत्यादीनि । **गुणापेक्षत्वेन** ; निषेधस्य प्रसञ्जकसापेक्षत्वादित्यर्थः । **न किंचिदपहीनम्**, उपासनार्थत्वात् सगुणवाक्यानां न वैयर्थ्यमिति भावः । यद्वा "यः सर्वज्ञः" इत्यादेरुपासनार्थत्वं विवक्षन्नाह—**वेदान्तेति** । पौर्वापर्याभावान्न गुणबाधः, तत एव नोपासनार्थत्वक्लृप्तिरिति चोदयति—**ननु चेति** । विधिनिषेधरूपपौर्वापर्यमभिप्रेत्य परिहरति—**निर्गुणेति** । सर्वमन्यत्पूर्ववत् ।

## तत्त्वटीका

भेदग्राहकप्रत्यक्षादीनामद्वैतश्रुतिविरोधाद्बाध्यत्वमुक्तम् ; तत्रातिप्रसक्त्या चोदयति—**नन्विति** । अपिः सदोषनिर्दोषसमुच्चयार्थः, विरोधार्थो वा । बाध्यत्वप्रयोजकभेदावलम्बित्वव्यक्त्यै **ज्योतिष्टोमाद्युक्तिः** । द्वैतीयभेदावलम्बिनी तृतीयादिदशाध्यायी । आदिशब्देन कर्मविध्यन्तरसंग्रहः । बाध्यत्वोक्त्या प्रमाणलक्षणविरोधोऽपि सूचितः ; तत्र धर्मप्रमाणस्य साकल्येनांशतोऽपि वा पादेन वा त्रिपाद्या वा ह्यप्रामाण्यमपाकृतम् । इष्टप्रसङ्गोऽयमित्याह—**सत्यमिति** । यद्वा—बाध्यत्वमस्ति ; तावता सदोषत्वमप्रामाण्यं च न स्यादित्यर्धाङ्गीकारः ; मिथ्यात्वेऽपि दृष्टिविधिनयात् साध्यसाधनभावे व्यावहारिकं प्रामाण्यमिति भावः । अङ्गीकृतं निर्दोषस्य बाध्यत्वांशं पौर्वापर्यरूपविशेषेऽपि स्वोक्तबाधप्रयोजकव्याप्तिं च श्रौतदृष्टान्तेन विवृणोति—**पूर्वेति** । **मोक्षशास्त्रस्य** ; बन्धरूपभेदनिवर्तकतत्त्वा-

वेदकवाक्यस्येत्यर्थः । " पञ्च ऋत्विजः समन्वारब्धाः सर्पन्ति । अध्वर्युं प्रस्तोतान्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः " इत्यस्मिन् प्रयोगे "यदि बहिष्पवमानं सर्पतां प्रस्तोतापच्छिद्येत" इत्यादिनापच्छेदप्रायश्चित्तविधौ "यदि प्रतिहर्ता पशुभिर्यजमानो व्यृध्येत सर्ववेदसं दद्यात्, यद्युद्गाता यज्ञेन यजमानो व्यृध्येतादक्षिणः स यज्ञः संस्थाप्यः " इत्युक्तम् । तदिदं नैमित्तिकद्वयमेकस्मिन्प्रयोगे विरुद्धम् । तत्र युगपदपच्छेदे उद्गातुः प्रायश्चित्तं प्रतिहर्तुः सर्वप्रायश्चित्तं वा कार्यम् । पूर्वापरापच्छेदे यो जघन्योऽपच्छिद्येत तस्य प्रायश्चित्तमेवेति व्यवस्थापितम् । तदुक्तम्—" पूर्वापरापच्छेदे पूर्वदौर्बल्यं प्रकृतिवत् " इति । अत्रैवं पूर्वपक्षः—उपक्रमनयेनासंजातविरोधितयोदितत्वात्पूर्वस्य प्राबल्यम् । परस्य तूदितविपक्षसंनिधावेव प्रवृत्तेर्दौर्बल्यमिति । सिद्धान्तस्तु—परस्मिन्ननुत्पन्ने तदसंनिधानात्परमबाधित्वा पूर्वस्योदयः । इतरस्य तु पूर्वोदितविरोध्यबाधेनोदयायोगान्निमित्तोदये नैमित्तिकशास्त्रोदयावश्यंभावाच्च परप्राबल्यम् । उपक्रमोपसंहारयोस्तु विरुद्धस्य परस्यानुदय एवेति । इह तु कर्मिणां मुक्तौ पूर्वप्रावण्येनार्थक्रमात् तदनुगुणपाठक्रमाच्चापच्छेदवत्पूर्ववृत्तकर्मशास्त्रोपमर्देन भोगनिवृत्तिरूपमुक्तिशास्त्रोदयः । ईदृशोदाहरणेष्वेव " पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति " इत्युच्यते । एवमुत्सर्गापवादाद्युदाहरणान्तरेष्वपि निर्दोषवाक्यसिद्धस्य निरवकाशेन बाधो निदर्शनीयः । ननु वेदान्तेष्वपि सगुणोपास्तिविधीनां भेदावलम्बित्वं सिद्धम् ; न च तेषां निर्गुणवाक्यापेक्षया पूर्वत्वनियमः ; अतस्तेषु नापच्छेदनीतिरित्यत्राह—**वेदान्तेति** । **सगुणब्रह्मो**क्तिर्दृष्टयादेरुपलक्षणार्था । **उपासनपराणामि**त्यनेन सिद्धे तात्पर्यं नास्तीति व्यज्यते । पौर्वापर्याभावेऽपि तत्फलभूतबाधस्य तात्पर्यलब्धत्वदर्शनात् **अयमेव न्याय** इत्युक्तम् । " संकल्पादेवास्य पितरः समुत्तिष्ठन्ति " " जक्षत्क्रीडन् " इत्यादिसांसारिकफलोक्त्या तादृशविद्यानां मोक्षशास्त्रापेक्षया कर्मशास्त्रवदार्थं पूर्वत्वं च सिद्धम् । यद्वा निर्दोषत्वेऽपि निरवकाशवाक्येन बाधः स्यादित्युक्त एव न्याय इत्यर्थः । गुणविधिरेवात्रालम्भविधिन्यायान्निरवकाश इत्यत्राह—**निर्गुणत्वादिति** । निर्विशेषस्वरूपपरतया निरवकाशैर्वाक्यैर्गुणबाधादिति भावः । विधिपदानन्वयेन सिद्धविषयाणां सगुणवाक्यानां पूर्वत्वान्यपर्ययोरयोगात् न बाध्यत्वं स्यादित्यभिप्रायेण चोदयति—**ननु चेति** । **कथमिति** प्रतिक्षेपवचनं प्रश्नवद्भावयन् पौर्वापर्यमभिसंधाय प्रतिवक्ति—**निर्गुणेति** । अनन्यपरसगुणवाक्यबाधसमर्थानि

कानि वाक्यानि ? तेषां च तद्भावे कीदृशं सामर्थ्यम् ? इत्यत्राह—**एतदुक्तमिति**। **कूटस्थम्** ; विश्वविकाराध्यासे तन्निवृत्तौ च स्वयं कूटवदविकृतम् ; कूटे अध्यसनीये स्वयं सत्यतया सर्वाधिष्ठानत्वेन स्थितम् । **इतराणि** ; उपात्तानि, 'यः सर्वज्ञः' इत्यादीनि तादृशान्यपि । चस्त्वर्थः, विरुद्धवर्गद्वयसमुच्चयपरो वा । **तेनैव** ; भुक्तिमुक्तिशास्त्रयोरिह प्रदर्शितेनैवेत्यर्थः । निषेध्यप्रसञ्जकापेक्षया निषेधकस्य परत्वमर्थसिद्धमित्यभिप्रायेण **गुणापेक्षत्वेने**त्युक्तम् । सगुणवाक्यानां निर्दोषत्वेऽप्यार्थेन पूर्वत्वेन बाध्यत्वमुपास्तिविधिशेषत्वक्लृप्त्या साफल्यात्कथंचित्प्रामाण्यं च स्यादित्यभिप्रायेणाह—**न किंचिदिति** ।

### मूलभावप्रकाशिका

**बाध्यत्वं प्रसज्येतेति** ; भेदवासनाख्यदोषजन्यत्वात् बाध्यत्वं प्रसज्येत । न चेष्टापत्तिः, अपौरुषेयत्वेन निर्दोषत्वस्य प्रतिपादितत्वादिति भावः । शास्त्रस्य निर्दोषत्वेऽपि पूर्वापच्छेदशास्त्रजन्यज्ञानस्येव तात्पर्यभ्रमरूपपुरुषापराधजन्यतया भेदवासनारूपदोषजन्यतया चाप्रमात्वं बाध्यत्वं चोपपद्यत इत्याह—**सत्यमित्यादिना** । **पूर्वापरापच्छेद इति** ; "अध्वर्युं प्रस्तोतान्वारभते, प्रस्तोतारं प्रति हर्ता, प्रतिहर्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः" इति विहितस्यान्वारम्भणस्य व्यवच्छेदे प्रायश्चित्तमुच्यते "बहिष्पवमानं प्रसर्पतां यद्युद्गातापच्छिद्येतादक्षिणः स यज्ञः संस्थाप्यः ; तेन पुनर्यजेत ; तत्र तद्दद्याद्यत्पूर्वस्मिन् दास्यन् स्यात् । अथ प्रतिहर्तापच्छिद्येत सर्ववेदसं दद्यात्" इति । तदिदं शास्त्रद्वयं विषयः । तत्रोद्गातृप्रतिहर्त्रोरेकस्मिन्नेव प्रयोगे पौर्वापर्येणापच्छेदे सति पूर्वस्य प्रायश्चित्तशास्त्रस्य दौर्बल्यं परस्य प्राबल्यं च कर्ममीमांसायामुक्तम्—"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति । तत्रासंजातविरोधित्वेन पूर्वमुदयात् उपक्रमाधिकरणन्यायेन पूर्वस्य प्राबल्यं परस्य तत्प्रतिपक्षतयैवोदयात् दौर्बल्यमिति पूर्वपक्षः । राद्धान्तस्तु पूर्वस्योत्पत्तिकाले विरोध्यभावात् तदबाधेनैवोदयः संभवति । उत्तरस्य तु स्वोत्पत्तिकाले विरोधिसद्भावात् तदबाधेनोत्पत्त्यनुपपत्त्या पूर्वं बाधित्वैवोत्पन्नमित्यनन्यथासिद्धत्वादुत्तरस्य प्राबल्यमिति ।

"पूर्वं परमजातत्वादबाधित्वैव जायते ।
पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति ॥"

इति । अतः पूर्वं बाधित्वैवोत्पद्यते । ननु यद्युत्पद्येत तदा बाधतां नाम ; उपक्रमाधिकरणन्यायादुत्तरस्यानुत्पत्तिरेवास्त्विति चेत्—न; सति निमित्ते तन्निमित्तशास्त्रस्यापि दुर्वारप्रवृत्तित्वात् , तस्यैव तत्सामग्रीत्वात् । **मोक्षशास्त्रस्येति** ; निर्विशेषब्रह्मप्रतिपादकवेदान्तशास्त्रस्येत्यर्थः । **निरवकाशत्वादिति** ; पूर्वाबाधेनोत्पत्तुमवकाशाभावादित्यर्थः । निर्गुणशास्त्रस्यापच्छेदन्यायेन बलवत्त्वादुपासनाविषयतया सगुणशास्त्रस्य सावकाशत्वाच्च सगुणशास्त्रस्य बाध्यत्वमिति भावः । ननु मा नाम भूदुपासनपरसगुणवाक्यसामर्थ्यात् सगुणत्वम् ; स्वरूपोपदेशसगुणवाक्यैः सगुणत्वं स्यादिति शङ्कते—**नन्विति** । स्वरूपोपदेशपरत्वाविशेषे किं नाम निर्गुणवाक्यानां सामर्थ्यमित्यत्राह—**एतदुक्तमिति** ।

श्रीभाष्यम्

ननु च "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते; नेत्युच्यते, सामानाधिकरण्येनैकार्थत्वप्रतीतेः । अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत्—अनभिधानज्ञो हि देवानांप्रियः ; एकार्थत्वं नाम सर्वपदानामर्थैक्यम् । विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः । ततश्चैकार्थत्वं न सिध्यति । एवं तर्हि सर्वपदानां पर्यायता स्यात् , अविशिष्टार्थाभिधायित्वात् । एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाः शृणु—एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वेनसर्वपदानामर्थवत्त्वमेकार्थत्वम्; अपर्यायता च । एतदुक्तं भवति; लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम् । तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते; तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तपरम् । ज्ञानपदं चान्याधीनप्रकाशाज्जडरूपाद्वस्तुनो व्यावृत्तपरम् । अनन्तपदं च देशतः कालतो वस्तुतश्च परिच्छिन्नाद्व्यावृत्तपरम् । न च

व्यावृत्तिर्भावरूपोऽभावरूपो वा धर्मः; अपि तु सकलेतरविरोधि ब्रह्मैव; यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिस्तत्तत्पदार्थस्वरूपमेव, न धर्मान्तरम्। एवमेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयमिति। तस्मादेकमेव ब्रह्म स्वयं ज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति। एवं वाक्यार्थप्रतिपादने सत्येव "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादिभिरैकार्थ्यम्। "यतो वा इमानि भूतानि जायन्ते" "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते—"सत्यं ज्ञानमनन्तं ब्रह्म" इति। तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम्। जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम्। अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते; अन्यथा "निरञ्जनम्, निर्गुणम्" इत्यादिभिर्विरोधश्च। अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति।

### श्रुतप्रकाशिका

निर्गुणवाक्यैः सहोपात्तस्य सत्यज्ञानादिवाक्यस्य सगुणपरत्वबुद्ध्या चोदयति—**ननु चेति**। चः चोद्यसमुच्चये। **सत्यज्ञानादयो गुणाः प्रतीयन्ते** इत्यत्र सत्यज्ञान शब्दौ सत्यत्वज्ञानत्वपरौ; यथा "द्व्येकयोर्द्विवचनैकवचने" इति पाणिनिसूत्रस्थद्व्येक शब्दौ द्वित्वैकत्वपरौ; अन्यथा द्व्येकेष्विति हि वक्तव्यम्। तथा श्रीवत्साङ्कमिश्राः— "गुणाः सत्यज्ञानप्रभृतय उत" इति। एतद्वाक्यवैशद्याय प्रथमं सामानाधिकर निरूप्यते। तद्धि विशदतरमुपन्यस्तं प्रमेयमालायामाचार्यपादैः। तथा हि भगव पतञ्जलिना "लटः शतृशानचावप्रथमासमानाधिकरणे" "तत्पुरुषः समानाधिकर

कर्मधारयः" इत्यादिसूत्रस्थसमानाधिकरणशब्दविवरणार्थं सामानाधिकरण्यलक्षणमुक्तम्—"भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति। अस्यायमर्थः—प्रवृत्तेर्निमित्तं प्रवृत्तिनिमित्तम्; प्रकृष्टा वृत्तिः प्रवृत्तिः; शब्दस्यार्थे वृत्तिर्नाम तद्बोधनम्। तत्र विशेष्यभूतप्रधानार्थविषया वृत्तिः प्रवृत्तिः। विशेष्यप्राधान्यं च "गुणानां प्रतिपत्तिर्हि गुणिप्रतिपत्त्यर्था" इत्यनेन सिद्धम्। तस्याः प्रवृत्तेर्निमित्तं द्वारम्, "निमित्तमात्रं भव सव्यसाचिन्" इत्यादिप्रयोगात्। तच्च विशेषणीभूतं जातिगुणादिकम्। समानमेकमधिकरणं विशेषणानामाधारभूतं विशेष्यम्। 'एकस्मिन्नर्थे वृत्तिः' इत्येकशब्देन समानशब्दस्य सदृशार्थपरत्वं व्युदस्तम्। समानशब्दसामर्थ्यादेकशब्दः साधारणपरः। समानशब्दो हि साधारणे प्रयुज्यते—"समानकर्तृकयोः पूर्वकाले" इति। अर्थशब्दश्च विशेष्यभूतप्रधानाभिधेयपरः। अनेनाधिकरणशब्दो विशेष्यपरत्वेन व्याख्यातः। एतदुक्तं भवति—त्रिविधाः शब्दाः; केचिद्विशेषणतो विशेष्यतश्चैकार्थाः, यथा—'घटः कुम्भः' 'नीलं कृष्णम्' इत्यादयः। केचिच्चोभयतश्च भिन्नार्थाः, यथा—'गौः, अश्वः, महिषः; 'नीलं, शुक्लं, पीतम्' इत्यादयः। केचिच्च विशेषणतो भिन्नार्था विशेष्यतश्चैकार्थाः; यथा—'नीलमुत्पलम्' 'देवदत्तः श्यामो युवा लोहिताक्षः' इत्यादयः। तत्र पूर्वकोटिद्वयव्यावृत्ततृतीयकोटिनिविष्टानां शब्दानां सामानाधिकरण्यम्। तत्र 'भिन्नप्रवृत्तिनिमित्तानाम्' इत्यनेन विशेषणतो विशेष्यतश्चैकार्थानां 'घटः कुम्भः' इत्यादीनां न सामानाधिकरण्यमित्युक्तम्। 'एकस्मिन्नर्थे वृत्तिः' इत्यनेनोभयतो भिन्नार्थानां 'गौरश्वो महिषः' इत्यादीनां न सामानाधिकरण्यमित्युक्तम्। तस्माद्विशेषणतो भिन्नार्थानां विशेष्यतश्चैकार्थानां 'नीलमुत्पलम्' इत्यादीनामेव सामानाधिकरण्यमिति। तत्र प्रवृत्तिनिमित्तशब्दयोरेवं वार्थः—प्रवृत्तिरभिधानम्, निमित्तमभिधेयम्। अर्थशब्दश्चाभिधेयवचनः। भिन्नाभिधेयानां शब्दानामेकस्मिन्नभिधेये वृत्तिः सामानाधिकरण्यमिति भिन्नविशेषणाभिधायिनां शब्दानामेकस्मिन् विशेष्ये वृत्तिः पर्यवसानं सामानाधिकरण्यमित्युक्तं भवति। भिन्नपदसामर्थ्येन निमित्तशब्दनिर्दिष्टं विशेषणभूतमभिधेयम्, एकशब्दसामर्थ्येन चार्थशब्दनिर्दिष्टं विशेष्यभूतमभिधेयमित्यवगम्यते। अत उभयथाप्यनेकविशेषणाभिधायिनां शब्दानामेकस्मिन् विशेष्ये पर्यवसानं सामानाधिकरण्यमिति "भिन्नप्रवृत्तिनिमित्तानाम्" इत्यादिना सामानाधिकरण्यलक्षणवाक्येनोक्तं भवति। उक्तादर्थादपि

पूर्वोक्तार्थः साधीयान् । समानाधिकरणपदेषु प्रातिपदिकं विशेषणान्वयिपरम् । तत्स्थ समानविभक्तिर्विशेष्यैक्यपरा । समानविभक्त्यैक्यबोधनं वृत्तिशब्देन विवक्षितम् । तेन "राजा तस्य पुत्रश्च दर्शनीयौ" इत्यत्र राजतच्छब्दयोः सामानाधिकरण्यव्यावृत्तिः ; तत्र हि प्रकृतपरामर्शितच्छब्दप्रातिपदिकादैक्यावगमः, न तु समानविभक्त्या । ननु 'नीलान्युत्पलानि' इत्यत्र सामानाधिकरण्यं न स्यात्, विशेष्यबहुत्वादेकार्थवृत्तित्वानुपपत्तेः; नैवम् ; एकस्मिन्निति पदस्य समभिव्याहृतपदान्तरोपस्थापिताकारानधिकरणत्वव्यावृत्त्यर्थत्वात् ; तत्तत्पदोपस्थापितानेकविशेषणापेक्षया साधारणत्वं ह्येकशब्दार्थः । न हि 'नीलान्युत्पलानि' इत्यत्र नीलत्वानधिकरणेषूत्पलत्वं वर्तते । अतस्तत्र सामानाधिकरण्यमुपपन्नम् । अतः सामानाधिकरण्यलक्षणग्रन्थस्य यथोक्त एवार्थ इति । अत्र मृषावादिन आहुः—सामानाधिकरण्यवाक्यमखण्डार्थम् ; तथा हि—सामानाधिकरण्यस्य तावदेकार्थपरत्वमविगीतम् । तत्र समानाधिकरणपदानि किं विशेषणमात्रपराणि, उत तत्तद्विशेषणविशिष्टपराणि, उत स्वरूपमात्रपराणीति विवेचनीयम् । न तावद्विशेषणमात्रपराणि, विशेषणानामनेकत्वादेकार्थत्वासिद्धेः । नापि विशिष्टपराणि ; विकल्पासहत्वात् ; किं क्रमेण युगपद्वा विशिष्टार्थप्रतिपादनं पदानाम् ? न तावत् क्रमेण ; तत्र किं प्रथमपदप्रतिपन्नस्य विशिष्टस्य पदान्तरं स्वोपस्थापितविशिष्टेन तादात्म्यं विदधाति, उत विशेषणान्तरान्वयम् ? प्रथमे विशिष्टैक्ये विधीयमाने विशेष्यांशयोरिव विशेषणांशभूतयोर्जातिगुणयोरप्यैक्यं प्रसजेत् । द्वितीये च विशेषणानामन्योन्यसमवायप्रसङ्गः; प्रथममेकेन विशेषणेन विशिष्टतयावगतस्य वस्तुनः पश्चाद्विशेषणान्तरविशिष्टतया बोधनं हि विशेषणान्तरान्वयप्रतिपादनम् ; तत्र विशिष्टं प्रति विशेषणतयान्वीयमानं पूर्वविशेषणस्यापि विशेषणं भवतीति विशेषणानामन्योन्यविशेषणविशेष्यभावप्रसङ्गो हि दुर्वारः । अवर्जनीयं च पदानां क्रमेणार्थप्रतिपादनम् । कुतः ? उद्देश्योपादेयविभागवत्त्वात्सर्ववाक्यानाम् । नापि युगपत् ; उद्देश्योपादेयविभागहानिप्रसङ्गेन युगपत्प्रतिपादनासंभवात्, संभवेऽपि विशेषणानां परस्परैक्यप्रसङ्गाच्च । तथा हि—प्रातिपदिकानां विशिष्टार्थपरत्वे प्रातिपदिकार्थैक्यपरस्य समानविभक्तिनिर्देशस्य विशिष्टैक्यपरत्वमवश्याश्रयणीयमिति विशेष्यैक्यवद्विशेषणानामप्यैक्यं प्रतिपाद्यं स्यात् । तदनुपपत्त्या विशेष्यस्यापि नैक्यं प्रतिपादयितुमलं समानविभक्तिनिर्देशः । किंच विशिष्टपरत्वे विशेषणविशेष्याभ्यामनेकार्थत्वं विशेषणबहुत्वाच्चानेकार्थत्वम् । ततश्च

सामानाधिकरण्यं न सिध्यति। किंच विशेषणानां व्यावर्तकत्वस्वाभाव्याद्विशेषणभेदेन विशेष्यभेदप्रसङ्गो दुर्वारः। तथाहि—भेदकं विशेषणं भेद्यं विशेष्यमिति हि विशेषण-विशेष्ययोः स्वरूपविवेकः। दृश्यते च विशेषणानां विशेष्यभेदकत्वम्; यथा 'खण्डः मुण्डः' 'घटः, पटः' इत्यादिषु। ननु 'नीलमुत्पलम्' 'देवदत्तः श्यामो युवा' इत्यादिषु विशेषणभेदेऽपि विशेष्यैक्यं दृश्यते। नैष दोषः, अत्र हि स्वतः प्राप्तं विशेषणानां विशेष्यभेदकत्वं प्रत्यक्षविरोधेनापोद्यते। प्रत्यक्षागोचरे तु ब्रह्मणि विशेषणभेदप्रयुक्तो विशेष्यभेदः केन वार्यते? तस्माद्वस्तुमात्रपरमेव सामानाधिकरण्यम्। 'नीलमुत्पलम्' इत्यादिवाक्य इव सत्यादिवाक्येऽप्येकवचनान्तधर्मिवाचिपदैक्येन विशिष्यैक्यसिद्धिरिति चेत्—न; 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्यत्र विशेष्यभेदात्। ननु विशेषणभेदो न विशेष्यैक्यविरोधी; प्रत्यक्षमेव तु तद्विरोधि; प्रत्यक्षागोचरे ब्रह्मण्येकवचनान्तधर्मिवाचि-पदैक्येन स्वतः प्राप्तमेकत्वं दुर्निवारमिति चेत्—न; 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इति परोक्षविषयवाक्येऽपि विशेष्यभेदप्रतीतेः। अतो न धर्मिवाचिपदैक्यं परोक्षे ब्रह्मण्यैक्यप्रतिपादनक्षमम्। तस्माद्विशेषणभेदप्रयुक्तो विशेष्यभेदो दुर्वारः। ततश्चैकार्थत्वं न सिध्यति। अतः पारिशेष्यात् समानाधिकरणपदानां स्वरूपमात्रप्रतिपादनपरत्वमा-स्थेयम्। एवं तर्हि पदानां पर्यायत्वम्, एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोग-वैयर्थ्यं, प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्च प्रसजेत्। नैवम्; एक-स्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकपरत्वेन पदानामर्थवत्त्वम्, अपर्यायत्वं, निमित्तभेद-लाभात् सामानाधिकरण्यलक्षणसिद्धिश्च। अत एव जगत्कारणत्वशङ्कितानृतत्वजडत्व-परिच्छिन्नत्वदोषव्यावृत्तिः सत्यज्ञानादिवाक्येन क्रियते। न च व्यावृत्तिरूपधर्मवत्वं ब्रह्मणः प्रसजति, ब्रह्मस्वरूपस्यैव सकलेतरव्यावृत्तिरूपत्वात्; यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्ति-स्तत्तत्पदार्थस्वरूपमेव, न धर्मान्तरम्; धर्मान्तरानुपलम्भात्, तदभ्युपगमेऽनवस्थानाच्च। अतः कार्ष्ण्यव्यावृत्तं रक्तिमव्यावृत्तं शौक्ल्यमिति पदानां शौक्ल्यस्वरूपमात्रविषयाणां व्यावर्त्य-भेदेन यथा न पर्यायत्वमर्थवत्त्वमेकार्थत्वं च, अत एव सामानाधिकरण्यलक्षणवत्त्वं च, तथा सत्यादिपदानामपि व्यावर्त्यभेदेन न पर्यायत्वादिदोषप्रसक्तिः*। नन्वेवं तत्तत्पदार्थ-

---

* **तथा च न्याय मकरन्दे आनन्दबोधाचार्याः—**
**"लक्ष्यार्थ भेदाभावेऽपि व्यवच्छेद्यविभेदतः।**
**विज्ञानानन्दपदयोः पर्यायव्यर्थते कुतः॥" इति।**

विरोधिव्यावृत्तपरत्वे लक्षणा स्यात्—नैवम्; अवाच्योपस्थापने हि लक्षणा, यथा "गङ्गायां घोषः प्रतिवसति" इत्यत्र गङ्गापदस्य कूलोपस्थापने; न हि कूलं गङ्गापदवाच्यम्; अत्र तु सत्यादिपदानां वाच्यैकदेशभूतविशेषणपरित्यागेऽपि वाच्ये प्रधानांशभूतविशेष्यस्वरूपप्रतिपादनान्न लक्षणाप्रसङ्गः। तथापि विशिष्टवाचिनः शब्दस्य विशेष्यमात्रपरत्वे स्वारस्यभङ्ग इति चेत्—नैष दोषः; समानाधिकरणवाक्येष्वेकार्थपरत्वबलात् विशेषणपरित्यागेन स्वरूपमात्रपरत्वमेव पदानां स्वारसिकं, तथा व्युत्पत्तेः। व्यधिकरणवाक्येषु तु पदानां विशिष्टपरता स्वारसिकी। लक्षणाभ्युपगमेऽपि न दोषः, वाक्यतात्पर्यानुगुणा हि लक्षणा तद्विरोधिमुख्यवृत्तेर्बलीयसी दृष्टा; यथा—गङ्गापदे। समानाधिकरणवाक्यस्य हि ऐक्य एव तात्पर्यमिति सर्वसंमतम्। ननु सर्वपदानां लक्षणा न दृष्टा, अयुक्ता च; केनचिन्मुख्यवृत्तेन तात्पर्ये निश्चिते हि पदान्तरलक्षणा युक्ता; सर्वपदलक्षणाङ्गीकारे किं तात्पर्यनिश्चायकम्? उच्यते—दृष्टा तावत् 'विषं भुङ्क्ष्व' इत्यादिषु सर्वपदलक्षणा; तत्र विषपदं निषिद्धभोज्यं लक्षयति; भुङ्क्ष्वेति भोजननिवृत्तिम्। तत्र योग्यतादिवशाद्वाक्यतात्पर्यनिश्चयः। सत्यादिवाक्येषु समानविभक्तिबलादैक्यतात्पर्यनिश्चयः, तदविरोधाय प्रातिपदिकानां लक्षणा स्वीकृता। एकपदलक्षणायामपि वाक्यतात्पर्यविरोध एव हेतुः, यथा "गङ्गायां घोषः" इत्यादिषु। तदविरोधे एकस्यापि न दृष्टा; यथा 'गङ्गायां मत्स्याः प्रतिवसन्ति' इत्यादिषु। अतो वाक्यतात्पर्याविरोधायैकस्येव सर्वपदानां लक्षणा न दोषः। तस्मात्समानाधिकरणवाक्यं वस्तुमात्रपरमेवेति। एतदभिप्रायेण प्रत्यवतिष्ठते—**नेत्युच्यत इति**। 'सत्यज्ञानादयो गुणाः प्रतीयन्ते' इति परिचोदिते 'नेत्युच्यते' इति वदतोऽयं भावः—'प्रतीयन्ते' इत्यापाततः प्रतीतिमात्रविवक्षा चेत्तया न किंचित्प्रयोजनम्। प्रमितिविवक्षा चेत्, न तु प्रमितिर्जायतेत्युपपाद्यत इति। कुत इत्यत्राह—**सामानाधिकरण्येनैकार्थत्वप्रतीतेरिति** शङ्कते—**अनेकेति**। यथा व्यधिकरणवाक्येषु भिन्नार्थपर्यवसायिकारकपदार्थापरित्यागेऽपि प्रधानार्थस्य कार्यस्यैकत्वम् "अर्थैकत्वादेकं वाक्यम्" इत्यत्र निश्चीयते, तथा समानाधिकरणवाक्येष्वपि विशेषणभूतगुणवाचिशब्दार्थापरित्यागेऽपि विशेष्यैक्यं सिध्यतीत्यर्थः। चोदयन्तमुपालभते—**अनभिधानज्ञ इति**। व्यधिकरणसमानाधिकरणवाक्ययोरभिधानविशेषानभिज्ञ इत्यर्थः। देवानांप्रियो मेषः; अज्ञ इत्यर्थः। परिहरति—**एकार्थत्वमिति**

एकार्थत्वं नाम सर्वपदानामेकाभिधेयपर्यवसानं, न तु वाक्यस्येत्यर्थः। पृथक्पृथगर्थपर्यवसायिनां पदानामेकप्रधानार्थान्वयादर्थैकत्वं व्यधिकरणवाक्य एव। समानाधिकरणवाक्ये तु पदानामेवैकार्थपर्यवसायित्वमित्युक्तं भवति। ततः किमित्यपेक्षायां समानाधिकरणपदानां विशेषणमात्रपरत्वे विशिष्टपरत्वे च दूषणमेकग्रन्थेनाह—**विशिष्टेति**। **विशिष्ट**त्यादिना कृत्स्नवाक्येन विशिष्टपक्षे दूषणमुक्तम्। **विशेषणभेदेन**; विशेषणानामन्योन्यतो विशेष्याच्च भेदेन। विशेषणैर्विशेष्येण चानेकार्थत्वं स्यादित्यर्थः। किंच अर्थशब्दो विशेष्यपरतया विवक्षितः; तेन विशेषणभेदे विशेष्यभेदः स्यादिति दूषणान्तरमुक्तं भवति। किंच विशेषणभेदेन विशेष्यभेद इत्युक्ते व्यतिरेकवशाद्विशेष्याभेदे विशेषणाभेदश्च स्यादित्युक्तं भवति। विशिष्टैक्यप्रतिपादिका समानविभक्तिर्हि अविशेषेण विशेष्यैक्यवद्विशेषणैक्यमपि प्रतिपादयतीत्यभिप्रायः। एवं विशिष्टपरत्वे युगपदभिधानपक्षे दूषणमुक्तं भवति। उद्देश्योपादेयविभागहानिप्रसङ्गश्चार्थसिद्धः। क्रमेणाभिधानेऽन्योन्यसमवाय आनन्दमयाधिकरणे वक्ष्यते। विशेषणभेदेनार्थभेद इत्येतावतांशेन विशेषणमात्रपरत्वे च दूषणमुक्तं भवति। विशेषणानामनेकत्वादेकार्थत्वहानिरित्यर्थः। एवं पदानां प्रतिपाद्यभेदः प्रसञ्जितः; ततः किमित्यत्राह—**ततश्चैकार्थत्वं न सिध्यतीति**। सामानाधिकरण्यलक्षणासिद्धिरित्यर्थः। अतो वस्तुमात्रपरमिति परिशेषसिद्धम्। तदनुवादेन चोदयति—**एवमिति**। **एवं तर्हि**; वस्तुमात्रपरत्वे। कुत इत्यत्राह—**अविशिष्टार्थाभिधायित्वादिति**। अनेन 'ततश्चैकार्थत्वं न सिध्यति' इत्यत्र फलितोऽर्थो विवृतः। अत्र पर्यायत्वचोद्ये प्रवृत्तिनिमित्तभेदाभावात् सामानाधिकरण्यलक्षणहानिः, एकतरपदवैयर्थ्यं चेति चोद्यद्वयमभिप्रेतम्; परिहरिष्यमाणत्वात्। उक्तं चोद्यं परिहर्तुमाह--**एकार्थेति**। **अवहितमनाः शृणु**; प्रतिवचनस्यानेकवाक्यसाध्यत्वान्मध्ये न चोदनीयम्; किं त्वर्थस्य गहनत्वादवधातव्यमिति भावः। अनुपपत्तित्रयं परिहरति—**एकत्वेत्यादिना**। एकत्वतात्पर्यनिश्चयः समानविभक्त्या। **अर्थवत्त्वम्**; प्रयोजनवत्त्वम्। व्यावर्त्यभेदकृतव्यावृत्तिभेदादपर्यायत्वम्। व्यावृत्तिरूपप्रवृत्तिनिमित्तलाभात् सामानाधिकरण्यसिद्धिः। व्यावर्त्यबहुत्वात् पदानां तत्तद्व्यावृत्तिरूपप्रयोजनवत्त्वं चेत्यर्थः। ननु "तत्त्वमसि" इत्यादिवाक्यवदन्वयमुखेनोपलक्षणं स्यात्; किमर्था व्यावृत्तिः? व्यावृत्तिबहुत्वादनेकार्थत्वमापतितम्; व्यावर्त्याकारानन्त्यात् कतिपयपदैर्न तद्व्यावृत्तिः शक्यते कर्तुम्; ब्रह्मणो

येभ्यो व्यावृत्तिः कानि च तानि वस्तूनि? ब्रह्मणोऽनेकव्यावृत्तिमत्त्वात् सधर्मत्वम्; व्यावृत्तीनां धर्मत्वानभ्युपगमे पदानां पर्यायत्वमित्याद्यनेकशङ्कापरिहारार्थमाह—**एतदुक्तं भवतीति । लक्षणतः**; स्वरूपलक्षणतः, न तु तटस्थलक्षणतः । अनेन जगत्कारणत्वशङ्कितदोषव्यावृत्तये ब्रह्मणः सकलेतरविरोधित्वं प्रतिपादयदिदं शोधकवाक्यं व्यावृत्तिपरं भवितुं युक्तमित्युक्तं भवति । बहुव्यावृत्तिभिरनेकार्थत्वप्रसङ्गं परिहरति—**तद्विरोधिरूपमिति । फलतो व्युदस्यत इति**; इदं वाक्यं स्वरूपमात्रपरमेव; अत ऐकार्थ्यम्; व्युदासस्तु फलित इति भावः । व्यावर्त्याकारबहुत्वात् कतिपयपदैर्व्यावृत्तिरशक्येत्येतत्परिहरति—**सर्वमनेन पदत्रयेण फलतो व्युदस्यत इति** । प्रयोजकरूपेण व्युदासे सर्वमपि व्युदस्तं भवतीत्यर्थः । विरोधीनि कानीत्यत्राह—**तत्रेति** । जगत्कारणत्वेन तुच्छता व्यावृत्ता; किमर्थमसत्याद्व्यावृत्तिरित्यत्रोक्तम्—**विकारास्पदत्वेनासत्यादिति** । स्तब्धशीतादिसाधारणजडशब्दविवरणार्थम**न्याधीनप्रकाश**शब्दः । यद्यपि सत्यादिष्वेकैकपदेन समस्तव्यावृत्तिसिद्धिः, तथापि ब्रह्मणि शङ्कितस्वेतरपदार्थगतविरोध्याकारस्यैकपदेनानिवर्तनात् पदत्रयसाफल्यम् । व्यावृत्तिभिः सधर्मत्वं परिहरति—**न चेति** । प्राभाकरपक्षे सिद्धान्तिमते च भावरूपधर्मः, वैशेषिकादिमते त्वभावरूपधर्मः; तस्मात् **भावरूपोऽभावरूपो** वेत्युक्तम् । व्यावृत्तिर्धर्मो न चेत् किं स्यादित्यत्राह—**अपि त्विति** । शुक्त्यादौ हि धर्मस्य व्यावृत्तित्वं रजतादिविरोधित्वादभ्युपगम्यते, एवं ब्रह्म च सकलेतरविरोधित्वात् स्वयमेव व्यावृत्तिरित्यर्थः । स्वरूपस्यैव व्यावृत्तित्वे दृष्टान्तमाह—**यथेति** । शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिर्न धर्मान्तरम्, अनुपलम्भात्; धर्मान्तरत्वेऽनवस्थानाच्चेत्यभिप्रायः । तर्हि पदानां पर्यायत्वं स्यादित्याशङ्क्य कार्ष्ण्यव्यावृत्तं पीतिमव्यावृत्तं रक्तिमव्यावृत्तं शौक्ल्यमिति दृष्टान्तवाक्याभिप्रायेण परिहरति—**एकस्येति** । व्युदसनीयव्युदासभेदेन पदानां प्रयोजनवत्त्वं, तत एवापर्यायत्वमित्यर्थः । प्रतियोग्यवच्छिन्नवेषेण प्रवृत्तिनिमित्तलाभात्सामानाधिकरण्यलक्षणसिद्धिश्चेत्यभिप्रेतम् । पर्यायत्वादिप्रसङ्गपरिहार ऐकार्थ्याविरोधेन कृत इत्यभिप्रायेणोक्तम्—**एकार्थमिति** । स्वरूपमात्रपरत्वादैकार्थ्यं हि रक्षितम् । **अर्थवत्तरमिति**; तरप्प्रत्ययेन दृष्टान्ताच्छौक्ल्यात् भेदवाद्यभिमतसगुणपरत्वाच्च प्रयोजनाधिक्यमभिप्रेतम् । अपरोक्षभूतो हि शौक्ल्यादिदृष्टान्तः; तत्र स्पाष्ट्यार्थं कार्ष्ण्यव्यावृत्तमित्यादिपदप्रयोगः; प्रत्यक्षागोचरे तु परे ब्रह्मणि

सकलेतरव्यावृत्तिवचनमधिकप्रयोजनमिति दृष्टान्तात् प्रयोजनाधिक्यम्; जगत्कारणभूतस्य ब्रह्मणः शङ्कितदोषव्यावृत्तिरेवापेक्षिता, न तु गुणान्तरमिति भेदवादिपक्षात्प्रयोजनाधिक्यम्। एवं सत्यज्ञानादिवाक्यस्यानुग्राहकस्तर्क उक्तः; तर्कानुगृहीतेन वाक्येन कोऽर्थः प्रतिपन्न इत्यत्राह—**तस्मादिति**। **तस्मात्**; उक्तन्यायानुगृहीतत्वादस्य वाक्यस्येत्यर्थः। **एकमिति**; समानविभक्तिनिर्देशफलितमैक्यमुक्तम्। एवकारेण स्वरूपत ऐक्यं गुणतो भेद इत्यंशतोऽनेकार्थत्वव्यावृत्तिः। एतद्विशदयति—**निर्धूतनिखिलविशेषमिति**। निर्विशेषस्य तुच्छताव्यावृत्त्यर्थं **स्वयंज्योतिरिति** पदम्। **इत्युक्तमिति**; सत्यज्ञानादिवाक्येनेति शेषः। इत्थं सामानाधिकरण्यान्यथानुपपत्त्या सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वमुपपादितम्; अथ कारणवाक्यैकार्थ्येन शोधकवाक्यान्तरैकार्थ्येन च हेतुद्वयेन वस्तुमात्रपरत्वमुपपाद्यते—**एवमित्यादिना**। तत्र प्रथमं कारणवाक्यैकार्थ्यं हेतुरुच्यते—**एवमिति**। **एवम्**; निर्विशेषपरत्वेन निर्वाहे सत्येव कारणवाक्यैकार्थ्यमित्यर्थः। कारणवाक्यैकार्थ्यं कुतोऽपेक्षितम्? ऐकार्थ्ये सति कथं वा निर्विशेषपरत्वमित्यत्राह—**यत इत्यादि**। "यतो वा इमानि" इत्यादि लक्षणवाक्यम्, एतस्य कारणत्वानुवादेन लक्षणपरत्वात्। कारणत्वप्रापकं वाक्यमाह—**सदेवेति**। **उपलक्षितस्य**; उपलक्षणं नाम चन्द्रस्य शाखेव तटस्थं ज्ञापकम्। **सत्यं ज्ञानमनन्तं ब्रह्मेति**; अनेन वाक्येनेत्यर्थः। कारणवस्तुनः स्वरूपशोधकत्वात् कारणवाक्यैकार्थ्यमस्यापेक्षितमित्युक्तं भवति। अस्तु कारणवाक्यैकार्थ्यम्; तत्तु सगुणब्रह्मकारणत्ववादिभिः "यः सर्वज्ञः सर्ववित्" "यस्य ज्ञानमयं तपः" "तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" "तमीश्वराणां परमं महेश्वरम्" "स कारणं करणाधिपाधिपः" इत्यादिवाक्यैरेव स्यादित्यत्राह—**तत्रेति**। **तत्र**; कारणवाक्यैकार्थ्येऽपेक्षिते। सर्वशाखाप्रत्ययन्यायो ह्यनुक्तार्थस्वीकारफलः; तेनात्रानुक्तस्योपनिषदन्तरोक्तस्याप्यर्थस्य स्वीकर्तव्यत्वे सति सगुणमात्रपरासूपनिषत्सु निर्गुणमपि ब्रह्मोक्तं भवति; तत्रापच्छेदन्यायेन निर्गुणवाक्यानां बलीयस्त्वात् सर्वत्र सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मैव प्रतिपादितं भवतीत्यभिप्रायः। ततः किमित्यत्राह—**जगदिति**। **जगत्कारणे**त्यादिपदैः कारणवाक्योक्तमर्थमनुवदति। **प्रतिपिपादयिषितम्**; तात्पर्यभूमिः। वस्तुमात्र एव तात्पर्यमित्यर्थः। **तदविरोधेन वक्तव्यम्**; कारणवाक्यप्रतिपन्नब्रह्मस्वरूपशोधकत्वात्तदविरोधेनानेन वाक्येन वक्तव्यमित्यर्थः। 'नरपतिरद्वितीयः' इत्यादिवत्समाभ्यधिकराहित्ये-

ऽप्यद्वितीयत्वमुपपन्नमिति तदैकार्थ्येऽपि न निर्गुणपरत्वसिद्धिरित्यत्राह --**अद्वितीयत्वश्रुतिरिति** । "सदेव" "एकम्" इति विजातीयसजातीयव्यावर्तकावधारणद्वयसमभिव्याहृतत्वादिदमद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहत इत्यभिप्रायः । एवं कारणवाक्यैकार्थ्यात् सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वमुपपादितम्; अथ शोधकवाक्यान्तरैकार्थ्यं हेतुरुच्यते—**अन्यथेति** । **अन्यथा**; सत्यादिवाक्यस्य विशिष्टपरत्वे; "निर्गुणं निरञ्जनम्" इत्यादिभिर्विरोधः स्यात्; अतस्तदविरोधायेदं वाक्यं निर्विशेषवस्तुमात्रपरमित्यर्थः । **अन्यथा निर्गुणं निरञ्जनमित्यादिभिर्विरोध**श्चेत्यनेनाद्वितीयत्वश्रुतेर्गुणतोऽपि सद्वितीयतानिषेधपरत्वं चार्थादुपपादितं भवति । हेतुत्रयेणोपपादितमर्थं निगमयति—**अतश्चेति** । **अतः** पूर्वोक्तसामानाधिकरण्यान्यथानुपपत्त्या पश्चादुक्तकारणवाक्यशोधकवाक्यान्तरैकार्थ्यरूपहेतुद्वयेन चेत्यर्थः । **एतल्लक्षणवाक्यम्**; स्वरूपलक्षणवाक्यम् । **अखण्डैकरसम्**; निर्विशेषतैकस्वभावमेव प्रतिपादयतीत्यर्थः ।

## भावप्रकाशिका

**अन्यथा द्व्येकेष्विति हि वक्तव्यमिति**; द्वयोरेकस्य च बहुत्वोपजनकत्वादिति भावः । "एकस्मिन्नर्थे वृत्तिः" इत्यत्रैकशब्दस्यैकत्वसंख्याप्रधानत्वादिवाचित्वसंभवाल्लक्षणस्य न सम्यक्त्वमित्याशङ्क्य समानपदव्याख्यानत्वादेकशब्दस्य विवक्षितार्थलाभः संभवतीत्यभिप्रायेण समानाधिकरणशब्दयोरर्थमाह—**समानमेकमधिकरणमिति** । ततश्च "भिन्नप्रवृत्तिनिमित्तानाम्" इति सामानाधिकरण्यनिरुक्तिव्याख्यानसमये "एकस्मिन्नर्थे" इत्यस्मिन्नंशे व्याख्यातव्ये समानाधिकरणशब्दव्याख्यानं न संगतमिति शङ्का पराकृता । **समानशब्दसामर्थ्यादेकशब्दः साधारणपर इति**; न चैवमन्योन्याश्रय इति वाच्यम्, परस्परसाहचर्यस्य 'गुरुभार्गवौ' इत्यादावर्थविशेषप्रतिपादकत्वदर्शनादिति भावः । न चैकशब्दस्यैकसंख्यापरत्वे कानुपपत्तिः? नीलोत्पलशब्दयोरेकत्वसंख्याश्रयार्थवृत्तित्वसंभवादिति वाच्यम्; 'बहून्युत्पलानि' इति शब्दयोरेकत्वसंख्याश्रयभूतार्थवृत्तित्वासंभवेन सामानाधिकरण्याभावप्रसङ्गात् । अत एव "समानकर्तृकयोः पूर्वकाले" इत्यत्रापि समानशब्दार्थभूतमेकत्वमपि साधारणत्वमेव, न तु संख्याविशेषरूपम् । 'पक्त्वा भुङ्क्ते' इत्यादौ कर्तुरेकत्वसंख्याश्रयत्वाभावादिति द्रष्टव्यम् । इदं च शङ्कापरिहारव्याजेन "ननु नीलान्युत्पलानि" इत्यत्र स्पष्टयिष्यते । **पूर्वोक्तार्थः साधी**

**यानिति** ; विवक्षितार्थविशेषाणां शाब्दत्वसिद्धेरिति भावः । **तत्स्थसमानविभक्तिर्विशेष्यैक्यपरेति** ; नन्वेवं विशेषणविभक्तेरैक्यार्थकत्वे निषादस्थपत्यधिकरणविरोधः, षष्ठीतत्पुरुषे लुप्तविभक्त्यर्थे प्रातिपदिकलक्षणावत् विशेषणविभक्त्यर्थे ऐक्ये निषादपदलक्षणाया अङ्गीकर्तव्यत्वात् ; तस्माद्विशेषणविभक्तेः साधुत्वार्थकत्वमेव, न त्वैक्यार्थकत्वमिति चेत्—न ; ऐक्यस्य विभक्त्यर्थत्वेऽपि तत्र प्रातिपदिकलक्षणायां प्रमाणाभावात्, विग्रहसमासयोः समानार्थत्वनियमाभावात् । तस्मात् षष्ठीतत्पुरुषे संबन्धस्य शाब्दबोधे प्रकारतया भानस्यानुभवसिद्धत्वेन तदर्थं लक्षणाश्रयणेऽपि कर्मधारयेऽभेदस्य संसर्गमर्यादया भानस्यैवानुभवसिद्धत्वेन न लक्षणेत्याशयात् । केचित्तु—"एकस्मिन्नर्थे वृत्तिः" इत्यस्यैकार्थवृत्तिमद्विभक्तिद्वयवत्त्वमित्यर्थः । ततश्च विशेषणविभक्तेर्विशेष्यविभक्त्यार्थैक्यात् विशेष्यविभक्त्यर्थानुवादितया साधुत्वमात्रार्थत्वमेव । विभक्त्यर्थैक्यबोधनं वृत्तिशब्देन विवक्षितमित्यस्यापि तत्रैव तात्पर्यम् । अत एव 'घटस्य स्वरूपम्' इत्यादावपि नातिप्रसङ्गः, तत्र विभक्त्योर्भिन्नार्थत्वात् । नन्वेवं 'देवदत्तः पचति' इत्यत्र सुप्तिङोः सामानाधिकरण्यं न स्यात्, तिङो यत्नादिरूपातिरिक्तार्थाभिधायित्वादिति चेत्—न ; तत्र सामानाधिकरण्यव्यवहारस्यामुख्यत्वादिति वदन्ति । एकशब्दस्य साधारणार्थत्वमुक्तं विस्मृत्य चोदयति—**ननु नीलान्युत्पलानीति । समभिव्याहृतपदान्तरेति** ; समभिव्याहृतपदान्तरोपस्थापिताकारान्तराधिकरणवृत्तित्वमेवैकार्थवृत्तित्वम् : न तु व्यक्तिद्वयावृत्तित्वमित्यर्थः । **नीलत्वानाधिकरणेषूत्पलत्वं वर्तत इति** ; नीलत्वानधिकरणेष्वेवोत्पलत्वं वर्तत इत्यर्थः । खले कपोतन्यायेन युगपदुपस्थितानामन्वय इति पक्ष आह—**संभवेऽपि विशेषणानामिति । प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्चेति** ; अत्र केचित्—'प्रवृत्तिनिमित्तभेदाभावेन' इत्येतत् पर्यायत्वे पदान्तरवैयर्थ्येऽपि हेतुः ; अतः काकाक्षिन्यायेन पूर्वत्राप्यन्वयो वक्तव्यः; एवमुत्तरत्रापि । न च सत्यत्वज्ञानत्वादीनां प्रवृत्तिनिमित्तानां भेदस्य सत्त्वात् कथं पर्यायत्वमिति वाच्यम्, सत्यत्वादीनां शुद्धादन्यत्राभावेन सत्यादिवाक्यानां लक्षणया स्वरूपमात्रपरत्वेन शुद्धेऽपि तदसिद्ध्या प्रवृत्तिनिमित्तभेदाभावेन पर्यायत्वं स्यादिति वदन्ति । अन्ये तु पर्यायत्वमन्यूनानतिरिक्तार्थत्वम् ; विशेषणतो विशेष्यतश्चानतिरिक्तार्थकत्वम् ; तत्र प्रवृत्तिनिमित्तभेदाभावमात्रं न हेतुः, भिन्नविशेष्याभिप्रायेण प्रयुक्तयोर्घटकुम्भशब्दयोः प्रवृत्तिनिमित्तभेदा-

भावेऽप्युक्तपर्यायत्वाभावात्; अतः सामानाधिकरण्यलक्षणहानावेव हेतुरिति वदन्ति। **अत एव जगत्कारणत्वेति;** यत एव सत्यज्ञानादिशब्दानामनृतजडपरिच्छिन्नविरोधिस्वरूपोपस्थापकत्वम्, अत एव सत्यज्ञानादिपदैः कारणत्वशङ्कितानृतजडादिभ्रान्तिव्युदासः क्रियत इत्यर्थः। **व्यावर्त्यभेदेन यथा न पर्यायत्वमिति;** कार्ष्ण्यरक्तिमादीनां भिन्नतया तत्तदवच्छिन्नव्यावृत्तीनां प्रवृत्तिनिमित्तानां भेदात् यथा अपर्यायत्वमर्थवत्वं चेत्यर्थः। न चानृतजडपरिच्छिन्नव्यावृत्तीनामपर्यायत्वसिद्ध्यर्थं भेदस्याभ्युपेतत्वे कथमेकार्थत्वं सिध्येदिति वाच्यम्, पदार्थोपस्थितिदशायां व्यावृत्तीनां भानेऽपि वाक्यार्थप्रतीतिदशायां तत्तद्व्यावृत्त्युपलक्षितस्वरूपमात्रस्यैव प्रतीयमानतयैकार्थत्वाविरोधात्। न च वाक्यार्थप्रतीतिदशायामपि व्यावृत्तिवैशिष्ट्यं भासतामिति वाच्यम्, शौक्ल्यस्वरूपमात्रबुभुत्सायामेव काष्र्ण्यादिव्यावृत्तमित्त्युत्तरस्यावतीर्णतयास्य वाक्यस्य स्वरूपातिरिक्तार्थप्रतिपादकत्वासंभवात्। अत एव सत्यज्ञानादिवाक्यानां ब्रह्मस्वरूपमात्रप्रश्नोत्तरतया व्यावृत्तिवैशिष्ट्याबोधकत्वम्। अत एव संसर्गागोचरप्रमाजनकत्वलक्षणमखण्डार्थत्वं युज्यत इति भावः। केचित्तु—अनृतजडपरिच्छिन्नव्यावृत्तिवैशिष्ट्यं सत्यज्ञानादिवाक्ये भासत एव। न चैवं संसर्गागोचरप्रमाजनकत्वलक्षणमखण्डार्थत्वं भज्येतेति वाच्यम्, अभिन्नविशेषणविशेष्यार्थत्वरूपाखण्डार्थत्वस्य वैशिष्ट्यगोचरत्वेऽप्यविरोधात्। सत्यपदजन्यप्रतीतिविषययोरेव विशेषणविशेष्ययोर्वस्तुतो भेदरहितयोर्व्यावृत्तिब्रह्मस्वरूपयोरेव ज्ञानपदजन्यप्रतीतिविषयविशेष्यविशेषणत्वात् ब्रह्मस्वरूपाया अनृतव्यावृत्तेर्जडव्यावृत्तिरूपत्वे विशेषणयोर्व्यावृत्त्योर्भेदाभावात्। न चैवमेकप्रवृत्तिनिमित्तकतया पर्यायत्वं स्यादिति वाच्यम्, अन्यूनानतिरिक्तार्थकत्वस्यैव पर्यायशब्दार्थतया व्यावृत्तिरूपविशेषणे विशेषणभूतानां भिन्नभिन्नानां प्रतियोगिनां भानेन पर्यायत्वस्याप्रसक्तेरिति वदन्ति। ननु शक्त्या पदजन्यपदार्थोपस्थितेः शक्यतावच्छेदकप्रकारकत्वावश्यंभावात् शक्त्या पदजन्यब्रह्मस्वरूपोपस्थितेरपि शक्यतावच्छेदकीभूतसत्यत्वादिप्रकारकत्वप्रसङ्गेन वाक्यस्याखण्डार्थत्वभङ्गप्रसङ्गः। अतोऽनृतजडपरिच्छिन्नव्यावृत्तब्रह्मस्वरूपोपस्थितिरपि लक्षणयैवेत्यभ्युपगन्तव्यमित्यरुचेराह **लक्षणाभ्युपगमेऽपीति। समानविभक्तिबलादैक्यतात्पर्यनिश्चय इति;** इदमुपलक्षणम्, लक्षणवाक्यत्वात् ब्रह्मस्वरूपमात्रप्रश्नोत्तरत्वाच्चेत्यपि द्रष्टव्यम्। **सर्वपदानां लक्षणा दोष इति;** सर्वप्रातिपदिकानामित्यर्थः, विभक्तेरैक्यार्थाया लक्षकत्वाभावात्। य

विभक्त्यर्थस्यैकत्वस्य संसर्गप्रतीतौ वाक्यस्याखण्डार्थत्वभङ्गप्रसङ्गात्तस्य सत्यत्वादितुल्यशील-त्वात्। न चैवं समानविभक्तिबलादैक्यतात्पर्यनिश्चय इति पूर्वग्रन्थविरोध इति वाच्यम्, प्रातिपदिकार्थमात्रप्रश्नोत्तरत्वेन ब्रह्मस्वरूपमात्रे तात्पर्यावगमादिति तदभिप्रायादिति वर्ण-यन्ति। "सत्यज्ञानादिगुणाः प्रतीयन्ते" इति परिचोदिते सति, "नेत्युच्यते" इति वदतः प्रतीत्यपलापदोषः स्यादित्याशङ्क्याह—**नेत्युच्यत इति वदतोऽयं भाव इति।** **सर्वपदानामेकाभिधेयपर्यवसानमिति**; एकस्य पदस्याभिधेयम्; एकप्रातिपदिकार्थ-मात्रनिष्ठत्वमित्यर्थः। **न तु वाक्यस्येत्यर्थ** इति; न त्वेकवाक्यार्थत्वमित्यर्थः। तथा सति सर्ववाक्यमप्यखण्डार्थं स्यादिति भावः। **पदानामेवैकार्थपर्यवसायित्वमिति**; एवकारो भिन्नक्रमः। पदानामेकप्रातिपदिकार्थपर्यवसायित्वमेवाखण्डार्थत्वं, न त्वेकप्रधा-नार्थपर्यवसायित्वमात्रमित्यर्थः। ततश्च पदानामेकार्थपर्यवसायित्वे वाक्यस्यापि तद-स्त्येव; वाक्यस्यैकार्थपर्यवसायित्वे पदानामपि तदस्त्येव; पदव्यतिरेकेण वाक्यस्याभा-वादिति शङ्का प्रत्युक्ता। **कृत्स्नवाक्येनेति**; विशेषणभेदेन विशेष्यभेद इत्यंशेन विशेषण-मात्रपरत्वे दूषणमिति भावः। **विशेषणभेदेनेति** व्याख्येयं पदम्। **युगपदभिधानपक्षे दूषण-मुक्तं भवतीति**; इदमुपलक्षणम्, क्रमेणाभिधानपक्षे विशेषणान्तरान्वयो बोध्यत इति द्वितीय-विकल्पेऽन्योन्यसमवायरूपदूषणमुक्तमिति द्रष्टव्यम्। **सामानाधिकरण्यलक्षणासिद्धिरि-त्यर्थ इति**; एकवस्तुमात्रपरत्वरूपसामानाधिकरण्यलक्षणासिद्धिरित्यर्थः। **चोद्यद्वयमभिप्रेत-मिति**; अत्र केचित्—पदान्तरवैयर्थ्यस्य पर्यायत्वस्य चैकवस्तुमात्रपरत्वरूपसामानाधि-करण्येऽवश्यंभावमाशङ्क्य एकवस्तुमात्रपरत्वेऽप्यपर्यायत्वं पदान्तरावैयर्थ्यं च संभवतीति पदान्तरवैयर्थ्यपर्यायत्वरूपदूषणद्वयप्रसङ्गस्यैव परिहरिष्यमाणतया दूषणद्वय एव तात्पर्यम्। ततश्चैकवस्तुमात्रपरत्वे पर्यायत्वं पदान्तरवैयर्थ्यं च स्यात्; तस्य कथंचित्परिहारे एक-वस्तुमात्रनिष्ठत्वरूपसामानाधिकरण्यभङ्गप्रसङ्ग इत्येवंपरतया टीकाग्रन्थोऽपि योजनीय इति वदन्ति। **व्युदासस्तु फलित इति**; अयं भावः—यद्यपि सत्यपदोपस्थापितस्वरूपव्य-तिरिक्तं न पदान्तरेण प्रतिपाद्यते, अथापि सत्यपदेनैवानृतभ्रान्तिव्युदासः, ज्ञानपदेनैव जडभ्रान्तिव्युदासः, अनन्तपदेनैव परिच्छिन्नभ्रान्तिव्युदासः; अनृतजडपरिच्छिन्नव्या-वृत्त्युपस्थितेस्तत्तत्पदाधीनत्वात्; तत्तद्व्यावृत्तिपूर्वकस्वरूपोपस्थितेरेवानृतजडपरिच्छिन्नभ्रा-न्तिव्युदासकत्वात्। यथाभिज्ञाभ्यामवगतस्वरूपस्यैव प्रत्यभिज्ञाविषयत्वेन विषयकृतवि-

शेषाभावेऽपि कालद्वयप्रतिसंधानादिलक्षणकारणकृतोऽभिज्ञाद्वयानिवर्त्यभेदभ्रमनिवर्तकत्वल-क्षणो विशेषः प्रत्यभिज्ञायां दृश्यते, एवं सत्यपदजन्योपस्थितेरनृतप्रतिसंधानपूर्विकाया एवानृतभ्रान्तिनिवर्तकत्वं, जडप्रतिसंधानपूर्विकाया एव ज्ञानपदजन्योपस्थितेर्जडभ्रान्ति-निवर्तकत्वमित्येवमनृतजडपरिच्छिन्नव्युदासः फलित इति भावः । **प्रयोजकरूपेणेति**; अनेकपदार्थसंग्राहकानृतत्वाद्याकारेणेत्यर्थः । **एतस्य कारणत्वानुवादेन लक्षणपरत्वा-दिति**; लक्षणत्वविधिपरत्वादित्यर्थः । **उपलक्षणं नाम चन्द्रस्येति**; मायाशबलसगुण-ब्रह्मगतं कारणत्वं तदननुगतस्य लिलक्षयिषिताखण्डचैतन्यस्य तटस्थतयोपलक्षणं शाखाग्रमि-वातन्निष्ठं चन्द्रमसः । तस्य प्रकृष्टप्रकाशत्वमिव सत्यज्ञानानन्दरूपं स्वरूपलक्षणम् । न चावश्यमपेक्षितेन सत्यज्ञानानन्दत्वरूपस्वरूपलक्षणेनैवेतरव्यावृत्तिसिद्धेर्जगत्कारणत्वरूप-तटस्थलक्षणं व्यर्थम्; चन्द्रादौ तु 'प्रकृष्टप्रकाशः' इत्यनेनैव स्वरूपे प्रतिपन्नेऽपि तद्दिदृक्षया चन्द्रबुभुत्सोर्गगने सर्वतश्चक्षुर्विक्षेपे क्लेशः स्यात्, स मा भूदिति देशविशे-चक्षुर्नियमनार्थतया तटस्थलक्षणमुपयुज्यत इति वक्तुं शक्यमिति वाच्यम्— प्रकरणोपपदादिसंकोचकाभावेन त्रिविधपरिच्छेदपरिपन्थिनिरतिशयबृहत्त्ववाचिब्रह्मशब्दार्थस्य निष्प्रपञ्चस्य लिलक्षयिषितस्य ब्रह्मणः 'यद्रजतमभात् सा शुक्तिः' इतिवदध्यारोपा-पवादन्यायेन 'यत्प्रपञ्चविवर्तोपादानं तद्ब्रह्म' इति निष्प्रपञ्चत्वसिध्यर्थं जगदुपादानत्वस्य ब्रह्मणि वक्तव्यत्वेन तटस्थलक्षणसाफल्यात्; स्वरूपविशेषप्रतिपत्त्यर्थतया स्वरूपलक्ष-णस्याप्यावश्यकत्वमिति हि मृषावादिनां मतमिति भावः ।

## श्रुतप्रदीपिका

निर्गुणपरतयोपात्तं सत्यादिवाक्यं सगुणपरं बुद्ध्वा चोदयति—**ननु चेति सत्यज्ञानादयः**; सत्यत्वज्ञानत्वादयः; 'द्व्येकयोः' इतिवत्; तत्रहि द्वित्वैकत्वयोरित्यर्थः; अन्यथा द्व्येकेष्विति बहुवचनप्रसङ्गात् । परिहरति—**नेति** । प्रतीतिरापाततश्चेत् नः, न क्षतिः । प्रमितिश्चेत्, नेत्युपपादयिष्यत इत्यर्थः । कुत इत्यत्राह—**सामानाधिकरण्येनेति** शङ्कते—**अनेकेति** । व्यधिकरणवाक्येष्विव न पदार्थानेकत्वं वाक्यार्थैकत्वविरोधीति भावः । समानाधिकरणव्यधिकरणवाक्ययोरभिधानविशेषानभिज्ञ इत्युपालभ्य परिहरति—**अनभिधानेति** । **देवानां प्रियः**; छागः, अज्ञ इति भावः । कथमित्यत्राह—**एकार्थ-त्वमिति** । न तु पृथगर्थपदसमुदायबोध्यप्रधानार्थैकत्वम्; तत्तु व्यधिकरणवाक्येष्वि

भावः। ततः किमित्यत्राह—**विशिष्टेति**। समानाधिकरणवाक्यस्थप्रातिपदिकानि किं विशेषणमात्रपराणि, उत विशिष्टपराणि, उत स्वरूपमात्रपराणीति विकल्पमभिप्रेत्य प्रथमे विशेषणरूपार्थानेकत्वान्नार्थैक्यम्; द्वितीयेऽपि तत्तुल्यम्; किंच विशेषणविशेष्यरूपार्थभेदाच्च नार्थैक्यम्; विशेषणभेदेन विशेष्यभेदप्रसङ्गाच्च; विशेषणं हि भेदकम्; 'देवदत्तः श्यामो युवा' इत्यादौ प्रत्यक्षबलादैक्यम्; ब्रह्म तु न तद्गोचरम्; न चैकवचनान्तधर्मिवाचिपदैक्याद्विशेष्यैक्यम्, 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्यत्रादृष्टेः। तद्बहुत्वं प्रत्यक्षबलादिति चेत्—न; अप्रत्यक्षगोरपि पुरुषस्यानेन वाक्येन गोबहुत्वप्रतीतेः। तस्मादप्रत्यक्षे ब्रह्मणि विशेषणभेदप्रयुक्तविशेष्यभेदो दुर्वार इत्यादिदूषणानि **विशेषणभेदेन**त्यादिग्रन्थेनोक्तानि। अर्थशब्दो विशेष्यस्यापि वाचकः। क्रमेणाभिधानं चेत् विशेष्य इव विशेषणेऽपि पदान्तरविहितविशेषणान्वयाद्विशेषणयोर्मिथः समवायः, युगपच्चेत् समानविभक्त्या विशेष्यांश इव विशेषणेऽप्यैक्यप्रतिपादनाद्विशेषणैक्यम्, उद्देश्योपादेयविभागाभावश्चेत्यादिदूषणान्यन्यत्रोक्तानीहाभिप्रेतानि। ततः किमित्यत्राह—**ततश्चेति**। शिरोद्वयदूषणात् तृतीयं शिरोऽर्थात् स्वीकृतम्; तद्विवृण्वंश्चोदयति—**एवमिति**। **एवं तर्हि**; वस्तुमात्रपरत्वे। एकतरपदवैयर्थ्यं सामानाधिकरण्यलक्षणहानिश्चाभिप्रेते, परिहरिष्यमाणत्वात्। इदं बहुग्रन्थैः परिहर्तुं मध्ये त्वरया न चोदनीयमित्यभिप्रायेणाह—**एकार्थेति**। **एकार्थाभिधायित्वेऽपीति** चोद्यहेत्वनुवादः। परिहरति—**एकत्वेति**। **तात्पर्यनिश्चयः**; समानविभक्त्या। लक्षणहानिपरिहारश्चशब्दाभिप्रेतः। **अर्थवत्त्वम्**; प्रयोजनवत्त्वम्। बहुव्यावर्त्यव्युदासनादर्थवत्त्वं, प्रवृत्तिनिमित्तभूतैस्तैरपर्यायता, सामानाधिकरण्यलक्षणानुरोधश्चैकार्थत्वाविरोधेन सिध्यन्तीत्युक्तं भवति। तत्त्वंपदयोरिवान्वयमुखेनोपलक्षणद्वारा स्वरूपपरत्वं किं न स्यात्? व्यावृत्तिबहुत्वान्नैकार्थत्वम्, व्यावर्त्यानन्त्यान्न तद्व्युदासः कतिपयपदैः शक्यते, येभ्यो व्यावृत्तिः कानि च तानि? व्यावृत्तिमत्त्वात् सधर्मकत्वम्, व्यावृत्तयो न धर्माश्चेत् पर्यायता स्यादित्याशङ्कायामाह—**एतदुक्तमिति**। कारणतयोक्तस्य शङ्कितदोषव्युदासस्यापेक्षितत्वादतद्व्यावृत्तिमुखेन स्वरूपपरत्वमित्यभिप्रेत्य **लक्षणत** इत्युक्तम्। **सर्वमनेन पदत्रयेण फलत इति**; प्रयोजकेन स्वरूपेणानन्तव्यावर्त्यव्युदास इति भावः। व्युदासस्तु फलितः, पदानि तु स्वरूपपराणीत्येकार्थत्वं चाभिप्रेतम्। केन कस्माद्व्यावृत्तिरित्यत्राह—**तत्रेति**। कारणतयैव

तुच्छत्वव्यावृत्तेर्विकारिव्यावृत्तिरुक्ता । जडरूपेत्यस्य व्याख्यानमन्याधीनप्रकाशेति । ताभिः सधर्मकत्वमित्यत्राह—**न चेति** । वादिविशेषापेक्षया भावाभावरूपतोक्तिः । तर्हि किमित्यत्राह—**अपित्विति** । निदर्शयति—**यथेति** । **न धर्मान्तरमिति** ; अनुपलम्भात् तदभ्युपगमेऽनवस्थानाच्चेति भावः । तर्हि पर्यायता स्यादिति शङ्कायां शौक्ल्यं कार्ष्ण्यव्यावृत्तमित्यादिप्रतिबन्ध्यभिप्रायेणाह—**एकस्यैवेति** । **अर्थवत्तरम्** ; दृष्टान्तापेक्षया पराभिमतसगुणपरत्वापेक्षया वा । शौक्ल्यं हि प्रत्यक्षम् । अतो वाक्यं मन्दप्रयोजनम् । शोधकस्य शङ्कितदोषव्युदासो हि कृत्यम्, न तु गुणान्वयज्ञापनमिति । अथ वाक्यार्थमाह—**तस्मादिति** ; सामानाधिकरण्यस्याभावात् । अथ कारणवाक्यैकार्थ्ये हेतुमुपपादयति—**एवमिति** । ऐकार्थ्यं कुतोऽपेक्षितमित्यत्राह—**यत इति** ; लक्षणकारणत्वप्रापकवाक्ये उपात्ते । उपलक्षणं ज्ञाप्यबहिष्ठमिन्दोरिव शाखा । कारणवाक्यावगतस्य शोधकत्वात् तदैकार्थ्यमित्यर्थः । तर्हि "यः सर्वज्ञः" इत्याद्युक्तसगुणकारणवाक्यैकार्थ्यं स्यादित्यत्राह—**तत्रेति** । अनुक्तस्यान्यतो ग्राह्यत्वात् सगुणेष्वपि निर्गुणत्वमुक्तं भवति । तत्रापच्छेदनयान्निर्विशेषत्वं सर्वत्र सिध्येदिति भावः । ततः किमित्यत्राह—**जगदिति** । अस्त्वविरोधः ; तत्रापि "नरपतिरद्वितीयः" इतिवत् किं न स्यादित्यत्राह—**अद्वितीयत्वेति** "सदेव, एकमेव" इति सजातीयविजातीयभेदधीनिवर्तकसावधारणपदद्वयसमभिव्याहारेण परिशेषात् "अद्वितीयम्" इति स्वगतभेदनिवर्तकमित्यर्थः । अथ शोधकान्तरैकार्थ्ये हेतुमाह—**अन्यथेति** । **अन्यथा** ; सत्यादिवाक्यस्य सगुणपरत्वे । उक्तहेतुत्रयेण निर्विशेषपरत्वं निगमयति—**अत इति** । **एतल्लक्षणवाक्यम्** ; स्वरूपलक्षणवाक्यम् । **अखण्डैकरसम्** ; निर्विशेषतैकस्वभावम् ।

## तत्त्वटीका

अत्र सत्यत्वादिविशिष्टपरं वाक्यं कथं निर्गुणवाक्यतयोपात्तमिति चोदयति—**ननु चेति** । **सत्यज्ञानादयः** ; "द्व्येकयोः" इतिवद्भावप्रधानोक्तिः । आनन्त्यमपि व्यापित्वरूपो गुण इति बुद्ध्या बहुवचनम् । अयं भावः—अत्र गुणप्रतीतिर्नापह्नोतुं शक्या ; तस्याश्च बाधाभावात् स्वतः प्रमात्वं सुस्थमिति । नेयं प्रमितिरिति युक्त्या स्थापयिष्यत इत्याह—**नेत्युच्यत इति** । एकार्थतात्पर्यार्हत्वरूपवृत्त्या गुणभेदधीर्बाध्येत्याह—**सामानाधिकरण्येनेति** । कारकभेदक्रियैकत्वबुद्ध्योरिव विशेषणभेदविशेष्यैक्यधियो

रविरोधान्न बाध्यबाधकतेति चोदयति—**अनेकेति** । समानाधिकरणव्यधिकरणपदानां वृत्तिवैषम्यमेकार्थशब्देनान्ययोगव्यवच्छेदं च न जानासीत्युपालम्भमुखेन प्रतिवक्ति—**अनभिधानेति** । **देवानांप्रिय इति** ; अज्ञातनाम्नामुपचारप्रयोगः ; इह त्वप्रख्यात इत्यर्थः । छाग इत्येके ; तदाप्यज्ञ इति यावत् । तदज्ञानं स्वाभिप्रेतं विवृणोति—**एकार्थत्वमिति** । त्रेधा हि पदानामर्थैक्यम्—प्रकृतिप्रत्ययसमुदायबोध्यप्रातिस्विकविशेष्यैक्यम् , "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इत्येतावता मिथोऽन्वितार्थपदजातबोध्यप्रधानैक्यं, पदभेदेऽर्थभेदाभावश्चेति । तेष्वाद्यं पदमात्रे ; द्वितीयं व्यधिकरणवाक्ये ; तृतीयमिह मदुक्तम् ; तच्च—"भिन्नप्रवृत्तिनिमित्तानां शब्दानाम्" इत्यादिपतञ्जलिवाक्यप्रसिद्धमित्यभिप्रायेण नामशब्दः । एवमप्यस्य प्रधानप्रतिपाद्यविशेष्यभेदाभावमात्रपरत्वे को विरोध इत्यत्राह—**विशिष्टेति** । **विशेषणभेदेने**त्येतत् बहुधा योज्यम्—विशेषणानां मिथो विशेष्याच्च भेदेन विशेषणभेदेनैव विशिष्टभेदाद्विशेष्यभेदप्रसङ्गेन चेति ।

भेदकं हि स्वभावेन प्रत्यक्षाद्यनिराकृतम् ।
विशेषणान्तराधारात् स्वाधारं भेत्तुमर्हति ॥ ३३९ ॥

'श्यामो युवा' इत्यादौ दृष्टत्वादेव विशेषणानां भेदकत्वस्वभावोऽपोदितः । इह तु भेदकं विशेषणं भेद्यं विशेष्यमिति व्यवस्थाया नित्यातीन्द्रिये शब्दोपस्थाप्ये कः प्रतिरोद्धा ? अनावृत्त एकवचनान्तो विशेष्यशब्द इति चेत्—न, जात्यैक्यविवक्षयापि तदुपपत्तेः ; यथा—'खण्डो मुण्डो गौः' इति । प्रत्यक्षबलात्तत्र भेद ति चेत्—न, अप्रत्यक्षेऽपि तथोक्तौ व्यक्तिभेदबुद्धेः ; तद्वद्ब्रह्मणि । किंच तेन तेन पदेनोद्दिष्टे विशिष्टे पदान्तरार्थविधौ विशेषणानां मिथः समवायः स्यात् , उपादेयस्य यावदुद्देश्यव्यापित्वात् ; तथाच तेषां विशेषणस्वरूपाद्भेदेन नानाविशिष्टापत्तिः । किंच—

विशिष्टार्थाभिधायित्वे भेदकेष्वपि भेद्यवत् ।
अन्योन्यसमवायैक्यप्रसङ्गौ चात्र तन्त्रितौ ॥ ३४० ॥

तथाहि—विशेषणभेदेन विशेषणानां परस्परसमवायतादात्म्याभ्यामन्यथाभावेन पदानामभ्युत्पन्नाप्रामाणिकार्थभेदः; विशिष्टविधावपि समानविभक्तिविशेष्यांशमिव विशेषणांशमप्येकीकुर्यात्, प्रकृत्युपस्थापितैक्यपरत्वात् । तदापि स्वान्यैक्याद्विशेषणानां स्वस्माद्भेदः स्यादित्यादयः प्रसङ्गा इहाभिप्रेताः । एतैः फलितं प्रसङ्गान्तरमाह—**तत इति** ।

विशिष्टस्यैवमनभिधेयत्वे विशेषणमात्रोक्तिर्दूरापास्तेति मत्वा विशेष्यमात्रपक्षे चोदयति—**एवं तर्हीति** ; उक्तप्रकारेण विशेष्यमात्रपरत्वे सतीत्यर्थः । भिन्ननिमित्तानामनुपपत्त्या निमित्तत्यागे कथं पर्यायत्वमित्यत्राह—**अविशिष्टेति** ; एकपदोक्तमात्राभिधायित्वादिति यावत् । अत एव पदान्तरवैयर्थ्यं पर्यायत्वं सामानाधिकरण्यभङ्गश्च स्यात् । आहुश्च—

" नातत्तन्मन्यसे तावन्न तत्तदपि मंस्यसे ।
सामानाधिकरण्यं हि रूपभेदमपेक्षते ॥ "

इति । विवक्षितस्य लोकोत्तीर्णत्वान्नैतत्त्वरमाणेन लभ्यमित्यवहितेन क्रमेणेदं बोद्धव्यमित्यभिप्रायेणाह—**एकार्थाभिधायित्वेऽपीति** । उक्तप्रसञ्जकानुवादोऽयम् । तेन त्वदुक्तं न प्रसज्यत इत्याह—**एकत्वेति** । अयं भावः—वाक्यतात्पर्यानुसारेण हि सर्वत्रोपचारः । अत्र च स्वरूपबुभुत्सया समानविभक्त्या चार्थैक्ये तात्पर्यं निश्चितम् । तेन विशेषणाभिधानं त्यक्तम् । तत्फलभूतव्यावृत्तिपरत्वं तु स्थितम् । तदिह विरोधिव्यावृत्तिभेदैः प्रतिपदं प्रयोजनं सामानाधिकरण्यलक्षणानुगुणमैकार्थ्यं निमित्तभेदव्युत्पत्तिफलैः पर्यायत्वनिरासश्च स्यादिति । उक्तं च सुरेश्वराचार्यैः—

" प्रतिपद्य पदार्थं हि विरोधात्तद्विरोधिनः ।
पश्चादभावं जानाति वध्यघातकवत्पदात् ॥
शब्दात्प्रतीयते तावत्संगतिर्धर्मधर्मिणोः ।
मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः ॥
तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् ।
स्वार्थार्पणप्रनाड्यैव परिशिष्टौ विशेषणम् ॥ "

इति । तद्विरोध्यभेदिनश्चाहुः—" व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता । " इति । नन्वेकत्वतात्पर्येऽपि तत्त्वमस्यादिवदुपलक्षणमुखेन स्वरूपैक्यपरत्वमस्तु ; सर्वेभ्यश्च व्यावृत्तिर्विशेषतो दुर्वचा ; अप्रयोजकत्वेन संग्रहेऽप्येकेनालम् ; व्यावृत्तीनां धर्मत्वे ताभिः प्रतिपदोपस्थापितव्यावृत्तिभेदात्सविशेषणत्वम् ; तद्बहुत्वादैकार्थ्यभङ्गो विशेष्यभेदप्रसङ्गश्च ; स्वरूपत्वे तु प्रयोजनभेदाभाव इत्याशङ्क्याह—**एतदुक्तमिति** । " ब्रह्मविदाप्नोति परम् " इति प्रस्तुतं ब्रह्म किमिति बुभुत्सिते कारणत्वस्य तटस्थतया स्वरूपलक्षणत्वो ह्यत्र तत्स्वरूपं शोध्यते । तत्र विशेषणोक्तिराम्रप्रश्ने कोविदारप्रत्युक्तिवत् स्यात्

लक्षणं च सर्वत्र व्यावृत्त्यर्थमेवेत्यभिप्रायेणाह—**लक्षणत इति**। रूपमिह स्वरूपम्। निःशेषव्यावृत्तिः प्रयोजकेन संग्रहात्सुवचेत्याह—**तद्विरोधीति**। अत्र रूपं स्वरूपं वानृतत्वादिर्ब्रह्मेतरव्याप्तधर्मो वा। **अनेन**; प्रत्येकं कृत्स्नव्युदासक्षमेण। न हि पदान्तरमेवंविधमस्तीत्यभिप्रायेण पदत्रयोक्तिः। एकेन पर्याप्तेऽपि प्रयोजनकार्त्स्न्यार्थमेतावद्वक्तव्यम्। आनन्दपदस्य तूपलक्षणमेतत्। **फलतः**; विरोधिव्युदासस्य फलत्वान्नात्र स्वरूपमात्रपरत्वं विरोध इति भावः। पदानां पृथक्प्रयोजनानि व्यनक्ति—**तत्रेति**; तस्मिन् पदत्रय इत्यर्थः। प्राकरणिकेन कारणत्वेन तुच्छव्यावृत्तौ सिद्धायां शङ्कितं विकारित्वेनानृतत्वमत्र सत्यपदेन व्युदस्तम्। वस्तुशब्दोऽत्र व्यावहारिकसत्यार्थः। **अन्याधीनप्रकाशत्वं** जडशब्दार्थः। असंकोचात् **अनन्त**पदेन त्रिविधपरिच्छेदव्यावृत्तिरुक्ता। यदि व्यावृत्तयो भावरूपा धर्माः, तदा सत्यत्वादीन्येव स्युः; अभावरूपा अपि तत्तुल्यचोद्या इत्यत्राह—**न चेति**। तदापि नैष्फल्यप्रसङ्गं परिजिहीर्षुराह—**अपि त्विति**। व्यावृत्तिर्हि यथा स्वत एव स्वेतरव्यावृत्तिः, तद्वद् ब्रह्मस्वरूपमेव सकलेतरविरोधित्वात् स्वयं सर्वव्यावृत्तिः; भावाद्वैतपक्षस्तु भीरुकल्पित इति भावः। भावस्याभावत्वमेकस्यानेकत्वं च कथमित्यत्र भावान्तराभावपक्षे तिष्ठन्निदर्शयति—**यथेति**। अवधारणेन धर्मान्तरानुपलम्भं व्यनक्ति। अन्यथानवस्थामभिप्रेत्याह—**धर्मेति**। एवमेकस्यैव सर्वव्यावृत्तिरूपत्वे व्यावृत्तेरपि पदबोध्यत्वे पदान्तरवैयर्थ्यं स्यादित्यत्र दृष्टान्तोक्तं दार्ष्टान्तिकेऽतिदिशति—**एकस्येति**। 'शौक्ल्यं कार्ष्ण्यम्' इत्यादिप्रतिबन्दिरिहाभिप्रेता। तत्रानन्तपदे तावद्व्यावृत्तिबोधकत्वं सिद्धम्; पदान्तरयोरपि तथात्वे को विरोध इति भावः। प्रतिबन्दिवाक्यमिह प्रत्यक्षानुवादित्वान्मन्दफलम्, इदं तु न तथा; गुणपरत्वे चात्र निमित्तमात्रलाभः; तत्परित्यागे तु तात्पर्यार्थः सिद्धः; अतः **अर्थवत्तर**मित्युक्तम्। व्युत्पत्तिभेदं प्रयोजनभेदं चाभिसन्धायापर्यायत्वोक्तिः। **पर्याय**शब्दोऽत्र भावप्रधानः। पर्यायत्वं यस्य नास्ति तदपर्यायमिति गतिः; यस्य पदत्रयस्य मिथः पदानि पर्याया न भवन्ति, तदपर्यायमिति वा। 'अपर्यायत्वम्' इति केचित्पठन्ति नात्र किंचिद्बाधकमित्यभिप्रायेण। अखण्डपरत्वं सहेतुकं निगमयति—**तस्मादिति**; तात्पर्यप्राबल्यात् शङ्कितचोद्यनिस्ताराच्चेत्यर्थः। **एकमेव ब्रह्मेत्य**नेन विशेष्यभेदस्य प्रसङ्ग एवापास्त इत्यभिप्रेतम्। इदमपि वाक्यं नाबुद्धबोधार्थम्, किं तु स्वतःसिद्धपरामर्शेन कल्पितविरोध्याकारमि-

त्यभिप्रायेण **स्वयंज्योतिरि**त्याद्युक्तम् । सत्यत्वादीनामनृतत्वादीनां तद्व्याप्यस्थूलत्वादीनां च निखिलशब्देन संग्रहः । उक्तानभ्युपगमे कारणवाक्यविरोधः स्यादित्याह—**एवमिति**। ननु "यो वेद" इत्युपास्त्यन्वयेन सगुणपरत्वान्मा भूदैकार्थ्यम्; तत्राह—**यतो वेति**। कारणत्वानुवादितटस्थलक्षणवाक्यमिदम् । "सदेव" इत्यादि तु तत्प्राप्त्यै लक्ष्यस्य निर्विशेषत्वव्यक्त्यै च पुनर्गृहीतम् । **जगत्कारणतयोपलक्षितस्य**; शाखयेव चन्द्रस्य दूरे स्थित्वा दर्शितस्येत्यर्थः । कारणवाक्योक्तस्वरूपशोधकस्य तच्छेषतया तदेकार्थत्वं युक्तम्; "यो वेद" इत्येतच्च यच्छब्दान्वितवाक्यस्थतया नोपास्तिपरमिति भावः । "यः सर्वज्ञः सर्ववित्" इत्यारभ्य "तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इति कारणवाक्यान्तरे गुणोक्त्या तदैकार्थ्यं स्यात्; नेत्याह—**तत्रेति**। कारणशोधकवाक्ययोरैकार्थ्यं सिद्धम्; मिथः कारणवाक्यानां किमुतेत्याशयः । कर्तव्ये दर्शितः शाखान्तरनयसिद्धेऽपि समः । तेनैव सर्वेषु गुणपरं किं न स्यादित्यत्रोक्तम्—**सजातीयेत्यादि**। अपच्छेदनीत्या हि निषेधप्राबल्यं स्थापितम् । "परास्य शक्तिः" इति वाक्यविशेषवद्गुणपरतैव किं न स्यात्; मा भूत्तस्य शोधकवाक्यत्वमित्यत्राह—**जगदिति**। **अद्वितीये**त्यादि हेतुपरम् । पूर्ववाक्ये सामान्यतः प्रस्तुतस्य व्यावृत्ततया प्रतिपित्सितस्य "तदेषाभ्युक्ता" इति प्रतिपिपादयिषितत्वात्तस्य चाद्वितीयत्वेन तदन्यस्य गुणस्यावक्तव्यत्वादिति कारणवाक्येषु निर्गुणत्वं न कण्ठोक्तम्, अवधारणयोरन्यथाप्युपपत्तेः । अद्वितीयत्वोक्तिस्तु 'सम्राडद्वितीयः' इतिवत् समनिषेधार्थः स्यादित्यत्राह—**अद्वितीयेति**। अवधारणाभ्यां सजातीयादिनिरासौचित्यात्समनिषेधे सिद्धे परिशेषाद्बुभुत्साक्रमेणात्र गुणनिषेधः प्राप्त इति भावः। गुणपरत्वे शोधकान्तरं च विरुध्येतेत्याह—**अन्यथेति**; निर्गुणशब्दो हि स्थूलत्वादिवत्सत्यत्वादिकमपि निषेधेदिति भावः । ननु सर्वत्र लक्षणवाक्यं स्वार्थं समर्प्यैवान्यद्व्यावर्तयति; तद्वदिहापि स्यादित्यत्राह—**अत इति**। चः समुच्चये; सामानाधिकरण्यसामर्थ्यात् शोधकवाक्यान्तरैकार्थ्याच्चेत्यर्थः । **एतल्लक्षणवाक्यमिति**; अनेन धर्मसमर्पकलक्षणवाक्यान्तरेभ्यो व्यावृत्तिः सूच्यते । **अखण्डैकरसम्**; नित्यनिर्विशेषस्वप्रकाशस्वभावमित्यर्थः ।

## मूलभावप्रकाशिका

**गुणाः प्रतीयन्त इति**; सत्यज्ञानादिवाक्येनापि सत्यत्वज्ञानत्वानन्तत्वादिविशेषविशि

तयैव प्रतीतेर्निर्विशेषप्रतीतिः क्वापि नास्तीत्यर्थः । **एकार्थत्वप्रतीतेरिति** ; समानाधिकरणवाक्येषु विशेषणविशेष्यरूपानेकार्थप्रतीतावेकार्थलक्षणसामानाधिकरण्यभङ्गप्रसङ्ग इत्यर्थः । **देवानांप्रियः** ; मूर्ख इत्यर्थः । तत्र षष्ठ्या अलुग्विधानादेकं पदम् । **विशेषणेति** ; विशेषणभेदेन विशिष्टस्यापि भिन्नत्वान्नार्थैक्यमित्यर्थः । **पर्यायता स्यादिति** ; अन्यूनानतिरिक्तार्थस्यैव पर्यायत्वादिति भावः । इदं चोपलक्षणम्—पदान्तरवैयर्थ्यं च स्यात्, उत्तरत्र "सर्वपदानामर्थवत्त्वमपर्यायत्वं च" इति वक्ष्यमाणत्वात् । **अविशिष्टार्थाभिधायित्वादिति** ; सर्वेषां पदानां विशेष्यस्वरूपमात्राभिधायित्वादित्यर्थः । **एकत्वतात्पर्यनिश्चयादिति**, सामानाधिकरण्यवाक्यत्वेनेनि शेषः । **तत्तत्पदार्थेति** ; सत्यपदमनृतव्यावृत्तिपरम् ; ज्ञानपदं जडव्यावृत्तिपरम् ; अनन्तपदं परिच्छिन्नव्यावृत्तिपरमित्यर्थः । **अर्थवत्त्वम्** ; प्रयोजनवत्त्वम् । **अपर्यायतेति** ; अत्र लक्षणया स्वरूपमात्रपरत्वेऽपि सत्यत्वादिप्रवृत्तिनिमित्तभेदादिति भावः । ननु सत्यपदप्रतिपन्नार्थातिरिक्तस्य ज्ञानपदेन बोधने सामानाधिकरण्यस्याखण्डार्थत्वस्य च हानिः स्यात् ; अबोधने ज्ञानपदवैयर्थ्यमित्यत आह— **एतदुक्तमिति** । **फलतो व्युदस्यत इति** ; अयं भावः—सत्यपदाच्छक्त्या सत्यत्वविशिष्टस्वरूपमुपस्थाप्यते ; ज्ञानपदेन च ज्ञानविशिष्टम् ; अनन्तपदेनानन्तत्वविशिष्टम् । ततस्तु सामानाधिकरण्यनिर्वाहाय स्वरूपमात्रप्रश्नोत्तरनिर्वाहाय च स्वरूपमात्रतात्पर्येऽवगते तन्निर्वाहाय कल्पिततयानृतजडपरिच्छिन्नबुद्धिर्निवर्तनक्षमा भवति, न प्रकारान्तरेणोत्पन्ना स्वरूपमात्रप्रतीतिः । यथा 'शौक्ल्यं कार्ष्ण्याद्व्यावृत्तम्' इत्यत्र कार्ष्ण्यव्यावृत्तेः शौक्ल्यातिरिक्तत्वाभावेन 'कार्ष्ण्याद्व्यावृत्तम्' इत्यस्य शौक्ल्यपदानवगतार्थगमकत्वाभावेऽपि कार्ष्ण्याभेदबुद्धिव्युदासकस्वरूपप्रतीतिजनकतया सार्थक्यम्, एवं सत्यज्ञानानन्तपदानामनृतजडपरिच्छिन्नत्वप्रतीतिव्युदासकस्वरूपप्रतीतिजनकतया सार्थक्यं स्वरूपमात्रविषयकवाक्यार्थप्रतीतिजनकतया सामानाधिकरण्यमखण्डार्थत्वं चोपपद्यते । ननु 'ज्ञानमनन्तम्' इति पदद्वयजन्यवाक्यार्थप्रतीतेः 'सत्यं ज्ञानमनन्तम्' इति पदत्रयजन्यवाक्यार्थप्रतीतेश्च विषयकृतविशेषाभावात् सत्यपदस्यानृतत्वबुद्धिनिरासकतया साफल्यं कथमिति चेत्, उच्यते—विषयकृतविशेषाभावेऽपि कारणकृतविशेषात्तद्व्युदासकत्वोपपत्तेः । दूरस्थजलज्ञानस्य समीपस्थजलज्ञानस्य च विषयकृतभेदाभावेऽपि समीपस्थजलज्ञानस्यैव भूयोऽवयवेन्द्रियसंनिकर्षादिकारणजन्यस्य प्रामाण्यसंशयनिवर्तकत्वे नानुपपत्तिरिति द्रष्टव्यम् । न

**च व्यावृत्तिरिति ;** न च व्यावृत्तेर्ब्रह्मस्वरूपत्वेऽपि तद्वैशिष्ट्यबोधजनकवाक्यस्य संसर्गागोचरप्रमाजनकत्वलक्षणाखण्डार्थत्वस्य भङ्गः स्यादिति वाच्यम्, एकप्रातिपदिकार्थमात्रनिष्ठत्वलक्षणाखण्डार्थत्वस्य ब्रह्मस्वरूपाभिन्नानृतादिव्यावृत्तिवैशिष्ट्यबोधेऽप्यविरोधादित्याशयात्। यद्वा अनृतादिव्यावृत्तेर्ब्रह्मभिन्नत्वं नास्तीति वस्तुस्थित्युपदेशमात्रपरोऽयं ग्रन्थः ; न तु सत्यादिवाक्येऽनृतादिव्यावृत्तिवैशिष्ट्यबोधपरत्वमप्यस्तीत्यत्र तात्पर्यं, येनाखण्डार्थत्वविरोधः स्यादिति द्रष्टव्यम्। ननु सत्यज्ञानादिब्रह्मलक्षणवाक्यानां "यतो वा इमानि" इत्यादिजगत्कारणत्ववादिब्रह्मलक्षणवाक्यान्तरैककण्ठ्याय विशिष्टार्थाभिधायित्वमेवाश्रयणीयमित्याशङ्क्य सत्यादिवाक्यस्य निर्विशेषस्वरूपाभिधायित्व एव लक्षणवाक्यान्तरैककण्ठ्यं, न तु सविशेषाभिधायित्व इत्याह—**एवं वाक्यार्थेति।** ननु "यः सर्वज्ञः सर्ववित्" "यस्य ज्ञानमयं तपः" तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इत्यादिश्रुतेर्भवन्मतेऽपि सर्वज्ञत्वादिविशिष्टं मायाशबलमीश्वररूपमेव ब्रह्मोपादानम्, निर्विशेषकूटस्थस्य मायाशाबल्यं विना सृष्टिक्रियाकर्तृत्वस्य तत्तत्कार्याकारेण विवर्तमानत्वलक्षणोपादानत्वस्य चासंभवात्। अत एव "अन्तस्तद्धर्मोपदेशात्" "सर्वत्र प्रसिद्धोपदेशात्" इत्याद्यधिकरणेषु "सैव-र्क् तत्साम तदुक्थ्यं तद्यजुस्तद्ब्रह्म" "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" इत्यादिश्रुत्युक्तं सर्वोपादानत्वप्रयुक्तं सर्वात्मकत्वं जीवव्यावृत्तमीश्वरलिङ्गमित्युपवर्णितम्। जीवेश्वरानुस्यूतचैतन्यमात्रस्य सर्वोपादानत्वे तु न तज्जीवव्यावृत्तमीश्वरलिङ्गं स्यात्। अतः कारणवाक्यानां विशिष्टपरत्वं सिद्धम्। तन्मध्यपतितम् "एकमेवाद्वितीयम्" इत्यपि वाक्यं तदनुरोध्यर्थपरमेव। ततश्च विशिष्टार्थाभिधायिकारणत्ववादिलक्षणवाक्यान्तरैककण्ठ्यं सत्यज्ञानादिवाक्यस्य निर्विशेषपरत्वे कथं स्यादित्याशङ्क्याह—**यतो वा इमानीत्यादि।** अयं भावः—सत्यं जगत्कारणत्वं विशिष्टनिष्ठमिति, तथापि विशिष्टनिष्ठमेव जगत्कारणत्वं शाखाग्रं चन्द्रमसमिव तदननुगतमण्डलं चैतन्यमुपलक्षयति। अतः कारणवाक्यमपि निर्विशेषस्वरूपलक्षणपरमेव। न च विशिष्टावगत्यर्थमवश्यापेक्षितेन सत्यज्ञानादिस्वरूपलक्षणेनैव सर्वव्यावृत्तलक्ष्यावगतिसंभवाज्जगत्कारणत्वरूपतटस्थलक्षणोपन्यासः किमर्थः ‘प्रकृष्टप्रकाशश्चन्द्रः’ इति स्वरूपलक्षणे कथितेऽपि चन्द्रबुभुत्सोस्तद्दिदृक्षया गगने सर्वतश्चक्षुर्विक्षेपक्लेशो मा भूदिति देशविशेषे चक्षुर्नियमनार्थं ‘शाखाग्रे चन्द्रः’ इति तटस्थलक्षणोपन्यासस्य सार्थक्यमस्तीति वाच्यम् ; प्रकृतेऽपि ब्रह्मशब्दस्य प्रकरणोपपदादिसंको-

चकाभावेन त्रिविधपरिच्छेदपरिपन्थिनिरतिशयबृहत्त्ववाचित्वाद्वस्तुपरिच्छेदराहित्यस्य च वस्त्वन्तरराहित्यपर्यवसन्नत्वात् ब्रह्मशब्दार्थभूतवस्त्वन्तरराहित्यस्य 'यद्रजतमभात् सा शुक्तिः' इतिवदध्यारोपापवादन्यायेन प्रतिपादनाय जगत्कारणत्वरूपलक्षणोपन्यासस्याप्यावश्यकत्वात् । कूटस्थं ब्रह्मैव मायावशेन विवर्तमानतया जगदुपादानमिति प्रतिपादनाभावे जगतो मिथ्यात्वाप्रतीत्या ब्रह्मशब्दार्थभूतवस्तुपरिच्छेदराहित्यासिद्धिप्रसङ्गात् । कारणवाक्यस्यापि परम्परया निर्विशेषपरत्वात् सत्यज्ञानादिवाक्यस्य तदैकार्थ्यं सिध्यति । अत एव हि कारणवाक्यमध्य एव "एकमेवाद्वितीयम्" इति कारणस्य सजातीयविजातीयस्वगतभेदराहित्यं प्रतिपाद्यत इति ।

### श्रीभाष्यम्

ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात् । नैष दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात् । सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसंमतम् । ननु च सर्वपदानां लक्षणा न दृष्टचरी । ततः किम्? वाक्यतात्पर्याविरोधे सत्येकस्यापि न दृष्टा । समभिव्याहृतपदसमुदायस्यैतत्तात्पर्यमिति निश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधायैकस्येव लक्षणा न दोषाय । तथा च शास्त्रस्थैरभ्युपगम्यते । कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते । अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वाल्लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते । कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्यार्थ इति क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव । अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणापि न दोषः । अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम् ।

### श्रुतप्रकाशिका

अथ मुख्यार्थपरित्यागेन लक्षणास्वीकारदोषमुद्घाटयति—ननु चेत्यादिना

**स्वार्थप्रहाणेन ;** स्वार्थो हि विशेषणद्वारकं विशेष्यम् ; तत्प्रहाणेनेत्यर्थः । लक्षणात्वमभ्युपगम्यादोषतां प्रतिजानीते—**नैष दोष इति** । मुख्यार्थत्वमुत्तरत्राभिधास्यते । हेतुमाह—**अभिधानवृत्तेरपीति** । तात्पर्यवृत्तिर्नाम तात्पर्यादागता वृत्तिः ; तत्परत्वरूपा वा । सा चात्र लक्षणावृत्तिर्विवक्षिता । वाक्यतात्पर्यविरोधिमुख्यवृत्तेरपि वाक्यतात्पर्यानुगुणलक्षणावृत्तेर्बलीयस्त्वादित्यर्थः । कस्मिन्नर्थे तात्पर्यम् ? यदनुरोधाय लक्षणास्वीकार इत्यत्राह—**सामानाधिकरण्यस्येति । ऐक्य एव तात्पर्यमिति ;** तात्पर्यनिश्चायिका समानविभक्तिरिति भावः । आनन्दमयाधिकरणे सिद्धान्तिना ह्येतद्वक्ष्यते । **सर्वसंमतम् ;** विशिष्टैक्यवादिभिरन्यैश्च संमतमित्यर्थः । 'गङ्गायां घोषः' इत्यादिषु सर्वपदलक्षणा न दृष्टेति चोदयति—**ननु चेति** । तात्पर्यनिश्चायककतिपयमुख्यवृत्त्या तदनुगुणमन्येषां पदानां लाक्षणिकत्वमाश्रयणीयम् ; सर्वपदलक्षणायां तु तन्न संभवतीत्यभिप्रायः । तात्पर्याविरुद्धपदमुख्यार्थस्वीकारस्तात्पर्यविरुद्धपदलक्षणास्वीकारस्याविरुद्ध इत्याशयेनाह—**ततः किमिति** । ततः किमित्यभिप्रेतं विवृण्वन् प्रतिबन्दीमुखेन विवक्षितार्थं दर्शयित्वा परिहर्तुं विपक्षे बाधगर्भां प्रतिबन्दीमाह—**वाक्यतात्पर्येति** । यद्यविरुद्धपदमुख्यार्थत्वं विरुद्धपदलक्षणाविरोधि, तर्हि 'गङ्गायां मत्स्याः प्रतिवसन्ति' इत्यादिष्वविरोधेनैकस्यापि पदस्य लक्षणानङ्गीकारात् 'गङ्गायां घोषः' इत्यादिष्वप्येकस्यापि पदस्य लक्षणा न स्यादित्यभिप्रायः । 'गङ्गायां मत्स्याः' इति वाक्ये विरोधाभावाल्लक्षणानङ्गीकारः ; 'गङ्गायां घोषः' इत्यत्र विरोधाल्लक्षणा न दोष इति चेत्, तदत्रापि तुल्यमित्याह—**समभिव्याहृतेति** । सर्वपदलक्षणा च 'विषं भुङ्क्ष्व' इत्यादिषु दृष्टेत्यभिप्रायः । **एतत्तात्पर्यमिति निश्चिते सतीति ;** अपवादकरहितसमानविभक्तिनिर्देशो निश्चायक इति भावः । **द्वयोस्त्रयाणामित्यादि ;** अविरोधविरोधावेव मुख्यलक्षणावृत्तिस्वीकारे प्रयोजकौ, न तु पदानामेकत्वद्वित्वादिकमित्यर्थः । न केवलं 'विषं भुङ्क्ष्व' इत्यादिषु लौकिकप्रयोगेष्वेव सर्वपदलक्षणागत्याश्रिता, अन्यैरपि परीक्षकैराश्रितेत्याह—**तथा चेति । तथा ;** सर्वपदलक्षणाया अदोषत्वम् । **अभ्युपगम्यते ;** अभ्युपगमहेतुसद्भावादभ्युपगमः फलित इति भावः । कैः परीक्षकैः केषु वाक्येषु सर्वपदलक्षणाश्रितेत्यत्राह—**कार्यवाक्यार्थेति** । लौकिकवाक्येषु सर्वपदलाक्षणिकत्वमुपपादयति—**अपूर्वकार्य एवेति** । क्रियाकार्यं लाक्षणिकमस्तु ; तत्कथं सर्वपदलक्षणेत्यत्राह—**कार्यान्वितेति** । पदानामन्विताभिधायित्वेन कारकपदाना-

मपूर्वकार्यान्विताभिधायिनां तदन्वित एव मुख्यार्थ इति तदन्वयपरित्यागे लक्षणैवेत्यर्थः । ननु 'गङ्गायां घोषः प्रतिवसति' इत्यादिषु गङ्गापदस्य लाक्षणिकत्वेऽपि तदन्विताभिधायिनां पदान्तराणाममुख्यत्वं न दृष्टमिति चेत्; न, गङ्गापदलक्षितस्य कूलस्य वाक्यार्थत्वाभावात् । इह तु वाक्यस्य प्रधानप्रतिपाद्यभूतकार्यार्थसमर्पकपदस्य लाक्षणिकत्वात्तदन्विताभिधायिनां पदानां लक्षणा स्यादेव । अत एव 'कार्यवाक्यार्थवादिभिः' इत्युक्तम् । ननु "कमलानि निमीलन्ति कुमुदान्युन्मिषन्ति च" इति वाक्यार्थभूतनिमीलनादेर्लाक्षणिकत्वेऽपि तदन्विताभिधायिनां कमलादिपदानां न लाक्षणिकत्वं दृष्टमिति चेत्—अनभिप्रायज्ञश्चोदयति भवान्; सर्वपदानां निमीलनरूपवाक्यार्थपरत्वस्य कैश्चिदपि व्यवस्थापितत्वाभावात् । निमीलनोपस्थापकपदलक्षणायामपि न तदन्विताभिधायिनां लाक्षणिकतापत्तिः । त्वया तु सर्वपदानां कार्यपरत्वाभ्युपगमात्तत्कार्यसमर्पकपदलाक्षणिकत्वे तदन्वितार्थाभिधायिनां लक्षणा प्राप्नोति । तथाहि—कार्यवाक्यार्थवादिना पदानां किं विशिष्टकार्यैकदेशे पदशक्तिर्निश्चीयते? उत विशिष्टस्थायिकार्यैकदेशे? प्रथमे विशिष्टकार्यैकदेशत्वाविशेषात् स्वार्थेषु कारकपदानामिव लिङादेः क्रियाकार्ये मुख्यत्वप्रसङ्गः । द्वितीये विशिष्टस्थायिकार्यैकदेशपरत्वप्रहाणस्य सर्वपदानामविशिष्टत्वात् लिङादेः क्रियाकार्य इव कारकपदानां क्रियाकार्यान्वितपरत्वे लक्षणा स्यादेव । पदानां विशिष्टकार्यैकदेशपरत्वे तुल्येऽपि लिङादेः क्रियाकार्ये लाक्षणिकत्वं कार्यान्वितमात्रे कारकपदानां मुख्यत्वमिति चेत्, यदि कार्यान्वितमात्रे कारकपदानां मुख्यत्वमिष्टं क्रियाकार्ये लिङादेर्लाक्षणिकत्वं कथम्? स्थायिकार्यपरत्वेन वेदप्रयुक्तत्वनिश्चयाल्लक्षणयापि क्रियाकार्यबोधनसंभवादिति चेत्, कारकपदानामपि स्थायिकार्यान्वितपरत्वेन वेदप्रयोगदर्शनात् लक्षणयापि क्रियाकार्यान्वितबोधनोपपत्तेः क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकं स्यात् । ननु गोपदस्य सास्नादिमन्मात्रमुख्यत्वेऽपि प्रमाणान्तरेण खण्डत्वादिविशेषसिद्धिवत् लिङादेः कार्यमात्रपरत्वे कार्यविशेषस्य प्रमाणान्तरेण सिद्ध्यभावादुभयत्रैकशक्तिकल्पनायोगात् शक्तिद्वयकल्पने गौरवाच्च लिङादेरपूर्वकार्ये मुख्यत्वमिति क्रियाकार्यप्रतिपादनं लाक्षणिकम्; अन्यथा शब्दशक्तेः कार्यमात्रविषयत्वात् प्रत्यक्षाद्यविषयत्वाच्च कार्यविशेषो निष्प्रमाणकः स्यादिति चेत्—न; कार्यविशेषस्य प्रामाणिकत्वे तत्र शक्तिकल्पनं, शक्तिकल्पने तस्य प्रामाणिकत्वमित्यन्योन्याश्रयप्रसङ्गात् । किंच यदि कार्यविशेषस्याप्रामाणिकत्वपरिहाराय तत्र शक्तिकल्पनं तर्हि कार-

कपदानां कार्यान्वितमात्रपरत्वे कार्यविशेषान्वयस्य प्रमाणान्तरागोचरत्वादुभयत्र शक्तिकल्पने गौरवाच्च कार्यविशेषान्वये प्रमाणं न स्यादिति तत्परिहाराय कार्यविशेषान्वये कारकपदानां मुख्यत्वमिति क्रियाकार्यान्वितपरत्वं लाक्षणिकं स्यात्। लिङादिसमभिव्याहारबलात्कारकपदानां कार्यविशेषान्वयपरत्वसिद्धिरिति चेत्, तर्हि स्वर्गकामसमभिव्याहारबलाल्लिङादेः कार्यविशेषपरत्वसिद्धिरिति लिङादिः कार्यमात्रपरः स्यात्। तस्माल्लिङादेरपूर्वकार्य एव मुख्यवृत्तत्वेन क्रियाकार्यस्यामुख्यत्वे कारकपदानामपि क्रियाकार्यान्वितपरत्वं लाक्षणिकमित्येवाभ्युपगन्तव्यम्। कारकपदानामन्वयांशे लक्षणा न सर्वत्रेति चेत्, समानाधिकरणवाक्येऽपि पदानां प्रातिपदिकांश एव लक्षणा, न विभक्ताविति तुल्यम्। सर्वपदलक्षणानुपपत्तिपरिहारमुपसंहरति—**अत इति**। **अतः**; सर्वपदलक्षणाया उपपत्तिसिद्धत्वात् लौकिकैः परीक्षकैरप्यङ्गीकृतत्वाच्चेत्यर्थः। "यदप्याहुः" इत्यारभ्य कृतां शास्त्रेण स्वाभिमतार्थसिद्धिमुपसंहरति—**अत इदमेवेति**। **अतः**; निर्विशेषवस्तुनि, तस्यैव पारमार्थ्ये, व्यतिरिक्तस्य मिथ्यात्वे, तस्य दोषपरिकल्पितत्वे, दोषस्य च सदसदनिर्वचनीयत्वे, ज्ञानमात्रनिवर्त्यत्वे चोक्तैरुपपत्तिसहितैः श्रुतिवाक्यैरित्यर्थः। **इदमेवार्थजातम्**; पूर्वोद्दिष्टमेवार्थजातं, न तु सगुणवस्त्वादिकम्। **प्रतिपादयन्तो वेदान्ताः प्रमाणमिति**; वाक्यान्तराणां काल्पनिकार्थपरत्वेन तत्त्वावेदकत्वाभावादुक्तार्थविषयमेव वाक्यजातं तत्त्वे प्रमाणमित्यर्थः।

### भावप्रकाशिका

**मुख्यार्थत्वमुत्तरत्राभिधास्यत इति**; आनन्दमयाधिकरण इति शेषः। **सा चात्र लक्षणावृत्तिर्विवक्षितेति**; इदं तु 'तात्पर्यादागता' इति पक्षे बोध्यम्, लक्षणाबीजस्य तात्पर्यस्यैव लक्षणात्वसंभवात्। **अन्यैश्च संमतमित्यर्थ इति**; "क्तेन च पूजायाम्" इति षष्ठीसमासनिषेधात् भूतक्तान्तेन "कर्तृकरणे कृता बहुलम्" इति तृतीयासमास इति भावः। **तात्पर्याविरुद्धेति**; यत्र क्वचिदिति शेषः। न हि तात्पर्याविरुद्धस्थले मुख्यार्थ स्वीकृत इत्येतावता तात्पर्यविरुद्धस्थलेऽपि मुख्यार्थ एव स्वीकर्तव्य इति निर्बन्धोऽस्तीति भावः। **अभ्युपगमहेतुसद्भावादभ्युपगमः फलित इति**; वस्तुगत्याभ्युपगमाभावेऽप्यकामेनाप्यभ्युपगन्तव्यमिति भावः। भाष्ये—**अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वाल्लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यत इति**; "स्वर्गकामो यजेत" इत्यादौ हि

स्वर्गकामरूपनियोज्यं प्रति क्रिया लिङ्शब्देन कार्यतया बोधयितुमशक्या; कामी हि काम्यादन्यत् काम्याव्यवहितसाधनमेव कार्यतयावैति, न तु व्यवहितसाधनम्। क्रियारूपसाधनं त्वस्थायित्वेन काम्याव्यवहितसाधनत्वाभावान्न कामिनियोज्यान्वययोग्यम्। तस्मात्फलपर्यन्तस्थाय्यपूर्वमेव लिङो वाच्यमिति सिद्धे, लोके क्रियारूपे कार्ये प्रयुज्यमाना लिङ् लाक्षणिक्येव, नानार्थत्वस्यान्याय्यत्वादिति हि प्राभाकरैरभ्युपगम्यत इति भावः। **तदन्विताभिधायिनामिति**; निमीलनपदलाक्षणिकार्थान्विताभिधायिनामित्यर्थः। **तत्कार्यसमर्पकपदलाक्षणिकत्व इति**; लाक्षणिकत्वे प्राप्नुवति तद्धेतुनान्येषामपि लाक्षणिकत्वमित्यर्थः; न तु हेतुहेतुमद्भाव इति भ्रमितव्यम्, तस्याप्रसक्तेः। न हि पदान्तरलाक्षणिकत्वं पदान्तरलाक्षणिकत्वे प्रयोजकम्, अपितु मुख्यार्थासंभव एव। ततश्च क्रियातिरिक्तकार्यान्वितरूपमुख्यार्थासंभवेन क्रियातिरिक्तकार्यप्रतिपादकलिङः क्रियाकार्यप्रतिपादने लक्षणावदितरपदानामपि क्रियातिरिक्तकार्यान्वितरूपमुख्यार्थासंभवेन तदर्थप्रतिपादकानां क्रियान्वितार्थप्रतिपादने लक्षणावश्यंभाव इति भावः। अत एव वक्ष्यति— **विशिष्टकार्यैकदेशपरत्वप्रहाणस्येत्यादिना। किं विशिष्टकार्यैकदेश इति**; कारकविशिष्टं यत्कार्यं तस्यैकदेशो विशेषणं विशेष्यं च, तच्छक्तमित्यर्थः। इदं च कारकपदानां क्रियापदानां च साधारणमिति भावः। **लिङादिः कार्यमात्रपरः स्यादिति**; ननु लोके कार्यत्वाश्रयस्य क्रियास्वरूपस्य प्रकृत्युपात्तत्वात् कार्यत्वमात्र एव लिङादेः शक्तिः; यथा एकवचनादीनामेकत्वादिसंख्यामात्रवाचित्वम्; न तु तदाश्रयवाचित्वम्, तस्य प्रकृत्युपात्तत्वात्। ततश्च लिङादेः कार्यत्वमेवार्थः। ततश्च प्रकृत्युपात्तक्रियायाः प्रत्ययोपात्तकार्यत्वस्य च धर्मधर्मिभावेनान्वय इति लौकिकवाक्यमर्यादा। वेदे तु कार्यत्वाश्रयस्यापूर्वस्यान्यतो लाभासंभवात् कार्यत्वविशिष्टकार्यस्वरूपाभिधायित्वं वक्तव्यम्। ततश्च यदि विशिष्टाभिधायी लिङादिः, ततोऽपूर्वमेवाभिदध्यात्, न क्रियाम्। अथ विशेषणाभिधायी, ततः क्रियागतमेवाभिदध्यात्, नापूर्वगतम्। अतो लोकवेदसाधारणस्यार्थस्यैकस्याभावादुभयत्रापि शक्तिकल्पने गौरवाल्लौकिकपदानुसारेण वैदिकपदस्यामुख्यार्थत्वस्यान्याय्यत्वात् कार्यमेव मुख्योऽर्थः; लोके तु लक्षणया कार्यत्वं प्रतिपाद्यत इत्येवं लिङादेर्लक्षणाया आवश्यकत्वेऽपीतरेषां लौकिकपदानां लक्षणायां हेत्वभावात्। न हि वैदिकस्य लिङादेर्लौकिकलिङादिगतव्युत्पत्तिविरुद्धव्युत्पत्त्यन्तरकल्पनवत् तदतिरिक्तवैदिकपदेषु लौकि-

कपदगतव्युत्पत्तिविरुद्धव्युत्पत्त्यन्तरमस्ति, कार्यान्विताभिधायित्वस्य लिङादिव्यतिरिक्त-लौकिकपदेष्विव लिङादिव्यतिरिक्तवैदिकपदेष्वप्यविशिष्टत्वात् । इयांस्तु विशेषः—लोके क्रियारूपं कार्यं, वेदे तु तदतिरिक्तम् । कार्यान्विताभिधायित्वं तु सर्वसाधारणम् । यदि व्यक्तिभेदमात्रेण व्युत्पत्त्यन्तरं तदा 'गामानय' 'गां बधान' इत्यादीनामपि प्राथमिकव्यु-त्पत्त्यन्तरं कल्पनीयं स्यादिति चेत्, सर्वत्र कार्याभिधाय्येवायं लिङादिशब्दोऽस्तु । स यदा क्रियापरो भवति, तदा तत्स्वरूपस्य प्रकृतित एव प्राप्तत्वाद्विशेषणपरो भवति । तद्यथा—"दण्डी प्रैषानन्वाह" इति विशिष्टाभिधाय्यपि दण्डिशब्दो विशेषणपरो भवति ; नापि लक्षणा । ततश्च कार्यवचनः शब्दो यदा क्रियां प्रयुङ्क्ते, तदा कार्यत्वरूपविशेषणपरत्वं श्रतिवृत्त एव सन् प्रतिपद्यते । नैतावता लक्षणा भवतीत्युभयत्रापि मुख्यत्वमेव । यस्तु वदति—नन्वेवं सति कार्यसामान्यवाचित्वे कामाधिकारेऽपि समानपदोपात्तो धात्वर्थ एव कार्यतयाभिधेयः स्यादित्यपूर्वाभिधानमुत्सीदेत् ; तेन यदैव कामिनियोज्यसंबन्धादपूर्वाभि-धायित्वमवगतं, तदैव तन्निर्वाहार्थं क्रियालाक्षणिकत्वमध्यवसितमिति ; स एवमनुशासि-तव्यः—हन्त तर्हि किं नाश्रौषीः 'यो हि पाषाणान् भक्षयति, ईषत्करास्तस्य मुद्गशष्कुल्यः' इति ; यो हि नियोज्यसंबन्धो लिङ्शब्दं कार्यत्ववाचिनमवगतमपि तत उद्धृत्यापूर्वं नयति स कथं कार्यसामान्यवाचिनमपूर्वं नेतुं न क्षमते । तस्मात्कर्तव्यतासामान्यवाची सन्नपि यत्र फलकामस्य नियोज्यत्वं तत्र तद्बलेनापूर्वमभिधत्ते ; अन्यत्र समानपदोपादानात् क्रियाम् । अतः कार्यसामान्यवाचित्वाल्लिङ्शब्दस्यापूर्वकार्ययोः साधारणत्वान्न क्वापि लक्षणा समाश्रयणीया स्यात् । एवमपि लौकिकवाक्ये लक्षणां लिङादेरभ्युपगच्छतः तदितरपदानां कुतो लक्षणा नाभ्युपगम्येति सर्वपदलक्षणावादिनां मृषावादिनामाशयः । **उक्तैरुपपत्तिसहितैः श्रुतिवाक्यैरिति** ; अत्र केचित्—अत इत्यस्य 'उक्तेभ्यो हेतुभ्यः' इत्युपसंहाररूपत्वमेव । अन्यथा 'उपपत्तिसहितवाक्यैरिदमेवार्थजातं प्रतिपादयन्ति वेदान्ताः' इत्यन्वयस्य क्लिष्टत्वं स्यात्, वाक्यानां वेदान्तानां च भेदाभावादिति वदन्ति ।

## श्रुतप्रदीपिका

लक्षणेति चोदयति—**ननु चेति** । **स्वार्थः** ; विशेषणद्वारकं विशेष्यम् । तदभावे तदभिधेयमित्यर्थः । लक्षणामभ्युपगम्य परिहरति—**नैष इति** । कुत इत्यत्राह—

**अनभिधानेति** । वाक्यतात्पर्यविरोधिमुख्यवृत्तेरपि तदनुरोधिलक्षणावृत्तेर्बलीयस्त्वादित्यर्थः । कस्मिंस्तात्पर्यम्? यदनुरोधाय लक्षणेत्यत्राह——**सामानाधिकरण्यस्येति** । तात्पर्यनिश्चायकाभावात् सर्वपदलक्षणा न युक्तेति चोदयति—**ननु चेति** । प्रतिवक्ति—**ततः किमिति** । अविरुद्धपदमुख्यार्थत्वदर्शनं विरुद्धपदलक्षणाया न विरुद्धमिति भावः । तद्विवृण्वन् विपक्षे बाधगर्भां प्रतिबन्दीमभिप्रेत्याह—**वाक्येति** । 'गङ्गायां मत्स्याः' इत्यत्र लक्षणात्यागात् 'गङ्गायां घोषः' इत्यत्रापि सा किं न स्यादिति भावः । ततः किमित्यत्राह—**समभीति** । विरोधाविरोधावेव प्रयोजकौ, न तु पदैकत्वद्वित्वादिकमित्यर्थः । 'विषं भुङ्क्ष्व' इत्यादौ सा सार्वत्रिकी च दृष्टा; योग्यतादिना तत्र तात्पर्यनिश्चयश्चेदिहापि समानविभक्त्या स इति भावः । तथा परीक्षकैरभ्युपगतमित्याह——**तथा चेति; अभ्युपगम्यत इति**; अभ्युपगमः फलित इत्यर्थः । कैः केष्वित्यत्राह——**कार्येति** । कुत इत्यत्राह—**अपूर्वेति** । ततः किं सर्वपदलक्षणाया इत्यत्राह—**कार्यान्वितेति** । ननु गङ्गापदलक्षणायामपि न घोषप्रतिभासो लाक्षणिक इति चेत्—न, तत्र लक्ष्याप्राधान्यात् । प्रधानभूतवाक्यार्थलाक्षणिकत्वे हि तदन्विताभिधायिनां लक्षणा स्यात् । न च "कमलानि निमीलन्ति" इतिवल्लक्ष्यप्राधान्येऽपि पदान्तरमुख्यार्थता, सर्वपदानां निमीलनपरत्वव्यवस्थित्यभावात् । "गवा यजेत" इत्यादौ तु कृत्स्नपदसमुदायस्यापूर्वकार्ये मुख्यत्वोपगमाच्च । कार्यान्वितमात्रे पदान्तराणां मुख्यत्वं चेत् कार्यमात्रे लिङादयोऽपि मुख्याः स्युः । विशिष्टकार्यैकदेशपरत्वाविशेषाद्विशिष्टस्थायिकार्यैकदेशे पदशक्तिश्चेत्, लिङादेः क्रियाकार्य इव पदान्तराणामपि क्रियाकार्यान्विते लक्षणा स्यात्, विशिष्टस्थायिकार्यैकदेशपरत्वप्रहाणाविशेषात् । लिङादिशक्तेः कार्यमात्रविषयत्वे तद्विशेषे शब्दशक्त्यभावान्मानान्तरागोचरत्वाच्च कार्यविशेषस्याप्रामाणिकत्वं चेत्, एतत्कार्यविशेषान्वितेऽपि तुल्यम् । समभिव्याहारात् तत्सिद्धिश्चेत्, स्वर्गकामपदसमभिव्याहारात् कार्यविशेषसिद्धिरित्येकस्यामुख्यत्वेऽन्येषां च तथात्वमवर्जनीयमिति भावः । लक्षणाया दोषत्वपरिहारमुपसंहरति—**अत इति** । परमप्रकृतमुपसंहरति—**अत इति** । **अर्थजातम्**; चिन्मात्रस्य सत्यत्वम्, अन्यस्य मिथ्यात्वं, दोषमूलत्वं, दोषस्य च स्वरूपं, तस्य ज्ञाननिवर्त्यत्वमित्यादि ।

### तत्त्वटीका

"ब्रह्मविदाप्नोति परम्" इत्यनन्यथासिद्धफलकरणदर्शनकल्पितविधिशेषतया विशिष्टविधितात्पर्ये संभवति न लक्षणा न्याय्येत्यभिप्रायेण चोदयति—**ननु चेति**। यद्यपि वाच्ये विशेष्यांशो न त्यक्तः, तथापि द्वारत्यागान्न तस्य शक्तिगोचरत्वमिति भावः। अत्र वाच्यबहिर्भूते वृत्तिस्तावन्नास्ति; वाच्यैकदेशे प्रधानभूते विशेष्ये वृत्तिस्तु न लक्षणा; इह जहदजहल्लक्षणा वा स्यात्; सा चात्र न दोषः; प्रत्युत विध्यनर्हवाक्यार्थज्ञानानुवादितयान्यथासिद्धे वाक्ये विधिक्लृप्त्ययोगात्तदर्थमुख्यासंभवे लक्षणानुगुणैवेति दर्शयितुमाह—**नैष दोष इति**। तात्पर्यविषये शब्दस्य प्राधान्यतः प्रामाण्यात्तद्विरोधे सर्वत्र मुख्यवृत्तिदौर्बल्याल्लक्षणाप्राबल्यमाह—**अभिधानेति**। स्वतःसिद्धस्वरूपे कथं शब्दतात्पर्यम्? अतो गुणविवक्षा स्यादित्यत्र तद्विरुद्धं प्रागुक्तं तात्पर्यं व्यनक्ति—**सामानाधिकरण्यस्येति**। स्वप्रकाशस्यापि निमित्तभेदवदनेकपदपरामृष्टस्यापि विशेष्यस्यान्यसंसर्गासहमैक्यमिह समानविभक्तिवेद्यम्; तच्च कल्पितभेदनिवृत्त्यर्थम्; प्रकृतिभिस्तु कल्पितान्याकारनिवृत्तिः प्राग्दर्शितेत्युक्तम्। **सर्वसंमतम्**; त्वयापि दुस्त्यजमिति यावत्। त्वदुक्तप्रक्रिययात्र तात्पर्यस्थापकाभावाल्लक्षणैव न स्यादित्यभिप्रायेण पुनश्चोदयति—**ननु चेति**। मुख्येन केनचिदंशेन क्वचित्तात्पर्यसिद्धावंशान्तरे ह्युपचारो दृष्ट इत्याशयः। अविरुद्धेऽन्यत्रादर्शनमकिंचित्करमित्यभिप्रायेण प्रतिवक्ति—**ततः किमिति** अभिप्रेतं विवृण्वन् प्रतिबन्दीं च सूचयति—**वाक्येति**। एकपदलक्षणाया अप्यन्यत्रादर्शनमस्ति; अतस्तस्या अपि त्यागप्रसङ्ग इति भावः। तात्पर्यमुक्यार्थबाधयोरेव प्रयोजकत्वं, पदैकत्वद्वित्वादेरप्रयोजकत्वं, द्वित्रादिपदप्रतिबन्दीं चाभिप्रेत्याह—**समभिव्याहृतेति**। एकद्व्यादिपदलक्षणावत् सर्वपदलक्षणापि 'विषं भुङ्क्ष्व' इत्यत्र दृष्टेत्यभिप्राये **सर्वेषां वे**त्युक्तम्। इदं हि पदद्वयं निषिद्धभोज्यं तद्भुक्तेरकर्तव्यत्वं च लक्षयति। तत्र प्रत्ययितोक्तौ युक्तायुक्तविमर्शात्तात्पर्यनिश्चयः; इह तु समानविभक्तिसामर्थ्यादबुभुत्सितबोधनानुपपत्त्या चेति विशेषः। स्वोक्तं सर्वपरीक्षकसंमतमित्याह—**तथा चेति**। चोऽवधारणे। यद्वा ब्रह्मप्रतिपादनप्रद्विष्टैरप्यभ्युपगतमित्युच्यते। तैरनुक्तमपि तदुक्तिसामर्थ्यादभ्युपगमनीयमिति भावः। कैरियं कुत्राभ्युपगतेत्यत्राह—**कार्येति**। अत्र तदुक्तं विवक्षितस्य द्वारं तावदाह—**अपूर्वेति**; वृद्धव्यवहारोपक्रान्ता वेदावसाना कार्यव्युत्पत्तिरे

प्रकारेण तैः स्थापितेत्यर्थः । अपूर्वमेव कार्यमपूर्वकार्यम् । क्रियाकार्यमुखेनापूर्वकार्यव्युत्पत्तिः । एवं तदुक्तनयेन सर्वपदलक्षणायाः फलितत्वमाह—**कार्यान्वितेति** । अयं भावः—'गङ्गायां घोषः' इत्यादौ लक्ष्यस्य प्राधान्याभावात्तदन्विताभिधायिनां न लक्षणा । एवं "कमलानि निमीलन्ति" इत्यादिषु प्रधानेऽपि निमीलने सर्वशब्दानां तत्परत्वव्युत्पत्त्यभावात्पदान्तराणां तदनुसारो न युक्तः । यद्यपि गङ्गाद्यप्रधानपदलाक्षणिकतया घोषादिपदेष्विव "कमलानि निमीलन्ति" इत्यत्र 'निमीलन्ति' इत्यवान्तरपदलक्षणया पद्मादिपदेषु लक्षणा न स्यात्, तथापि लोकोपक्रमवेदावसानकार्यप्रधानव्युत्पत्तिबलादन्यान्वितमात्रे क्रियाकार्यान्विते कार्यमात्रान्विते वा पदान्तराणां शक्तिकल्पनानभ्युपगमात्तेषामपूर्वकार्यान्वित एव शक्तेर्लौकिकवाक्येषु सर्वेषु तदभावात्सर्वपदलक्षणा स्वीकर्तव्येति । न चान्यान्वितमात्रे पदान्तरशक्तिः, कार्यपरतयैव व्युत्पत्त्यङ्गीकारात् । नापि कार्यमात्रान्विते शक्तिः स्यात्, तथा सति लिङादेरपि कार्यमात्रे मुख्यत्वप्रसङ्गात् । न च तद्युक्तम्, अपूर्वाख्यविशेषे लिङादिशक्तेरसिद्धौ मानान्तराभावाच्च तस्याप्रामाणिकत्वापातात् । एवं कार्यमात्रान्विते शक्तानां पदान्तराणां वेदे कार्यविशेषान्वयोऽपि न सिध्येत् । स्वर्गकामपदसमभिव्याहारात्सिद्धावपूर्वमपि तथा सिध्येदिति न तद्वाच्यत्वादिक्लृप्तिः स्यात् । तस्माल्लौकिकवाक्येषु विशिष्टापूर्वस्थायिकार्यपरत्वाभावाल्लिङादेरमुख्यार्थत्वमित्युक्तोपपत्त्या सर्वपदलक्षणाया अदोषत्वं निर्बाधत्वाभिप्रायेण निगमयति—**अत इति**; युक्तिबलात्परीक्षकैरभ्युपगतत्वाच्चेत्यर्थः । एवं प्रत्यक्षस्य संभावितदोषत्वात् शास्त्रस्य निर्दोषत्वात्तद्विरुद्धार्थत्वाच्च परमप्रकृतं शास्त्रप्राबल्यमुपसंहरति—**अत इति** । **इदमेव**; प्रत्यक्षादिविरुद्धमेवेत्यर्थः । भेदपरत्वेऽनुवादित्वं स्यादिति चाभिप्रेतम् । **इदमर्थजातम्**; प्रमाणागोचरस्वप्रकाशनिर्विशेषसत्यत्वतदन्यमिथ्यात्वानिर्वचनीयाविद्यास्वरूपतन्मूलतिरोधानाध्यासधीनिवर्त्यत्वादिकम् ।

## मूलभावप्रकाशिका

**तात्पर्यवृत्तेरिति** ; तात्पर्यानुरोधिलक्षणावृत्तेस्तदननुरोधिमुख्यवृत्त्यपेक्षया बलीयस्त्वात्; "तात्पर्याद्धि वृत्तिः, न वृत्त्यनुरोधात्तात्पर्यम्" इति प्रवादादिति भावः । **तदविरोधायेति** ; तात्पर्याविरोधायेत्यर्थः । **तथा च शास्त्रस्थैरिति** ; मीमांसकैः "वायुर्वै क्षेपिष्ठा देवता" इत्यादिवाक्ये प्राशस्त्यलक्षणाया अभ्युपेतत्वादिति भावः ।

ननु लिङः क्रियातिरिक्तवाचित्वादस्तु क्रियाकार्यप्रतिपादिकाया लिङो लाक्षणिकत्वम्; पदान्तराणां लाक्षणिकत्वं कुतस्त्यमित्यत्राह—**कार्यान्वितेति**। ननु लोके कार्यत्वाश्रयस्य क्रियायाः प्रत्ययोपात्तकार्यत्वस्य च धर्मधर्मिभावेनान्वय इति लौकिकमर्यादा; वेदे तु कार्यत्वाश्रयस्यापूर्वस्यान्यतो लाभासंभवात् कार्यत्वविशिष्टकार्यस्वरूपाभिधायित्वं वक्तव्यम्। ततश्च यदि विशिष्टाभिधायी लिङादिस्ततोऽपूर्वमेवाभिदध्यात्, न क्रियाम्। अथ विशेषणाभिधायी ततः क्रियागतमेवाभिदध्यात्, नापूर्वगतम्। अतो लोकवेदसाधारणस्यार्थस्यैकस्याभावादुभयत्रापि शक्तिकल्पनागौरवात् लौकिकपदानुसारेण वैदिकपदस्यामुख्यार्थत्वस्यान्याय्यत्वात् कार्यमेव मुख्यार्थः; लोके तु लक्षणया कार्यत्वं प्रतिपाद्यत इत्येवं लिङादेर्लक्षणाया आवश्यकत्वेऽपीतरेषां लौकिकपदानां लक्षणायां हेत्वभावः। न हि वैदिकलिङादेर्लौकिकलिङादिगतव्युत्पत्तिविरुद्धव्युत्पत्त्यन्तरकल्पनवत् तदतिरिक्तवैदिकपदेषु लौकिकपदगतव्युत्पत्तिविरुद्धव्युत्पत्त्यन्तरमस्ति, कार्यान्विताभिधायित्वस्य लिङादिव्यतिरिक्तलौकिकपदेष्विव लिङादिव्यतिरिक्तवैदिकेष्वप्यविशिष्टत्वात्। इयांस्तु विशेषः—लोके क्रियानुरूपं कार्यम्, वैदिके तु तदतिरिक्तम्। कार्यान्विताभिधायित्वं तु सर्वसाधारणम्। यदि व्यक्तिभेदमात्रेण व्युत्पत्त्यन्तरं तदा 'गामानय' 'गां बधान' इत्यादीनामपि प्राथमिकव्युत्पत्तिविरुद्धव्युत्पत्त्यन्तरं परिकल्पनीयं स्यादिति चेत्; उच्यते—सर्वत्र कार्याभिधाय्येव लिङ्शब्दोऽस्तु; स यदा क्रियापरो भवति, तदा तद्रूपस्य प्रकृतित एव प्राप्तत्वात् विशेषणपरो भवति। तद्यथा—"दण्डी प्रैषा नन्वाह" इति विशिष्टाभिधाय्यपि मुख्यमेव। यस्तु वदति—नन्वेवं सति कार्यसामान्यवाचित्वे कामाधिकारेऽपि समानपदोपात्तधात्वर्थ एव कार्यतयाभिधेयः स्यादित्यपूर्वाभिधानमुत्सीदेत्; तेन यदैव कामिनियोज्यसंबन्धादपूर्वाभिधायित्वमवगतं तदैव तन्निर्वाहार्थं क्रियालाक्षणिकत्वमध्यवसितमिति; स एवमनुशासितव्यः—हन्त तर्हि किं नाश्रौषीः 'यो हि पाषाणान् भक्षयति, ईषत्करास्तस्य मुद्गशष्कुलयः' इति। यो हि नियोज्यसंबन्धो लिङ्शब्दं कार्यत्ववाचिनमवगतमपि तत उद्धृत्यापूर्वं नयति, स कथं कार्यसामान्यवाचिनमपूर्वं नेतुं न क्षमते। तस्मात् कर्तव्यतासामान्यवाची सन्नपि यत्र फलकामस्य नियोज्यत्वं तत्र तत्फलेनापूर्वमभिधत्ते। अन्यत्र समानपदोपादानात्क्रियाम्। अतः कार्यसामान्यवाचित्वात् लिङ्शब्दस्यापूर्वक्रिययोः साधारणत्वान्न क्वापि लक्षणा समाश्रयणीया स्यात्। एवमपि

लौकिकवाक्ये लक्षणां लिङादेरभ्युपगच्छता तदितरपदानां कुतो न लक्षणाभ्युपगम्येति सर्वपदलक्षणावादिनां मृषावादिनामाशयः ।

श्रीभाष्यम्

प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम् । सति च विरोधे बलीयस्त्वं वक्तव्यम् । विरोध एव न दृश्यते, निर्विशेषसन्मात्रब्रह्मग्राहित्वात्प्रत्यक्षस्य । ननु च 'घटोऽस्ति' 'पटोऽस्ति' इति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते ? विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्—सत्यम्; तथैवात्र विविच्यते । कथम् ? 'घटोऽस्ति' इत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते । न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं संभवति, तयोर्भिन्नकालज्ञानफलत्वात्; प्रत्यक्षज्ञानस्य चैकक्षणवर्तित्वात् । तत्र स्वरूपं वा भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम् । भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते । अतो भ्रान्तिमूल एव भेदव्यवहारः ।

श्रुतप्रकाशिका

पूर्वं प्रत्यक्षविरोधे शास्त्रप्राबल्यं शास्त्रे च भेदावलम्बिनां बाध्यत्वं चोक्तम् । अथ प्रत्यक्षविरोधो नास्तीत्युपपादयितुं प्रक्रमते—**प्रत्यक्षादीति** । शास्त्रप्रत्यक्षविरोधे शास्त्रप्राबल्यप्रतिपादकग्रन्थेन वक्ष्यमाणार्थसंगतिरिति भावः । चः समुच्चये । अविरोधपक्षस्य च बुद्धिस्थत्वात् तस्य चान्वारुह्योक्तस्य च समुच्चयः; विरोधाभ्युपगमेऽपीत्यर्थः । **सति** चेत्यत्र चशब्दो हिशब्दार्थः । अविरोधं प्रतिजानीते—**विरोध एव न दृश्यत** इति । हेतुमाह—**निर्विशेषेति** । विषयविषयिभावरूपभेदव्यावृत्त्यर्थं **सन्मात्रब्रह्मे**त्युक्तम् । प्रतीतिविरोधेन चोदयति—**ननु चेति** । विरोधमुपपादयति—**घटोऽस्तीत्यादिना** । न हि केवलम् 'अस्ति' इति प्रतीतिः, अपितु 'घटोऽस्ति' 'पटोऽस्ति' इत्येव हि प्रतीतिः

रित्यर्थः। प्रतीतेर्भ्रान्तिरूपत्वसंभवात्तद्युदासार्थं व्यवहारविरोधमाह—**विलक्षणेति**। परिहरति—**सत्यमिति**। 'घटोऽस्ति' 'पटोऽस्ति' इत्यत्रास्तिव्यवहारस्यैकरूपत्वात्तावन्मात्रे भेदावभासमात्रे चाङ्गीकारः; भेदव्यवहारस्य प्रत्यक्षमूलत्वे भेदावभासस्य प्रत्यक्षत्वे चानङ्गीकारश्च सूच्यते **सत्य**मित्यर्धाङ्गीकारेण। **तथैव**; यथा सन्मात्रस्यैव प्रत्यक्षत्वमेकव्यवहारहेतुतैव च स्यात् तथैवेत्यर्थः। **अत्र**; घटादिविषयस्वरूपविषयव्यवहारसमुदाये। **विविच्यते**; यथा—'इदं रजतम्' इत्यत्र इदंव्यवहारस्य प्रत्यक्षमूलत्वं रजतव्यवहारस्य भ्रान्तिमूलत्वं तथा विविच्यत इत्यर्थः। तत्रेदमंशरजतांशव्यवहारयोरबाधितत्वबाधितत्वाभ्यां विवेकः; अत्र स्वरूपविषयभेदविषयव्यवहारयोरुभयोरप्यबाधितत्वाविशेषे कथं विवेक इत्यभिप्रायेणाह—**कथमिति**। यौक्तिकबाधोऽस्तीत्याशयेनाह—**घटोऽस्तीति**। किमस्तित्वं भेदश्चैकः पदार्थः, उत द्वौ? द्वित्वे च किं तदुभयव्यवहारयोः प्रत्यक्षमूलत्वम्, उतान्यतरस्य? द्वयोरपि प्रत्यक्षमूलत्वे प्रत्यक्षं किं युगपदुभयग्राहि, उत क्रमेण? इति विकल्पान् हृदि निधाय, अस्तित्वलक्षणस्वरूपतद्भेदयोरैक्यं न संभवति, भेदग्रहणस्य स्वरूपग्रहणप्रतियोगिस्मरणसापेक्षत्वात् सन्मात्रग्रहणस्य तन्निरपेक्षत्वाच्चेत्यभिप्रयन्नाह—**अस्तित्वं तद्भेदश्चेति**। 'भिन्नः' इति व्यवहार इव 'घटः' इत्यसाधारणव्यवहारेऽपि घटस्य पटाद्व्यावृत्ततया प्रतीतौ प्रतियोगिसापेक्षत्वात् घटव्यवहार एव भेदव्यवहार इत्युच्यते। द्वित्वे च द्वयोरपि प्रत्यक्षमूलत्वं नेत्याह—**न च द्वयोरपीति**। **द्वयोरपि व्यवहारयोः**; स्वरूपविषयभेदविषयव्यवहारयोः। प्रत्यक्षं युगपद्वा क्रमेण वा मूलं स्यादिति विकल्पमभिप्रेत्य यौगपद्यं दूषयति—**तयोरिति**। प्रतियोग्यपेक्षानपेक्षारूपवैषम्यादित्यभिप्रेतम्। क्रमपक्षं प्रतिक्षिपति—**प्रत्यक्षज्ञानस्य चेति**। चः समुच्चये। एवं युगपत् क्रमेण चोभयव्यवहारस्य प्रत्यक्षमूलत्वमनुपपन्नमिति तयोरन्यतरस्य प्रत्यक्षविषयत्वमाह—**तत्रेति**। भेदः प्रत्यक्षविषयः स्यादित्यत्राह—**भेदेति**। अस्तित्वभेदयोरैक्यायोगे तद्व्यवहारयोर्भिन्नकालज्ञानफलत्वे च य एव हेतुस्तेनैवेत्येवकाराभिप्रायः। प्रत्यक्षस्य स्वरूपमात्रविषयत्वे कथं भेदव्यवहारसंभव इत्यत्राह—**अतो भ्रान्तीति**। तथा च संवित्सिद्धौ—

"यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः।
ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः॥"

इति। व्यवच्छेदो भेदग्रहणम्। विधानं स्वरूपग्रहणम्।

## भावप्रकाशिका

अव्यवहितं वृत्तं परित्यज्य व्यवहितवृत्तकीर्तनमनुचितमित्याशङ्क्याह—**शास्त्रप्रत्यक्षविरोध इति**। संगतिप्रदर्शनार्थं व्यवहितकीर्तनमिति भावः। **विरोधाभ्युपगमेऽपीत्यर्थ इति**; न च चशब्दस्याप्यर्थत्वे पूर्वोक्तसमुच्चयार्थत्वविरोध इति वाच्यम्, अपेरपि समुच्चयार्थत्वसंभवेन विरोधाभावात्। ननु 'विरोध एव न दृश्यते' इत्ययुक्तम्, विरोधप्रतिपत्तेर्दुरपह्नवत्वात् हेतुवैयर्थ्याच्चेत्याशङ्क्याह—**अविरोधं प्रतिजानीत इति**। 'निर्विशेषसन्मात्रग्राहित्वात्' इत्यस्य व्यधिकरणतया अहेतुत्वशङ्कां निवर्तयति—**हेतुमाहेति**। प्रत्यक्षं न शास्त्रविरुद्धं निर्विशेषसन्मात्रग्राहित्वादिति भाष्याभिप्राय इति भावः। **प्रतीतेर्भ्रान्तिरूपत्वसंभवादिति**; सन्मात्रग्राहिप्रत्यक्षे विलक्षणविषयकत्वप्रतीतेरित्यर्थः; न तु भेदप्रतीतेरित्यर्थः, तथाहि सति सन्मात्रग्राहिप्रत्यक्षवादविरोधापत्तेः, तच्छङ्काया विलक्षणेत्यादिभाष्यग्रन्थादनिवृत्तेश्च, भ्रान्तेरपि विलक्षणव्यवहारहेतुत्वात्। 'तयोर्भिन्नकालज्ञानफलत्वात् प्रत्यक्षज्ञानस्य चैकक्षणवृत्तित्वात्' इति भाष्यस्यायमर्थः—प्रत्यक्षज्ञानं किं युगपदेव व्यवहारद्वयमुत्पादयति, उत क्रमेण? नाद्य इत्याह—**तयोरिति**। भिन्नकालं यत् ज्ञानं प्रतियोगिस्मरणादिरूपं तत्फलत्वादित्यर्थः। एकस्मिन् काले प्रतियोगिज्ञानसापेक्षनिरपेक्षयोर्द्वयोर्व्यवहारयोरुत्पत्त्यसंभवादित्यर्थः। द्वितीयं दूषयति—**प्रत्यक्षज्ञानस्य चेति**। न च पश्चादुत्पन्नप्रत्यक्षज्ञानान्तरेण भेदव्यवहारोऽस्त्विति वाच्यम्, पश्चादुत्पन्नस्य प्रत्यक्षत्वे प्रमाणाभावादिति भावः। **किं युगपदुभयग्राहीति**; युगपद्व्यवहारद्वयोत्पादकमित्यर्थः, भाष्यानुरोधात् 'युगपद्वा क्रमेण वा मूलं स्यात्' इत्युत्तरग्रन्थानुगुण्याच्चेति द्रष्टव्यम्। **असाधारणव्यवहारेऽपि**; घटस्य पटाद्व्यावृत्ततया प्रतीतावपेक्षितायामिति शेषः। **प्रत्यक्षस्य स्वरूपमात्रविषयत्वे कथं भेदव्यवहारसंभव इति**; **स्वरूपमात्रविषयत्वे**; घटादिस्वरूपाविषयत्वे कथं घटादिरूपभेदव्यवहारसंभव इत्यर्थः।

## श्रुतप्रदीपिका

निर्विशेषचिन्मात्रसत्यत्वे विरोधमभ्युपगम्य प्रत्यक्षात् शास्त्रस्य बलीयस्त्वमुक्तं प्राक्; स च नास्तीत्याह—**प्रत्यक्षेति**। **सति च**; सति हीत्यर्थः। कथमविरोध इत्यत्राह—**निर्विशेषेति**। निर्विशेषपदं सजातीयविजातीयभेदनिषेधपरम्। सन्मात्रपदं स्वगतभेदाभावपरम्; "प्रत्यस्तमितभेदं, सत्तामात्रम्" इति पदद्वयवत्। प्रती-

तिविरोधेन चोदयति—**ननु चेति** । **घटोऽस्तीति** ; न केवलम् 'अस्ति' इतीति भावः । तस्य भ्रान्तित्वव्युदासाय व्यवहारविरोधमाह—**विलक्षणेति** । एकव्यवहारहेतुत्वमभ्युपगतं प्रत्यक्षस्य, प्रत्यक्षमूलत्वं तु भेदव्यवहारस्य नेत्यभिप्रायेण **सत्य**मित्युक्तिः । द्वयोरपि प्रत्यक्षमूलत्वं दृश्यत इत्यत्राह—**तथेति** । **अत्र** ; स्वरूपभेदविषयव्यवहारसमुदाये । **तथा** ; यथैकव्यवहारस्यैव प्रत्यक्षमूलता तथेत्यर्थः । **विविच्यत इति** ; 'इदं रजतम्' इति व्यवहारे यथेदमंशस्यैव प्रत्यक्षमूलत्वं तथेत्यर्थः । बाधाबाधाभ्यां तत्र तथात्वम्, इह तु न बाधो दृश्यत इत्यभिप्रायेण चोदयति—**कथमिति** । एतत्परिहरन् 'नेदं रजतम्' इतिवत् प्रत्यक्षबाधाभावेऽपि ज्वालैक्यादाविवात्रापि यौक्तिकबाधोऽस्तीति दर्शयति—**घटोऽस्तीत्यादिना** । तत्र चाधिकासु युक्तिषु तावन्मानानुपपत्तिरुच्यते ; सा चैवम्—'घटोऽस्ति' इत्यत्रास्तित्वं तद्भेदश्च किमेकः पदार्थः, उत द्वौ ? द्वित्वे च किं प्रत्यक्षमुभयग्राहि, उतान्यतरग्राहि ? उभयग्रहश्च किं युगपत्, क्रमेण वा ? इति विकल्पान् हृदि कृत्वा न तावत्स्वरूपभेदयोरैक्यं, तयोः प्रतियोगिनिरपेक्षत्वसापेक्षत्वाभ्यामित्यभिप्रयन्नाह—**घटोऽस्तीत्यत्रेति** । द्वित्वे च प्रत्यक्षस्योभयग्राहित्वं नेत्याह—**न च द्वयोरिति** । अत्र युगपद्ग्रहासंभवे हेतुमाह—**तयोरिति** । भिन्नकालत्वं च धियोः प्रतियोग्यपेक्षानपेक्षाभ्यामिति भावः । क्रमग्रहासंभवे हेतुमाह—**प्रत्यक्षेति** । अन्यतरग्राहित्वे किमन्यतरदस्तित्वलक्षणं स्वरूपं भेदो वेति विकल्पं दर्शयति—**तत्रेति** । **तत्र** ; उभयग्राहित्वेऽनुपपन्ने । **तत्र** ; तयोः स्वरूपभेदयोरिति निर्धारणसप्तमी वा । भेदग्रहायोगमुखेन प्रत्यक्षस्य स्वरूपमात्रविषयत्वं परिशिनष्टि—**भेदेति** । ऐक्ययौगपद्यासंभवहेतोरेवेत्येवकाराभिप्रायः । एवमेवेदमनुभाषितं संवित्सिद्धौ यामुनाचार्यैः—

" यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः ।
ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः ॥ "

इति । तर्हि कथं भेदव्यवहार इत्यत्राह—**अत इति** ।

**तत्त्वटीका**

पक्षान्तरमथादित्सुः शास्त्रप्राबल्यमीरितम् ।
प्रत्यक्षस्य विरुद्धत्वमन्वारुह्येति भाषते ॥ ३४१ ॥

**प्रत्यक्षादीति** । चोऽप्यर्थः । तत्त्वविद्भ्यो विषयविरोधाभावाद्बलीयस्त्वं न वक्तव्यमित्यभिप्रायेणाह—**सतीति** । चोऽवधारणे । अत्र बलाबलविचारस्य मूलमेव छिन्नमित्याह—**विरोध इति** । विरोधादर्शनं द्वयोरपि स्वारसिक्या परस्पराविरुद्धभेद-विषयतया स्यादित्यत्राह—**निर्विशेषेति** ; प्रत्यक्षसिद्धं सदेव निष्कृष्य शास्त्रे ब्रह्मेत्युच्यत इति भावः । असिद्धोऽयं हेतुः, सर्वलोकोपलम्भविरोधादिति शङ्कते—**ननु चेति** ; न हि क्वचिदप्यस्तिमात्रदर्शनमित्याशयः । **कथमिव** ; दृष्टापह्नवमन्तरेण न कथंचिदित्यर्थः । **उच्यत इति** ; अनेन घटादिविषयं प्रत्यक्षं सन्मात्रग्राहीति स्वोक्तिविरोधोऽपि सूचितः । विशिष्टविषयत्वं भ्रान्तिसिद्धमिति शङ्कां विपक्षे बाधकेन वारयति—**विलक्षणेति** । लोकसिद्धं प्रसङ्गविपर्ययं भेदव्यवहारस्य प्रत्यक्षमूलत्वं चानिच्छन् प्रसक्तस्येष्टत्वमाह—**सत्यमिति** । नानाव्यवहाराणां प्रत्यक्षमूलत्वं नापह्नोतव्यमित्यत्राह—**तथेति** ; यथा सत एकस्यैव व्यवहारः प्रत्यक्षमूलस्तथेति यावत् । एवकारः 'त्वदुक्तमवधारणं स्थिरी-करोमि' इति सावष्टम्भत्वं व्यनक्ति । **अत्र** ; व्यवहारद्वये, तद्धेतौ बुद्धिद्वये वा । **विवि-च्यते** ; सर्वेषु भ्रमेष्वधिष्ठानारोप्यव्यवहारांशयोर्यथा विभागस्तथात्रेति भावः । बाधिते दृष्टस्य विभागस्यान्यत्रोक्तावविषयवृत्तित्वं मत्वा चोदयति—**कथमिति** । अत्र नभःस्थलमलिनत्वादिवत्प्रत्यक्षबाधाभावेऽपि युक्त्या बाधयितुं प्रथमं मानानुपपत्तिः प्रस्तूयते । एवमत्र विकल्पा हार्दाः—किमस्तित्वघटत्वरूपयोः स्वरूपभेदयोरैक्यम्, उत भेद इति ; भेदे च प्रत्यक्षमुभयमन्यतरद्वा गृह्णातीति ; आद्ये युगपत् क्रमाद्वेति ; द्वितीये स्वरूपं भेदं वेति । तत्रैक्यं दूषयति—**घटोऽस्तीति** । **तद्भेदः** ; तत्संबन्धितया ततोऽन्य-त्वेनोल्लिख्यमानो भेदः । अयं भावः—अत्रोल्लिख्यमानभेदाभावे भिन्नशब्दः क्वापि न स्यात्, स्वेन स्वस्य विशिष्टत्वायोगात् । अस्तिघटशब्दयोश्चापर्यायतया व्युत्पत्तेस्तद्विषयौ भिन्नौ ; अन्यथा प्रतियोगिसापेक्षानपेक्षव्यवहारभेदविरोधात् तत्त्वतः सिद्धयोर्व्यवहारभे-दयोर्मूलभेदश्चिन्त्य इति । उभयग्राहित्वं निषेधति—**न चेति** । व्यवहारद्वयस्यैक-मूलत्वासंभवे युगपद्ग्रहणासंभवहेतुमाह—**तयोरिति** । अधिकरणप्रतियोगिधीसापेक्षस्य भेदग्रहणस्य स्वरूपग्रहणपश्चाद्भावित्वादित्यर्थः । क्रमेणोभयग्रहणं दूषयति—**प्रत्यक्षेति** । चः क्रमयौगपद्यायोगसमुच्चयार्थः ; न हि क्षणिकं विरम्य व्याप्रियेतेति भावः । प्रत्यक्षशब्द इहाक्षजन्यत्वपरः । तेनात्मस्वरूपज्ञानात्साक्षिणश्च व्यवच्छेदः । पारिशेष्यादन्यतरग्राहित्वे

तन्निर्धारणायार्थविकल्पं वक्ति—तत्रेति ; तथा सतीत्यर्थः, तयोर्मध्य इति वा । स्वेष्टं परिशेषयति—भेदेति । स्मरणशब्दः क्वचिद्ग्रहणस्याप्युपलक्षकः । एवकारः पूर्वमैक्ययौगपद्यासंभवोक्तौ प्रतियोगिसापेक्षत्वस्य गर्भितत्वं व्यनक्ति । शास्त्रविरोधासंभवमाह—न भेद इति । अयं भावः—एकेन प्रत्यक्षेण स्वरूपे गृहीते यदि प्रत्यक्षान्तरेण भेदग्रहणमित्युच्यते, तदा निराधारभेदग्रहणायोगात्पूर्ववदुत्तरमपि स्वरूपं गृहीत्वा नश्येत् ; अतो न कदापि प्रत्यक्षजातीयेन भेदसिद्धिरिति । तदिदमनूदितं संवित्सिद्धौ—

" यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः ।
ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः ॥ "

इति । व्यवच्छेदविधानयोः ; स्वरूपग्रहभेदग्रहयोरित्यर्थः । तथापि दुरपह्नवव्यवहारान्यथानुपपत्त्या कथंचित् प्रत्यक्षेण भेदग्रहः कल्प्य इत्यत्राह—अत इति । उक्तयुक्तिबलादर्थापत्तिरियमन्यथैवोपपाद्या । अनुपपन्नतैकवेषायां भ्रान्तौ तु क्रमयौगपद्यादिविमर्शो न कार्य इति भावः ।

## मूलभावप्रकाशिका

**तथैवात्र विविच्यत इति** ; सर्वप्रत्यक्षस्याप्यैक्यव्यवहारहेतुतैव प्रतिपाद्यत इत्यर्थः । **अस्तित्वमिति** ; सत्स्वरूपमित्यर्थः । **तद्भेदश्चेति** ; घटभेदश्चेत्यर्थः । **भिन्नकालज्ञानेति** ; क्षणद्वयवर्तीत्यर्थः । क्रमिकव्यवहारद्वयस्य क्षणद्वयवर्तिज्ञानसाध्यत्वादित्यर्थः । **स्वरूपविषयत्वमिति** ; सत्स्वरूपविषयत्वमित्यर्थः । ननु घटादिस्वरूपमात्रस्य प्रतियोगिज्ञानादिसापेक्षत्वाभावात् घटादिस्वरूपस्य प्रत्यक्षविषयत्वे कानुपपत्तिरिति चेत् ; उच्यते—इन्द्रियव्यापारानन्तरं प्रतीयमानो घटादिः सर्वतो भिन्न एव प्रतीयते, तत्र तदितरभेदे संशयविपर्ययादर्शनात् । तत्र च भेदस्य प्रतियोगिसहोपलम्भनियमतो न प्रत्यक्षेण ग्रहणं संभवति, देशकालादिव्यवधानेनासंनिकृष्टानामपि प्रतियोगिनामसंभवात् । तस्मात्प्रत्यक्षयोग्यस्य प्रतियोगिनः प्रतिभासो भ्रान्तिरूप इति तदेकवित्तिवेद्यस्य भेदस्य भेदैकवित्तिवेद्यस्य घटादेश्च भ्रमैकविषयत्वात् प्रत्यक्षं निर्विशेषसन्मात्रग्राह्येव, न घटादिस्वरूपग्राहीति मृषावादिनामाशयः ।

श्रीभाष्यम्

किंच भेदो नाम कश्चित्पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते। भेदस्तावन्न वस्तुनः स्वरूपम्, वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत् सर्वस्माद्भेदव्यवहारप्रसक्तेः। न च वाच्यं स्वरूपे गृहीतेऽपि 'भिन्नः' इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात्तत्स्मरणाभावेन तदानीमेव न भेदव्यवहार इति; स्वरूपमात्रभेदवादिनो हि प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा, स्वरूपभेदयोः स्वरूपत्वाविशेषात्। यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात्; 'हस्तः करः' इतिवत् 'घटो भिन्नः' इति पर्यायत्वं च स्यात्। नापि धर्मः; धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः; अन्यथा स्वरूपमेव स्यात्। भेदे च तस्यापि भेदस्तद्धर्मस्तस्यापीत्यनवस्था। किंच जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणं, भेदग्रहणे सति जात्यादिधर्मविशिष्टवस्तुग्रहणमित्यन्योन्याश्रयणम्। अतो भेदस्य दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम्।

श्रुतप्रकाशिका

एवं भेदे प्रमाणानुपपत्तिरुक्ता; अथ प्रमेयानुपपत्तिमाह—**किंचेति**। 'किंच' इत्यादिना प्रमाणानुग्राहकतर्काभावोऽप्युपपादितो भवति। दुर्निरूपत्वं प्रतिजानीते—**भेदो नामेति;** विकल्पासहत्वादिति भावः। **न्यायविद्भिः**, न त्वापातप्रतीतिमात्रतृप्तैरिति भावः। स्वरूपधर्मविकल्पं हृदि निधाय स्वरूपपक्षं दूषयति—**भेदस्तावदिति**। कुत इत्यत्राह—**वस्तुस्वरूप इति**। **स्वरूपव्यवहारवत् सर्वस्माद्भेदव्यवहारप्रसक्तेरिति;** प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेरित्यर्थः। स्वरूपग्रहणस्य शब्दव्युत्पत्तिव्युत्पन्नशब्दस्मरणनिरपेक्षत्वेऽपि 'भिन्नः' इति व्यवहारस्तु तत्सापेक्षो यथा भवति, तथा प्रतियोगिग्रहणमपि भेदव्यवहारसामग्र्यन्तर्भूतम्; अतस्तत्स्मरणाभावात् तदानीमेव भेदव्यवहाराभावः, न तु भेदाग्रहणादिति परमतमाशङ्क्याह—**न चेति**। कुत इत्यत्राह—**स्वरूपेति**। यथा न

स्वरूपग्रहणे प्रतियोग्यपेक्षा, तथा भेदव्यवहारे चेति चशब्दार्थः। हिशब्दो हेतौ ; स्वरूपग्रहण इव भेदव्यवहारे प्रतियोग्यपेक्षाया असंभवादित्यर्थः। असंभवः कुत इत्यत्राह—**स्वरूपेति**। स्वरूपभेदयोः स्वरूपत्वमविशिष्टमस्तु ; ततः किं प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेरिति शङ्कायां तद्विवृणोति—**यथेति**। स्वरूपपक्षे दूषणान्तरमप्याह—**हस्तः कर इति** ; पर्यायत्वे सति सह प्रयोगस्त्याज्यः स्यादिति भावः। स्वरूपपक्षे मृषावादिभिर्दूषणान्तराण्यप्युक्तानि ; उदाहृतदूषणपरिहारेण तान्यपि प्रत्युक्तानि भवन्तीति भाष्ये न कण्ठोक्तानि। तान्युच्यन्ते—स्वरूपपक्षे 'भिन्नः' इति व्यवहर्तुं न युक्तम् ; भिन्नो हि भेदयोगी। एतद्व्यवहारसिद्धये यदि स्वरूपभूतभेदान्तरं स्वीक्रियते तत्रापि 'भिन्नः' इति व्यवहारस्यायुक्तत्वात् तत्स्वरूपभूतभेदान्तरमाश्रयणीयमित्यनवस्था। किंच शब्दान्तरेण 'धर्मः' इत्युक्तं स्यात् ; तदा धर्मपक्षदूषणान्यापतेयुः। किंच भेदः किमनुवृत्तः, उत व्यावृत्तः ? व्यावृत्तश्चेत् स किं स्वरूपम्, उत धर्मः ? प्रथमे घटस्य भेदव्यवहारे कृते पटविषयभेदव्यवहारो न स्यात्, व्यावृत्तत्वात्। धर्मश्चेत् पूर्वदोषो धर्मत्वप्रयुक्तदूषणानि च स्युः। यद्यनुवृत्तः, स च स्वरूपं चेत् शब्दान्तरेण सन्मात्रमङ्गीकृतं स्यात्। धर्मपक्षे पूर्ववत्। किंच भिदिधातोर्हि विदारणमर्थः। एकस्य वस्तुनो भेदो नाम द्विधाभावः ; तत्खण्डस्यापि तथा स्यात्। अतो वस्तुनि भेदाभ्युपगमे विदारणपरम्परया वस्तुनाश एव स्यादित्येवमादीनि। अथ धर्मपक्षं दूषयति—**नापीति**। कुत इत्यत्राह—**धर्मत्व इति**। स्वरूपाद्धर्मस्य भेदाभावेऽनिष्टमाह—**अन्यथेति**। स्वरूपधर्मयोर्भेदोऽस्तु ; ततः किमित्यत्राह—**भेदे चेति**। **तस्यापि भेदस्तद्धर्मः** ; तस्य धर्मतया स्वीकृतस्यापि भेदस्य स्वरूपापेक्षया यो भेदः, सोऽपि तस्य धर्मतया स्वीकृतस्य भेदस्य धर्मः। यद्वा स्वरूपाद्धर्मस्य यो भेदः स्वीकृतः, तस्य धर्मिभूताद्धर्मात् भेदोऽपि धर्म ; अन्यथा स्वरूपमेव स्यात्। तथा स्वरूपपक्षदूषणानि स्युः। सोऽपि भेदो धर्मः ; तस्यापि स्वरूपाद्भेद इत्यनवस्थेत्यर्थः। एवं धर्मपक्षेऽनवस्थामुक्त्वान्योन्याश्रयणमाह—**किंचेत्यादिना** त्रेधा च तत्—धर्मिणि प्रतियोगिनि च गृहीते भेदग्रहणं, भेदे गृहीते धर्मिप्रतियोगिग्रहणमिति ; धर्मे धर्मिणि च गृहीते भेदग्रहणं, भेदे गृहीते धर्मधर्मिग्रहणमिति ; 'अयं घटः' इत्यत्रेदंशब्दनिर्दिष्टस्य घटजातीयत्वविशिष्टग्रहणं पटजातीयाद्भेदग्रहणपूर्वकम्, अन्यथा घटजातीयत्वविरोधात् ; पटाद्भेदग्रहणमिदंशब्दनिर्दिष्टस्य घटजातीयत्वग्रहणपूर्वकम्

अन्यथा पटत्वप्रसङ्गादिति । एवं धर्मधर्मिग्रहणे, धर्मितया प्रतियोगितया च ग्रहणे, तत्तज्जातीयत्वग्रहणे च त्रिधान्योन्याश्रयणमुक्तम् । साधकप्रमाणाभावमुपसंहरति—**अत इति । अतः** ; स्वरूपधर्मपक्षोक्तैर्दूषणैर्दुर्निरूपत्वादित्यर्थः । इत्थं साधकप्रमाणाभाव उक्तः । प्रमेयानुपपत्तिरूपस्तर्कश्च तच्छेषभूतः ; सामग्रीविषयेणार्थस्वभावविषयेण वा निरूपणेन विषयविशेषे प्रमाणव्यवस्थापनं हि तर्ककृत्यम् ।

**भावप्रकाशिका**

ननु घटादिस्वरूपमात्रग्रहणस्य प्रतियोगिज्ञानादिसापेक्षत्वाभावात् घटादिस्वरूपस्य प्रत्यक्षविषयत्वे कानुपपत्तिरिति चेत्, उच्यते—इन्द्रियव्यापारानन्तरं प्रतीयमानो घटादिः सर्वतो भिन्न एव प्रतीयते, तत्र तदितरभेदे संशयविपर्ययादर्शनात् । तत्र च भेदस्य प्रतियोगिसहोपलम्भनियमवतो न प्रत्यक्षेण ग्रहणसंभवः, देशकालादिव्यवधानेनासंनिकृष्टानामपि प्रतियोगिनां संभवात् । तस्मात्प्रत्यक्षायोग्यस्य प्रतियोगिनः प्रतिभासो भ्रान्तिरूप इति तदेकवित्तिवेद्यस्य भेदस्य भेदैकवित्तिवेद्यस्य घटादेश्च भ्रमैकविषयत्वात् प्रत्यक्षं निर्विशेषसन्मात्रग्राह्येव, न घटादिस्वरूपग्राहीति मृषावादिनामाशयः । सर्वस्माद्भेदव्यवहारप्रसक्तिर्नानिष्टा स्वरूपभेदवादिनः, स्वरूपग्रहणानन्तरं प्रतियोगिनः स्मरणे सति व्यवहारस्येष्टत्वादित्याशङ्क्य व्याचष्टे—**प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेरिति । स्वरूपग्रहणस्य शब्दव्युत्पत्तीति** ; अतिरिक्तभेदपक्षेऽपि भेदस्वरूपग्रहणस्येत्यर्थः । **तथा प्रतियोगिग्रहणमपीति** ; स्वरूपानतिरिक्तभेदपक्षेऽपीति शेषः । अतिरिक्तभेदवादिनैयायिकादिपक्षे व्युत्पन्नशब्दस्मरणादिर्भेदव्यवहार एव कारणम्, न तु भेदज्ञाने ; तथास्मन्मते प्रतियोगिग्रहणादिकमपि भेदव्यवहार एवेति भावः । **स्वरूपभूतं भेदान्तरमिति** ; न च स्वरूपभूतत्वभेदान्तरत्वयोर्विरोध इति शङ्कनीयम्, काल्पनिकभेदमादाय भेदान्तरत्वधर्मधर्मिभावोपपत्तेरिति भावः । ननु व्यक्त्यन्तरानभ्युपगमान्नानवस्थेत्यरुचेराह—**किंच शब्दान्तरेण धर्म इत्युक्तमिति** । कल्पितभेदमादाय धर्मधर्मिभावोपपादने घटस्यापि घटाश्रयत्वप्रसङ्गः ; अतः कल्पितभेदमादाय धर्मधर्मिभाव उपपद्यत इति वदता स्वरूपपक्षं परित्यज्य धर्मपक्ष एवावलम्बितः स्यादित्यर्थः । **घटस्य भेदव्यवहारे कृत इति** ; अनुगतस्य भेदाख्यधर्मस्याभावात् भेदशब्दो यस्यां व्यक्तौ गृहीतशक्तिकस्तत्रैव प्रयुज्येत, नान्यत्रेत्यनुगतव्यवहारोच्छेदप्रसङ्ग इत्यर्थः । **धर्मश्चेत् पूर्वदोष इति** ; व्यावृत्त-

धर्मत्वेऽनुगतव्यवहारोच्छेद इत्यर्थः । **सन्मात्रमङ्गीकृतं स्यादिति**; तस्यैवानुवृत्तस्वरूपत्वादित्याशयः । **धर्मपक्षे पूर्ववदिति**; न च प्रमेयत्वे प्रमेयत्ववदनुवृत्तभेदरूपधर्मस्य स्वपरनिर्वाहकत्वान्नानवस्थादोष इति वाच्यम्, तस्याप्यसंप्रतिपत्तेरिति भावः । **तत्खण्डस्यापि तथा स्यादिति**; द्विधाभूतस्यापि द्विधाभावः स्यादिति भावः । भाष्ये—**तस्यापि भेदस्तद्धर्मस्तस्यापीति**; 'भेदस्तद्धर्मः' इति शेषः । ततश्च तस्यापि भेदस्तद्धर्मः, तस्यापि भेदस्तद्धर्म इत्यनवस्थेत्यर्थः । भाष्ये—**भेदे च तस्यापि भेदस्तद्धर्म** इत्यत्र षष्ठ्यन्ततच्छब्देन 'भेदे च' इत्यव्यवहितपूर्वनिर्दिष्टस्य भेदरूपधर्मनिष्ठस्य स्वरूपप्रतियोगिकस्य द्वितीयभेदस्य ग्रहणसंभवे व्यवहितस्य प्रथमभेदस्य ग्रहणमन्याय्यम्, तथाहि सति 'भेदस्तद्धर्मः' इत्युक्तेरेवोचितत्वेन 'तस्य भेदः' इति निर्देशस्य व्यर्थत्वाचेत्यपरितोषादाह—**यद्वा धर्मस्य स्वरूपाद्यो भेद इति** । प्रथमपक्षे 'तस्यापि भेदस्तद्धर्मः' इति वाक्यखण्डेन भेदधर्मिकभेदान्तरसिद्धिमात्रम्; द्वितीयपक्षे 'तस्यापि भेदस्तद्धर्मः' इत्यनेन भेदधर्मिकभेदेऽपि भेदसिद्धिरिति विशेषः । **जात्यादिधर्मविशिष्टवस्तुग्रहणे सतीत्यत्र** भाष्ये आदिशब्देन धर्मित्वप्रतियोगित्वधर्मधर्मित्वानां ग्रहणमित्याह—**त्रिधा च तदित्यादिना** । घटस्य पटात् भेदज्ञाने हि त्रीणि कारणानि—घटपटरूपधर्मिप्रतियोगिज्ञानमेकम्; भेदतदाश्रयरूपधर्मधर्मिज्ञानं द्वितीयम्, विशिष्टज्ञाने विशेषणविशेष्यज्ञानस्य हेतुत्वात् घटस्य पटव्यावृत्तत्वघटत्वाश्रयत्वज्ञानं तृतीयमिति पर्यवसितोऽर्थः । न च धर्मिप्रतियोगिज्ञानस्याभावज्ञानहेतुत्वेऽपि धर्मित्वप्रतियोगित्वप्रकारकज्ञानस्याहेतुत्वात् कथमन्योन्याश्रयः ? धर्मित्वप्रतियोगित्वप्रकारकज्ञाने परं भेदज्ञानापेक्षा, न धर्मिप्रतियोगिज्ञान इति वाच्यम्, भेदज्ञानात् प्राक् प्रतियोगित्वत्वादिविशिष्टप्रतियोगित्वादिप्रकारकज्ञानाभावे प्रतियोगित्वादिविशिष्टप्रतियोगिविशेषणकभेदप्रत्ययाभावेन प्रतियोगित्वप्रकारकज्ञानस्य हेतुत्वात् । अत एव भेदतदाश्रययोरपि धर्मधर्मिणोर्धर्मधर्मित्वेन ज्ञानाभावे विपरीतधर्मधर्मिभावप्रतीतिप्रसङ्गेन तेन रूपेण धर्मधर्मिज्ञानमपेक्षितमित्यत्र तात्पर्यात् ।

## श्रुतप्रदीपिका

एवं मानदौस्थ्यमुक्तम्; अथ मेयदौस्थ्यं दर्शयति—**किंचेति** । **न्यायविद्भिः** न त्वापातधीतृप्तैः । तत्र भेदः किं स्वरूपं धर्मो वेति विकल्पमभिप्रेत्य प्रथमं शिरो

दूषयति—**भेद इति** । कुत इत्यत्राह—**वस्त्विति** ; भेदव्यवहारस्य प्रतियोगिनिरपेक्षताप्रसक्तेरित्यर्थः । भेदस्य स्वरूपत्वेन तद्ग्रहस्य प्रतियोग्यनपेक्षत्वेऽपि शाब्दव्यवहारे व्युत्पत्त्यादिवत् 'भिन्नः' इति व्यवहारविशेषे प्रतियोगिधीरपि सामग्र्यन्तर्गतेत्याशङ्क्याह—**न चेति** । कुत इत्यत्राह—**स्वरूपेति** । हिः हेतौ ; स्वरूपव्यवहार इव भेदव्यवहारे च प्रतियोग्यपेक्षत्वासंभवादित्यर्थः । सोऽपि कुत इत्यत्राह—**स्वरूपभेदयोरिति** । तद्विवृणोति—**यथेति** । दूषणान्तरमाह—**हस्त इति** । दूषणान्तराणां परिहारसाम्यादनुक्तिः । द्वितीयं दूषयति—**नापीति** । कुत इत्यत्राह—**धर्मत्वे सतीति** । विपक्षे बाधकमाह—**अन्यथेति** । **अन्यथा** ; स्वरूपपक्षे दूषणापातादिति भावः । ततः किमित्यत्राह—**भेदे चेति** । **तद्धर्मः** ; भेदस्य धर्मः । परस्पराश्रयमाह—**किंचेति** । धर्मधर्मिणोः धर्मिप्रतियोगिनोः तत्तज्जातीययोश्च तत्तद्भावग्रहपूर्वको भेदग्रहः, तत्पूर्वकश्चेतर इत्यन्योन्याश्रयः । साधकाभावमुपसंहरति—**अत इति** ।

## तत्त्वटीका

मेयानुपपत्तिमाह—**किंचेति** । प्रसिद्धेऽपि बाधकन्यायान्यायविवक्षया **न्यायविद्भिरित्युक्तम्** । भेदः स्वरूपं धर्मो वेति हार्दे विकल्पे पूर्वं निरस्यति—**भेदस्तावदिति** । संशयाद्यनुपपत्तिगर्भं हेतुमाह—**वस्त्विति** । स्वरूपस्य भेदत्वे तद्ग्रहे कथं भेदाग्रहः ? तदभावे कथंतरां संशयविपर्ययौ ? तयोरभावे च सर्वेभ्यो भेदव्यवहार एव स्यात् ; तथाच न बाधकसाध्यं किंचित् स्यादिति भावः । प्रसञ्जितविपर्ययस्यान्यप्रयुक्तत्वमाशङ्क्याह—**न चेति** । **स्वरूपे गृहीतेऽपि** ; स्वरूपभूते भेदे गृहीतेऽपीत्यर्थः । **भिन्न इत्यादि** ; यथा वाच्यस्वरूपे गृहीतेऽपि वाचकप्रयोगः संबन्धग्रहणापेक्षः, तथा 'भिन्नः' इति व्यवहारोऽपि प्रतियोगिधीसापेक्षः ; तत एवात्रासौ तदभावप्रयुक्तः स्वाभाव इत्याशयः । 'प्रतियोगिसापेक्षत्वात्' इत्युक्तं दूषयति—**स्वरूपमात्रेति** । चः अवधारणे, आश्रयापेक्षासमुच्चये वा । यथा स्वरूपग्रहणे प्रतियोगिग्रहणनैरपेक्ष्यं तथा तद्व्यवहार इत्यभिप्रायेण **नोत्प्रेक्षितुं क्षमेत्युक्तम्** । **स्वरूपमात्रभेदवादिन** इत्यनेन सूचितं हेतुं विवृणोति—**स्वरूपभेदयोरिति** । उक्तं प्रतिग्रन्थिगर्भं व्यनक्ति—**यथेति** । सहप्रयोगभङ्गमभिप्रयन् प्रसङ्गान्तरमाह—**हस्त इति** । स्वरूपभेदशब्दयोः पर्यायता स्यादिति वक्तव्ये **घटो भिन्न** इत्युक्तेरयं भावः—भेदत्वेन प्रयुक्तस्य घटस्य स्वरूपत्वं परे मन्यन्ते ; तस्य च स्वरूपमेव भेदश्चेत् यस्य

भेदोऽस्ति स भिन्नः ; अतो घटभिन्नशब्दौ पर्यायौ स्याताम् । एवं घटभेदशब्दावपीति । चकारोऽत्रानुक्तमपि समुच्चिनोति । स्वरूपस्यानुवृत्तत्वे भेदत्वं न स्यात्, व्यावृत्तत्वेऽन्येषां निःस्वरूपत्वनिर्भेदत्वापत्तिरित्यादि । भेदस्य धर्मत्वे तद्वति क्वचिदप्यभेदो न सिध्येत् ; तथा सत्यभिन्नस्य भिन्नस्य वाभावे सर्वापह्नवः स्यादित्यभिप्रायेणाह—**नापीति** । अनवस्थां वक्तुं धर्मभूतो भेदः स्वरूपेणाभिन्नो भिन्नो वेति विकल्प्याद्यं निरस्यति—**धर्मत्व इति** । भेदाभावे धर्मधर्मिभावो न स्यात्, स्वरूपपक्षोक्तदोषाश्च स्युरित्यभिप्रायेणाह—**अन्यथेति** । द्वितीये मूलच्छेदमाह—**भेदे चेति** । **तद्धर्मः** ; तस्य भेदस्य धर्मः । ग्रहणद्वारापि दोषमाह—**किंचेति** । तज्जातीयत्वातज्जातीयत्वतद्गुणकत्वातद्गुणकत्वविशेषणत्वविशेष्यत्वधर्मत्वप्रतियोगित्वादावपि भेदग्रहेऽप्यन्योन्याश्रयमभिप्रेत्य जात्याद्युक्तिः ॥

भेदकाग्रहणे भेदो न गृह्येत कथंचन ।
तस्य चाग्रहणे सोऽपि न गृह्येतेति संग्रहः ॥ ३४१ ॥

एवं ग्राह्यानुपपत्त्या ग्राहकानुपपत्तिं पूर्वमुक्तां द्रढयति—**अत** इति ।

## मूलभावप्रकाशिका

ननु भेदव्यवहारमात्रमापाद्यते, उत भेदशब्दोल्लेखो व्यवहारः ? नाद्यः, स्वरूपव्यवहारस्यैव भेदव्यवहारत्वेनेष्टत्वात् । न द्वितीयः, तादृशव्यवहारार्थस्य प्रतियोगिस्मरणादिसापेक्षत्वादित्याशङ्क्य निराकरोति—**न च वाच्यमिति** । **तस्यापि भेद इति** ; भेदनिष्ठो यः स्वाश्रयस्वरूपाद्भेदः सोऽपि न भेदस्वरूपमात्रम्, स्वरूपत्वपक्षस्य दूषितत्वात् । धर्मत्वपक्षस्यैवाश्रयणीयत्वे सिद्धे धर्मधर्मिणोर्भेदस्यावश्यंभावात्तन्निष्ठभेदान्तरं स्वीकर्तव्यमित्यनवस्थाप्रसङ्गात् । **जात्यादिविशिष्टेति** ; वैधर्म्यज्ञानाभावे भेदज्ञानासंभवादिति भावः । **भेदग्रहणे सतीति** ; घटव्यावृत्तत्वज्ञानाभावे पटत्ववैशिष्ट्याग्रहणात् ; अन्यथा पटेऽपि घटत्ववैशिष्ट्यग्रहणप्रसङ्ग इति भावः । **सन्मात्रस्यैवेति** ; भेदव्यवहारस्तु भ्रान्तिमूलक इति भावः ।

## श्रीभाष्यम्

**किंच 'घटोऽस्ति, पटोऽस्ति' 'घटोऽनुभूयते, पटोऽनुभूयते' इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते । अत्र सर्वासु**

प्रतिपत्तिषु सन्मात्रमनुवर्तमानं दृश्यत इति तदेव परमार्थः। विशेषास्तु व्यावर्तमानतयाऽपरमार्थाः, रज्जुसर्पादिवत्; यथा रज्जुरधिष्ठानतयानुवर्तमाना परमार्थसती; व्यावर्तमानाः सर्पभूदलनाम्बुधारादयोऽपरमार्थाः। ननु च रज्जुसर्पादौ 'रज्जुरियं न सर्पः' इत्यादिरज्ज्वाद्यधिष्ठानयाथार्थ्यज्ञानेन बाधितत्वात्सर्पादेरपारमार्थ्यं, न व्यावर्तमानत्वात्; रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया, किं त्वबाधितत्वात्; अत्र तु घटादीनामबाधितानां कथमपारमार्थ्यम्? उच्यते—घटादौ दृष्टा व्यावृत्तिः; सा किंरूपेति विवेचनीयम्। किं 'घटोऽस्ति' इत्यत्र पटाद्यभावः? सिद्धं तर्हि 'घटोऽस्ति' इत्यनेन पटादीनां बाधितत्वम्। अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः। सा व्यावर्तमानानामपारमार्थ्यं साधयति। रज्जुवत्सन्मात्रमबाधितमनुवर्तते। तस्मात्सन्मात्रातिरेकि सर्वमपरमार्थः। प्रयोगश्च भवति—'सत् परमार्थः, अनुवर्तमानत्वात्; रज्जुसर्पादौ रज्ज्वादिवत्' 'घटादयोऽपरमार्थाः व्यावर्तमानत्वात्; रज्ज्वाद्यधिष्ठानसर्पादिवत्' इति। एवं सत्यनुवर्तमानानुभूतिरेव परमार्थः; सैव सती। ननु च सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम्; नैवम्; भेदो हि प्रत्यक्षविषयत्वाद् दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः। अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति। तस्मात्सदनुभूतिरेव। सा च स्वतः सिद्धा, अनुभूतित्वात्। अन्यतः सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः। किंच अनुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुम्; सत्तयैव प्रकाशमानत्वात्। न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाभ्युपगम्येत।

## श्रुतप्रकाशिका

अथ बाधकप्रमाणमुपन्यस्यति—**किंचेति**। तत्रानुमानं विवक्षुर्व्याप्तिं शिक्षयति—**घटोऽस्तीत्यादिना**। "वैधर्म्याच्च न स्वप्नादिवत्" इत्यत्र सूत्रकारेणैव दृश्यत्वानुमानस्य निराकरिष्यमाणत्वात् तन्निरासस्य मिथ्यात्वानुमानानां सर्वेषां दूष्यत्वप्रदर्शनार्थत्वात्पूर्वपक्षे व्यावर्तमानत्वहेतुरुपन्यस्यते। अनुवृत्तत्वप्रदर्शनाय **घटोऽस्ति पटोऽस्तीत्युक्तम्**। **सदनुभूत्योरेकत्वं** वक्ष्यमाणं हृदि निधायानुभूतेरनुवृत्तिं दर्शयति—**घटोऽनुभूयते पटोऽनुभूयत इति**। ततः किमित्यत्राह—**अत्रेति**। **व्यावर्तमानतया**; उत्तरोत्तरप्रतिपत्तिविषयेष्वविद्यमानतया। **रज्जुसर्पादिवत्**; रज्ज्वादिवत् सर्पादिवच्चेत्यर्थः। तद्विवृणोति—**यथेत्यादिना**। बाधितत्वाबाधितत्वाभ्यां द्वयोरपि हेत्वोः सोपाधिकत्वं दर्शयंश्चोदयति—**ननु चेति**। उपाधिनिवृत्त्या पक्षे साध्यनिवृत्तिमाह—**अत्र त्विति**; विपरीतोपाधिसद्भावाच्च व्याघात इति चाभिप्रायः। परिहरति—**उच्यत इत्यादिना**। प्रथमं संप्रतिपन्नांशमाह—**घटादौ दृष्टा व्यावृत्तिरिति**। सपक्षेषु सर्वेषु विद्यमानः पक्षेऽविद्यमानो ह्युपाधिः; तत्र परेणोपाधित्वेनोक्तस्य धर्मस्य पक्षे विद्यमानत्वकथनेन व्यावर्तमानत्वहेतोः सोपाधिकत्वं दूषयिष्यंस्तदुपयोगित्वेन घटादिषु दृष्टा व्यावृत्तिः किं संवादफलभूता, उत बाधफलभूतेति विवेचनीयमित्याह—**सा किंरूपेति**। बाधफलभूतत्वं दर्शयितुं व्यावृत्तिस्वरूपमाह—**किं घटोऽस्तीत्यत्रेति**। 'घटोऽस्ति' इति प्रतीते विषये पटाभाव इत्यर्थः। बाधसिद्धिं दर्शयति—**सिद्धं तर्हीति**; रज्जौ भूदलनादीनामभावो हि बाधितत्वमिति भावः। तस्मात् बाधफलभूतैवेत्याह—**अत इति**। बाधो नामादुष्टकारणजा निषेधबुद्धिः; तेन पुरोवर्तिन्यभावो व्यावृत्तिः। एवं निरुपाधिकत्वाद्व्यावर्तमानत्वमपारमार्थ्यसाधकमित्याह—**सेति**। अबाधितत्वफलभूतानुवृत्तेः परमार्थत्वप्रयोजकत्वादनुवर्तमाने पारमार्थ्यं दर्शयति—**रज्जुवदिति**। अबाधो नामाविरोधित्वम्। अनुवृत्तिर्नाम तत्कृतो विषयतयान्वयः, पुरोवर्तिनि सद्भावो वा। इत्थं व्याप्तिः शिक्षिता। न केवलं तर्कः; अनुग्राह्यमप्यस्तीत्याह—**प्रयोगश्च भवतीति**। मायावेदान्तिनो हि ज्ञानमात्रपारमार्थ्यवादिनः; तत्कथं सतः पारमार्थ्यसाधनमित्यत्राह—**एवं सतीति**। व्यावर्तमानत्वानुमानत्वयोरपारमर्थ्ये पारमार्थ्ये च प्रयोजकत्वे सिद्ध इत्यर्थः। तर्हि परमार्थद्वयं स्यादित्यत्राह—**सैव सतीति**। अथ सदनुभूत्योर्विषयविषयिभावरूपं भेदमुद्घाटयंश्चोदयति—**ननु चेति**। भिन्नत्वं

साध्यं, विषयतयेति हेतुः। परिहरति—**नैवमिति**। तत्र साध्यांशं दूषयति—**भेदो हीति**। **पुरस्तादेव**; ज्ञेयभेदनिषेधादेव ज्ञानभेदोऽपि निरस्त इत्यर्थः। हेत्वंशं दूषयति—**अत इति**। **न प्रमाणपदवीमनुसरतीति**; विषयविषयिभावो भ्रान्तिसिद्ध इत्यर्थः। भेदस्य भ्रान्तिसिद्धत्वमपिना समुच्चीयते। श्रुतिप्रतिपाद्यार्थोस्तर्केणापि साधयन् विषयविषयिभावे निरस्ते ग्राहकाभावात् शून्यत्वशङ्कां च व्यावर्तयन् स्वप्रकाशत्वमुपपादयति—**सा चेति**। चः शङ्कानिवृत्तौ। तत्र व्यतिरेकिणं हेतुमाह—**अनुभूतित्वादिति**। विपक्षे बाधं दर्शयति—**अन्यतः सिद्धाविति**। 'यदन्यतः सिद्धं तदननुभूति दृष्टं, यथा घटः' इति व्याप्तिरर्थाद्दर्शिता। अस्य व्यतिरेकिणः पराभिमतं प्रत्यनुमानं सोपाधिकमिति दर्शयन्नर्थादनुमानान्तरमप्याह—**किंचेत्यादिना**। अनुमानान्तरं कण्ठोक्तम्; आर्थः प्रत्यनुमाननिरासो वा स्यात्। अनुमानान्तरस्य कण्ठोक्तत्वे किंचशब्दः स्वरसः। प्रत्यनुमाननिरासस्य कण्ठोक्तत्वे 'न शक्या कल्पयितुम्' इति निर्देशः स्वरसः। **किंचेति**; न केवलं स्वमतोपपत्तिः, परमतानुपपत्तिश्चेत्यर्थः; अनुमानान्तरं चेति वार्थः। **अनुभवापेक्षा चेति**; पूर्वोक्तसमुच्चेतव्यद्वये किंचशब्दसमुच्चितादन्यस्य समुच्चयपरश्चशब्दः। **न शक्या कल्पयितुम्**; 'ज्ञानं परप्रकाशं, वस्तुत्वात् भासमानत्वाद्वा घटादिवत्' इति प्रत्यनुमानम्; एवमादिभिः परप्रकाशत्वं न वक्तुं शक्यमित्यर्थः। कुत इत्यत्राह—**सत्तयैवेति**। 'सत्तयैव प्रकाशमानत्वात्' इति हेतोरसिद्धिशङ्कानिवृत्तये तं विवृणोति—**न हीति**। विद्यमानदशायां कदाचिदप्रकाशमानत्वं पराधीनप्रकाशत्वे प्रयोजकम्; अतः प्रत्यनुमानं सोपाधिकमित्यर्थः। 'विद्यमानदशायां सर्वदा भासमानत्वात्' इति व्यतिरेक्यनुमानान्तरमिति स्फुटतरम्। यथा संवित्सिद्धौ—"यद्यप्रकाशमाना धीः कदाचिदवतिष्ठते।" इत्यारभ्य, "घटादाविव तत्रापि कल्पनीयं प्रकाशनम्।" इति। अनेन ग्रन्थेन स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिशङ्का परिहृता। विद्यमानत्वे सर्वदा प्रकाशमानत्वं सुखादावप्यस्तीत्यनैकान्त्यमिति चेत्—न; सुखादिव्यतिरिक्तत्वे सतीति विशेषणस्याभिप्रेतत्वात्। सिद्धान्तिमते सुखादेरपि ज्ञानविशेषत्वेन पक्षेऽन्तर्भावान्नानैकान्त्यम्।

### भावप्रकाशिका

**अथ बाधकप्रमाणमुपन्यस्यतीति**; न केवलं साधकाभावः, बाधकमप्यस्तीति

किंचशब्दार्थ इत्यर्थः । न च 'भेदः स्वरूपं धर्मो वा' इत्यादि बाधकं प्रागप्युपन्यस्तमिति वाच्यम्, तस्य तर्करूपत्वेन प्रमाणत्वाभावादित्यत्र तात्पर्यात् । **विपरीतोपाधिसद्भावाच्चेति** ; साध्यविपर्ययरूपसत्यत्वप्रयोजकाबाधितत्वसत्त्वादित्यर्थः । **किं संवादफलभूता, उत बाधफलभूतेति** ; पटसत्त्वग्राहि प्रमाणं संवादः, तदसत्त्वग्राहि प्रमाणं बाधः ; भावग्राहि प्रमाणं संवादः, अभावग्राहि प्रमाणं बाधः । फलं च विषयत्वमेव । घटादौ दृष्टा पटव्यावृत्तिः पटसत्त्वग्राहिप्रमाणरूपसंवादफलभूता, उत पटाभावप्रतीतिलक्षणबाधफलभूता वेति भवन्त एव विमृशन्त्वित्यर्थः । पटव्यावृत्तेर्घटसत्तारूपत्वेऽपि संवादफलत्वशङ्कापि स्यात्; अभावरूपत्वे च बाधितत्वमकामेनापि सिध्यतीति भावः । ननु 'घटोऽस्ति' इति पटाभावसिद्धिमात्रेण पटादीनां कथं बाधितत्वसिद्धिरित्याशङ्क्य बाधफलभूताभावव्यतिरेकेण बाधितत्वस्याभावात् बाधफलभूतोऽभाव एव बाधितत्वमित्यभिप्रायेणाह—**रज्जौ भूदलनादीनामभाव इति** । **भेदस्य भ्रान्तिसिद्धत्वमपिना समुच्चीयत इति** ; 'न प्रमाणपदवीमनुसरति ; भ्रान्तिसिद्धः' इति हि तस्यार्थो वर्णितः । ततश्च विषयविषयिभावो भेदश्च भ्रान्तिसिद्ध इत्यर्थ इति भावः । यद्यप्यपिना भेदः समुच्चीयत इति विवक्षितार्थसिद्धिः, तथापि फलितमादाय तथोक्तमिति द्रष्टव्यम् । भाष्ये—**तस्मात्सदनुभूतिरेवेति** ; ननु घटादिकमपि सदनुभूतिभ्यामभिन्नमेव स्यात्, भेदस्य दुर्निरूपत्वादिति चेत्; न, एतस्याभ्युच्चयमात्रत्वेनैतदतिप्रसङ्गस्यादोषत्वात् । **किंचशब्दसमुच्चिताद्न्यस्येति** ; यदि प्रत्यनुमाननिरासः किंचशब्देन समुच्चीयते, तदा 'अनुभवापेक्षा च' इति चशब्देनानुमानान्तरं समुच्चीयते । यदि चानुमानान्तरं किंचशब्देन समुच्चीयते, तदानेन चशब्देन प्रत्यनुमाननिरासः समुच्चीयत इत्यर्थः ।

## श्रुतप्रदीपिका

बाधकं दर्शयति—**किंचेति** । व्याप्तिं शिक्षयति—**घटोऽस्तीत्यादिना** । अनुवृत्तिव्यावृत्तिसिद्ध्यै पटोक्तिः । सदनुभूत्यैक्याय **अनुभूयत** इत्युक्तिः । ततः किमित्यत्राह—**अत्रेति** । दृष्टान्तमाह—**रज्ज्वति** ; रज्ज्वादिवत् सर्पादिवच्चेत्यर्थः । तद्विवृणोति—**यथेति** । सोपाधिकत्वं शङ्कते—**ननु चेति** । परिहरति—**उच्यत इति** । साधनव्यापकत्वेनोपाधिं दूषयितुं प्रतिपन्नांशमाह—**घटादाविति** । सा किं बाधफलम्, उत संवादफलमिति विवेचनीयत्वमाह—**सेति** । ततः किमित्यत्र बाधफलत्वं दर्शयितु-

माह—**किमिति**। 'घटोऽस्ति' इति प्रतीते विषये पटाभावः। बाधसिद्धिं दर्शयति—**सिद्धं तर्हीति**; पुरोवर्तिनि रजतस्याभावो हि बाधितत्वमित्यर्थः। ततः किमित्यत्राह—**अत इति**। शुक्तिधियो रूप्यप्रत्यनीकत्वं बाधकत्वम्; विषयत्वाभावो व्यावृत्तिः। निरुपाधिकत्वाद्धेतोः साधकत्वमाह—**सेत्यादिना**। उक्ततर्कानुग्राह्यमाह—**प्रयोगश्चेति**। धीसत्यत्ववादिनः किं सतः पारमार्थ्येनेत्यत्राह—**एवमिति**। तर्हि सत्यद्वयप्रसङ्ग इत्यत्राह—**सैवेति**। सद्धियोर्विषयविषयिभावेन भिन्नत्वान्नैक्यं संभवतीति चोदयति—**नन्विति**। मानमेयानुपपत्तिभ्यां ज्ञेयभेदनिरासात् ज्ञानज्ञेयभेदस्यापि निरस्ततां वदन् परिहरति—**नैवमित्यादिना**। **न प्रमाणेति**; भ्रान्तिसिद्ध इत्यर्थः। धीसदैक्यं निगमयति—**तस्मादिति**। अमेयत्वे तुच्छत्वं स्यादित्याशङ्क्याह—**सा चेति**। हेतुमाह—**अनुभूतित्वादिति**। व्यतिरेकव्याप्तिं दर्शयति—**अन्यत इति**। अनुमानान्तरमप्याह—**किंचेति**। प्रत्यनुमाननिरासश्चार्थतः क्रियत इति चशब्दार्थः। **कल्पयितुम्**; वस्तुत्वाद्भासमानत्वादित्यादिभिरिति भावः। कुत इत्यत्राह—**सत्तयैवेति**। असिद्धिशङ्कापरिहारायैतद्विवृणोति—**न हीति**। विद्यमानदशायां कदाचिदप्रकाशमानत्वमुपाधिरिति भावः। सत्त्वे सदा प्रकाशमानत्वं स्वसिद्धत्वे व्यतिरेकी हेतुरिति स्फुटम्। सुखाद्यन्यत्वे सतीति हेतोर्विशेषणमभिप्रेतम्, मृषावादिमते सुखादेर्जडत्वात्।

### तत्त्वटीका

न केवलं प्रमाणाभावः; प्रमाणबाधोऽप्यस्तीत्याह—**किंचेति**। अत्र घटादिबाधे तत्सत्तापि खपुष्पगन्धवत्स्यादिति शङ्कानिरासायानुवृत्तसत्त्वस्थापनम्। विवक्षितानुमानद्वयस्य पक्षसिद्धिं तावदाह—**घटोऽस्तीति**। अनुभूत्यनुवृत्तिप्रदर्शनं सदनुभूत्यैक्याधानार्थम्; न हि व्यावृत्तस्यानुवृत्ततादात्म्यं स्यात्। स्वरूपासिद्धिं व्याप्यत्वासिद्धिं च व्युदस्यति—**अत्रेति**। **रज्जुसर्पादी**त्युदाहरणे व्याप्तिद्वयार्थमादिशब्दः प्रत्येकं भाव्यः। व्याप्तिदृष्टान्तौ स्पष्टयति—**यथेति**। **परमार्थसती**; व्यावहारिकव्यवस्थयेति शेषः। सर्पाद्युदाहरणमिहैकाधिष्ठानाध्यस्तविषयम्। द्वयोरपि व्याप्तयोरुपाधिं शङ्कते—**ननु चेति**। अबाधितत्वोपाधिः पक्षव्यापक इति न वाच्यम्, माध्यमिकनयेन घटादितुल्यन्यायतया सतोऽपि बाधस्य सुवचत्वादिति भावः। बाधितत्वोपाधेः पक्षव्यावृत्तिमाह—**अत्र त्विति**; 'घटोऽस्ति' इत्यादावित्यर्थः। द्वयोरपि साधनव्यापकत्वबुद्ध्या प्रतिवक्ति—**उच्यत**

इति। बाधितत्वस्य तावदाह—**घटादाविति**। **किंरूपा**; किं सत्यसर्पनिवृत्तिवत् भ्रान्तिसिद्धा? उत रज्जुसर्पनिवृत्तिवत् प्रमाणबाधसाध्येति विकल्पः। तत्राद्यो घटपटतादात्म्यादिप्रसङ्गादयुक्त इत्यभिप्रायेणाह—**किमिति**। 'घटोऽस्ति' इति प्रतीतेऽर्थे पटाभावो मिथ्या; अतः प्रमितयान्यव्यावृत्त्यान्येषां बाधितत्वमर्थसिद्धमित्याह—**सिद्धमिति**। **घटोऽस्तीत्यनेन**; 'न रजतम्' इति निषेधाभावेऽपि यथा 'शुक्तिः' इत्यनेन रजतबाधस्तथेति भावः। एवं पटादिविधौ घटस्यापि निवृत्तिः सिद्धा स्यात्। उक्तप्रकारेणोपाधेः साधनव्यापकत्वमाह—**अत इति**। **बाधफलभूता**; 'नास्ति' इतिधीस्थाप्येत्यर्थः। **विषयनिवृत्तिः**; घटादिधीवेद्यानामभावः, तेषामिह वेद्यत्वाभावो वा। एवं निरुपाधिकतया व्यावर्तमानत्वस्य साधकत्वमाह—**सेति**। अनुवर्तमानत्वहेतावप्यबाधितत्वोपाधिर्व्यापक इत्याह—**रज्जुवदिति**। सतोऽपि माध्यमिकयुक्त्या बाधोक्तिर्निरधिष्ठानभ्रमासंभवादयुक्ता। हेतुद्वयफलितमाह—**तस्मादिति**। मिथो विमर्देन सर्पादिनिवृत्तौ रज्ज्वनिवृत्तिवत् घटादिनिवृत्तौ "सदेव" इति श्रुतं सत् परिशिष्येतेत्याशयः। भेदबाधकतर्काणामनुग्राह्यनिष्कर्षायाह—**प्रयोगश्चेति**। चकार उपाधिविधूननादिसमुच्चयार्थः। चिन्मात्रसत्यत्वमिच्छतां किं बाह्यस्य सतः सत्यतयेत्यत्राह—**एवं सतीति**; हेत्वोर्निरुपाधिकत्वे सिद्धे सतीत्यर्थः। एवकारः पूर्वोक्तरीत्यानुभाव्यानां मिथ्यात्वं व्यनक्ति। सत्यद्वित्वं, भेदसत्यत्वस्वीकारः, मिथो व्यावृत्त्या द्वयोरपि बाधश्च स्यादित्यत्राह—**सैव सतीति**; अनुभूतिरेव सच्छब्दार्थ इत्यर्थः। अवधारणमयुक्तम्, सतः प्रत्यक्षविषयत्वसाधनेन भेदोक्तेरित्यभिप्रायेण चोदयति—**ननु चेति**। मानतः स्वरूपतश्च भेदस्यानुपपन्नत्वोक्त्या धीसद्भेदोऽपि बाधित इति प्रतिवक्ति—**नैवमिति**। तर्हि स्वयमेव सामान्यतो विशेषतश्च विषयत्वादिभेदोक्त्या विरोध इत्यत्राह—**अत इति**। भ्रान्तिरूपलोकदृष्ट्या मयोक्तमित्यभिप्रायेण प्रमाणपदनिषेधः। एतेन दृग्दृश्यसंबन्धानुपपत्तिः सूचिता; यां "ग्राह्यलक्षणो योगशब्दः" इति योगाचारा उपचरन्ति। सैवेत्यवधारितं निगमयति—**तस्मादिति**; विषयविषयित्वरूपस्यापि भेदस्य बाधादित्यर्थः। **सदनुभूतिरेव**; 'सत्' इति भातं वस्तु न तद्बुद्धेर्भिन्नम्। सच्चिदात्मनो मेयत्वाभावे माध्यमिकोक्तसंवृतिसिद्धिवत्स्यादित्यत्राह—**सेति**। **स्वतःसिद्धा**—स्वरूपप्रयुक्तस्वप्रकाशा; अवेद्यत्वे सति अपरोक्षव्यवहारार्हेत्यर्थः। अत्र

* "यानुभूतिरजामेयानन्तात्मानन्दविग्रहा ।
महदादिजगन्मायाचित्रभित्तिं नमामि ताम् ॥"

इत्युक्तक्रमेणोपरितन उपन्यासः । "येति स्वतःसिद्धतां सूचयति" इति व्याख्यातम् । तत्रानुभूतिरिति हेतुगर्भमित्याह—**अनुभूतित्वादिति** ; चित्त्वादित्यर्थः । असाधारणाभासत्वशङ्कां व्यतिरेकव्याप्त्या परिहरन् "अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गः" इति तत्रोक्तमाह—**अन्यत इति** । अनुमानान्तरमप्यस्तीत्याह—**किं चेति** । **अनुभवे**त्यादिः प्रतिज्ञाग्रन्थः ; अनुभूतिर्नानुभवान्तरसापेक्षप्रकाशेत्यर्थः । 'भासमानत्वादिभिर्वेद्या' इति प्रत्यनुमानं चानेन निरस्यते । अत एव चकारः **कल्पयितु**मिति पदं च सफलं स्यात् । प्रतिज्ञायां हेतुं वदन् प्रत्यनुमाने चोपाधिं व्यनक्ति—**सत्त्वयैवेति** ; यावत्सत्त्वं प्रकाशमानत्वादिति यावत् । विद्यमानत्वेऽप्यविदितावस्थायोगित्वं घटादिषु वेद्यत्वस्योपाधिभूतम् ; तन्नेति भावः । हेतोरसिद्धिमुपाधेः साधनव्यापकत्वं च निरस्यति—**न हीति** ।

## मूलभावप्रकाशिका

**दृष्टा व्यावृत्तिरिति** ; घटादावघटव्यावृत्तिः सर्वसंप्रतिपन्नेत्यर्थः । **किंरूपेति** ; अभावरूपा न वेत्यर्थः । यदि च व्यावृत्तिर्नाभावरूपा तदा प्रतिपन्नोपाधौ प्रतीयमानव्यावृत्तिप्रतियोगित्वसिद्धावपि प्रतिपन्नोपाधौ प्रतीयमानाभावप्रतियोगित्वलक्षणं मिथ्यात्वं न सिध्यति ; अभावरूपत्वे सिध्यतीति भावः । **किं घटोऽस्तीत्यत्रेति** ; घटाभावव्यतिरेकेण पटव्यावृत्तेर्वक्तुमशक्यत्वादभाव एव व्यावृत्तिरित्याश्रीयते चेदित्यर्थः । **बाधफलभूता विषयनिवृत्तिरिति** ; बाधकज्ञानेन विषयीकृत इतराभाव इतरस्य मिथ्यात्वं साधयति, निषेधज्ञानविषयभूताभावप्रतियोगित्वस्यैव मिथ्यात्वरूपत्वादिति भावः । नन्वनुभूतिसत्ताया

---

*** यद्यपि तत्त्वटीकाकोशेषु —**
**"यानुभूतिरजानन्तामेयाद्यानन्दविग्रहा ।"**

**इति पाठ उपलभ्यते, तथाप्यस्याः कारिकाया आकरभूतायामिष्टसिद्धौ "यानुभूतिरजामेयानन्तात्मानन्दविग्रहा" इति पाठस्योपलम्भात् इष्टसिद्धिकृता स्वयमेव तेन क्रमेण कारिकाया विवरणाच्च तत्रत्यः पाठ आदृतः ।**

अप्यनुवर्तमानत्वाविशेषादनुभूतिरेव परमार्थ इति कथमुच्यत इत्याशङ्क्य सत्ताया अनुभूत्यव्यतिरिक्तत्वादनुभूतिरेव परमार्थ इत्युक्तेर्न विरोध इत्याह—**सैव सतीति** । **भेदो हीति**; भेदस्य दुर्निरूपत्वेन सदनुभूत्योरभेदसाधने, अनुभूतिरेव सती तद्भेदस्य दुर्निरूपत्वादित्यपि प्रसङ्ग इति चेत्—न; सदनुभूत्योर्घटपटयोरिव भेदग्राहकप्रमाणाभावादित्यत्र तात्पर्यात् । **स्वतःसिद्धेति**; अनन्याधीनप्रकाशेत्यर्थः । **सत्तयैव प्रकाशमानत्वात्**; प्रकाशाव्याप्यसत्ताकत्वादित्यर्थः । हेत्वसिद्धिमाशङ्क्य निराकरोति—**न ह्यनुभूतिरिति** । अन्याधीनप्रकाशस्य वस्तुनः कदाचित् प्रकाशव्यभिचारावश्यंभावात् प्रकाशाव्याप्यसत्ताकत्वं न स्यादिति भावः ।

### श्रीभाष्यम्

अथैवं मनुषे—उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते । 'घटोऽनुभूयते' इति न हि कश्चित् 'घटोऽयम्' इति जानंस्तदानीमेवाविषयभूतामनिदंभावामनुभूतिमप्यनुभवति । तस्मात् घटादिप्रकाशनिष्पत्तौ चक्षुरादिकरणसंनिकर्षवदनुभूतेः सद्भाव एव हेतुः । तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते । एवं तर्ह्यनुभूतेरजडाया अर्थवज्जडत्वमापद्यत इति चेत्, किमिदमजडत्वं नाम ? न तावत् स्वसत्तायाः प्रकाशाव्यभिचारः, सुखादिष्वपि तत्संभवात् । न हि कदाचिदपि सुखादयः सन्तो नोपलभ्यन्ते । अतोऽनुभूतिः स्वयमेव नानुभूयते, अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति ।

### श्रुतप्रकाशिका

एवमनुमानान्तरमुक्तम्; शङ्कितप्रत्यनुमानस्य सोपाधिकत्वं च दर्शितम् । अथ प्राकट्यानुमेयपक्षं निराचिकीर्षुरनुवदति—**अथैवं मनुष इत्यादिना** । प्रथमं स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिमुपपादयति—**उत्पन्नायामिति** । अनेन स्वोक्तस्य 'वस्तुत्वात्, भासमानत्वात्' इत्यादिप्रत्यनुमानस्य सोपाधिकत्वव्युदासः सेत्स्यतीति

भावः । **उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासत** इत्यत्र 'घटोऽयमिति' इत्यध्याहार्यम् ; 'घटोऽयम्' इति विषयमात्रमवभासत इत्यर्थः ; 'घटोऽयम्' इति जानन्निति हि वक्ष्यते । यथा संवित्सिद्धौ—

"घटोऽयमिति विज्ञाने घटमात्रं प्रकाशते ।
न वित्तिरिति युष्माकं गोष्ठीषु ननु घुष्यते ॥"

इति । **घटोऽनुभूयत** इत्यस्योत्तरत्रान्वयः । पूर्वत्रान्वयश्चेत् 'विषयमात्रमवभासते' इत्यनेन विरोधः स्यात् । कथं विषयमात्रस्यावभासः ? 'घटोऽनुभूयते' इत्यनुभवोऽपि प्रकाशत इति शङ्कायां विषयमात्रस्यैवावभासमुपपादयति—**घटोऽनुभूयत इत्यादिना** । यदा 'घटोऽयम्' इति जानाति, न हि तदानीमेव 'घटोऽनुभूयते' इति जानाति । कुत इत्यत्राह—**अविषयभूतामनिदंभावामिति** । **अविषयभूताम्** ; घटशब्दार्थव्यतिरिक्ताम् । **अनिदंभावाम्** ; अयंशब्दार्थव्यतिरिक्ताम् । घटत्वविशिष्टं पृथुबुध्नोदराकारद्रव्यं घटशब्दार्थः, संनिहितदेशवर्तमानकालविशिष्टत्वमिदंशब्दार्थः । उभयव्यतिरिक्तो ह्यनुभवः । स तु 'घटोऽयम्' इत्यनुभववेलायां नानुभूयत इत्यर्थः । **अविषयभूतामिति** साधारणनिर्देशः पटादीनामपि प्रदर्शनार्थः । अत एव 'अघटभूताम्' इत्यनुक्तिः । यद्वा **घटोऽनुभूयत इतीति** पूर्वेणान्वयः । इतिर्हेतौ । यतो घट एवानुभूतिकर्म, न त्वनुभूतिरपि तदानीमनुभूतिकर्म भवति, तस्माद्विषयमात्रमवभासत इत्यर्थः । अस्यैव विवरणम्—**न हीति** । शब्दलिङ्गालोकादीनां प्रकाशकानां ज्ञाततयैव प्रकाशकत्वं दृष्टम् ; अनुभूतिरप्रकाशा चेत् प्रकाशकत्वमपि न स्यादित्यत्राह—**तस्माद् घटादीति** । सत्तया प्रकाशकं ज्ञायमानतया प्रकाशकमिति द्विविधं प्रकाशकम् ; तत्र सत्तया प्रकाशककोटिनिविष्टं ज्ञानमित्यर्थः । क एवं नियामक इत्यत्राह—**तस्मादिति** । स्वसत्तयैव प्रकाशमानत्वहेतोरसिद्धेः, अस्मदुक्तहेतोः सोपाधिकत्वनिरासाच्चेत्यर्थः । यद्यनुभूतिः स्वयमेव न प्रकाशते तर्हि किं तस्यां प्रमाणमित्यत आह—**तदनन्तरमिति** । अर्थगतकादाचित्कप्रकाशातिशयलिङ्गेन कादाचित्कत्वात् कार्यं, कार्यत्वात् सहेतुकमित्यनुमानेन ज्ञायत इत्यर्थः । विषयगतप्राकट्यलिङ्गेन कथं स्वगतज्ञानमनुमीयत इति चेत् , स्वस्मै प्रकाशमानत्वात् स्वगतज्ञानानुमानमुपपद्यते । यदि ज्ञानपश्चाद्भाविना प्रकाशलिङ्गेन ज्ञानमनुमीयते, तर्हि 'घटोऽनुभूयते' इति वक्तुमयु-

क्तम्; 'घटोऽन्वभावि' इत्येव तु वक्तुं युक्तमिति शङ्कायामुक्तम्—**तदनन्तरमिति**। प्रत्यासत्त्यतिशयाद्वर्तमानव्यपदेश इत्यर्थः। अर्थेन्द्रियसंयोगसमनन्तरमेव 'घटोनुभूयते' इति प्रतीतेः। प्राकट्यलिङ्गेन ज्ञानानुमानानवकाशत्वशङ्का चानेन परिहृता। **तदनन्तरमिति**; शतपत्रपत्रवेधवदनुमानशैघ्र्यात्तथा प्रतीतिरुपपद्यत इति भावः। **मृषावादी** स्वदर्शनप्रसिद्ध्यानिष्टं प्रसञ्जयति—**एवं तर्हीति**। जडत्वं ज्ञानव्यतिरिक्तत्वम्, अचित्त्वमित्यर्थः। इह चानुभूतिरजडेति विपर्यये पर्यवसानं प्रसञ्जनीयस्य जडत्वस्यानिष्टत्वं च प्रतिक्षेप्तुमजडत्वं विकल्प्य दूषयति—**किमिदमिति**। **किमिदम्**; न किमपि; दुर्निरूपमित्यर्थः, अनन्तरं शिरोद्वयप्रदर्शनाभावात्। दुर्निरूपत्वविवरणमुत्तरग्रन्थः। विकल्पपरो वा किंशब्दः। अजडत्वं नाम किं हेतुत्वेनोक्तं विद्यमानदशायां सर्वदा प्रकाशमानत्वम्? उत साध्यतयाभिमतं स्वयमेव स्वस्य प्रकाशकत्वमिति विकल्पोऽभिप्रेतः। तत्र प्रथमे कल्पे किमुत्पत्तिकालेऽपि प्रकाशाव्यभिचारो विवक्षितः? उतोत्पत्तिक्षणादूर्ध्वं प्रकाशाव्यभिचार इति विकल्पोऽभिप्रेतः। तत्राद्ये शिरस्यसिद्धिः पूर्वमेवोक्तेति मत्वा द्वितीयेऽनैकान्तिकत्वमाह—**सुखादिष्विति**। तद्विवृणोति—**न हीति**। शिरोऽन्तरं दूषयति—**अत इति**। **अतः**; हेतोरसिद्ध्यनैकान्तिकत्वाभ्यां साध्यमपि नेत्यर्थः। अनेन जडत्वं नानिष्टमिति दर्शितम्। अनुमानान्तरेण साधयिष्यत इत्यत्राह—**अर्थान्तरामिति**; व्याहतत्वान्न किंचिदपि प्रमाणमिममर्थं साधयितुमलमित्यर्थः। यथाहुः—

"अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति॥"

इति। एवं जडत्वप्रसङ्गरूपतर्कस्य विपर्यये पर्यवसानाभावः, व्याप्त्यभावः, इष्टप्रसङ्गत्वं, व्याघातलक्षणप्रतितर्कपराहतत्वं च दर्शितम्। **इति**; 'अथैवं मनुषे' इति पूर्वत्रान्वयः।

## भावप्रकाशिका

**क एवं नियामक इत्यत्राहेति**; ज्ञानस्य सत्तया प्रकाशककोटिनिवेशः कुत इति शङ्कानिवारकं प्रागुक्तोपसंहारपरं तस्मादिति पदमिति भावः। **अस्मदुक्तहेतोः सोपाधिकत्वनिरासाच्चेति**; ज्ञानं परप्रकाश्यं, वस्तुत्वात् भासमानत्वाद्वेति हेत्वोः स्वसत्तया प्रकाशमानत्वाभावस्य परोद्भावितोपाधेर्निरासादित्यर्थः। **स्वस्मै भासमानत्वादिति**;

या ज्ञातता यत्पुरुषवेद्या सा तदीयज्ञानजन्येति व्याप्त्या स्वीयमेव ज्ञानमनुमीयते, नान्यदीयमिति भावः ।

**श्रुतप्रदीपिका**

अथ वस्तुत्वादिति हेतोरुपाधितयोक्तायाः सत्त्वेऽप्यस्फूर्तेः साधनव्यापकतयानुपाधित्वं हेतुतयोक्तस्य सत्त्वे सदा भानस्यासिद्धिं च कौमारिलमतेन शङ्कते—**अथैवमिति** । तदुपन्यस्यति—**उत्पन्नायामिति** । मात्रचा धीव्युदासः । 'घटोऽयम्' इत्यध्याहार्यम् ; 'घटोऽयमिति जानन्' इति ह्यनन्तरं विवरिष्यते । उक्तं च संवित्सिद्धौ—

"घटोऽयमिति विज्ञाने घटमात्रं प्रकाशते ।
न वित्तिरिति युष्माकं गोष्ठीषु ननु घुष्यते ॥"

इति । **घटोऽनुभूयते** इत्यस्योत्तरत्रान्वयः, विषयमात्रमित्यनेन विरोधात् । 'घटोऽनुभूयते' इत्यनुभवोऽपि भासत इत्यत्राह—**घटोनुभूयत इत्यादि** । 'घटोऽयम्' इति ज्ञानवेलायां घटेदंशब्दार्थान्यत्वादनुभूतेरनुभवो नास्तीत्यर्थः । घटपटादिसाधारण्यज्ञापनाया-घटभूतामित्यनुक्तिः । अननुभूतस्य कथं भासकत्वम् ? शब्दलिङ्गालोकादि हि ज्ञाततया भासकमित्यत्राह—**तस्मादिति** । ज्ञानमक्षवत् सत्तया भासकम् । किं नियामकमित्यत्राह—**तस्मादिति** । त्वदुक्तहेतोरसिद्धेर्मदुक्तस्य च निरुपाधिकत्वादित्यर्थः । तर्हि धीव्यवहारः कथमित्यत्राह—**तदनन्तरमिति** । **कादाचित्केति** ; कादाचित्कत्वात् कार्यं, ततः सहेतुकमित्यनुमेत्यर्थः । अर्थगतस्यापि प्राकट्यस्य स्वप्रतियोगिकत्वात् स्वगतज्ञानानुमापकत्वम् । व्याप्तिस्मरणादेरनवकाशमाशङ्क्याह—**तदनन्तरमिति** । शतपत्रपत्रवेधवत् शैघ्र्यादुपपन्नमिति भावः । **अनुमीयत इति** ; वर्तमानव्यपदेशोऽप्यासत्त्यतिशयादिति चाभिप्रेतम् । स्वदर्शनप्रसिद्ध्या परश्चोदयति—**एवमिति** । दूषयति—**किमिदमिति** । किं साधकतयाभिमतं सत्त्वे सदा भानम्, उत साध्यतयाभिमतं स्वयंप्रकाशत्वमिति विकल्पमभिसंधाय प्रथमस्यासिद्धत्वेऽपि सिद्धत्वमुपगम्यानैकान्त्यमाह—**न तावदिति** । तद्विवृणोति—**न हीति** । द्वितीयं दूषयति—**अत इति** । साधनस्यासिद्ध्यनैकान्त्याभ्यां न साध्यसिद्धिरित्यर्थः । प्रथमे सुखादेर्धीविशेषत्वेनानैकान्त्याभावमनुभूतित्वादिहेत्वन्तरेणापि तत्साधनं चाशङ्क्य व्याहतिपरास्तत्वमाह—**अर्थान्तरमिति** । **इति मनुष** इत्यन्वयः ।

**तत्त्वटीका**

तदुभयं भाट्टमतेन शङ्कते—**अथेति** । **विषयमात्रम्**; घटादिमात्रम्; न तु तद्धीरित्यर्थः । तदिदं व्यक्तमनूक्तं संवित्सिद्धौ—

"घटोऽयमिति विज्ञाने घटमात्रं प्रकाशते ।
न वित्तिरिति युष्माकं गोष्ठीषु ननु घुष्यते ॥"

इति । विषयमात्रभाने हेतुमाह—**घट इति** । घटस्यानुभूतिकर्मत्वात् धियः स्वकर्मत्वविरोधात्तदानीं न भानमिति भावः । यद्वा प्रतिषेधार्थोऽयमनुवादः । **घटोऽनुभूयत इति न ह्यनुभवती**त्युत्तरत्रान्वेति; 'घटोऽयम्' इति ज्ञानं यदा जायते, न तदानीं 'घटोऽनुभूयते' इत्यनुभवः । घटानुभूतेर्घटशब्देदंशब्दार्थान्यत्वादित्यर्थः । घटोक्तेः प्रदर्शनार्थत्वज्ञापनाय **अविषयभूता**मित्युक्तम् । **अनिदंभावाम्**; घटस्य देशविशेषसांनिध्यमिहेदंभावः; तद्रहितामिति यावत् । नन्वालोकलिङ्गादीनामज्ञातानां न भासकत्वं दृष्टम्; तथात्रापि स्यात्; अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गश्च । आह च कीर्तिः—"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति" इति; तत्राह—**तस्मादिति**; हेतुतयोपाधिनिवृत्तितया च विवक्षितस्य यावत्सत्त्वं प्रकाशमानत्वस्य निरस्तत्वादित्यर्थः । ज्ञापकानां ज्ञातृत्वमिन्द्रियादिषु न दृष्टम्; स्वस्य ज्ञानोत्पत्त्या स्वपरवेद्यवैषम्यमित्यवधारणाभिप्रायः । यदि वर्तमानदशायां धीः स्वयं नानुभूयेत, तदा 'अनुभूयते' इति वर्तमानावभासः कथं स्यात्? उत्तरक्षणे च निवृत्ता कथं गृह्येत? ज्ञानग्राहकाभावे ज्ञेयस्यापि निष्प्रमाणकत्वात्सर्वासिद्धिरित्यत्राह—**तदनन्तरमिति** । अत्यन्तासन्नत्वात् 'अनुभूयते' इति वर्तमानोक्तिः; व्याप्तिस्मरणादिकं च संस्कारभूम्ना शीघ्रं भवति; कालभेदाग्रहोऽपि पद्मपत्रशतवेधन्यायादविरुद्ध इति भावः । 'घटः प्रकाशते' इति विषयसामानाधिकरण्यादर्थगतत्वोक्तिः । आत्मगता धीरितरविषयस्य प्रकाश इति शङ्का च तेन व्युदस्ता । वेद्यगतप्रकाशस्य कादाचित्कत्वोक्त्या तत्कारणत्वेन धीरनुमेयेति बोध्यते । अर्थगतत्वे रूपादिवत्पुरुषविशेषविषयत्वं न स्यादिति शङ्कानिरासाय प्रकाशशब्दः । अर्थप्रकाशो हि पुरुषविशेषधीजन्यतया तत्प्रतियोगितयैव स्वतः परतो वा कुतश्चिद्ज्ञातत्वात्तद्गतज्ञानानुमापक इति भावः । अर्थगतप्रकाशो वायुरूपादिवत् योग्यानुपलब्धिनिरस्त इत्यत्र विषयस्वरूपात् तद्धर्मान्तरेभ्यश्च व्यावृत्ततयोपलब्धिमतिशयशब्देन व्यनक्ति । अत्र 'अन्यतः सिद्धौ'

इत्यादिभिः प्रागुक्तं स्मारयन्मृषावादी चोदयति—**एवं तर्हीति ;** स्वेतराधीनसिद्धित्वे संतीत्यर्थः। स्वमतेन श्रुत्यनुमाभ्यां सिद्धवत्कारात् **अजडाया** इत्युक्तम्। प्रसङ्गदोषान्विवक्षुः प्राकट्यवादिप्रसञ्जनीयविपर्ययं विकल्पयति—**किमिदमिति**। किं हेतुत्वेनोपाधिविपर्ययत्वेन चोक्तं यावत्सत्तं भासमानत्वम्, उत साध्यत्वेनोक्तं स्वतः सिद्धत्वमिति विकल्पः। अत्राद्यं दूषयति—**न तावदिति**। वेद्यत्वे यावत्सत्तं प्रकाशमानत्वाभाव इति प्रसङ्गार्थः स्यात्; सोऽस्मदिष्टः; विपर्यये पर्यवसानं च न संभवतीति भावः। मूलशैथिल्यमप्याह—**सुखादिष्विति**। यद्यप्यस्माकं सुखादेरुत्पत्तिक्षणात्पश्चाज्ज्ञानान्तरेण ग्रहणम्; सिद्धान्तिनस्तु धीविशेषत्वेन स्वतः सिद्धत्वम्, तथापि त्वत्पक्षे चैतन्योपरञ्जितान्तःकरणविवर्ततयाध्यस्तत्वेन शुक्तिरूप्यवदप्रकाशमानक्षणक्लृप्त्ययोगात्सुखादौ व्याप्तिभङ्गः सिद्ध इत्यभिप्रायेण विवृणोति—**न हीति**। अन्ततस्त्वन्मते प्रातिभासिकरजतादिः साक्षिचैतन्येन यावत्सत्तं प्रकाशमाना अविद्यादयश्चादिशब्दार्थः। बुद्धेर्यावत्सत्तं प्रकाशमानत्वमिच्छतः सुखादावपि तद्वत्स्वरसदृष्ट्या तथा किं न स्यादिति कल्पयित्वा वा तदुक्तिः। द्वितीये त्ववेद्यत्वे स्वयंप्रकाशत्वाभावः स्यादिति प्रसङ्गार्थः। तथापीष्टप्रसङ्गो विपर्ययापर्यवसानं चेत्याह—**अत इति ;** आद्यकोटिनिरासादन्या शिष्यते, सापि नास्तीत्यर्थः; प्रकाशाव्यभिचारस्य हेतोरसिद्धेरनैकान्त्याच्चेति वा। अनुभूतित्वहेतुना तत्सिद्धिः स्यादित्यत्राप्रसिद्धसाध्यतया व्याप्तिग्रहणाभावे केवलव्यतिरेकिणोऽनुमानत्वमेव नास्तीत्यभिप्रायेण साध्यरूपे व्याहतिमाह—**अर्थान्तरमिति**। स्वयंप्रकाशत्वाभावः स्यादिति तर्केऽपि प्रतियोग्यसिद्धेस्तदभावप्रसङ्गोऽशक्यः।

स्वप्रकाशत्वविषयाः श्रुतयः स्मृतयश्च नः।
स्वधर्मभूतबुद्ध्यैव पुंसो भानं प्रचक्षते ॥ ३४३ ॥

कर्मकर्तृविरोधादङ्गुल्यग्रस्य स्वात्मस्पर्शविरोधः, इह तु न तथेति चेत्, इहापि गमनगन्तव्यादिवत् क्रियाकर्मत्वविरोधः सिद्धः। **इतिः** शङ्कासमाप्तौ।

## मूलभावप्रकाशिका

ज्ञानं न स्वप्रकाशकम्; अपितु प्राकट्यापरपर्यायज्ञाततारव्यलिङ्गेनानुमीयत इति भाट्टमतमुपक्षिपति—**अथैवमिति**। घटोऽनुभूयत इत्यनिदंभावामप्यनुभूतिमनुभवतीति योजना। **घटादिप्रकाशनिष्पत्ताविति ;** घटादिगतज्ञाततापरपर्यायप्रकाशनिष्पत्तावित्यर्थः।

यदि वा जडत्वमज्ञानत्वं तर्हि ज्ञानान्तरवेद्यत्वे ज्ञानत्वं न स्यादित्युपपादनीयम् ; तदपि न संभवति, अप्रयोजकत्वात् । यदि चाजडत्वं ज्ञातृत्वं न स्यादित्युच्यते, तदाप्रयोजकत्वमविशिष्टम् । इष्टापत्तिरधिकदूषणं द्रष्टव्यमिति । **अर्थान्तरमिति** ; यथाहुः—

" अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥ "

इति । **स्वात्मस्पर्शवदशक्यत्वादिति** ; **अथैवं मनुष** इति पूर्वेणान्वयः ।

**श्रीभाष्यम्**

**तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम् ; अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः ; उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च । अतो नानुभूतिरनुमीयते ; नापि ज्ञानान्तरसिद्धा ; अपितु सर्वं साधयन्त्यनुभूतिः स्वयमेव सिध्यति । प्रयोगश्च—अनुभूतिरनन्याधीनस्वधर्मव्यवहारा, स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात् । यः स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुः स तयोः स्वस्मिन्ननन्याधीनो दृष्टः, यथा रूपादिश्चाक्षुषत्वादौ । रूपादिर्हि पृथिव्यादौ स्वसंबन्धाच्चाक्षुषत्वादि जनयन् स्वस्मिन्न रूपादिसंबन्धाधीनश्चाक्षुषत्वादौ । अतोऽनुभूतिरात्मनः प्रकाशमानत्वे 'प्रकाशते' इति व्यवहारे च स्वयमेव हेतुः ।**

**श्रुतप्रकाशिका**

अथ स्वयंप्रकाशत्ववाद्याह—**तदिदमिति** । **अनाकलितानुभवविभवस्य** ; स्वव्यतिरिक्तस्य कृत्स्नस्य प्रकाशकः सन्ननुभवः स्वात्मन्यनन्यापेक्ष इत्येको विभवः ; प्राकट्यहेतुको यो व्यवहारः 'प्रकाशते' इति, तं च जनयितुमयमेव क्षम इत्यपरः ; एवं द्विविधोऽनुभवविभवोऽनाकलितो येन सोऽनाकलितानुभवविभवः; तस्य । **स्वमतिविजृम्भितम्** ; प्रमाणतर्कनिरपेक्षस्वोत्प्रेक्षामात्रविजृम्भितमित्यर्थः ; स्वमतिमाहात्म्यमित्यपि

क्षेपो वा। पारिशेष्यात्स्वयंप्रकाशत्वमभ्युपगमयितुं प्रथमं प्राकट्यलिङ्गं प्रतिक्षिपति—**अनुभूतीत्यादिना**। **अनुभूतिव्यतिरेकिण** इत्यनेनासाधारण्यप्रतिक्षेपः फलितः। **विषयधर्म**शब्देनात्मधर्मव्युदासः। तेन रूपादिवत् साधारण्यं फलितम्। अनुभूतिव्यतिरेकी विषयधर्मः प्रकाशः प्रत्यक्षयोग्यो न वा? न चेत् लिङ्गज्ञानाभावादनुमानानुदयः। योग्यश्चेदन्यैरप्युपलभ्यः स्यात्, रूपादिवदिति भावः। अपेक्षाबुद्धिजन्यस्य द्वित्वादेर्यथा तत्तदेकपुरुषवेद्यत्वं तद्वत् प्राकट्यमपि तदेकपुरुषवेद्यमिति चेत्—न; द्वित्वादिसंख्याः प्रागेव सन्ति। यथैकत्र सर्वा दिशस्तत्तदुपाध्यपेक्षाबुद्ध्याभिव्यङ्ग्याहिताः, एवमपेक्षाबुद्ध्यभिव्यङ्ग्यद्वित्वादि तस्यैव प्रकाशते यद्गतमभिव्यञ्जकम्। अत्र तु रूपादिवज्जन्यधर्मत्वाभ्युपगमात् सर्वैरुपलभ्येत। अभिव्यङ्ग्यत्वेऽभिव्यञ्जकवत एवावभासते सिद्धाञ्जनवतो निधिरिव; न तु जन्यं जनकस्यैवावभासते; न हि कुलालस्यैव घटः प्रकाशते। किंच **रूपादिवदिति**; धर्मस्य निराश्रयोत्पत्त्ययोगादतीतानागतयोरर्थयोरपि जायमानप्राकट्यायोगात् प्राकट्याभावेऽपि ज्ञानं प्रतीयत इति, तत्र रूपादिवत् प्रकाशानुपलब्धेः प्राकट्येन ज्ञानानुमानं न संभवतीति भावः। यथा संवित्सिद्धौ—

> "अतीतेऽनागते चार्थे कथं प्राकट्यसंभवः।
> न हि धर्मिण्यसत्येव धर्मः संभवमृच्छति॥"

इति। अतीतानागतयोरपि द्वित्वादिवत् प्राकट्यं जन्यत इति चेत्—न; द्वित्वादेरपि निराश्रयोत्पत्त्ययोगात्; तत्र द्वित्वाद्यनुत्पत्तावपि घटादेरिव द्वित्वादेरपि धीस्थतया व्यवहारोपपत्तेश्च। ये पुनर्द्वित्वादिकं नाभ्युपयन्ति न तान् प्रति द्वित्वादिकं प्रतिबन्दीकार्यम्। विषयविषयिभावसंबन्धस्य विद्यमानाश्रयत्वनियमाभावात् विषयविषयिभाव एव प्राकट्यमिति चेत्—न; संबन्धस्य संबन्धिभ्यां विना प्रतीत्यनुपपत्त्या संबन्धिज्ञानं च प्रतीयत इत्यनुमेयमेव न स्यादिति प्राकट्यं लिङ्गं न भवति। एवं प्राकट्याख्यं वस्त्वनुपलब्धमप्यन्यथानुपपत्त्या कल्प्यत इत्याशङ्क्य कल्पकस्यान्यथासिद्धिं दर्शयति—**उभयेति**। अनुभूत्येत्युक्ते प्राकट्यस्य नामान्तरमुक्तं स्यादिति शङ्कानिरासार्थमुभयाभ्युपेतशब्दः। यां प्राकट्यजनकत्वेनाभ्यधाः, तयैवेत्येवकाराभिप्रायः। **अशेषव्यवहारः**; हानोपादानादिः; तस्यानुभूत्यैव संभवान्न तेन प्राकट्यं कल्प्यम्। 'ज्ञातो घटः, प्रकटो घटः' इति व्यवहारश्च 'इष्टो घटः, द्विष्टो घटः' इतिवदन्यथासिद्ध इत्यशेषशब्दाभिप्रायः। न

हीच्छाजन्येनार्थगतेष्टत्वेनेच्छानुमीयते। 'घटः प्रकाशते' इति घटकर्तृकतया प्रकाशः प्रतीयते; 'घटमनुभवति' इति घटकर्मकतयान्यकर्तृकतया चानुभवः प्रतीयते; एवमेकस्यैव कर्मकर्तृव्यवहारानुपपत्त्या कल्प्यत इति चेत्—न; कारकभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदनिबन्धनत्वाभावात्। यथा 'परशुमुद्यम्य वृक्षे निपातयति' 'परशुना वृक्षं छिनत्ति' इत्युक्तौ परशोः कर्मत्वकरणत्वे श्रुते, अथापि नार्थभेदः, वृक्षस्याधिकरणत्वकर्मत्वे श्रुते, तथापि नार्थभेदः, तथा व्यवहारभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदनिबन्धनत्वाभावान्न व्यवहारः प्राकट्यकल्पक इत्यभिप्रायेण चाशेषव्यवहारोपपत्तावित्युक्तम्। 'घटः प्रकाशते' इति व्यवहारो घटगतातिशयेन विना नोपपद्यते; अन्यथा पटेऽपि तस्य व्यवहारस्य प्रसङ्गात्; स चातिशयः प्राकट्यमिति चेत्—न; योऽतिशयो व्यवस्थापकः स कथं घट एव स्यात्, न पटे? इन्द्रियसंयोगवशादिति चेत्, तेन ज्ञानमेव व्यवस्थाप्यताम्, किमतिशयान्तराभ्युपगमेनेत्ययमर्थोऽप्यशेषव्यवहारशब्देनाभिप्रेतः। यत्तु 'घटोऽयम्' इत्यनुभववेलायां नानुभूत्यनुभव इति, तन्न, 'अनुभूयते' इति शब्दाप्रयोगस्याविवक्षानिबन्धनत्वेनाननुभवप्रयुक्तत्वाभावात्। लोको ह्यनुभूतकृत्स्नार्थविवक्षास्ति चेत् तं सर्वं वदति, एकदेशविवक्षा चेदनुभूतैकदेशं वदति, एकदेशविवक्षापि नास्ति चेत् न किंचिदपि वदति; अतः 'अनुभूयते' इति शब्दाप्रयोगो न तदप्रकाशत्वे हेतुः। इदमप्यशेषव्यवहारशब्देनाभिप्रेतम्, विकलस्याविकलस्यापि व्यवहारस्याशेषशब्देन क्रोडीकर्तुं शक्यत्वात्। एवं व्यवहारस्यान्यथासिद्धत्वादनन्यथासिद्धस्यैव कल्पकत्वात् न प्रकाशः कल्प्य इत्यर्थः। प्राकट्यानुमेयत्वानुपपत्तिं निगमयति—**अत इति** । **अतः**; अनुपलब्धिव्यवहारान्यथासिद्धिभ्यां प्राकट्याभावादनुभूतिर्न प्राकट्यानुमेयेत्यर्थः। मानसप्रत्यक्षवेद्यत्वानुपपत्तिमभिप्रेत्याह—**नापि ज्ञानान्तरसिद्धेति**। इदमत्र परोक्तमनुमानम्—ज्ञानं मानसप्रत्यक्षग्राह्यं, क्षणिकत्वे सत्यात्मविशेषगुणत्वात् सुखदुःखप्रयत्नादिवदिति। आत्मविशेषगुणत्वादित्युक्ते धर्मादिष्वनैकान्त्यं स्यादिति तद्व्यावृत्त्यर्थं क्षणिकत्वे सतीत्युक्तम्। क्षणिकविशेषगुणत्वादित्युक्ते शब्दे व्यभिचारः; क्षणिकात्मगुणत्वादित्युक्ते आत्मनः संयोगे व्यभिचारः स्यादिति तत्परिहारार्थमात्मविशेषशब्दौ। तदिदमनुपपन्नम्, क्षणिकत्वगुणत्वयोरन्यतरासिद्धत्वात्। दृष्टान्तश्च साधनविकलः। किंच यन्मानसप्रत्यक्षवेद्यं तदबुभुत्सितग्राह्यं दृष्टम्; यथा सुखादि। अतश्च

तद्विषयज्ञानं नियतमिति वक्तव्यम् । तस्मात् घटादिज्ञानविषयं यत् ज्ञानं तस्याप्यबुभुत्सितग्राह्यत्वात् मानसप्रत्यक्षवेद्यत्वं स्यात्, तद्विषयज्ञानस्यापि तथेत्यनन्तसंविदावलिसमुदयस्यावर्जनीयत्वात् ज्ञानान्तरानवकाशः स्यात् । मानसप्रत्यक्षग्राह्यत्वस्याबुभुत्सितग्राह्यत्वव्याप्यत्वं नास्ति, स्वापादावुच्छ्वासनिश्वासप्रयत्ने सत्यपि तद्ग्रहणाभावादिति चेत्—न; तदानीं जीवात्मनि प्रयत्नस्याभावात् । देहधारणादयः परमात्मसंकल्पाधीनास्तदानीमिति हि वेदान्तिनः । "अन्तराभूतग्रामवत्" इत्यधिकरणेऽयमर्थः सुनिर्णयः । स्वापे देहपरिवर्तनादिस्त्वङ्गप्रत्यङ्गतोदात् दंशमशकादिजन्यदुःखादिना वाल्पबोधे सति भवति । तदानीं च प्रयत्नो धीविषयः । अतो हेतोरव्यभिचारान्मानसग्राह्यं सर्वमबुभुत्सितग्राह्यमित्यनवस्था स्यादेव । यदि बुभुत्सितग्राह्यं तर्ह्यन्योन्याश्रयणम्––ज्ञाने सतीच्छा, इच्छायां सत्यां ज्ञानमिति । किंच मानसप्रत्यक्षवेद्यस्य बुभुत्सितग्राह्यत्वेऽपि सुखादिषूपलब्धिनियमदर्शनात् बुभुत्सानियमः कल्प्य इति तद्वदेव ज्ञानेऽपि बुभुत्सानियमसिद्धिः । उपलब्धिश्च नियता स्यात् । अतो बुभुत्सान्तरितज्ञानपरंपराया अविरतिः स्यात् । ज्ञानं बुभुत्सितग्राह्यं, सुखादि तु नेति चेत्—न; मानसप्रत्यक्षवेद्यत्वाविशेषे नियामकाभावात् । सुखादिषु घटादिविषयप्रथमज्ञाने च बुभुत्सा, द्वितीयादौ तु नेति चेत्—न; नियामकाभावात् । मानसग्राह्यत्वाविशेषात् प्राप्तां बुभुत्सां को वारयेत्? मानसग्राह्यत्वे सति हि बुभुत्सा । सुखादिकं घटादिविषयप्रथमज्ञानं च मानसग्राह्यम्; द्वितीयादिज्ञानं न मानसप्रत्यक्षवेद्यमिति चेत्—न; तत्रापि नियामकाभावात् । किंच क्षणिकात्मविशेषगुणत्वे सत्यपि द्वितीयादिज्ञानं न मानसग्राह्यं चेत् हेतोरनैकान्त्यम् । यदा प्रत्यक्षेण गृह्यते तदा मानसग्राह्यमिति चेत्, तर्हि पक्षो हेतुश्च प्रत्यक्षग्राह्यशब्देन विशेष्यौ स्याताम् । किंचान्यैरप्युक्तानि दूषणान्तराण्युच्यन्ते—यदि द्वितीयज्ञानं न मानसग्राह्यं, तस्य द्वितीयस्य निष्प्रमाणकत्वेन शून्यता च स्यात्; ततश्च प्रथमस्य ततस्तद्विषयघटादेरपि शून्यता स्यात् । द्वितीयादिज्ञानं स्वतः सिद्धं चेत् प्रथमज्ञानमपि तथा स्यादिति । एवमाद्यभिप्रायेण **नापि ज्ञानान्तरसिद्धे**त्युक्तम् । अथ पारिशेष्यात् स्वयंप्रकाशत्वं सिद्धमित्याह—**अपित्विति** । **सर्वमिति**; अन्यथा संविदः शून्यत्वेन तदधीनसिद्धि सर्वं शून्यं स्यादिति तत्परिहाराय स्वयंप्रकाशत्वमवश्याभ्युपगन्तव्यमित्यभिप्रायेण **सर्वं साधयन्त्यनुभूतिः स्वयमेव सिध्यती**त्युक्तम् । यथा संवित्सिद्धौ—

"तदेवापश्यतां सर्वशून्यत्वाद् बिभ्यतां सताम् ।
गतिः स्वयंप्रकाशत्वादृते नान्योपलभ्यते ॥"

इति । अथ तर्कानुग्राह्यं स्वयंप्रकाशत्वे प्रमाणमुपन्यस्यति—**प्रयोगश्चेति** । न केवलं पारिशेष्यात् स्वतःसिद्धत्वं, साधकप्रमाणमप्यस्तीति चार्थः । **अनुभूतिरि**त्यादिनानुमानद्वयं ग्रन्थलाघवार्थमविभागेनोक्तम् । अनुभूतिरनन्याधीनस्वधर्मा, स्वसंबन्धादर्थान्तरे तद्धर्महेतुत्वात्; अनुभूतिरनन्याधीनस्वव्यवहारा, स्वसंबन्धादर्थान्तरे तद्व्यवहारहेतुत्वात्—इत्येवं विभागः । अत एव हि 'परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वम्' इत्युत्तरत्र वक्ष्यते । प्राकट्यमभ्युपगम्य तदुपजीवनेन प्रथममनुमानमुक्तम् । तदनुपजीव्य तु द्वितीयम् । प्राकट्याभ्युपगमस्य न स्वप्रकाशताविरोधित्वं तस्य ज्ञानानुमापकत्वानभ्युपगमात् । धर्मवत्त्वेऽनन्याधीनधर्मवत्त्वे च साध्ये सिद्धसाध्यता स्यात्, अनुभूतित्वादिधर्माणां हेत्वन्तरनैरपेक्ष्यात् । न ह्यनुभूतित्वजातिर्हेत्वधीना, नित्यत्वात् । जात्यनभ्युपगमेऽप्यनुभूतित्वस्यानुभूतिसामग्रीव्यतिरिक्तहेत्वनपेक्षत्वात् सिद्धसाध्यता । अतोऽनन्याधीनस्वधर्मेत्युक्तम् । स्वस्य धर्मः स्वोत्पाद्यतया स्वसंबन्धी धर्मः स्वधर्मः । परत्र स्वसाध्यधर्मात्यन्तसजातीयधर्म इत्यर्थः, 'अर्थान्तरे तद्धर्महेतुत्वात्' इति हेतूक्तेः । स्वधर्मशब्दनिर्दिष्टधर्मो हि तच्छब्दोक्तः । परत्र स्वसाध्यधर्मात्यन्तसजातीयः स्वस्मिन्नवश्यंभावी धर्मः स्वधर्मत्वेन विवक्षितः । अत एव स्वस्मिन् रूपित्वानापादनात् रूपस्य दृष्टान्तस्य साध्यविकलत्वशङ्का व्युदस्ता स्यात्; दण्डान्तरनिरपेक्षं स्वस्मिन् दण्डित्वमनापादयति दण्डे व्यभिचारश्च परिहृतः स्यात् । अन्यशब्दश्च स्वात्यन्तसजातीयान्यपरः, अन्यथा हेतुमात्रनिरपेक्षत्वे दृष्टान्तस्य साध्यविकलत्वं स्यात् । चक्षुराद्यपेक्षं हि रूपस्य चाक्षुषत्वम् । तादृशहेत्वपेक्षानियमराहित्यमनन्याधीनशब्देन विवक्षितम्; अन्यापेक्षामात्रविरहे साध्ये परज्ञानस्यानुमेयत्वदर्शनेन बाधितत्वप्रसङ्गात् । न हि ज्ञानान्तरागोचरत्वमेतदनुमानसाध्यम्; अपितु स्वात्यन्तसजातीयानपेक्षप्रकाशार्हत्वमात्रम् । तच्च परज्ञानस्य संभवतीति न बाधितविषयत्वम् । अनन्याधीनस्वव्यवहारेत्यत्रापि व्यवहारवत्त्वे साध्ये सिद्धसाध्यता । अतोऽनन्याधीनशब्दः । अन्यशब्दस्यात्यन्तसजातीयपरत्वाद्वागाद्यपेक्षया बाधितत्वशङ्का परिहृता स्यात् । घटादीनां हानादिव्यवहारे स्वात्यन्तसजातीयानपेक्षो हेतुरनुभूतिरिति सिद्धसाध्यत्वव्युदासाय स्वशब्दः । स च परत्र स्वसाध्यव्यवहारात्यन्त-

सजातीयपरः, व्यवहारस्यात्यन्तसजातीयत्वं नाम अभिन्नप्रवृत्तिनिमित्तकत्वम्। व्यवहारानुगुण्यमात्रं हि 'प्रकाशते' इति व्यवहारस्य निमित्तम्। परज्ञानव्यवहारे कालात्ययापदेशपरिहारायापेक्षानियमराहित्यं विवक्षितम्। हेतुमाह—**स्वसंबन्धादिति**। धर्महेतुत्वे व्यवहारहेतुत्वे च हेतौ विवक्षितेऽनैकान्त्यं स्यादिति तत्परिहाराय तच्छब्दः। स्वस्य यो धर्मो व्यवहारश्च तदत्यन्तसजातीयो धर्मो व्यवहारश्च तच्छब्दविवक्षितः। स्वस्याग्निसंबन्धात् स्वस्मिन् पूर्वरूपसजातीयरूपान्तरतद्व्यवहारहेतुः घटोऽग्निसापेक्ष इति, तत्र व्यभिचारपरिहारायार्थान्तर इत्युक्तम्। किंचार्थान्तरशब्दो निर्दिष्टजातोयाद्विजातीयपरः। तेन परस्मिन् द्रव्ये संयुक्तत्वतद्व्यवहारहेतोर्द्रव्यस्य परद्रव्यसापेक्षतयानैकान्त्यं परिहृतं स्यात्। द्रव्यं हि द्रव्यस्यात्यन्तसजातीयम्। ननु घटो हि पटे संयुक्तत्वादिकमापादयन् स्वस्य तथात्वे घटान्तरापेक्ष इत्यनैकान्त्यम्; नैवम्—स्वसजातीयापेक्षानियमविरहरूपस्य साध्यधर्मस्य तत्र विद्यमानत्वात्। न हि घटः स्वसंयुक्तत्वादौ स्वात्यन्तसजातीयं घटमेवापेक्षत इति नियमोऽस्ति। पुत्रे पुत्रत्वतद्व्यवहारहेतौ पितरि स्वस्य पुत्रत्वव्यवहाराय पित्रन्तरसापेक्षे व्यभिचारपरिहाराय **स्वसंबन्धा**दित्युक्तम्। विद्यमानः स्वसंबन्धो विवक्षितः। परत्र स्वसंबन्धतुल्यकालस्वगतधर्मात्यन्तसजातीयधर्मतत्सापेक्षव्यवहारहेतुत्वादित्यर्थः। न हि पित्रादिप्रवासनिधनयोः पुत्रादौ पुत्रत्वं तद्व्यवहारश्चापगच्छति। अत एव स्वस्मिन्ननन्यापेक्षद्वैधीभावमनापादयति परत्र द्वैधीभावहेतौ द्रव्ये व्यभिचारश्च दूरोत्सारितः। ननु सिद्धान्तिनोऽप्यभिमतमिदमनुमानम्; चेतनः स्वसंबन्धतुल्यकालं शरीरत्वं शरीरे जनयन् स्वस्मिन् शरीरत्वतद्व्यवहारयोर्नानन्यापेक्षः, अपितु परमात्मसापेक्षः; परमात्मा च चेतनत्वादत्यन्तसजातीयः; अतः तत्रानैकान्त्यमिति—नैवम्, स्वव्यापकधर्महेतुत्वस्य विवक्षितत्वात्। न हि चेतनत्वव्यापकं शरीरत्वम्, ईश्वरस्य चेतनस्यापि शरीरत्वाभावात्। अतः स्वधर्मशब्दाभिप्रेतेन स्वावश्यंभावित्वेन परिहारः। एतदुक्तं भवति—धर्मशब्दः प्रकाशपरो वा, धर्ममात्रपरो वा; अन्यशब्दश्च अन्यमात्रपरो वा, स्वात्यन्तसजातीयभूतान्यपरो वा। तत्र हेतुमात्रानपेक्षप्रकाशत्वे दृष्टान्तस्य साध्यविकलत्वम्; रूपं हि चक्षुराद्यपेक्षप्रकाशम्। स्वात्यन्तसजातीयानपेक्षप्रकाशत्वे साध्ये व्यर्थविशेषणत्वं हेतोः, हेतुत्वमात्रेण साध्यसिद्धेः। न हि यस्य कस्यचिद्धेतुः सन् घटादिः स्वप्रकाशे घटान्तरादिकमपेक्षते। हेत्वनपेक्षधर्मत्वेऽनुभूतित्वादिना सिद्धसाध्यता,

परश्वथादिष्वनैकान्त्यं च, काष्ठद्वैधीभावहेतोः परश्वथस्य स्वद्वैधीभावे हेत्वन्तरसापेक्षत्वात्। स्वात्यन्तसजातीयानपेक्षधर्मत्वे चानुभूतित्वादिना सिद्धसाध्यता ; विषयप्रकाशके परज्ञाने लिङ्गापेक्षप्रकाशकत्वदर्शनात् बाधश्च । रूपे रूपान्तरानपेक्षस्वगतरूपत्वहेतुत्वाभावात् दृष्टान्तस्य साध्यविकलता । पुत्रगतपुत्रत्वहेतौ पित्रन्तरसापेक्षपुत्रत्वधर्मे पितर्यनैकान्त्यं च । परद्रव्यगतसंयुक्तत्वहेतौ द्रव्यान्तरसापेक्षसंयोगे द्रव्ये चानैकान्त्यम् । अत एवमादिदोषपरिहारार्थमित्थं प्रयोक्तव्यम्—अनुभूतिः स्वजन्यपरगतधर्मात्यन्तसजातीयधर्मभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति प्रतिज्ञा ; स्वविसजातीये स्वावश्यंभाविधर्मात्यन्तसजातीयस्वसंबन्धतुल्यकालधर्महेतुत्वादिति हेतुः । तथा अनुभूतिः स्वजन्यपरगतव्यवहारात्यन्तसजातीयव्यवहारभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति प्रतिज्ञा ; स्वाविसजातीये स्वावश्यंभाविव्यवहारात्यन्तसजातीयस्वसंबन्धतुल्यकालव्यवहारहेतुत्वादिति हेतुः । व्यवहारस्य स्वावश्यंभावित्वं नामावश्यंभावित्वधर्मनिबन्धनत्वम् । व्याप्तिप्रदर्शनपूर्वकं दृष्टान्तमाह—**य इति** । साध्यसाधनधर्मौ सपक्षे दर्शयति—**रूपादिर्हीति** । पक्षधर्मताबलसिद्धमर्थमाह—**अतोऽनुभूतिरिति** । **प्रकाशत इति व्यवहार इति** ; "अनुभूतिः प्रकाशते" इति व्यवहारे, "अनुभूतिः" इति व्यवहारे चेत्यर्थः । ननु स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वं सोपाधिकं, संबन्धविशेषादर्थान्तरे तद्धर्मव्यवहारहेतुत्वस्यैव स्वस्मिंस्तद्धर्मव्यवहारयोरनन्याधीनत्वे प्रयोजकत्वात् । स च संबन्धविशेषाश्रयाश्रयिभावरूपः । स च रूपादावस्ति, न तु पक्ष इति—नैतत् ; अस्य साध्यसमव्याप्त्यभावेनानुपाधित्वात् । आश्रयाश्रयिभावविरहेऽपि संबन्धमात्रादर्थान्तरे 'प्रकाशते' इति व्यवहारहेतोर्दीपस्य स्वस्मिन्नपि तद्व्यवहारेऽत्यन्तसजातीयानपेक्षत्वं हि दृष्टम् । पूर्वं ज्ञानस्य परप्रकाशत्ववादिभिः स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिर्व्याहतिश्चोक्ते ; तत्र 'घटोऽयम्' इत्यनुभववेलायाम् 'अनुभूयते' इति शब्दस्याप्रयोगादसिद्धिरुक्ता । शाब्दव्यवहारवैकल्यपौष्कल्ययोर्विवक्षाविशेषहेतुकत्वेनार्थानुभवेऽननुभवे च प्रयोजकत्वाभाववचनादसिद्धिः परिहृता । व्याहतिश्च नास्ति ; तथाहि—अङ्गुल्यग्रस्य स्वात्मस्पर्शादिव्याहतिरुपलब्धिनिबन्धना । दीपादिषु च प्रकाश्यत्वप्रकाशकत्वे दृश्येते । निरूप्यमाणे कर्मकर्तृभावविरोधश्च नास्ति—निरासको दीपः, निरसनीयं तमः ; दीप उत्पादकः, ज्ञानमुत्पाद्यम् ; ज्ञानमुत्पादकं, व्यवहार उत्पाद्य इति । किंच यद्यपि कर्मकर्तृभवास्य स्वतो विरोधाद्भेदकत्वमुपलब्धिसिद्धं, तथापि

ज्ञापकेषु विरोधनियमाभावश्चोपलब्धिसिद्धः, ज्ञातरि मनसि, शब्दशब्दे पदमिति पदे, तथेदृशार्थान्तरेष्वप्यविरोधो ह्युपलभ्यते । उत्पादकेष्वेव तु विरोधनियमः । तत्र चाकारान्तरेण चेदविरोधः । ननु घटादिषु व्यवहारार्हत्वं स्वव्यतिरिक्तज्ञानहेतुकं दृष्टम्; ज्ञाने व्याप्तिर्भज्यते चेत् व्यवहारस्य ज्ञानपूर्वकत्वव्याप्तिभङ्गेनाज्ञातस्यैव ज्ञानस्य व्यवहारास्पदत्वं स्यात्—नैवम्; घटादिषु ज्ञेयव्यतिरिक्तज्ञातृदृश्यत्वेऽपि स्वेनैव ज्ञात्रा ज्ञातरि दृश्यत्वमिति सर्वाविगीतमिति तत्र परेणापि कर्मकर्तृविरोधव्याप्तिभङ्गोऽभ्युपगन्तव्यः, तथा घटादौ स्वव्यतिरिक्तकरणजन्यज्ञानदृश्यत्वेऽपि मनसि तद्भङ्गम्, स्वानुमाने मनस एव करणत्वात् । तथा सर्ववाच्यानां स्वव्यतिरिक्तशब्दवाच्यत्वेऽपि शब्दशब्दे पदपदे च तद्भङ्गम् । घटादीनां स्वव्यतिरिक्तवाग्व्यवहार्यत्वेऽपि वागिन्द्रिये तद्भङ्गम् । अतः कर्मकर्तृभावस्य विरोधिव्याप्तिर्नास्ति । व्यवहारस्य ज्ञानपूर्वकत्वं तु न कैश्चिदपि भग्नम् । ज्ञानव्यवहारस्य ज्ञानकर्मतापूर्वकत्वविरहः प्रसज्यते चेन्नानिष्टः । अवभासपूर्वकत्वस्याभग्नव्याप्तिकत्वान्न तद्विरहप्रसङ्गः । तस्मादवभासमानस्यैव ज्ञानस्य व्यवहारास्पदत्वम् । अतः स्वविषयपरविषयव्यवहारानुगुण्यं ज्ञानस्य युक्तम् ।

## भावप्रकाशिका

**असाधारण्यप्रतिक्षेपः फलित इति**; पुरुषविशेषासाधारण्येत्यर्थः । अयमर्थः 'अनुभूतिव्यतिरेकी विषयधर्मः' इत्युत्तरग्रन्थे स्पष्टः । **ये पुनर्द्वित्वादिकं नाभ्युपयन्तीति**; यादृशादपेक्षाबुद्धिविषयाद्द्वित्वाद्युत्पत्तिस्तादृशापेक्षाबुद्धिविषयवस्तुविशेषोपलम्भ एव द्वित्वादिव्यवहारं जनयति, न द्वित्वादिरूपं किंचिदस्तीति सिद्धान्तिमते प्रतिबन्दी न संभवत्येवेत्यर्थः । **आत्मनःसंयोगे व्यभिचारः स्यादिति**; क्षणिके आत्मनः संयोगविशेष इत्यर्थः । **दृष्टान्तश्च साधनविकल इति**; सुखदुःखादीनामन्तःकरणधर्मत्वादिति भावः । **तदबुभुत्सितग्राह्यं दृष्टमिति**; **अबुभुत्सितग्राह्यम्**; 'इदमहं न बुध्येयम्' इति विपरीतेच्छायां सत्यामपि ग्राह्यमित्यर्थः । **तस्याप्यबुभुत्सितग्राह्यत्वान्मानसप्रत्यक्षवेद्यत्वं स्यादिति**; तस्यापि मानसप्रत्यक्षत्वेनाबुभुत्सितग्राह्यत्वान्मानसज्ञानान्तरविषयत्वमवश्यंभावीत्यर्थः । **ज्ञाने सताच्छेति**; ज्ञाने सति बुभुत्सेत्यर्थः । सामान्यतो विदिते विशेषतश्चाविदित एव बुभुत्साया उदयादिति भावः । अबुभुत्सितग्राह्यत्वपक्षेऽनुव्यवसायधाराप्रसङ्गमुक्त्वा बुभुत्सितग्राह्यत्वपक्षेऽपि बुभुत्सान्तरितज्ञानपरं-

परामाह—**किंच मानसेति । ज्ञानं बुभुत्सितग्राह्यं सुखादि तु न तथेति** ; ततश्च सुखादिषु प्रतीतिव्याप्तिसंभवेऽपि ज्ञानस्य न प्रतीतिव्याप्तत्वं, बुभुत्साभावे तत्प्रतीतेरनुत्पत्तेः । न च बुभुत्साया अन्योन्याश्रयग्रस्ततया न हेतुत्वमिति वाच्यम्, नानाशब्दसंकीर्णवीणाशब्दश्रवणादौ बुभुत्साहेतुत्वस्य दर्शनादिति भावः । **यदा प्रत्यक्षेण गृह्यत इति** ; प्रत्यक्षग्राह्यत्वं हेतुविशेषणमिति भावः । **पक्षो हेतुश्चेति** ; प्रत्यक्षग्राह्यं मानसग्राह्यं प्रत्यक्षग्राह्यत्वे सति क्षणिकात्मविशेषगुणत्वादिति वक्तव्यं स्यात् ; न च तथोक्तम् ; अत इयं विवक्षा न संमतेति भावः । **तद्व्यवहारहेतुत्वादिति** ; स चासौ व्यवहारस्तद्व्यवहारः, न तु तस्य व्यवहार इति भ्रमितव्यम्, तथा हि सति द्वितीयहेतौ कृत्स्नस्यापि प्रविष्टत्वाद्विभागो न स्यात् । न च धर्मश्च व्यवहारश्च धर्मव्यवहारौ, तौ च तौ धर्मव्यवहारौ च तद्धर्मव्यवहाराविन्युक्तावेव विभागात्, द्वितीयहेतौ न कृत्स्नानुप्रवेश इति वाच्यम्, तद्वदस्यैव धर्मपदस्थानीयत्वात् । **अनुभूतिसामग्रीव्यतिरिक्तेति** ; न चानुभूतित्वस्यानुभूतिव्यतिरिक्ततत्सामग्रीसापेक्षत्वेनान्याधीनत्वं स्यादिति वाच्यम्, अनुभूतिसामग्र्यैवानुभूतित्वस्याप्युपपत्तावनुभूतित्वस्यानुभूत्यन्याधीनत्वाभावात् । तस्यामप्यनुभूताावितरव्यतिरेकेणानुभूतित्वव्यतिरेके ह्यनुभूतित्वस्येतराधीनत्वम् ; अनुभूतिसामग्रीमात्रेणैवानुभूतित्वस्यापि सिद्धावितराधीनत्वाभावात् । अत एव ज्ञानसामग्रीमात्रजन्यस्य प्रामाण्यस्य स्वतस्त्वमिति भावः । यद्वा **अनुभूतिसामग्रीव्यतिरिक्ते**त्यस्य सजातीयान्तरापेक्षत्वमित्यर्थः । अत्रेत्थं ह्यनुमानं प्रयोक्तव्यम्—अनुभूतिः स्वावश्यंभाविप्राकट्यजनने सजातीयापेक्षानियमशून्या, स्वसंबन्धादर्थान्तरे प्राकट्यहेतुत्वात् ; यः स्वसंबन्धादर्थान्तरे यद्धर्मव्यवहारहेतुः स स्वस्मिन्नवश्यंभावितद्व्यवहारजनने सजातीयापेक्षानियमशून्यः । एवं द्वितीयमप्यनुमानम् ; यथा—तद्गेहं तदा मैत्राभाववत्, तदा मैत्रवत्तयानुपलभ्यमानत्वात् ; यद्यदा यद्वत्तया नोपलभ्यते तत्तदा तदभाववदिति सामान्यव्याप्तिवत् । ननु परत्र स्वोत्पाद्यधर्मस्य स्वधर्मत्वे कथमनुभूतेस्तद्वत्त्वं स्यात् ? अनुभूतौ स्वोत्पाद्यपरगतधर्माभावादित्याशङ्क्याह—**स्वसाध्यधर्मात्यन्तसजातीयेत्यर्थ इति** । धर्मशब्दस्य परत्र स्वोत्पाद्यधर्मपरत्वे प्रमाणं दर्शयति—**अर्थान्तरे तद्धर्महेतुत्वादिति । हेतूक्तेरिति** । अर्थान्तर इति हेतौ दर्शनात् साध्येऽपि परत्रेति वक्तव्यम् । धर्महेतुत्वादित्युक्तेऽनुभूतिहेतुकधर्म एव ग्राह्यः । ततश्च यो धर्मो हेतौ निर्दिष्टः स एव साध्यधर्म-

शब्देन ग्राह्यः, तस्यैव धर्मस्येह संभवात् । तत्सजातीयधर्मवत्त्वं साध्यमिति भावः । **स्वस्मिन्नवश्यंभावीति** ; ननु प्राकट्यस्य नावश्यंभावित्वमनुभूतौ परप्रकाशवादिना परेणाभ्युपेतम्, अभ्युपगमे त्वनवस्थाभीत्या स्वप्रकाशत्वस्यैवाभ्युपगन्तव्यत्वप्रसङ्गादिति चेत्—न ; उत्पन्ने ज्ञाने संशयाद्यदर्शनेन प्राकट्यं स्वावश्यंभावीत्यभिमानेनेदृशप्रयोगोपपत्तेः । **परज्ञानस्यानुमेयत्वदर्शनाद्बाधप्रसङ्गादिति** ; इतरानपेक्षप्राकट्यसद्भावेऽपि परत्र स्वोत्पाद्यधर्मसजातीयेषु सर्वेष्वपीतरापेक्षाभावस्याभावाद्बाधः स्यादिति भावः । नन्वीदृशानुमानवादिनो मते ज्ञानस्यानुमेयत्वानभ्युपगमात् कथमनुमेयत्वमादाय बाध इत्याशङ्क्याह—**न हि ज्ञानान्तरागोचरत्वमिति । सजातीयानपेक्षो हेतुरनुभूतिरितीति** ; अनुभूतिरनन्याधीनव्यवहारेत्युक्ते हेतुहेतुमद्भावलक्षणसंबन्धेनानन्याधीनघटादिव्यवहारवत्त्वमनुभूतावस्तीति सिद्धसाधनमिति भावः । **अनैकान्त्यं स्यादिति** ; हेतौ तच्छब्दाभावे स्वोत्पाद्यसजातीयधर्मस्यैवानन्याधीनत्वमित्यर्थस्य साध्येऽप्यलाभेन चाक्षुषत्वहेतोः रूपस्य स्वावश्यंभावित्वादिजनने स्वात्यन्तसजातीयेतरसापेक्षत्वाव्यभिचार इत्यर्थः । ननु स्वसंबन्धः स्वनिरूपितसंबन्धः ; ततश्च स्वस्मिन् योऽग्निसंबन्धो न स स्वनिरूपितः । यद्यपि संबन्ध एकः, अथाप्यग्निनिरूपितः संबन्धो घटे घटनिरूपितः संबन्धोऽग्नाविति व्यवहारानुसारेण स्वप्रतियोगिकत्ववेषेण स्वस्मिन् स्वसंबन्धस्य वृत्त्यभावात् । अत एव हि 'न हि स्वयं स्वसंयुक्तः' इति व्यवहरन्ति । किंच रूपान्तरोत्पत्तावग्निसापेक्षत्वेऽपि स्वसजातीयघटानपेक्षणान्नव्यभिचार इत्यरुचेराह—**किंचार्थान्तरशब्द इति । निर्दिष्टजातीयाद्विजातीयपर इति** ; आवश्यक इति शेषः । **न हि घटः स्वसंयुक्तत्वादाविति** ; न च पटादौ घटसंयुक्तत्वमापादयतो घटस्य स्वस्य घटसंयुक्तत्वे पटान्तरापेक्षणात् पुनरपि व्यभिचार इति वाच्यम्, स्वावश्यंभाविपदेनैव तद्वारणात् । न हि, घटजातीयस्य पटसंयुक्तत्वमवश्यंभावि । ननु—स्वसंबन्धादचेतने चेतनसंयुक्तत्वमापादयतश्चेतनस्य स्वावश्यंभाविचेतनसंयुक्तत्वे सजातीयसापेक्षत्वदर्शनाद्व्यभिचारः तदवस्थ एव ; तथा चेतननियाम्यत्वमचेतन आपादयतः चेतनस्य स्वनियाम्यत्वे चेतनान्तरापेक्षणात् व्यभिचारश्च । न चावश्यंभाविपदेनैव तन्निरास इति वाच्यम्, परमात्मनोऽपि भक्तनियाम्यत्वात् । तथा स्वसंबन्धेन क्षत्रिये शिष्यत्वमापादयति, ब्राह्मणे स्वस्मिन् शिष्यत्वस्य ब्राह्मणान्तरसापेक्षत्वेन व्यभिचारः । न च ब्राह्मणानां शिष्यत्वं

नावश्यंभावि, उपनयनात् प्रागपि मरणसंभवादिति वाच्यम्; दृष्टान्ते रूपादावपि चाक्षुषत्वं नावश्यंभावीति वक्तुं शक्यत्वात्। अनुभूतेरपि प्राकट्यं नावश्यंभावीति वक्तुं शक्यत्वाच्च। तस्मादप्रतिष्ठितमिदमनुमानमिति चेत्; अत्र केचित्—यत् स्वव्यतिरिक्ते सर्वस्मिन् यद्व्यवहारे प्रवृत्तिनिमित्तं तत् स्वस्मिन् तद्व्यवहारे नेतरापेक्षमिति पर्यवसितोऽर्थः। ततश्चानुभूतिव्यतिरिक्ते सर्वत्र 'अनुभूयते, प्रकाशते' इत्यादिव्यवहारे प्रवृत्तिनिमित्तभूतानुभूतिः स्वस्याम् 'अनुभूयते, प्रकाशते' इत्यादिव्यवहारे नेतरापेक्षा सत्तावदिति सत्तास्थानीयानुभूतिरेकेत्यभिमानवतामीदृशानुमानमित्याहुः। **पुत्रे पुत्रत्वतद्व्यवहारहेताविति**; न च पुत्रस्यापि पितृत्वेनार्थान्तरपदेनैव तद्वारणमिति वाच्यम्, षण्डपुत्रस्य पितृत्वानधिकृतस्यापि संभवादिति भावः। **स्वसंबन्धतुल्यकालेति**; स्वसंबन्धतुल्यत्वं स्वसंबन्धानाधारकालावृत्तित्वम्; ततश्च ज्ञानसंबन्धानन्तरोत्पन्नप्राकट्येऽपि तदस्तीति बोध्यम्। **न हि पित्रादिप्रवासनिधनयोरिति**; ननु प्रवासनिधनयोरपि जन्यजनकभावः संबन्धोस्त्येव, तदपायेऽपि पितृपुत्रत्वयोरनपायात्। प्रोषिते प्रेते च संयोगः परं नास्ति। तादृशसंयोगाभाव एकग्रामगतेऽप्यस्त्येवेति प्रवासनिधनोपन्यासो व्यर्थ एवेति चेत्—**न**; पञ्चाग्निविद्योक्तप्रकारेण चरमधात्वादिरूपस्य पुत्रस्य पितुश्च यः संबन्धः सपुत्रत्वोत्पादकः। "रेतः सिग्योगोऽथ" इति सूत्रोक्तस्तु नातिचिरस्थायी। अत एव 'पितुरुत्पादनक्रियोत्पत्तिक्षण एवोत्पाद्यसंबन्धकरी नान्यथा' इत्युक्तं नयविवेक इति भावः। उक्तमर्थं संकलय्य दर्शयति—**एतदुक्तं भवतीति**। **अनुभूतिः स्वजन्यपरगतधर्मात्यन्तसजातीयधर्मभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति**; अनुभूतिरपेक्षारहितेत्युक्ते स्वरूपस्य करणसापेक्षत्वेन बाधः स्यात्; तत्परिहारार्थं धर्मभाक्त्व इत्युक्तम्। तथात्वे रूपस्य चाक्षुषत्वे चक्षुराद्यपेक्षत्वेन साध्यविकलता स्यात्; तत्परिहारार्थं सजातीयापेक्षारहितेत्युक्तम्। तथापि चक्षुरादीनां सत्ताजात्या सजातीयत्वेन साध्यवैकल्यं तदवस्थमित्यत उक्तम्—**अत्यन्तसजातीयेति**। तथापि परज्ञानस्य ज्ञानान्तरसापेक्षव्यवहारानुगुण्यतया अंशे बाधः स्यादित्यत उक्तम्—**अपेक्षानियमरहितेति**। तथाप्यनुभूतित्वस्यानुभूत्यन्तरानपेक्षतया तेन सिद्धसाध्यता स्यादिति तत्परिहारार्थं परगतेत्युक्तम्। परगतधर्मस्यानुभूतिनिष्ठत्वाभावाद् बाधः स्यादिति **परगतधर्मसजातीयेत्युक्तम्**। परगतधर्मसजातीयधर्मभाक्त्वेऽत्यन्तसजातीयापेक्षानियमरहितेत्युक्ते पर-

निष्ठसत्त्वजातीयसत्त्वभाक्त्वेऽत्यन्तसजातीयानपेक्षत्वेन सिद्धसाध्यता स्यात् ; तत्परिहाराय स्वजन्येति विशेषणम् । **स्वविजातीये स्वावश्यंभाविधर्मसजातीयस्वसंबन्धतुल्यकालधर्महेतुत्वादिति** ; धर्महेतुत्वादित्युक्ते घटादिभिरनैकान्त्यं स्यात्, तेषां स्वपाकजरूपहेतुत्वात् । परत्रेत्युक्तेऽपि द्रव्यान्तरे संयुक्तत्वजनके स्वस्य संयुक्तत्वे द्रव्यान्तरसापेक्षे द्रव्ये व्यभिचारः स्यादित्युक्तं **स्वविजातीयेति** । तथापि सिद्धान्तिमते विजातीये शरीरे शरीरत्वमापादयति स्वस्य शरीरत्वे स्वसजातीयपरमात्मसापेक्षे चेतने व्यभिचारः स्यात् ; तत्परिहाराय स्वावश्यंभावीत्यनेन स्वसजातीयव्यापकत्वमभिप्रेतम् । तथापि पुत्रगतपुत्रत्वहेतौ स्वस्य पुत्रत्वे पित्रन्तरसापेक्षे पितरि काष्ठद्वैधीभावहेतौ स्वस्य द्वैधीभावे परश्वन्तरसापेक्षे परशौ व्यभिचारः स्यात् ; अतः स्वसंबन्धतुल्यकालेति च विशेषणम् । अनुमानान्तरे चैवमेव पदप्रयोजनं द्रष्टव्यम् । 'अनुभूतिरिति स्वव्यवहारे चेत्यर्थः' इत्ययं लेखकस्खलनकृतः, परत्र 'प्रकाशते' इति व्यवहारस्यैवोत्पाद्यत्वेन 'अनुभूतिः' इति व्यवहारस्यानुत्पाद्यत्वादिति द्रष्टव्यम् । **सोपाधिकमिति** ; संबन्धविशेष एवोपाधिरित्यर्थः । **निरासको हीति** ; दीपस्य हि स्वप्रकाशकत्वं स्वीयतमोनिरासकत्वं वा स्यात्, स्वविषयज्ञानोत्पादकत्वरूपं वा स्यात् ; ज्ञानस्य स्वप्रकाशकत्वं च स्वविषयव्यवहारोत्पादकत्वमेव ; अत्र न क्वापि विरोधं पश्याम इति भावः । यदि हि स्वस्यैव कार्यत्वं कर्तृत्वं च स्यात् तदा हि परं विरोधः । स्वविषयव्यवहारो वा, स्वविषयज्ञानं वा, स्वसंबन्धितमोनिरासो वोत्पाद्यः, स्वयं च कर्तेत्युक्तौ हि को विरोधः । **तत्र चाकारान्तरेण चेदिति** ; तत्राप्याकारान्तरं चेदविरोध एव तथा 'तदात्मानं स्वयमकुरुत' इत्यादौ स्थूलचिदचिद्विशिष्टरूपेण कर्मत्वं सूक्ष्मचिदचिद्विशिष्टवेषेण कर्तृत्वमित्यस्यार्थस्य दर्शनादिति भावः । **अज्ञातस्यैव ज्ञानस्य चेति** ; अनवभास्यमानस्यैवेत्यर्थः । "तस्मादवभासमानस्यैव" इत्युपसंहारग्रन्थानुसारादिति द्रष्टव्यम् । **ज्ञानकर्मतापूर्वकत्वविरहः प्रसज्यते चेदिति** ; ज्ञानं प्रति कर्मकारकत्वपूर्वत्वनियमभङ्ग इष्ट इति भावः । न च तद्व्यवहारस्तत्कर्मकज्ञानपूर्वक इति नियम आवश्यकः, अन्यथान्यज्ञानादन्यस्य व्यवहारप्रसङ्ग इति वाच्यम्, व्यवहारो ज्ञानपूर्वक इत्येव सामान्यव्याप्तिः ; जडस्थलेऽतिप्रसङ्गभङ्गाय तद्विषयज्ञानस्य तद्विषयव्यवहारहेतुत्वमिति नियामकान्तरमपि कल्प्यते, न ज्ञानस्थलेऽपीति भावः ।

## श्रुतप्रदीपिका

स्वसिद्धिवादी परिहरति—**तदिदमिति** । कृत्स्नभानव्यवहारहेतोरनुभवस्य स्वभानव्यवहारयोरन्यानपेक्षत्वरूपं विभवमजानन्ननाकलितानुभवविभवः प्राकट्यं दृष्टं वा, कल्पितं वेति विकल्पमभिप्रयन् प्रथमं शिरो दूषयति—**अनुभूतीति** । विषयधर्मो जन्यश्चेत् सर्वैरुपलभ्येत, रूपादिवदित्यर्थः । न च द्वित्वादिवदनुपलब्धिसंभवः । अपेक्षाबुद्धेर्द्वित्वादिव्यवहारमात्रजनकतया द्वित्वादिजनकत्वाभावात् । अपेक्षाबुद्धेर्द्वित्वाद्यभिव्यञ्जकतया तद्गत एव भानोपपत्तेश्च । न चानागताद्यर्थेषु प्राकट्यं निराश्रयधर्मायोगात् । तदुक्तं संवित्सिद्धौ—

"अतीते नागते चार्थे कथं प्राकट्यसंभवः ।
न हि धर्मिण्यसत्येव धर्मः संभवमृच्छति ॥"

इति । न च तेषु द्वित्वादिजन्म अर्थवत् द्वित्वादेरपि धीःस्थतया व्यवहारोपपत्तेः । न च विषयविषयिभावसंबन्ध एव प्राकट्यं ; संबन्धिभ्यां विना तत्प्रतीत्ययोगेन ज्ञानमपि ज्ञातमित्यनुमेयत्वाभावादिति भावः । अथ क्लृप्तिं व्युदस्यति—**उभयेति** । नामान्तरेण प्राकट्योपगमशङ्काव्युदासायोभयाभ्युपेतशब्दः । प्राकट्यजनकत्वेनाभ्युपेततथैवेत्येवकाराभिप्रायः । व्यवहारो हानादिः, इष्टो घट इतिवत्, ज्ञातो घटः, प्रकटो घट इत्युक्तिः । विषयविशेषनियतव्यवहारः कर्मकर्तृव्यवहारो विकल्पव्यवहारश्चाशेषशब्दोक्तः । प्राकट्योपगमेऽपि कथं तद्घट एव धीर्जनयति? न पट इत्यनुयोगे सतीन्द्रियसंप्रयोगस्यैव नियामकतयाभ्युपेतस्य व्यवहारव्यवस्थापकत्वोपपत्तेः । 'घटोऽनुभूयते, घटः प्रकाशते' इति कारकभेदव्यवहारस्य 'परशुना छिनत्ति, परशुमुद्यम्य निपातयति' इतिवद्धातुभेदनिबन्धनत्वाच्च 'घटोऽयम्' इत्येतावद्व्यवहारस्याधिका विवक्षा निबन्धनत्वात् । तस्याश्च ज्ञानाभावव्याप्यत्वाभावाच्च कल्पकव्यवहारोऽन्यथासिद्धिरिति भावः । मानसप्रत्यक्षवेद्यत्वमाशङ्क्याह—**नापीति** । क्षणिकात्मविशेषगुणत्वं हेतुः । सुखादिः सपक्षः संयोगरूपधर्माद्यात्ममनःसंयोगश्च हेतौ व्यावर्त्याः । अन्यतरासिद्धिः गुणत्वक्षणिकत्वानुपगमात् । किंच मानसस्याबुभुत्सितग्राह्यत्वाज्ज्ञानविषयज्ञानतज्ज्ञानादिपरंपरानुच्छेदप्रसङ्गः । बुभुत्सितग्राह्यत्वेऽन्योन्याश्रयः । इच्छाया ज्ञानं ज्ञानत इच्छेति । किंच सुखादौ बुभुत्सानियमपूर्वकज्ञाननियमादर्शनात् । तया सहानन्तसंविदावलिः स्यात् । न च द्वितीयादि-

ज्ञानेन बुभुत्सेति वाच्यम्, मानसत्वाविशेषात्। न च मानसं द्वितीयादिक्षणिकात्मविशेषगुणत्वाविशेषात्। तथा सति हेत्वनैकान्त्यम्। अमानसेऽपि प्रवृत्तेः। द्वितीयस्यामानसत्वे प्रथमस्यापि तथात्वात् सर्वशून्यता द्वितीयादिस्वसिद्धिश्चेत् प्रथममेव तथा स्यात्। अतो मानसप्रत्यक्षवेद्यत्वं नेति भावः। एवं मानान्तरागोचरत्वात् ज्ञानस्य तुच्छत्वे सर्वतुच्छत्वप्रसङ्गाच्च। पारिशेष्यान्न स्वसिद्धित्वासिद्धिरित्याह—**अपि त्विति**। न परं परिशेषः, अनुमा चेत्याह—**प्रयोगश्चेति**। लाघवायानुमाद्वयं तन्त्रेणोक्तम्, प्रथमा प्राकट्याभ्युपगमेनोक्ता। द्वितीया तु अनभ्युपगमेन अनुभूतिरनन्याधीनस्वधर्मा, अनन्याधीनस्वव्यवहारेति, प्रतिज्ञाद्वयम्। एवं हेतू च द्वौ, अन्याधीनधर्मत्वेऽपि धर्मवत्तया सिद्धसाध्यत्वव्युदासाय**अनन्याधीन**शब्दः। अन्यशब्दोत्यन्तसजातीयान्तरपरः। अत्यन्तसजातीयत्वं नाम येन शब्देन सजातीयान्तरप्रतियोगिनिर्देशः, तच्छब्दप्रवृत्तिनिमित्तत्वं ज्ञानान्तरानपेक्षस्वसाध्यपरगतधर्मेण सिद्धसाध्यत्वव्युदासाय स्वशब्दः। ज्ञानान्तरानपेक्षः स्वगतैकत्वादिना सिद्धसाध्यत्वव्युदासाय स्वजन्यपरगतधर्मात्यन्तसजातीयशब्दोध्याहार्य इत्यर्थवशादवगतः। अनन्याधीनस्वजन्यपरगतधर्मात्यन्तसजातीयधर्मेत्यर्थः। एवमनन्याधीनस्वव्यवहारेत्यत्रापि द्रष्टव्यम्। हेतुमाह—**स्वेति**। **हेतुत्वं** धर्महेतुत्वम्। व्यवहारहेतुत्वं च नैकान्तिकम्। अतः तच्छब्दः तादृगित्यर्थः। स्वस्मिन् यादृग्भवति परत्र तादृशो धर्मस्य व्यवहारस्य वा हेतुत्वात्, तादृक्त्वं चात्यन्तसजातीयत्वम्, असंभवव्युदासाय **स्वसंबन्ध**शब्दः। अनुमितिलिङ्गे व्यभिचारश्चानेन परिहृतः। तद्धि न स्वसंबन्धमात्रेण लिङ्गिप्रकाशव्यवहारहेतुः। किंतु तज्ज्ञानेन। अत्र तु ज्ञानान्तराव्यवहितसंबन्धो विवक्षितः। स्वगतधर्मेण वा, व्यवहारेण वा, स्वसंबन्धात् तस्य तस्य च स्वयं हेतुरिति साध्याविशिष्टत्वव्युदासायार्थान्तरशब्दः। ज्ञानस्य स्वस्मिन् तादृग्रूपापादनेऽत्यन्तसजातीयानपेक्षितत्वं साध्यं, परत्र स्वगतधर्मात्यन्तसजातीयधर्महेतुत्वं, स्वगतव्यवहारात्यन्तसजातीयव्यवहारहेतुत्वं च हेतुरित्युक्तं भवति। परत्र प्रकाशधर्मतद्व्यवहारहेतुत्वस्यैव साधनतया विवक्षितत्वात्, न काष्ठच्छेदकपरश्वादौ व्यभिचारः। व्याप्तिपूर्वकं दृष्टान्तमाह—**य इत्यादिना**। तद्विवृणोति—**रूपादिर्हीति**। पक्षधर्मताबललब्धमर्थं वदन् निगमयति—**अत इति**। "निरासको दीपः, निरसनीयं तमः, जनको दीपः, जन्यं ज्ञानं, जनकं ज्ञानं,

जन्यो व्यवहार" इति भाट्टोक्तः। कर्मकर्तृविरोधो दृष्टान्ते दार्ष्टान्तिके च न विद्यते। स च ज्ञापकेषु न ज्ञातृमनःशब्दपदशब्देष्वदर्शनात्।

## तत्त्वटीका

अवेद्यत्ववादी प्राकट्यवादिनमुपालभते— **तदिदमिति**; बुद्धेः स्वप्रकाशत्वे सिद्धे निराकारप्रकाशायोगादाकारद्वयानुपलम्भाच्च ग्राह्यग्राहकयोर्ज्ञानाकारत्वं वदद्भ्यो भीतैः प्रकाशमानस्य नीलादेः अप्रकाशमानबुद्ध्याकारत्वायोगात्कल्पितमिदं दृष्टहानमदृष्टकल्पनं च सर्वं प्रत्यक्षविरुद्धमिति भावः। अनुभवस्य विभवालोकादिनीत्या परप्रकाशादिहेतोः स्वप्रकाशादौ सजातीयनैरपेक्ष्यम्। तत्र श्रुत्यानुमितिसूचनाय **स्वमतिविजृम्भित**मित्युक्तम्। किं प्राकट्यं रूपादिवद् दृष्टम्; उत गुरुत्वादिवत्कल्प्यम्? इति हार्दे विकल्पे पूर्वं दूषयति—**अनुभूतिरिति**। धीरेव विषयस्य प्रकाशः। सा चातन्निष्ठापि भ्रान्त्या विषयस्थेव भाति। वस्तुतः प्रकाशस्य विषयधर्मत्वे यद्यसावप्रत्यक्षः, तदा हि लिङ्गानुपलम्भात् नानुमितिः। अतः प्रत्यक्षत्वेऽङ्गीकृते तदुपलम्भः पुरुषविशेषनियतो न स्यादित्यभिप्रायेण **रूपादिव**दित्युक्तम्। द्वित्वादिवद्धीजन्यतया तेनैव दृश्यत इति चेत्—न; अपेक्षाबुद्धिवेद्याकारविशेषातिरिक्तद्वित्वादिक्लृप्तौ गौरवात्। यादृश्या बुद्ध्या द्वित्वाद्युत्पत्तिं मन्यसे, तादृश्या तद्व्यवहारः स्यात्; स चातीतादिष्वप्यस्ति; न च तत्र द्वित्वाद्युत्पत्तिः; निराधारधर्मजननायोगात्। अतिरिक्तद्वित्वाद्युत्पत्तिपक्षेऽपि अनन्यथासिद्धप्रत्यक्षबलात्प्रकाशप्रतिनियमः; इह तु न तथा, वेद्यगतस्य वित्त्यतिरिक्तस्यानुपलम्भादिति भावः। ये तु 'वर्तमानेष्वतीतादिषु च द्वित्वादिकमेकत्ववत् स्वत एव तत्तद्वस्तुनिष्ठमपेक्षाबुद्ध्या गृह्यते; न तु जन्यते। इदमेव प्रतिपुरुषमपेक्षाबुद्धिभिरनन्तद्वित्वादिकल्पनाद्वरम्" इत्याहुः; तत्पक्षग्रहे च नेदं निदर्शनं शोभते। द्वितीयं निरस्यति— **उभयेति**। कल्पनागौरवभीतैः धियं त्यक्त्वा विषयस्थप्रकाश एव स्वीक्रियतां, धीसामग्र्या च तत्सिद्धिः स्यादिति चोद्यं तु सर्वविरुद्धं चेत्यभिप्रायेण **उभयाभ्युपेत**त्वोक्तिः। **एव**कारेण क्लृप्त्युपपत्तीनामन्यथासिद्धिर्गौरवं च व्यज्यते। **अशेषशब्दः** कल्पकत्वेन शङ्कितानां कार्त्स्न्यमाह; तत्र सर्वत्र प्राकट्यजनकतया स्वीकृतैव धीरेका हेतुरिति चावधारणाभिप्रायः।

यदि कल्प्येत विषये प्राकट्यं व्यवहारतः ।
तद्धेतुत्वेन कल्प्या धीः तत्फलार्थं प्रकल्प्यताम् ॥ ३४४ ॥
यथा तत्रैव तस्यैव प्राकट्यं ते धिया भवेत् ।
तथा भानादयोऽपि स्युः किमन्तर्गडुकॢप्तितः ॥ ३४५ ॥
प्राकट्यं प्रकटं स्याद्वः परतः स्वत एव वा ।
आद्येऽनवस्थितिः शेषे बुद्धिरेव तथा न किम् ॥ ३४६ ॥

'ज्ञातः' इत्यादिव्यवहारस्तु इष्टद्विष्टादिनयात्कर्मप्रत्ययाधीनः । तद्रहितोऽपि प्रकटो घट इत्यादिधीकर्मत्वविषयतया तद्व्युत्पत्तेः स्यात् । ज्ञानकर्मणो घटस्य 'प्रकाशते' इति कर्तृत्वेन व्यवहारोऽपि 'रोचते, स्वदते' इत्यादिवद्धातुविशेषायत्तः । अतिरिक्तकॢप्तौ च गुणक्रियादिषु प्राकट्ये च प्रकटादिव्यवहारो दुर्निर्वहः । एवं भूतभाविषु च । तदुक्तं संवित्सिद्धौ—

"अतीतेऽनागते चार्थे कथं प्राकट्यसंभवः ।
न हि धर्मिण्यसत्येव धर्मः संभवमृच्छति ॥"

इति । अत्र परोक्तप्रतिबन्दिनिस्तारस्तु—

नश्यद्दशाकसंयोगो नानाधारः प्रतीयते ।
प्रध्वंसस्तु निराधारोऽसदाधार इतीरितः ॥ ३४७ ॥

एतेन "अतीतादौ विषयत्वमात्रं न कर्मत्वम् ; यत्र तु कर्मत्वं तत्र क्रियाजन्यफलभागित्वमवश्यापेक्षितम्" इति निरस्तम् ; गुणादौ कर्मत्वेऽपि तदसंभवात् । ज्ञानं स्वकर्मणि किंचित्करोति, क्रियात्वादित्यनुमितौ च धात्वर्थमात्रत्वे हेतौ न व्याप्तिः । स्पन्दत्वे त्वसिद्धिः । आहुः न्यायनिष्ठाः—

"अनैकान्त्यादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥"

इति । ननु धीस्वरूपातिरिक्तं तद्विषयत्वमर्थे भाति ; तदनभ्युपगमे विरोधः ; तदेव प्राकट्यमिति शङ्कायां निगमनव्याजेनोत्तरमाह—**अत इति** ; त्वदिष्टस्य लिङ्गस्य निष्प्रमाणत्वादित्यर्थः । विषयत्वं च विषयिणमन्तरेण न भायात् ; तद्भाने त्वनुमेयं

नावशिष्यत इत्याशयः। मा भूदनुमेयत्वम्; मानसप्रत्यक्षत्वं तु स्यात्; क्षणिकात्मविशेषगुणत्वात्सुखादिवदिति, तत्राह—**नापीति**। अनुपलब्धेः कल्पनायोगाच्चेत्युभयमनुषञ्जनीयम्। न हि स्वस्मिन् वर्तमानं ज्ञानं ज्ञानान्तरसिद्धमिति प्रत्यक्षयामः; उक्तहेतुरपि क्षणिकत्वात्मधर्मत्वगुणत्वानामस्माभिरनभ्युपगमान्निरस्तः। मानसप्रत्यक्षत्वे च सुखादिवदात्मगुणस्य सतो बुभुत्सितग्राह्यतया तद्ग्रहणस्यापि तथेत्यनवस्था स्यात्। बुभुत्सितग्राह्यत्वे तु ज्ञाते बुभुत्सा, ततश्चापाततोऽपि तद्धीरित्यन्योन्याश्रयः। तत्रापि सुखादेरिव मानसप्रत्यक्षतयैव ज्ञानस्यापि ज्ञातत्वनियमे बुभुत्सातज्ज्ञानादिपरंपरानुच्छेदः। अनियमे तु क्षणिकात्मविशेषगुणत्वं मानसप्रत्यक्षत्वरहिते ज्ञाने वर्तत इत्यनैकान्त्यम्, तस्यापि पक्षीकारे बाधः। किंच ज्ञानगोचरज्ञानस्य प्रमितत्वे पूर्वज्ञानमपि निष्प्रमाणकं स्यात्; ज्ञानस्यासंभवे च ज्ञातृज्ञेयासंभवः। एतेन अवश्यवेद्यत्वानभ्युपगमादिति नैयायिकोक्तं निरस्तम्। कस्यचिज्ज्ञानस्य स्वप्रकाशत्वे तु लाघवात्पूर्वस्यापि तथात्वं ग्राह्यम्। क्वचित्सामान्यतः स्वपरनिर्वाहकत्वेऽस्मदुक्तं सोढव्यम्। एवं स्वज्ञानस्यानुमेयत्वमानसप्रत्यक्षत्वयोरयोगात् तदग्रहे च परस्मिन्नपि तथैवेति व्युत्पत्त्याद्यसंभवेनागमस्यापि निर्मूलत्वादन्ततो माध्यमिकवादप्रसङ्गमनिच्छतामस्मत्पक्षः शिष्यत इत्याह—**अपि त्विति। सर्वं साधयन्ती** इति हेतुपरम्। नित्यस्य स्वप्रकाशस्य स्वजन्यत्वायोगादन्यनिरपेक्षप्रकाशत्वमेव प्रक्रान्तमिह स्पष्टीकृतम्। अयं भावः—

धियः स्वकर्मताभावान्न स्वेन स्वप्रकाशनम्।
इत्यसत्स्वान्यनिर्वाहसमाधेर्दुस्त्यजत्वतः॥ ३४८॥

धीरस्तीति मता शब्दशब्दे लक्षणलक्षणे।
इष्टः स्वपरनिर्वाहः सर्वमित्यादि धीष्वपि॥ ३४९॥

कर्मकर्तृविरोधोऽपि स्वबुद्ध्यादौ न दृश्यते।
क्रियाकर्मविरोधश्च वारणीयः क्रियोक्तिवत्॥ ३५०॥

अङ्गुल्यग्रादिदृष्टान्तमात्रमप्यत्र निष्फलम्।
दृष्टदृष्टिविशेषेण सर्ववस्तुव्यवस्थितेः॥ ३५१॥

अस्पृष्टिः स्वात्मनस्तत्र संयोगद्विष्ठताबलात्।
दृष्टान्तमात्रभक्तेन दीपादिः किं न दृश्यते॥ ३५२॥

अन्तर्ज्योतिः स्वयंज्योतिरात्मज्योतिरिति श्रुतिः ।
स्वरसाद्वदति स्वान्यनिरपेक्षप्रकाशताम् । ३५३ ॥
स्वान्यधीहेतवो दृष्टा मनोधर्मादयस्तथा ।
स्वयं भिद्यत इत्यादौ संमता कर्मकर्तृता ॥ ३५४ ॥
आत्मानं रक्षतीत्यादिष्वपि द्वैरूप्यमक्षतम् ।
प्रतिपादिनयस्थाप्या न मुधा बाधमर्हति ॥ ३५५ ॥
यदा विषयमात्रस्य व्याहारस्तत्र वेदितुः ।
अनुभूयत इत्युक्तिरविवक्षा निवर्तिता ॥ ३५६ ॥
व्यवहारनिवृत्त्या च न प्रकाशनिवर्तनम् ।
दृष्टेऽप्यव्यवहारस्य प्राचुर्येणोपलम्भतः ॥ ३५७ ॥

इति । अत्र सूचितं साधनद्वयं वैशद्याय प्रयुज्यत इत्याह—**प्रयोगश्चेति** । यद्वा—उक्तप्रकारेण स्वप्रकाशत्वमगत्या ग्राह्यम् ; तत्रानुमानान्तरं चास्तीति भावः । ग्रन्थलाघवाय प्रयोगद्वयमिह तन्त्रितम् । पिशाचानां तद्भाषयैवोत्तरं देयमिति न्यायात् परमतान्वारोहेण बुद्धेरपि प्राकट्यकल्पनयात्र **धर्म**शब्दः, अन्यथापसिद्धान्तात्, कल्पितधर्मान्तराभ्युपगमेन वा तदुक्तिः । इदं च हेतुद्वयं यदि परोक्तकर्मकर्तृविरोधशान्त्यै संभावनार्थं स्यात्, तदा नातीवात्र शोध्यमस्ति । साक्षादनुमानत्वमिच्छतां तु यथाश्रुतेऽनुभूतित्वादिभिः सिद्धसाध्यत्वात्तत्र तत्र कर्तृव्यभिचाराच्चाभिप्रायकृतया पूर्वानुमितावेवं प्रयोगो द्रष्टव्यः—अनुभूतिः, परगतस्वजन्यधर्मात्यन्तसजातीयस्वावश्यंभाविधर्मयोगे स्वात्यन्तसजातीयापेक्षानियमरहिता, स्वविजातीये स्वानन्तरकालोत्तरकालानुवृत्तिरहितधर्महेतुत्वादिति । स्वस्मिन् स्वजन्यधर्मासिद्धेः परगतत्वोक्तिः स्थानप्रदर्शनार्था ; एकत्वादिभिः सिद्धसाध्यतां वारयितुं जन्यशब्दः अत्यन्तशब्दश्च । अनुभूत्या परत्र जन्यो धर्मः प्राकट्यमेव । तस्य स्वान्यमात्रनिष्ठस्य स्वधर्मत्वायोगात् सजातीयोक्तिः । बुद्धिव्यतिरिक्ते बोद्धरि बुद्धिजन्यसुखादिसजातीयानां बुद्धावभावेन बाधं स्वाश्रयस्य रूपित्वाद्यापादके रूपादौ रूपित्वाद्यभावाद् दृष्टान्तस्य साध्यशून्यतां च परिहर्तुं स्वावश्यंभावित्वोक्तिः । यद्यपि नित्येऽनुभूतिप्राकट्येऽन्वारूढेऽन्यनैरपेक्ष्यमात्रोक्तिः पर्याप्ता ; तथापि रूपादौ दृष्टान्ते

चाक्षुषत्वस्य स्थूलनिष्ठत्वादिसापेक्षतया साध्यवैकल्यं स्यादिति तन्निरासाय स्वात्यन्त-सजातीयापेक्षारहितेत्युक्तम् । "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति । एवमेवास्मादात्मनः सर्वाणि भूतानि" इत्यादिश्रुत्या जीवतज्ज्ञानभेदकल्पनाद्व्यावहारिकव्यवस्थया परमतनयेनानुमानादिगम्ये गुर्वादिज्ञाने बाधपरिहाराय नियमशब्दः । तद्धि गुरुमते सिद्धान्ते च वर्तमानकाले स्वेन स्वाश्रयाय भाति । यद्वा—परत्र छिन्नत्वाद्यापादके कुठारादौ द्वैधीभावस्य कदाचिदत्यन्तविजातीयापेक्षत्वेऽपि नियमाभावेनातिचारनिरास इति नियमोक्तिसाफल्यम् । अत्यन्तसाजात्यं चात्र निर्दिष्टाकारेण साम्यम् । हेतौ तु सजातीये द्रव्यान्तरे संयुक्तत्वहेतोर्द्रव्यस्य स्वगतसंयुक्तत्वे द्रव्यान्तरापेक्षानियमात्तद्व्यावृत्त्यै स्वविजातीयोक्तिः । स्वानन्तरेत्यादिना परस्मिन्पुत्रत्वादिहेतौ पितरि स्वपुत्रत्वे पितृसापेक्षत्वदर्शनात्तस्मिन्ननैकान्त्यं निरस्तम् । पुत्रत्वादिकं हि पित्राद्यनन्तरकाला-दुत्तरत्राप्यनुवर्तते । एवं द्रव्यान्तरच्छिन्नत्वापादके द्रव्यान्तरेण छेद्येऽपि द्रव्ये न व्यभिचारः । द्वितीयानुमानेऽपि अनुभूतिरनन्याधीनव्यवहारा इत्युक्ते अन्यनिरपेक्ष-घटादिव्यवहारहेतुतया सिद्धसाध्यतां परिहर्तुं स्वशब्दः । तथापि विवक्षावागादि-सापेक्षतया बाधो दृष्टान्ते च साध्यहानिः स्यात्; अतः स्वात्यन्तसजातीयानपेक्षत्वं विवक्षितम् । नियमग्रहणं च पूर्ववत् । तदिहानुभूतिः स्वात्यन्तसजातीयापेक्षानियम-रहितस्वव्यवहारा इति पक्षसाध्यस्थितिः, हेतुस्तु हेतुत्वादित्येवालम्; क्वचिदपि व्यभि-चारादृष्टेः । **स्वसंबन्धात्**—इत्यादिविशेषणत्रयोक्तिस्तु तत्कृतविशेषवैशद्यार्था । एवं नामोक्तमात्मसिद्धौ—

"सजातीयस्वसाध्यार्थनिरपेक्षात्मसिद्धयः ।
सर्वे पदार्थास्तेनात्मा निरपेक्षात्मसिद्धिकः ॥"

इति । अत्र सिद्धिः—व्यवहारयोग्यतारूपः प्रकाशः; तदुक्तिर्व्यवहारमप्युपलक्षयति; उभयत्र पदार्थत्वादित्येव हेतुः । एवं पूर्वानुमानेऽपि पदार्थत्वाद्धेतुत्वादित्यादिमात्रमुपादाय 'स्वात्यन्तसजातीयापेक्षानियमरहितस्वप्रकाशा' इति साध्यप्रयोगोऽप्यूह्यः । तच्च निगमने सूचितम्—**अनुभूतिरात्मनः प्रकाशमानत्वेत्यादिना** । सजातीय इत्यादौ आत्मनः श्रुतिसिद्धं ज्ञानत्वमवष्टभ्यात्मरूपं ज्ञानं स्वात्यन्तसजातीयापेक्षारहितस्वसिद्धि-कमित्युच्यते । स्वसाध्यनिरपेक्षत्वोक्तिस्तु प्रयोगान्तरार्था । साध्यं व्यवहारानुगुणी

कार्यम्; बोध्यमित्यर्थः । आत्मा स्वबोध्यापेक्षारहितस्वप्रकाशः पदार्थत्वात् इति । एतेन स्वबोध्यमन्तरेणापि भातीत्युक्तं भवति । दृष्टान्तानां त्वचेतनतया बोध्याभावादेव तत्प्रकाशः स्वबोध्यापेक्षारहितः । आस्तामेतत्; प्रकृते तु सामान्यतो व्याप्तिमाह—**य इति** । यद्यपि रूपवतामेव चाक्षुषत्वमिति नियमो नास्ति; तथापि नीरूपं द्रव्यं सर्वमचाक्षुषमिति; तेन दृष्टान्तमाह—**यथेति** । अत्र प्रथमेन **आदि**शब्देन स्पर्शो गृह्यते । द्वितीयेन स्पार्शनत्वं व्यवहारविशेषश्च । रूपादेर्व्यवहारविशेषहेतुत्वं तन्निमित्त-चाक्षुषत्वाद्यापादनेन । एवंविधसामान्यव्याप्तौ केवलव्यतिरेकिविभ्रमं केचिदाहुः । एतद्वा पक्षधर्मतालब्धविशेषं वा सूचयन्निगमयति—**अत इति** । **स्वयमेव हेतुः**; बुद्ध्यन्तर-निरपेक्ष इत्यर्थः । अत्रापि तत्प्रयोगस्तु—अनुभूतिः, अनन्याधीनस्वप्रकाशा, परप्रकाशा-साधारणाभिव्यक्तिहेतुत्वात्; यन्नोक्तसाध्यं, तन्नोक्तहेतुकमिति । एवं व्यवहारेऽप्यूह्यम् ।

## मूलभावप्रकाशिका

**अनुभूतिव्यतिरेकिण इति**; अनुभूतिव्यतिरिक्तो विषयधर्मः प्रकाशः प्रत्यक्ष-योग्यो न वा, न चेल्लिङ्गज्ञानाभावात् नानुमानादयः योग्यश्चेद्रूपादिवदुपलभ्येतान्यैः । नन्वपेक्षाबुद्धिजन्यस्य द्वित्वादेर्यथा तदेकपुरुषवेद्यत्वं तद्वत् प्राकट्यमितीदमपि तदेक-पुरुषवेद्यकमिति चेत्—न; द्वित्वादीनां प्रागेव सतां तत्तत्पुरुषीयापेक्षा बुद्धिव्यङ्ग्यत्वमात्र-मेव; ततश्च यस्य द्वित्वाभिव्यञ्जकमस्ति; तस्य तदभिव्यक्तिः; निध्यभिव्यञ्जकसिद्धाञ्जन-वतो निध्यभिव्यक्तिवत् न पुरुषान्तरस्य त्वदभिमतप्राकट्यपुरुषविशेषोत्पादितस्याप्यभि-व्यञ्जकविशेषे नैयत्याभावात् । कुलालोत्पादितघटस्यैव सर्वप्रत्यक्षत्वं दुर्वारम् ।

"अतीतेऽनागते चार्थे कथं प्राकट्यसंभवः ।
न हि धर्मिण्यसत्येव धर्मः संभवमृच्छति ॥"

इति संवित्सिद्ध्युक्तरीत्यातीतानागतविषये ज्ञानोत्पत्तिसंभवेन ज्ञानानुमानाभावप्रसङ्गादिति भावः । न त्वनुपलब्धमपि प्राकट्यं 'ज्ञातो घटः, प्रकटो घटः' इति व्यवहारान्यथा-नुपपत्त्यैव कल्प्यत इत्यत्राह—**उभयाभ्युपेतेति** । यथा 'इष्टो घटः, द्विष्टो घटः' इति व्यवहारः, संप्रतिपन्नेच्छाद्वेषादिनान्यथासिद्धो नेष्टत्वद्विष्टत्वरूपधर्मकल्पकः; तथैव ज्ञात इत्यादिव्यवहारः संप्रतिपन्नज्ञानेनान्यथासिद्धः, न प्राकट्याख्यधर्मान्तरकल्पक इति

भावः। एतेन 'घटः प्रकाशते' इति घटकर्तृकतया प्रकाशः प्रतीयते; 'घटमनुभवति' इति घटकर्मकतयान्यकर्तृकतया चानुभवः प्रतीयते; एवमेकस्यैव कर्मकर्तृव्यवहारानुपपत्त्या कल्प्यत इति निरस्तम्। कारकभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदनिबन्धनत्वाभावात्। यथा 'परशुमुद्यम्य वृक्षे निपातयति' 'परशुना वृक्षं छिनत्ति' इत्युक्तौ परशोः कर्मत्वकरणत्वे श्रूयेते, वृक्षस्याधिकरणत्वकर्मत्वे श्रूयेते, तथापि नार्थभेदः, तथात्रापि द्रष्टव्यम्। यदुक्तम्—घटानुभवदशायां 'घटोऽनुभूयते' इति नानुभवः इति तदनुभवविरोधित्वादुपेक्षणीयमिति भावः। मानसानुव्यवसायग्राह्यत्वं ज्ञानस्य वदतः नैयायिकस्य मतं निरस्यति—**नापि ज्ञानान्तरसिद्धेति**। ज्ञानान्तरवेद्यत्वपक्षे ज्ञानान्तरानुदयदशायाम् 'अहं जानामि' न वेति कस्यचित् कदाचित् सन्देहः स्यादिति भावः। अनुभूतिरित्यादिनानुमानद्वयं ग्रन्थलाघवार्थमविभागोक्तम्—अनुभूतिरनन्याधीनस्वधर्मा; स्वसंबन्धादर्थान्तरे तद्धर्महेतुत्वात्। अनुभूतिरनन्याधीनस्वव्यवहारा; स्वसंबन्धादर्थान्तरे तद्व्यवहारहेतुत्वादित्येवं विभागः। अनुभूतिः, स्वावश्यंभावि, प्राकट्यजनने सजातीयापेक्षा नियमशून्या, स्वसंबन्धादर्थान्तरे प्राकट्यहेतुत्वात्, यः स्वसंबन्धादर्थान्तरे, यद्धर्महेतुः, सः स्वस्मिन् स्वावश्यंभावितज्जनने सजातीयापेक्षानियमशून्यः। एवं द्वितीयमप्यनुमानं यथा तद्गेहं, तदा मैत्राभाववत् तदा मैत्रवत्तयानुपलभ्यमानत्वात्। यद्यदा यद्वत्तया नोपलभ्यते, तत्तदा तदभाववदिति सामान्यव्याप्तिवत्। ननु प्राकट्यस्य नावश्यंभावित्वम्, अनुभूतौ परप्रकाशवादिना परेणाभ्युपेतम्, अत्राभ्युपगमे त्वनवस्थाभीत्या स्वप्रकाशत्वस्य वाभ्युपगन्तव्यत्वप्रसङ्गादिति चेत्—न; उत्पन्नज्ञाने संशयाद्यदर्शनेन प्राकट्यं स्वावश्यंभावीत्यभिमानेन ईदृशप्रयोगोपपत्तेः। स्वावश्यंभावीति विशेषणदानात् पटादौ घटसंयुक्तत्वमापाततो घटस्य स्वघटसंयुक्तत्वे स्वसजातीयघटान्तरापेक्षणात् व्यभिचार इति शङ्का निरस्ता। न हि घटजातीयस्य घटसंयुक्तत्वमवश्यंभावि। ननु स्वसंबन्धादचेतने चेतनसंयुक्तत्वमापादयतश्चेतनस्य स्वावश्यंभाविचेतनसंयुक्तत्वे सजातीयसापेक्षत्वदर्शनात्, व्यभिचारस्तदवस्थ एव; तथा चेतननियाम्यत्वमचेतने आपादयतश्चेतनस्य स्वनियाम्यत्वे चेतनान्तरापेक्षणाद्व्यभिचारः। न चावश्यंभाविपदेनैव तन्निरास इति वाच्यम्, परमात्मनोऽपि भक्तनियाम्यत्वात्। दृष्टान्ते रूपादावपि चाक्षुषत्वं नावश्यंभावीति वक्तुं शक्यत्वात्। अनुभूतेरपि प्राकट्य

मूलभावप्रकाशिका

नावश्यंभावीति वक्तुमशक्यत्वाच्च । तस्मादप्रतिष्ठितमनुमानमिति चेत्, अत्र केचित्—यत् स्वव्यतिरिक्ते सर्वस्मिन् यद्व्यवहारे प्रवृत्तिनिमित्तं तत्स्वस्मिन् तद्व्यवहारे नेतरापेक्षमिति पर्यवसितोऽर्थः । ततश्चानुभूतिव्यतिरिक्ते सर्वत्र 'अनुभूयते, प्रकाशते' इति व्यवहारे प्रवृत्तिनिमित्तभूतानुभूतिः स्वस्याम्, 'अनुभूयते, प्रकाशते' इति व्यवहारे नेतरापेक्षा । सत्तावदिति सत्तास्थानीयानुभूतिरेकेत्यभिमानोदाहरणीयमिति न्यायेनोदाहरणान्तरासंभवादिति वदन्ति ।

श्रीभाष्यम्

सेयं स्वयंप्रकाशानुभूतिर्नित्या च; प्रागभावाद्यभावात् । तदभावश्च स्वतःसिद्धत्वादेव । न ह्यनुभूतेः स्वतःसिद्धायाः प्रागभावः स्वतोऽन्यतो वावगन्तुं शक्यते । अनुभूतिः स्वाभावमवगमयन्ती सती तावन्नावगमयति; तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति कथं सा स्वाभावमवगमयति ? एवमसत्यपि नावगमयति; अनुभूतिः स्वयमसती स्वाभावे कथं प्रमाणं भवेत् ? नाप्यन्यतोऽवगन्तुं शक्यते; अनुभूतेरनन्यगोचरत्वात् । अस्याः प्रागभावं साधयत्प्रमाणमनुभूतिरियमिति विषयीकृत्य तदभावं साधयेत् । स्वतःसिद्धत्वेनेयमिति विषयीकारानर्हत्वात् न तत्प्रागभावोऽन्यतः शक्यावगमः । अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुमिति, उत्पत्तिप्रतिसंबद्धाश्चान्येऽपि भावविकाराः तस्या न सन्ति ।

श्रुतप्रकाशिका

अथ ज्ञातृज्ञेयनिरसनं, ज्ञानस्वयंप्रकाशत्वं च बौद्धपक्षेऽपि समानमिति तद्व्यावर्तकं ज्ञानस्य नित्यत्वं साधयति—सेयमिति; सेयं परमार्थभूतसन्मात्रैक्या, प्रमाणाविषयभूता चेत्यर्थः । यद्वा स्वयंप्रकाशत्वहेतुभूतधर्मवत्तया प्रसिद्धेत्यर्थः । स्वयंप्रकाशत्वस्य नित्यता हेतुत्वविवक्षया स्वयंप्रकाशेत्युक्तम् । चः साध्यसमुच्चये, सौगतसाम्यशङ्कानिवृत्तौ वा । कुत

इत्यत्राह—**प्रागभावादीति**। स च कथमिति शङ्कायां ग्राहकाभावादित्यभिप्रायेणाह—**तदभावश्चेति**। स्वतःसिद्धत्वेन प्रागभावाद्यभावं विकल्पमुखेन प्रतिपिपादयिषुर्विकल्पशिरोद्वयेऽनुपपत्तिं प्रतिजानीते—**न हीति**। स्वतः पक्षे, अनुभूतिः किं सती स्वाभावमवगमयति? उतासतीति विकल्पमभिप्रेत्य सत्त्वपक्षं दूषयति—**अनुभूतिरिति**। कुत इत्यत्राह—**तस्याः इति**; ग्राह्याभावादित्यर्थः। अनुभूतिः किमनुमित्यादिरूपा स्वाभावमवगमयति, उत प्रत्यक्षरूपेति विकल्पे लिङ्गाद्यभावात् प्रथमः कल्पो न संभवतीत्यभिप्रेत्य, द्वितीयकल्पो ग्राह्याभावात् दूषितः। पूर्वाभिप्रेतविकल्पशिरसोरसत्त्वपक्षं ग्राहकाभावेन दूषयति—**एवमिति**। पूर्वतराभिहितयोर्विकल्पशिरसोरन्यत इति पक्षं दूषयति—**नापीति**। अनुभूतिरनन्यगोचरा स्यात्, ततः किमभावाग्रहणस्य, अभावो ह्यन्यगोचरत्वमर्हतीत्यत्राह—**अस्या इति**। अस्याः न ह्यन्यस्य प्रागभावो ग्राह्यः, अपि त्वनुभूतेरेव। तस्मात् तां विषयीकृत्यैव तदभावो ग्राह्यः। तस्या विषयीभावानर्हत्वात्, न तत्प्रागभावग्रहणं शक्यमित्यर्थः। एवं प्रागभावाभावादुत्पत्त्यभावः, ततश्च परिणामादिसर्वविकारान्तराभावमप्युपपादयति—**अतोऽस्या इति**; **अतः** स्वतः परतः पक्षयोरुभयोरप्यभावस्य दुर्ग्रहत्वादित्यर्थः। विकारमात्रविरहे साध्येऽनुत्पन्नत्वम्, अन्तवति प्रागभावेऽनैकान्तिकं स्यात्, अतो भावरूपविकारविरहस्य साध्यत्वज्ञापनाय **भाव**शब्दः। यद्वा, भावस्य विकार इति षष्ठी समासः, ततश्च भावाभावरूपविकारमात्रविरहे साध्ये प्रागभावे व्यभिचारशङ्कानिवारणार्थं, भावत्त्वे सत्यनुत्पन्नत्वं विकारान्तराभावे प्रयोजकमिति फलितम्। अनुभूतिर्नान्तवती, भावरूपत्वे सत्यनुत्पन्नत्वात्, यदन्तवत् तद्भावरूपत्वे सत्यनुत्पन्नं न भवति यथा घट इति।

## भावप्रकाशिका

**सेयं स्वयंप्रकाशानुभूति**रित्यत्र तच्छब्देन **सैव सती**त्युक्तम्, सदैक्यं परामृश्यते, इदंशब्देन प्राकट्यानुमाननिराकरणसिद्धं प्रमाणान्तराविषयत्वं परामृश्यत इति व्याचष्टे—**सेयमिति**। सदैक्यपरामर्शस्य वक्ष्यमाणानुपयुक्तत्वादन्यथा व्याचष्टे—**यद्वा स्वयंप्रकाशत्वेति**। **द्वितीयः कल्पो ग्राह्याभावाद्दूषित इति**; अनुमित्यादौ ग्राह्यस्याकारणत्वेन तदभावेन दूषणासंभवादिति भावः। **अतो भावरूपविकारेति**; नाशस्तु न भावरूपो विकारः तस्याभावरूपत्वादिति भावः। ननु भावरूपविकारराहित्ये साध्येऽनुभूतेर्नाशराहित्ये

न सिध्यतीत्यस्वरसादाह—**यद्वा भावस्य विकार इतीति**। **भावत्वे सत्यनुत्पन्नत्वं विकारान्तराभावे प्रयोजकमिति फलितमिति**; यद्यप्युत्पत्त्यभावात् भावस्य विकारा न सन्तीत्युक्तेऽनुत्पन्नत्वं भावसंबन्धिविकारित्वस्याभावे प्रयोजकमित्येव सिध्यति। न तु भावत्वस्यानुत्पन्नत्वविशेषणत्वं तावतापि प्रागभावे व्यभिचारवारणासंभवाच्च, प्रागभावस्याभावरूपतया भावसंबन्धिविकाराभावात्, तथापि भावविकारित्वाभावस्य विशिष्टाभावस्य विकारित्वरूपविशेष्याभावपर्यवसानार्थं भावत्वे सत्यनुत्पन्नत्वादित्यनुमानान्तरमावश्यकमित्यभिप्रेत्यैतदुक्तमिति ध्येयम्।

## श्रुतप्रदीपिका

अथ सौगतसाम्यव्युदासाय नित्यत्वमाह—**सेयमिति**। हेतुमाह—**प्रागिति**। सोपि कुत इत्यत्राह—**तदिति**। कथं स्वसिद्धत्वे तदभाव इत्यत्राह—**न हीति**। स्वतः पक्षे सती वासती वेति विकल्पं मत्वा ग्राह्याभावात् प्रथमं दूषयति—**अनुभूतिरित्यादिना**। द्वितीयं ग्राहकाभावात् दूषयति—**एवमित्यादिना**। अन्यतः पक्षं दूषयति—**नापीति**। अनन्यगोचरत्वे कथं तदभावानवगम इत्यत्राह—**अस्या इति**। न हि घटस्याभावः साध्यत इति भावः। ततः किमित्यत्राह—**स्वत इति**। प्रागभावाभावाज्जन्मतत्प्रयुक्तविकारान्तराभावमाह—**अत इति**। अतः स्वतः परतः पक्षयोरुक्तदोषाद्विकारान्तराभावे साध्ये, अजत्वं व्यतिरेकिहेतुः घटो दृष्टान्तः।

## नयप्रकाशिका

**वाचारम्भण**मित्यादौ कारणस्यैव सत्यताप्रतीतेश्च। **न स्थानतो**ऽपीत्यत्र उपाधिनोभयलिङ्गत्वमिति वक्ष्यते। **मायामात्र**मित्यत्र ब्रह्मणः स्वयंज्योतिष्ट्वं प्रसाध्यते। ननु तत्र स्वप्नदृष्टेः जीवस्यावशप्रवृत्तता साध्यत इति चेत्—न; जीवाविद्याप्रभवत्वसाधनेन जीवस्य स्वयंज्योतिष्ट्वस्य फलितत्वादैक्यश्रुतेः ब्रह्मातिरिक्ता चाविद्या तस्यामिथ्यात्वमिति तत्सूत्रेणैव सिद्धम्। **प्रत्यस्तमितभेद**मित्यनेन निरस्तभेदं सन्मात्रं स्वयंप्रकाशं ज्ञप्तिमात्रं ब्रह्मेत्युच्यते। **ज्ञानस्वरूप**मित्यनेनापि परमार्थतो ज्ञानमात्रस्वरूपमेव ब्रह्मव्योमादिव्यक्तपदार्थरूपेण द्रष्टृजीवभ्रान्त्या विवृत्तमित्युच्यते। **परमार्थस्त्वमेवैक** इत्यादिचतुःश्लोक्यामपि ब्रह्मण एव सत्यज्ञानमात्रस्वरूपत्वमन्यस्य भ्रान्तत्वं चोच्यते। **तस्यात्मेति** श्लोकेऽपि तथा। **यद्यन्य** इत्यत्रापि आत्मभेदो निरस्यते। **वेणुरन्ध्रे**त्यत्र च तद्भेदस्यौपाधिकत्वमुच्यते।

**सोहमि**त्यत्राप्यात्मद्वैताद्वैतयोर्भ्रान्तत्वाभ्रान्तत्वे । **विभेदजनक** इत्यत्रापि जीवब्रह्मणोरभेदः । **अहमात्मे**त्यादावपि ब्रह्मण एवात्मत्वमुच्यते । एवं वस्तूपदेशपरशास्त्रैर्निर्विशेषज्ञप्तिमात्रस्य ब्रह्मण एव परमार्थत्वम् । अन्यस्य कृत्स्नस्य मिथ्यात्वं चावगम्यते । मिथ्यात्वं नाम प्रतीयमानस्याधिष्ठानयाथात्म्यज्ञानेन बाध्यत्वं, रज्ज्वादौ सर्पादेरिव । दोषाद्धि चित्स्वरूपे ब्रह्मणि मिथ्यार्थाध्यारोपः । दोषश्चानाद्यविद्यानृतमायादिशब्दवाच्यः । सत्वेनासत्वेन वा निर्वक्तुमशक्यस्वभावः । तत्सिद्धिश्च "अनृतेन हि प्रत्यूढाः" इत्यादिश्रुतिभिः मायाशब्दश्चाविद्यापर्यायत्वेन प्रसिद्धः । "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते, तस्मै मायाम्" इत्यादौ मायाविद्ययोः सामानाधिकरण्यप्रतीतेः । "नासदासीत्" इत्यादौ च तस्यानिर्वाच्यता । नन्वविद्यया मिथ्यात्वदर्शनमिति केनावगम्यत इति चेत्—तच्छ्रुतिभिरेवेति ब्रूमः । "मायाभिः पुरुरूप ईयते" इति हि श्रूयते । किंच दोषव्यतिरेकेण भ्रान्तिज्ञानानुपपत्त्यापि च तत्सिद्धिः । तथा **ज्ञानस्वरूप** इत्यादिभिरपि दशश्लोक्या हि जगतो विष्ण्वैक्यपरत्वमेव । तत्र "भूतानि विष्णुः" इति श्लोकेन विष्णोर्जगद्रूपत्वेऽभिहिते, कथम् निरंशस्यानेकरूपत्वम्? इत्याशङ्क्य स्वप्न इव स्वरूपापरित्यागेनैव माययानेकरूपत्वापत्तेः । काल्पनिकानेकरूपत्वसंभव इत्युच्यते । **ज्ञानस्वरूप इति**; चिदचिदात्मकत्वमत्यजन्नेवाशेषमूर्तिः न तु वस्तुभूतः, ज्ञानस्वरूपं त्यक्त्वा तत्तज्जडवस्तुरूपेण विकृतः । अतः शैलादिभेदाः विज्ञानभेदेन कल्पिता इति । ननु बाधाभावेऽपि जगतः कथं कल्पितत्वमित्यत्राह—**यदा त्विति**; यदाधिष्ठानभूतं ज्ञानं पापक्षये वाक्यार्थज्ञानेनापास्ताविद्यादिदोषं, **शुद्धं**; निजरूपि, आत्मस्वरूपेण स्फुरति, तदा घटादिवस्तुषु ये वस्तुभेदाः चिदात्मवस्तुप्रतियोगिकाः घटादिवस्त्वन्तरप्रतियोगिकाश्च भेदा न भवन्ति न दृश्यन्ते । स्वाप्नपदार्थानां प्रबोध इव । अतः **सङ्कल्पतरोः फलानि**; कल्पितान्येवेत्यर्थः । उक्तो जगतः श्रौतो बाधः । अतः परं यौक्तिकं बाधं दर्शयति—**वस्त्वस्तीति**; कुत्र देशे काले वा जन्माद्यवस्थाहीनं सदैकरूपं वस्तु किमस्ति? न क्वापि किमपीत्यर्थः । अतः सर्वं दृश्यं जन्मादिमत्वात् कल्पितम् । देशकालादि च कल्पितमेवेत्यर्थः । अथानेकरूपस्य मिथ्यात्वं कुत इत्यत्राह—**यच्चेति**; यत् मृत्पिण्डादिकम् अन्यथात्वं घटादिप्रकारं भूयः कालान्तरे तन्मृत्पिण्डाद्येव न स्यात्, रूपान्तरापन्नत्वात् तस्य हि प्राक्प्रतीतरूपरहितस्य शुक्तिरूपस्यैवापरमार्थत्वमेवेत्यर्थः । तदन्यथात्वमेव

दर्शयति—**महीति** ; मही पिण्डघटकपालादिपरंपरया परिणामेनावस्थापन्ना लक्ष्यते । अत आत्मीयाशुद्धकर्मप्रतिबद्धात्मयाथात्म्यज्ञानैः भ्रान्तैरेव परमाण्वादिकारणं भिन्नं जगदा-लक्ष्यते । विचार्यमाणे तु, अत्र किं वस्तु न किमपीत्यर्थः । तस्मात् मह्याद्यवस्थाप्रकाशकं विज्ञानमेकं मुक्त्वा न किंचिद्वस्त्वस्ति । अतः तस्मिन् सर्वमिदं कल्पितमित्युक्तार्थं निग-मयति—**तस्मादिति** । ननु विषयेन्द्रियसंयोगजस्य क्षणिकस्य मृदादिज्ञानस्य कथं स्थायि-मृदाद्यधिष्ठानत्वमित्याशङ्क्य धीवृत्तिरूपज्ञानस्य तथात्वेऽपि तत्प्रकाशकज्ञप्तेरेवात्मत्वात्तद्वैलक्ष-ण्यमित्याह—**ज्ञानमिति** ; अशुद्धादिप्रत्यनीकमशेषलोभादिदोषैः सदाभिभूतया मायया च नित्यमसक्तं वस्तुत एकमवस्थान्तररहितं ज्ञानमेव वासुदेवः, ज्ञानव्यतिरिक्तवस्त्वभावादि-त्यर्थः । **परमः** ; निरतिशयानन्दस्वरूपत्वादत्युत्कृष्टः । **परेशः** ; अविद्यानियमने स्वतन्त्रः । सद्भाव इत्युक्तं संगृह्णाति—**सद्भावेति** । ननु ज्ञानेतरस्यासत्वे घटादिप्रत्यक्षप्रतीतेः यागस्व-र्गादिपरश्रुतेश्च का गतिरित्याशङ्क्याह—**एतत्त्विति** ; संव्यवहारभूतं व्यावहारिकसत्यत्वं न पारमार्थिकसत्यत्वमित्यर्थः । अथ तर्हि भूरादेर्वर्णनं किमर्थमित्याशङ्क्य कर्मनिमित्त-देशभ्रमणप्रदर्शनद्वारा वैराग्योत्पादनार्थं, न तु तत्सत्यत्वार्थम् । अतः एवंविधवस्तुज्ञानं कार्यात् ज्ञानसाधनश्रवणकार्यादित्याह—**यच्चेति** ; अतः निर्विशेषं चिन्मात्रस्वरूपमेव ब्रह्म, अविद्यादोषवशान्मिथ्यार्थदर्शि ब्रह्मव्यतिरिक्तं मिथ्येति च शास्त्रैः स्फुटतरं प्रतीयते । बन्धस्य ज्ञानबाध्यत्वश्रुत्यन्यथानुपपत्त्या च मिथ्यात्वसिद्धिः । अविद्याया एव हि विद्यया निवृत्त्युपपत्तिः । विद्या च वाक्यात् । ब्रह्मैकत्वविज्ञानाच्च "अथ योन्यां देवतामु-पास्त" इत्यादि श्रुतिभिः "न सवेद" इति पृथक्त्वज्ञाननिन्दापूर्वकमैक्यज्ञानस्यैव विधीयमानत्वात् । "तत्त्वमसि" इत्याद्युपदेशेपि तथैव विधिः । "अहं वै त्वमसि" इत्यनुसन्धानानुकारिणीषु श्रुतिष्वपि तथा, आत्मेत्यन्यत्र सूत्रकारैरपि तदैक्यज्ञानमेव प्रसाध्यते । आत्मेत्येवादिवाक्यकारोक्तैरैक्यज्ञानस्यैव सांप्रदायिकत्वं, नान्यस्येति धीः । तादृशज्ञाना-देवाविद्यानिवृत्तिरिति च "न पुनर्मृत्यवे तदेकम्" इत्यादिश्रुतिसिद्धा । ननु मृत्युतरणो-पायत्वं ज्ञानस्य तत्र प्रतीयते । न त्वविद्यानिवृत्त्युपायत्वमिति चेत्—न ; अत्र मृत्यु-शब्दस्याविद्यापरत्वात् । महाभारते सनत्सुजातीये प्रमादस्यैव मृत्युत्वाभिधानात् । अनवधानं चाविद्या, तज्ज्ञानादेव तन्निवृत्तिरिति, "यदा ह्येवैष" इत्यादिश्रुतावपि भेद-ज्ञानस्य भयहेतुत्वप्रतीतेः । अनन्तरवाक्यादैक्यज्ञानस्याभयप्राप्तिहेतुत्वप्रतीतेश्च अभयप्रा-

क्तिरप्यविद्यानिवृत्तिरेव। "भिद्यते हृदयग्रन्थिः" इत्यत्रापि परावररूपब्रह्मदर्शनात् संसारनिवृत्तिधीः। दर्शनं च ज्ञानमेव। "ब्रह्म वेद" इत्यत्रापि ब्रह्मवेदनात् ब्रह्मभावाभिधानात्। अविद्यानिवृत्तिरेवार्थत उक्ता। अन्यस्यान्यभावानुपपत्तेः। जीवपरयोरैक्यं च सिद्धम् "तमेवं विद्वान्" इत्यादिश्रुतावात्मज्ञानव्यतिरिक्तस्य तन्निवृत्तावनुपायत्वधीः ब्रह्मस्वरूपावगतिश्च जन्मादिवाक्यैः कारणतयोपलक्षितस्य सत्यज्ञानादिशोधकवाक्यैः। अत एवंविधब्रह्मज्ञानात् नानाकारवत्प्रतीयमानप्रपञ्चरूपमिथ्यार्थस्य सकारणस्य बाधः शास्त्रसिद्धः। ननु शास्त्रस्य प्रत्यक्षविरोधे तु न प्रामाण्यम्। अतः शास्त्रज्ञानान्न प्रत्यक्षसिद्धभेदस्य निवृत्त्युपपत्तिः। न च प्रत्यक्षयोरेव रज्जुसर्पादौ बाध्यबाधकता दृश्यत इति वाच्यम्, तयोस्तुल्यबलत्वात्। शास्त्रस्य स्वमूलप्रत्यक्षविरोधे तु न प्रामाण्यम्। शास्त्रस्य व्युत्पत्तिसहकारिसहितस्यैव ह्यर्थप्रत्यायकत्वम्; व्युत्पत्तिश्चानुमानात् व्याप्तिग्रहणसापेक्षात्, व्याप्तिग्रहणं च प्रत्यक्षादिति तस्य प्रत्यक्षमूलत्वमिति चेत्—न; बाध्यबाधकभावस्य तुल्यत्वसापेक्षत्वादेरप्रयोजकत्वात्। किंतु दुष्टकारणजन्यत्वाजन्यत्वयोरेव प्रयोजकत्वात्। अत एव ह्यनुमानस्य प्रत्यक्षमूलत्वेऽपि ज्वालैक्यप्रत्यक्षस्य तद्भेदानुमानबाध्यत्वम्। अतः प्रत्यक्षस्य सविषयस्य भेदवासनादोषमूलत्वेनान्यथासिद्धत्वात्। नित्यत्वेनासंभाव्यमानदोषानन्यथासिद्धनिरवकाशशास्त्रजन्यज्ञानेन बाध्यत्वं युक्तम्। न च वासनातः भेदधीः तद्धेतोर्वासना इत्यन्योन्याश्रयदोष इति वाच्यम्, तत्प्रवाहयोर्बीजाङ्कुरवदनादित्वात्। एवमद्वैतशास्त्रस्य निरवकाशत्वात् कर्मसगुणविद्यापरशास्त्राणां तेन बाध्यत्वम्। अत उपदेशपरवाक्येषु सर्वज्ञत्वादिश्रवणेपि गुणतदभावयोरेकत्र समावेशायोगादन्यतरश्रुतिबाधस्यावश्याभ्युपगमनीयत्वे निषेधश्रुतेर्निषेध्यगुणभेदादिसापेक्षत्वान्निर्गुणशास्त्रस्य परत्वात्प्राबल्यम्, अपच्छेदनयात्। अत्र हि पूर्वशास्त्रस्य परशास्त्रेण बाधः उक्तः। तच्च पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्। "यद्युद्गातापच्छिद्येतादक्षिणो यज्ञः संस्थाप्यः, अथान्य आहर्तव्यः तत्र दद्यात्; यत्पूर्वस्मिन् दास्यं स्यात् यदि प्रतिहर्तापच्छिद्येत सर्ववेदसं दद्यात्" इति श्रूयते सदक्षिणादक्षिणनिमित्तद्वयस्यैकक्रमेण संभवे विरुद्धत्वेनान्यतरशास्त्रार्थस्य विकल्पनानुष्ठानेऽन्यतरस्यार्थात् बाधसिद्धौ कस्य बाध इति चिन्त्यते। किं पूर्वोत्पन्नस्य नैमित्तिकशास्त्रस्य बाधः। उतोत्तरस्येति। असञ्जातविरोधित्वेन पूर्वस्य प्राबल्यात्, उत्तरस्य बाधः इति पूर्वः पक्षः। पूर्वशास्त्रबाधेनैवोत्तरस्योत्पत्तेः। तस्यैव प्राबल्यात्। पूर्वशास्त्रबाध एवेति राद्धान्तः। प्रत्य-

क्षादिविरोधपरिहारः एवं वास्तु सर्वाद्वैतादिश्रुतेः न प्रत्यक्षादिबाधः, तयोर्भिन्नविषयत्वेन विरोधाभावात्। प्रत्यक्षादिस्तु घटपटादिभेदे नियत एवोत्पद्यते। न तु सर्वभेदविषयता कस्यापि प्रत्यक्षस्य। येनैकविषयत्वेन विरोधः स्यात्। अतः प्रत्यक्षादेरल्पविषयस्य न तच्छ्रुतिबाधकत्वम्, बाधकत्वेऽप्यग्नीषोमीयालम्भनप्रमाणस्य "न हिंस्यात्" इति शास्त्रबाधकत्ववत्, स्वविषयमात्रप्रमायाः विपरीतज्ञानबाधकत्वमेव। अन्यथा अतिप्रसङ्गात्। बाध्यबाधकधियोरद्वैतप्रतिपादने तु न विरोधः। प्रत्यक्षधियः स्वस्याः शास्त्रज्ञानस्य च भेदाविषयत्वात्। एवमैक्ये च न बाधकता। आत्मन एव बाधापत्तेः। एवं तद्धियः सर्वाद्वैतबुद्ध्यैक्ये च तद्धीविषयभेदाश्रयघटपटादेरपि तदैक्यं सिद्धम्। तत्र बाध्यमानत्वात्। घटपटौ भिन्नाविति तद्भेदविषया हि तद्धीः। नन्वहं घटात्पटाच्च भिन्नः मत्तो वा तौ भिन्नाविति धियः स्वयंप्रकाशत्वमपि स्वमात्रसाक्ष्येव, न तु प्रकाशान्तरम्। प्रकाशप्रकाश्यभेदेऽपि तस्यापि प्रकाशान्तर्भावे सुतरामद्वैतसिद्धिः। घटपटादेः तदैक्ये च तद्धर्मभेदादपि तदैक्यं सिद्धम्। एवं तद्बुद्धेः घटपटात्मतयैव श्रुत्या व्यवस्थाप्यमानत्वात्। नात्मनः स्वस्मादेव भेदे प्रामाण्यमिति तयैतद्बुद्धौ च घटपटयोर्भेदे प्रमाणत्वाभाव आपादितः। ननु भेदप्रतीत्यन्यथानुपपत्त्या भेदः सिध्यतीति चेत्—न; अद्वैतश्रुत्या तस्याः सन्दिग्धत्वेन प्रमाणत्वासिद्धेः। भेदप्रतीतिस्तु द्विचन्द्रज्ञानादिवदन्यथाप्युपपन्ना। ननु घटपटोल्लेखिप्रत्यक्षव्यक्त्या स्वात्मना सह पटादेर्विषयत्वाभावेपि बुद्ध्यन्तरेण तया सार्धं पटादिभेदमुल्लिखतां तेषां भेदविषयत्वापादनात् तत्राद्वैतश्रुतेः बाध इति चेत्, तर्हि तस्यापि विषयमापाततस्त्यक्त्वा घटपटतत्सम्बन्धिभेदविषयाया अपरस्या एव बुद्धेः तच्छ्रुत्यैव तदैक्यमापाद्य पूर्ववत्सर्वस्याप्यैक्यमापाद्यत इति ब्रूमः। एवं द्वितीयबुद्ध्या सह बुध्यन्तरेण विषयधीकारेप्यूहनीयम्। एवं प्रवृत्तोऽत्रैवानवस्थाभयात् बाधबुद्धिपरंपराविच्छेदः। तत्र तद्बुद्धिद्वारा तत्सर्वं तद्विषयप्रवाहान्तश्रुतिः अद्वितीये स्थापयति। तदुक्तम्—

"सुदूरधावनश्रान्ता बाधबुद्धिपरंपरा।
निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते॥"

इति। एवं स्वतः प्रमाणाद्वितीयश्रुतेः सर्वैक्यप्रतिपादने काचिन्नक्षतिः। ननु शोधकवाक्येष्वेव सत्यज्ञानादिगुणश्रवणात्, ब्रह्मणः सगुणत्वप्रतीतेः नाद्वैतसिद्धिरिति चेत्—न;

'सत्यं ज्ञानम्' इत्यादिपदानां सामानाधिकरण्येनैकार्थ्यपरत्वात्। न च तद्गुणविशिष्ट ब्रह्मपरत्वेप्येकार्थपरत्वोपपत्तिः। उभयपरत्वेन भेदापत्तेः। न च स्वरूपमात्रैक्यपरत्वे पदानां पर्यायतेति वाच्यम्, एकार्थपरत्वेऽपि व्यावर्त्यार्थभेदेनापर्यायत्वात्। "यतो वा इमानि भूतानि" इत्यादि वाक्यैः सजातीयादिभेदव्यावृत्तत्वेन कारणत्वेनोपलक्षितत्वस्य ब्रह्मणोऽवगम्यमानत्वात् तदविरोधेनैव तल्लक्षणाभिधायकसत्यादिपदानामप्यर्थो युक्त इति स्वरूपमात्रैक्यपरत्वाभानादेवापर्यायता वाच्या, सा च सत्यादिपदैः ब्रह्मणि मिथ्यात्वजडत्वदुःखित्वभ्रान्तीनां निवृत्तिमुखेन ब्रह्मपरत्वात्सिद्धा। न च प्रतिपदं जायमानविज्ञानानां स्वस्वाकारसमर्पणानान्तरीयकतयापि विरोधिरूपव्यावर्तकत्वोपपत्तेः तेषामुभयप्रयोजनतास्त्विति वाच्यम्, 'ब्रह्मविदाप्नोति' इत्युपक्रमश्रूयमाणब्रह्मशब्दार्थमात्रस्य बुभुत्सितत्वात्, तत्समर्पणेनार्थवत्त्वेन वाक्यस्यार्थान्तरकल्पनायोगात्। ब्रह्मणः गुणसद्भावे वस्तुपरिच्छेदादनन्तरत्वहानेरनन्तत्वप्रतिपादकश्रुतिविरोधः। तथैक्यश्रुतीनामपि। तस्मात् पदत्रयेण निर्विशेषस्वयंज्योतिः ब्रह्मेत्यर्थात्प्रतिपादितम्। अन्यथा "विज्ञानघनः" इत्येकरसत्वप्रतिपादकश्रुतिविरोधः। ननु ब्रह्मणः स्वयंप्रकाशत्वेन न शास्त्रवेद्यत्वमिति चेत्—न; अनिर्वचनीयानाद्यविद्यापरिणतिं तिरोहितमात्रस्यैवावगम्यमानत्वात्। न च ब्रह्म स्वयंप्रकाशमानमपि स्वात्मनि संवेद्य गुणानवभासयतीति वाच्यम्, तेषां तत्प्रकाशस्य च नित्यत्वेऽन्यवेद्यत्वासिद्धेः। अनित्यत्वे च तेषां विषयेन्द्रियसाध्यत्वाद्ब्रह्मणोऽपि संसारित्वम्। न च तत्पदानां स्वार्थप्रहाणाल्लक्षणा स्यादिति वाच्यम्, सामानाधिकरण्यस्याद्वैततात्पर्यानुरोधात् अत्र लक्षणाया एव स्वीकार्यत्वात्। अन्यथा सत्यादिपदानामनन्वयप्रसङ्गोऽनेकश्रुतिविरोधो युक्तिविरोधश्च। ननु संबन्धानुपपत्तिर्हि लक्षणाबीजं, ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्, ब्रह्मणः सर्वप्रकारसंबन्धाभावाच्च न लक्षणोपपत्तिरिति चेत्—न; प्रातिभासिकदृश्यप्रपञ्चस्य यथाप्रतिभासं व्यवहारालम्बनत्वाभ्युपगमात्, सर्वव्यवहारोपपत्तेः। ब्रह्मणः परमार्थतोऽसंगतत्वेऽपि विज्ञानोदयपर्यन्तं प्रातिभासिकसंबन्धानिरासकरणादनिर्वचनीयेनापि गुणसामान्यादिना परमार्थब्रह्मलक्षणा चोपपन्ना। मिथ्याभूतरजतेन शुक्तेरिव। ननु प्रमाणान्तरसिद्धस्यैव लोके लक्ष्यत्वदर्शनात् तत्र सर्वपदानां लक्षणयैव प्रवृत्तौ, प्रमाणान्तरासंभवात् लक्षणानुपपत्तिरिति चेत्—न; तस्य स्वयंप्रकाशत्वेन प्रमाणान्तरानपेक्षत्वात्। स्वतः परतो

वां लक्ष्यस्य प्रतिभासमानत्वमेव हि लक्षणायाः प्रयोजकत्वम्, न तु प्रमाणान्तरगम्यत्वम्। ननु वाक्यार्थे पदानामनन्विताभिधानानुपपत्त्या हि कतिपयपदानां वाच्यार्थान्वयविरोधे लक्षणा; सकलपदलक्षणोपादाने तु किं कस्य लक्षणामाक्षिपतीति चेत्, उच्यते—नानन्विताभिधानानुपपत्तिर्मुख्यार्थानुपपत्तौ लक्षणाक्षेप्त्री, किंतु वाक्यप्रमाणानुपपत्तिः। ततश्च यत्र वाक्यार्थे न विधिमुखेन किंचिदर्थावबोधः, तस्यान्विताभिधानमुखेनावबोधकत्वादन्विताभिधानानुपपत्तिरेव लक्षणाक्षेप्त्री। यत्र तु तदारोपनिवृत्तिमात्रमुखेनार्थबोधकत्वं तत्र निवृत्तिमुखेनैव तस्य प्रामाण्यात्, सकलपदलक्षणामन्तरेण तदनुपपत्तेर्वाक्यप्रामाण्यस्यैवानुपपद्यमानस्य लक्षणाक्षेपकत्वम्। अतः सत्यादिपदान्यसत्यादिसामान्यविशेषप्रतिषेधमुखेन तदेवैकरसं ब्रह्म लक्षयन्ति। "तत्त्वमसि" वाक्येन च तत्पदवाच्यगतपारोक्ष्यांशपरित्यागेन त्वंपदवाच्यगतसंसारित्वपरिच्छिन्नत्वांशपरित्यागेन चाद्वितीयप्रत्यक्चैतन्यमात्रमेव लक्ष्यते। सर्वपदलक्षणायाश्च लौकिकवाक्ये प्राभाकराभ्युपगतिदर्शनान्न क्वचिदपि सर्वपदलक्षणा कस्याप्यङ्गीकृतेति नानुयोगः। अपूर्वरूपकार्य एव हि लिङादेर्मुख्यत्वम्; इतरपदानां च तदन्वितस्वार्थाभिधाने; लौकिके तु वाक्ये तदभावात् सर्वत्रैव लक्षणेति हि तदङ्गीकारः। अतः सर्वपदलक्षणा न दोषः। प्रयोगोऽपि विमतिपदं सत्यादिवाक्यमखण्डैकरसार्थपर्यवसायि, बुभुत्सितार्थलक्षणवाक्यत्वात्, 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादिवाक्यवत्। तथा—विमतिपदं "तत्त्वमसि" इति सामानाधिकरण्यमेकवस्तुनिष्ठम्, अकार्यकारणांशांशिविशिष्टस्वरूपिद्रव्यवाचिपदसामानाधिकरण्यात्, "सोऽयं देवदत्तः" इतिसामानाधिकरण्यवदिति। ननु सत्यादिपदानां लाक्षणिकार्थत्वे गङ्गादिशब्दवत्स्वार्थपरित्यागे ब्रह्मणः सत्यानन्दादिस्वभावविरोध इति चेत्—न; अजहल्लक्षणाया एव स्वीकृतत्वात्। "सर्वज्ञः सर्ववित्" इत्यादयस्तु जहल्लक्षणया, सर्वज्ञादिशब्दानां प्रपञ्चोपहितब्रह्मविषयत्वात्; तेषां च "प्रज्ञानघनः" इत्यादिशब्दसंनिधानात् स्ववाच्ये प्रपञ्चांशमुत्सृज्यानवच्छिन्ने ब्रह्मणि वर्तमानत्वात्। "अनन्तमपारम्" इत्यादिनिषेधशब्दास्तु प्रपञ्चाभावादिसाधनमुखेनाजहल्लक्षणायाः। साक्षाच्छब्दवाच्यता तु ब्रह्मणो नास्त्येव। निरस्तसमस्तसामान्यविशेषादिभावेन शब्दप्रवृत्तिनिमित्ताभावात्; "यतो वाचो निवर्तन्ते" इत्यादौ वाच्यत्वनिषेधाच्च। ननु तत्र वेदान्तानामप्रामाण्यमिति चेत्—न; "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यादिश्रुतिप्रामाण्यानुरोधात् "यतो वाचः" इत्यादिश्रुत्य-

नुरोधाच्च ब्रह्मण्यज्ञाननिवर्तकत्वेन तत्प्रामाण्याङ्गीकारात्। न ह्यनधिगतार्थगन्तृत्वेन तत्र प्रामाण्यम्, तस्य स्वयंप्रकाशत्वेन सर्वार्थसिद्धिहेतुत्वात्। ननु 'सोऽयं देवदत्तः' इत्यादि-वाक्यानां कथमखण्डैकरसार्थपर्यवसायित्वमिति चेत्, वाक्यस्याप्रामाण्यापत्तिरेव तथार्थस्वी-कारहेतुरिति ब्रूमः। 'सोऽयं देवदत्तः' इत्यत्र हि किं देवदत्तस्वरूपमात्रं प्रतिपाद्यम्? उत तद्गतैक्यम्? अथ तस्य कालद्वयसंबन्धः? किं वा परोक्षापरोक्षकालद्वयविशिष्टयोरैक्यम्? इति विवेचनीयम्। न तावदाद्यः, तस्यैकपदलभ्यत्वेन पदान्तरवैयर्थ्यात्; प्रत्यक्षत्वेन शब्दापेक्षत्वाभावाच्च। न च द्वितीयः, तस्यापि प्रत्यक्षादिसिद्धत्वेन शब्दानपेक्षत्वात्। न च तृतीयः, भूतकालसम्बन्धिन एव वर्तमानकालसंबन्धाभावात्; कालद्वयसम्ब-न्धिन एकत्वे प्रमाणाभावात्; वाक्यस्य च कालद्वयसंबन्धमात्रोपक्षयात्। नापि चतुर्थः, वर्तमानावर्तमानकालयोरिव तद्विशिष्टयोरपि परस्परसंबन्धानुपपत्तेः; विरुद्धयोः कालयोरेकविशेषणत्वानुपपत्तेश्च। नापि पर्यायेण कौमारयौवनयोरिवैकविशेषणत्वम्, तत्र कौमारादिसंबन्धव्यतिरेकेण संबन्धिवस्तुनः प्रत्यभिज्ञयैकत्वनिश्चयात् पर्यायेणैकविशेषण-त्वोपपत्तेः। इह त्वेकस्य कालद्वयसंबन्धनिश्चयव्यतिरेकेणोभयकालसंबन्धैक्यनिश्चये प्रमा-णाभावात् पर्यायेण कालद्वयसंबन्धानुपपत्तेः। तस्माद्विधिमुखेन कस्मिंश्चिदर्थे वाक्य-प्रामाण्यानुपपत्तेरबाधितप्रतीतिजनकत्वेन वाक्यप्रामाण्यस्याङ्गीकार्यत्वाच्च कालद्वयाख्यो-पाधिसंबन्धनिमित्तदेवदत्तगतानेकभ्रान्तिनिवर्तनेन देवदत्तस्वरूपसमर्पकतयैव प्रामाण्यम्। अत एकस्य युगपद्विरुद्धदेशकालसंबन्धित्वानुपपत्तेर्वाक्यैकदेशविरुद्धांशद्वयपरित्यागेनोभयत्र वाच्यगताविरुद्धदेवदत्तस्वरूपमात्रे पदद्वयस्य लक्षणैव युक्ता। न चोपाधिद्वयसंबन्ध-कृतानेकत्वभ्रान्तिनिवर्तनेन देवदत्तस्वरूपसमर्पणमेकपदमात्रलभ्यमिति वाच्यम्, उपाधि-विनिर्मुक्तस्वरूपसमर्पणस्य लक्षणानिमित्तत्वात्, लक्षणायाश्च पदार्थविरोधनिमित्तत्वात्, विरो-धस्य चान्वयप्रतीतिनिमित्तत्वात्, अन्वयप्रतीतेश्च पदानां सामानाधिकरण्यनिमित्तत्वात्, सामानाधिकरण्यस्य चानेकपदगामित्वात्। नन्वतीतकालविशिष्टस्य वर्तमानकालसंब-न्धाभावेऽपि तत्कालोपलक्षितस्यैतत्कालसंबन्धो न विरुद्धः; एवं चैकपदस्य मुख्यार्थ-ताला‌भ इति चेत्—न; अन्यतरकालेनापि देवदत्तस्वरूपमात्रस्यैव लक्ष्यमाणत्वात्। न चान्यतरकालविशिष्टरूपस्य लक्ष्यत्वं, वर्तमानकालविशिष्टत्वरूपेण देवदत्तस्यातीत-कालसंबन्धाभावात्; तदभावे च लक्षणानुपपत्तेः। स्वरूपमात्रस्योभयकालसंबन्धि-

त्वात्कालद्वयेनापि स्वरूपमात्रलक्षणैव युक्ता । ननु विवादपदं 'सोऽयम्' इत्यादिवाक्यं विशिष्टार्थपरम्, बुद्धिपूर्वकवाक्यत्वात् गवानयनादिवाक्यवदित्यनुमानात् विशिष्टार्थपरत्वसिद्धिरिति चेत्—न; तद्वाक्यस्य विधिमुखेन प्रामाण्यासंभवात् । किंतूपाधिद्वयसंबन्धनिमित्तदेवदत्तगतभेदनिवर्तनेन तत्स्वरूपमात्रे पर्यवस्यति; अन्यथा वाक्यस्याप्रामाण्यापत्तेः । अतोऽर्थापत्तिबाधितत्वेन कालात्ययापदिष्टः । 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादौ व्यभिचाराद्धेतोश्चानैकान्त्यम् । 'प्रकृष्टप्रकाशः' इत्यादि वाक्यं त्वेकरसार्थपर्यवसितमेव । तथाहि—ज्योतिर्मण्डले 'कश्चन्द्रः?' इति प्रश्ने 'प्रकृष्टप्रकाशश्चन्द्रः' इत्युत्तररूपं हीदं वाक्यम् । चन्द्रप्रातिपदिकमेव हि पृष्टम्; न तु गुणस्तत्संबन्धो वा । स्वरूपमात्रे पृष्टे उत्तरेणापि तादृशेन भाव्यम्, अन्यथा प्रश्नोत्तरयोर्वैरूप्यं स्यात् । अतः 'प्रकृष्टप्रकाशः' इति प्रकर्षगुणप्रकाशसामान्याभ्यां प्रकाशसामान्यव्यक्तिरूपं चन्द्रद्रव्यमेव लक्ष्यते, प्रकाशादिगुणविशिष्टस्य चन्द्रप्रातिपदिकाभिधेयत्वानुपपत्तेः । अतस्तद्वाक्यस्यापि लक्षणया चन्द्रप्रातिपदिकार्थमात्राभिधानमेव । ननूपलक्षितदेवदत्तादिस्वरूपस्य गुणगुण्याद्यनेकरसत्वं दृश्यत इति चेत्—न; तस्य प्रमाणान्तरसिद्धत्वेन शाब्दत्वाभावात् । अतः सामानाधिकरण्यवाक्यस्याखण्डैकरसार्थपरत्वमेवेति सिद्धम् । अतो वेदान्तवाक्यानामेवंप्रकारेणैवाखण्डैकरसब्रह्मपरतया प्रामाण्यम् । एवमैक्यपरत्वबलाच्छास्त्रस्य प्रत्यक्षादिविरोधाभ्युपगमेन बलीयस्त्वमुक्तम् । तयोर्न वस्तुतो विरोधः; उभयोः सन्मात्रग्राहित्वेनैकविषयत्वात् । 'घटोऽस्ति' इति सत्ताविषयैव हि प्रत्यक्षधीः । 'ननु च घटोऽस्ति' इत्यादौ घटादिनानाकाराणामपि प्रत्यक्षविषयत्वं प्रतीयत इति चेत्—न; तादृशभेदप्रतीतेर्भ्रान्तत्वात्; न हि घटादिभेदतदस्तित्वयोः क्षणिकप्रत्यक्षविषयत्वम् । भेदग्रहणस्य वस्तुस्वरूपग्रहणप्रतियोगिस्मरणसापेक्षत्वेन विलम्बितत्वान्न भेदविषयत्वम् । अतो भेदप्रतीतेरिन्द्रियान्वयव्यतिरेकानुविधानेऽपि तदन्वयव्यतिरेकयोर्भेदविभ्रमाधिष्ठानग्रहणेनान्यथोपक्षयान्न भेदसद्भावः । ननु भेदप्रतीतेः कारणदोषबाधकप्रत्ययाभावान्न भ्रान्तत्वमिति चेत्—न; देशकालव्यवहितवस्तुवत् भेदवस्तुनः प्रत्यक्षायोग्यत्वात् । तच्चारम्भणाधिकरण उपन्यस्य निराकृतमिति नात्र तत्प्रपञ्चः । किंच योऽसौ भेदः प्रत्यक्षादिग्राह्योऽभिमतः, स किं वस्तुनः स्वरूपम्? उत धर्मः? न तावदाद्यः, लोके वस्तुस्वरूपग्रहे तद्व्यवहारवत् सर्वस्मात् भेदव्यवहारादर्शनात् । ननु भेदव्यवहारस्य

प्रतियोगिस्मरणापेक्षत्वेन स्वरूपग्रहणानन्तरं न तद्व्यवहार इति चेत्—न; भेदस्य स्वरूपत्वेन स्वरूपव्यवहार इव प्रतियोग्यनपेक्षत्वापत्तेः; तस्य स्वरूपत्वे भेदघटादिशब्दानां पर्यायता च। तथात्वे 'घटो भिन्नः' 'पटो भिन्नः' इति भेदशब्दस्यानेकैर्घटादिशब्दैः सह प्रयोगो न स्यात्। ततश्च लोकव्यवहारोच्छेदः। किंच भेदस्य घटादिस्वरूपत्वे घटादिस्वरूपस्याविदारितस्वरूपत्वात् तद्विदारणरूपभेदो न स्यात्। भेदाभावे चान्योन्यानात्मतालक्षणवस्त्वसंकरत्वासिद्धेरद्वैतपक्षपात एव। घटादेर्वा भेदस्य विदारणात्मकत्वान्नैकघटसिद्धिः। तथा तदंशपरंपरास्वपीति जगतः शून्यतापत्तिः। ननु भेदाभेदात्मनैकबुद्धिबोध्यत्वात्, भेदात्मकत्वेऽपि घटादेरेकत्वमविरुद्धमिति चेत्, तर्हीदं वक्तव्यम्—सर्वत्र भेद एक एव किं वानेकः? इति; आद्ये भेदस्यैकत्वात् सर्ववस्तुनश्च तत्स्वरूपत्वाच्च पुनरप्यद्वैतापातः। द्वितीये पक्षे भेदानामनेकत्वे तन्मात्रस्वरूपत्वेऽप्यद्वैतत्वापातः, भेदस्य स्वरूपानतिरेकात् भेदनाम्ना घटभेदस्यैवोक्तत्वात्। नापि धर्मः, अनवस्थापातात्; धर्मधर्मिणोर्भेदस्यावश्याश्रयणीयत्वेन तद्भेदस्यापि धर्मत्वेन तथात्वमित्यनवस्थानात्। ततश्च न विलक्षणवस्तुधीः, तद्धियो विशेषणविशेष्यग्रहणपूर्वकत्वात्; तस्य च भेदस्थैर्याधीनत्वात्। इतरेतराश्रयत्वं च—विशिष्टप्रतीतेर्जातिव्यक्त्यादिविशेषणविशेष्ययोर्भेदबुद्ध्यपेक्षत्वात्, भेदग्रहस्य तद्विशिष्टबुद्ध्यपेक्षत्वादिति। न हि भेदग्रहे विशिष्टत्वधीः; तथा विशिष्टबुद्ध्यभावे च न भेदग्रहः। तस्मादनिर्वचनीयाविद्यात्मको भेद इति सन्मात्रग्राह्येव प्रत्यक्षम्। किंच सर्वासु प्रतीतिष्वनुवर्तमानत्वेन सन्मात्रस्यैव परमार्थत्वम्। भ्रमाधिष्ठानत्वेनानुवर्तमानरज्जुवत् व्यावर्तमानत्वेन घटादिविशेषाणामपारमार्थ्यम्। रज्ज्वधिष्ठानत्वेन जातव्यावर्तमानसर्पादिवत्। एतयोः सिद्धिश्च सत्परमार्थ इत्यनुमानाभ्याम्। ननु वस्तुनः पारमार्थ्यापारमार्थ्ययोरबाध्यत्वबाध्यत्वे एव हि प्रयोजके, न त्वनुवर्तमानत्वव्यावर्तमानत्वे इति चेत्—न; घटादिविशेषनिवृत्तिरूपव्यावृत्त्यैव बाध्यत्वस्य तेषां फलितत्वात्। 'घटोऽस्ति' इत्यादौ पटादीनां व्यावृत्तिः; व्यावृत्तिर्नाम तेषामभावः। बाधाद्धि तदभावः। नन्वनुभूतेः सद्विषयत्वात् विषयविषयिरूपभेदो नोपैतीति चेत्—न, भेदस्य निरस्तत्वात्। विषयविषयिभावोऽपि भ्रान्त एव। तदुक्तम्—

"संविदा स्वीकृतं यद्यत्तत्तद्विषयसंज्ञितम्।
तत्स्वीकृतं तदात्मैव विषयोक्तिः क तिष्ठतु॥

तथा जडावबोधस्य बुधैर्बोद्धुं न पार्यते ।
भावाभावाविव यतो विरुद्धौ चिज्जडौ मतौ ॥
इतरेतरवेधेन तयोरन्यतरा स्थितिः ।
कल्प्यते न तु संबन्धः स्वभावेन विरुद्धयोः ॥
संबन्धोऽपि भवेज्जन्यस्ताभ्यामथ तदात्मकः ।
तदात्मकत्वे भावेऽथ तज्जन्यत्वे पृथक् स्थितिः ॥
संबन्धिव्यतिरेकेण संबन्धे तैरदर्शिते ।
भवेन्मुग्धो जनो धूर्तैर्विप्रलब्धो मृषोक्तिभिः ॥ ”

इत्यादि । अतः सदेवानुभूतिः । नन्वनुभूतिसिद्धिः कुत इति चेत्, स्वत एवेति ब्रूमः । अन्यतः सिद्धावनुभूतित्वहानिः । घटादेरिव तस्याश्च प्रमाणान्तरापेक्षैव नास्ति, स्वसत्तयैव प्रकाशमानत्वात् । स्वतः सिद्धौ च किं प्रमाणान्तरैः । तदुक्तम्—

“ चैतन्यं यदि चैत्यत्वयोगाच्चैतन्यमेव न ।
अन्यस्य यदि चैतन्यं कथमात्मनि तद्भवेत् ॥
अनुभूतौ प्रमाणानां परिनिष्ठा समाप्यते ।
स्वसत्तयैव तत्सिद्धं किं तत्रान्यैः प्रमान्तरैः ॥
आत्मा न मेयः कस्यापि तदन्यन्नोपपद्यते ।
विरुद्धमिदमात्मा च मेयश्चेति यदुच्यते ॥ ”

इति । अथ भाट्टप्रत्यवस्थानम्—ननु सत्यामप्यनुभूतौ विषयस्यैवानुभवः, न त्वनुभूतेः । न च तस्याननुभवे तुच्छतेति वाच्यम्, विषयानुभववेलायामेव तदनुभवाभावाभिमतेः । तच्च तस्या घटादिवदिदंभावेन विषयत्वाप्रतीतेः । अतोऽनुभूतिः स्वसत्तयैव चक्षुरादिवद्विषयप्रकाशकरी । तदनन्तरमर्थगतप्रकाशलिङ्गेनात्मगतप्राकट्यान्यथानुपपत्त्या वानुभूतिर्ज्ञायत इति तस्याः स्वयंप्रकाशत्वसिद्धिः । अर्थगतप्राकट्यस्य कादाचित्कत्वेन कार्यता च सिद्धा । न च तस्यानुभाव्यत्वे अजडत्वहानिरिति वाच्यम्, विकल्पासहत्वात् । किमजडत्वं स्वसत्तायाः प्रकाशाव्यभिचारित्वम्? उत स्वेन स्वानुभवः? आद्ये सुखादेरपि प्रकाशाव्यभिचारादजडत्वापत्तिः । द्वितीये तु कर्मकर्तृविरोधः । तदुक्तम्—

"अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥"

इति । अतो नानुभूतेः स्वयंप्रकाशत्वमिति । तदेतद्भाट्टमतनुपपन्नम्, अनुभूतिसंबन्धव्यतिरेकेण विषयगतत्वेन प्रकाशाख्यधर्मोत्पत्त्यदर्शनादर्थापत्त्याद्यनुपपत्तेः । अन्यथानुपपत्तावेव ह्यर्थापत्तिः । न च विषयः प्रकाश इति प्रतीतिव्यवहारावन्यथानुपपन्नाविति तत्कल्पनमिति वाच्यम्, अङ्गीकृतानुभूतिसत्तयैव ज्ञातत्वप्रतीतिव्यवहारोपपत्तेः क्षीणत्वादर्थापत्तेः। एतेनानुमेयत्वमपि निरस्तम्, लिङ्गाभावात् । न च वस्तुमात्रस्य लिङ्गत्वम्, तस्य तज्ज्ञानाविनाभावनियमाभावात् । न च तज्ज्ञानस्यैव लिङ्गत्वम्; तथात्वे च तस्यावभासः स्यात् । तदवभासे चानुमानवैयर्थ्यम् । अनवभासे च न लिङ्गता । न च तज्ज्ञानस्य ज्ञानान्तरेणावभासः, ज्ञानान्तरादर्शनात् । ज्ञानान्तरेण गम्यत्वे च तस्यापि ज्ञानत्वाविशेषात् ज्ञानान्तरगम्यतेत्यनवस्था । वस्तुगतप्राकट्यं न ज्ञायत इत्युक्तम् । अतो न ततो ज्ञानानुमानम् । किंच ज्ञाततग्रहणमस्ति वा ? न वा ? आद्ये ज्ञातताख्यधर्मोत्पत्तिरस्ति वा ? न वा ? अस्ति चेदनवस्था । नेति चेत् तद्वस्तुनोऽपि न स्यात् । ज्ञाततायाः सत्त्वेऽप्यग्रहोऽनुपपन्न एव । ननु संयुक्तविभक्तप्रत्ययात् संयोगविभागाख्यवस्तुसिद्धिवत् 'ज्ञातोऽयम्' इति प्रत्ययात् ज्ञातताख्यधर्मसिद्धिः । तदनुत्पत्तौ च पूर्ववदेवाविशेषाद्धानादिव्यवहारासिद्धिर्विषयप्रकाशव्यवहारश्च न स्यात् । ज्ञानस्यात्माश्रयत्वेन विषयगततया प्रकाशव्यवहारानुपपत्तेरिति चेत्—न; संयोगादिवत्प्रत्यक्षेण तदनुपलब्धेः । वस्तुतः संयोगादिगुण एव नास्तीत्युक्तम् । किंच विषयग्राहकेणैव ज्ञानेन तद्धर्मस्य न ग्रहः, ग्रहणक्षणे तद्धर्माभावात् । न हि कार्यकारणयोर्यौगपद्यम्, ननु यद्यनुभूत्या विषयगतत्वेन प्रकाशानुत्पत्तिः, तर्हि न तस्यास्तत्संबन्ध इति न तद्व्यवहारः । अथ विषयत्वमेवसम्बन्धः, तर्हि तद्विषयत्वं तद्वस्तुनोऽतिरिक्तमनतिरिक्तं वा स्यात् । आद्ये तद्धर्माङ्गीकारः । द्वितीये तु न संबन्धसिद्धिरिति चेत्—न; प्राकट्यधर्मोत्पत्तिवादिनोऽपि समत्वात् । किमनुभूतेर्विशेषमापन्ने विषये प्रकाशोत्पादकत्वम्, उतानापन्ने एव । आद्ये तु स विशेषः किं विषयधर्मः ? किं वानुभूतिरेव ? विषयधर्मत्वे, तद्धर्मस्यापि विषयधर्मगतत्वेनोत्पाद्यमानत्वात् प्रकाशोत्पत्ताविव धर्मान्तरयुक्तत्वापेक्षायामनवस्थापातः । द्वितीयस्त्वस्मत्पक्ष एव, अनुभूतेरेव तद्विशेषत्वाभ्युपगमात् । धर्मविशेषमनापन्ने प्रकाशकत्वे सर्वप्रकाशोत्पत्तिः स्यात्, अविशेषात् । अथानुभूयमाने विषये

तया तज्जायत इति चेत्—न ; विकल्पासहत्वात् । किं तद्विषयत्वं विषयमात्रं वा ? अथ तद्गतो विशेषः तज्ज्ञानं वा ? आद्ये अविशेषात् सर्वस्यापि विषयता । द्वितीये त्वनवस्था, तस्य विषयगतत्वेनोत्पाद्यत्वाविशेषात् । तृतीये त्वस्मत्पक्षपातः । विषयस्य प्रकाशव्यवहारस्तु अनुभूतिप्रकाशादप्युपपन्न इत्युक्तम् । न च स्वयंप्रकाशत्वे कर्मकर्तृविरोधः, उद्यमननिपतनयोश्छिदिधातुवाच्ययोः कर्मभूतस्यैव करणत्वदर्शनात्, व्यवहाराच्च । अनुभूतिरपि हानादिव्यवहारहेतुः । किंच भाट्टैरात्मनोऽहंप्रत्ययग्राह्यत्वमुक्तम् । ततस्तेषामेव हि कर्मकर्तृविरोधः । अथ प्रत्यक्षप्रमाणसिद्धत्वान्न तद्विरोध इति चेत्, तर्हि स्वयंप्रकाशत्वस्यापि प्रमाणसिद्धत्वेनाविरोधः । तत्प्रमाणं चोत्तरत्र वक्ष्यते । किंच 'जानन्तं जानामि' इति प्रत्ययादुभयरूपतोच्यते । तदात्मनः प्रत्यक्षता ज्ञानस्य प्रत्यक्षता वा स्यात् । ज्ञानस्यानुमेयत्वाभिमानादात्मनोऽपि ज्ञानविशेषितस्याप्रत्यक्षतापातात् ; ज्ञानविशेषितस्य प्रत्यक्षत्वे ज्ञानस्यापि प्रत्यक्षता स्यात्, विशेषणाप्रत्यक्षत्वे विशिष्टस्य प्रत्यक्षत्वानुपपत्तेः । संविदः स्वयंप्रकाशतयैवोपपत्तौ पराधीनत्वकल्पना चानुपपन्ना ।

**तत्त्वटीका**

ननु ब्रह्म नित्यं श्रुतम् ; धीस्त्वनित्या ; सा कथं तत्स्यात् ? योगाचारोक्ताच्च त्वदुक्तस्य को भेद इत्यत्राह—**सेयमिति** ; शास्त्रप्रत्यक्षाभ्यां सच्चिद्रूपतयैव सिद्धेत्यर्थः । अत्र **स्वयंप्रकाश** इति नित्यत्वनिदानोक्तिः । सर्वदा सत्त्वमुभयान्तशून्यत्वंवा नित्यत्वम् ; तच्च "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यादिश्रुतिसिद्धम् ; ज्ञानत्वं च ब्रह्मणः श्रुतम् ; अतस्तदविरोध इति भावः । श्रुत्यापि प्रत्यक्षविरुद्धं दुर्वचमित्यत्र विरोधाभावाभिप्रायेण हेतुमाह—**प्रागिति** ; संवित्प्रागभावप्रध्वंसयो र्भ्रान्तिसिद्धतया स्वरूपतस्तदभावस्य स्थाप्यमानत्वादित्याशयः । अत एव न साध्याविशेषशङ्का । धीनित्यत्वश्रुतिरन्यपरा ; न चान्यदिह मानमित्यत्राह—**तदिति** । **एवकार** इह प्रागेव सूचितत्वं नैरपेक्ष्यं वा व्यनक्ति । ननु स्वयंप्रकाशत्वमिह न लिङ्गम् ; सपक्षे सत्यपि तत्र क्वचिदप्यवृत्तेः । सन्ति हि प्रागभावरहितत्वे साध्ये प्रागभावाः सपक्षाः, प्रध्वंसरहितत्वे च प्रध्वंसाः, तदुभयराहित्ये च खपुष्पादिः । आहुश्च—

"यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते ।
तस्मिन् यथा खपुष्पादाविति शक्यं हि भाषितुम् ॥"

इति । तत्राह—**न हीति** ; स्वप्रकाशत्वस्य लिङ्गत्वाभावेऽपि विकल्पानुपपत्तिद्वारा

विवक्षितनिदानत्वं स्यादिति भावः । अत्र **प्रागभावोक्तिः** प्रध्वंसस्याप्युपलक्षिका । स्वतःपक्षेऽपि धीः सत्यसती वा स्वाभावग्राहिणीति विकल्पं मत्वा आद्यं निरस्यति—**अनुभूतिरिति** । ननु स्वयं सती भावमभावं वा विषयान्तरमिव स्वाभावमपि किं न गृह्णीयादित्यत्र विषयस्याभावात्तस्य दुर्ग्रहत्वमाह—**तस्या इति** । यद्यपि अन्योन्याभावादेः स्वप्रतियोगिसमकालत्वमस्ति ; तथापि प्रागभावप्रध्वंसयोर्न तत्स्यादित्यभिप्रायेण **विरोधादेवे**त्युक्तम् । द्वितीयं विषयिणोः ग्रहणस्यैवाभावादाक्षिपति—**एवमिति** ; अन्यतराभावसाम्यप्रकारेणेत्यर्थः । विरोधं विवृणोति—**अनुभूतिरिति** । **स्वयमसती** वन्ध्यासुतधीवत्स्यादिति भावः । अन्यतःपक्षोऽपि विकल्पासह इत्याह—**नापीति** । **अन्य**त्प्रमाणमनुभूतिं विषयीकृत्य न वेति विकल्प्य पूर्वत्र प्राक् साधितेन विरोधमाह—**अनुभूतेरिति** । द्वितीये प्रतियोग्यग्रहे कथमभावग्रह इत्यभिप्रायेणाह—**अस्या इति** । न हि धीग्राह्यस्य घटादेरभाव इह साध्य इत्याशयः । विषयीकारपक्षपरिशेषेण तद्विरोधं निगमयति—**स्वत इति** । परात्त्ववेद्यत्वयोरभावात् ‘इयम्’ इति विषयीकारानर्हत्वम् । एवमभावस्याग्रहेऽपि भावस्योत्पत्त्यादेः स्वतोऽन्यतो वा ग्रहः स्यादित्यत्राह—**अत इति**; उक्तविकल्पानुपपत्तेस्तस्याश्चात्रापि संभवादित्याशयः । न हि **स्वतः** स्वविकारग्रहः, तस्याः स्वरूपमात्रग्राहित्वात् । न चान्यतः, अवेद्यत्वात् । तद्धर्मतया ग्रहणे हि तद्विषयत्वं दुस्त्यजमेव, प्रागभावाभावात् । कारणं हि सर्वकार्याणां तत्तत्प्रागभावः । न च तद्रहितं खरशृङ्गमुत्पद्यत इति भावः । **उत्पत्तिप्रतिबद्धाः** ; तद्व्याप्ता इत्यर्थः । **भावविकाराः**—भावरूपा विकाराः, बाह्यानां भावानां संभवन्तो वा । धीर्निर्विकारा, अनुत्पन्नत्वादिति व्यतिरेकी ।

### मूलभावप्रकाशिका

**उत्पत्तिप्रतिबद्धा इति** ; उत्पत्तिव्याप्ताः परिणामापक्षयादिविकारा न संभवन्तीत्यर्थः ।

### श्रीभाष्यम्

अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते , व्यापकविरुद्धोपलब्धेः । न ह्यनुत्पन्नं नानाभूतं दृष्टम् । भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न संभवति । अतोऽनुभूतेरनुभवस्व-

**स्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्मः। यतो निर्धूतनिखिलभेदा संवित्, अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवात्मा, अजडत्वाच्च। अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानमनात्मत्वमपि हि संविदो व्यावर्तयति।**

## श्रुतप्रकाशिका

बौद्धाभ्युपगतक्षणिकत्वव्यावृत्त्यर्थं नित्यत्वायानुत्पत्तिः, तद्व्याप्तविकारान्तराभावश्च साधितौ; अथ तदभ्युपगतानेकत्वव्यावृत्त्यर्थं सजातीयभेदं व्युदस्यति—**अनुत्पन्नेयमिति**। **व्यापकविरुद्धोपलब्धेः**; नानात्वव्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेरित्यर्थः। व्याप्तिं दर्शयति—**न हीति**। अस्य ग्रन्थस्य यदनुत्पन्नं तदनानाभूतं दृष्टमित्यर्थो वक्तुं न युज्यते; ब्रह्मव्यतिरेकेणानुत्पन्नस्यानानाभूतस्य कस्यचिन्मायावेदान्तिभिरनभ्युपगमात्। यन्न नानाभूतं तदनुत्पन्नमित्युक्ते व्यापकजन्मनिवृत्त्या व्याप्यनानात्वनिवृत्तिरुक्ता न स्यात्। तस्मादयमर्थः—यन्नानाभूतं तदनुत्पन्नं न दृष्टम्; अपितूत्पत्तिमदेव दृष्टमिति जन्मनो नानात्वव्यापकत्वं दर्शितम्। अनेनोत्पत्तिनिवृत्त्या नानात्वनिवृत्तिरित्यर्थसिद्धम्। यद्वा यथा 'न ह्यनग्नि धूमवद् दृष्टम्' इत्युक्ते 'अग्निमदेव धूमवत्' इत्युक्तं स्यात् तद्वदिहाप्यनुत्पन्नं नानाभूतं न दृष्टमित्युक्ते उत्पत्तिमदेव नानाभूतमित्युक्तं स्यात्; ततश्चोत्पत्तिर्व्यापिकेत्युक्तं भवति। अनुभूतिर्नाना न भवति, अनुत्पन्नत्वात्; यन्नानाभूतं तदुत्पत्तिमद् दृष्टं यथा घट इति व्यतिरेक्यनुमानमनुभूतिं पक्षीकृत्योक्तम्। गगनादिषु व्यभिचारो दुर्वचः, तेषामुत्पत्तिमत्त्वेन वेदान्तिभिरभ्युपगमादिति भावः। एवं सजातीयभेदो निषिद्धः; अस्मिन्नर्थे विकारान्तराभावे च भेदं विकारान्तरं च पक्षीकृत्यान्वय्यनुमानमाह—**भेदादीनामिति**; आदिशब्देनोत्पत्त्यादयो विवक्षिताः। भेदादयो नानुभूतिधर्माः, अनुभाव्यत्वात् रूपादिवदिति व्यावृत्तिरूपधर्मोऽपि नास्तीत्युपपादयति—**अतोऽनुभूतेरिति**। **अन्योऽपि**; व्यावृत्तिरूपोऽपीति भावः। यद्वा विकारनानात्वजडत्वनिषेधान्नित्यत्वैकत्वस्वयंप्रकाशत्वरूपधर्मवत्त्वशङ्काव्युदासार्थं पूर्वोक्तनानात्वादिव्युदासार्थं च व्यतिरेक्यनुमानमाह—**अतोऽनुभूतेरिति**। **अन्योऽपि**; नित्यत्वादिरूपोऽपीत्यर्थः। अनुभूतिः

**न** व्यावृत्तिरूपधर्मभाक्, अनुभवस्वरूपत्वात्; यद्व्यावृत्तिरूपधर्मभाक् तदननुभूतिर्दृष्टम्, यथा घटादिरिति व्यतिरेकि। यदि व्यावृत्तिरूपधर्मं पक्षीकृत्यानुभूतिधर्मत्वाभावः साध्यः स्यात्, तदा अनुभाव्यत्वं हेतुः, यथा रूपादीति सपक्षः। इदमन्वयि। एवं स्वगतभेदो निरस्तः। पूर्वमेव ज्ञेयभेदो निरस्तः। "अत्रायं पुरुषः स्वयंज्योतिर्भवति" इत्यादिषु वेदान्तवाक्येष्वात्मनो नित्यत्वस्वयंप्रकाशत्वादयः प्रतिपन्नाः; अत्र तु संविदो नित्यत्वादिरुच्यते; तत्कथं सङ्गच्छत इत्यत्राह—**यत इति**। **निर्धूतनिखिलभेदा**; सकलभेदनिषेधेन विजातीयभेदोऽपि निरस्त इति विजातीयभेदस्य ज्ञातुर्मिथ्यात्वेन न स आत्मा, अपितु परमार्थभूता संविदेवात्मेत्यर्थः। यद्वा वेदान्तैरात्मनः प्रतिपादितं सजातीयविजातीयस्वगतनानात्वराहित्यं संविद एवोपपद्यत इति सैवात्मेत्यर्थः। **स्वरूपेति**; स्वरूपातिरिक्त आश्रयो हि ज्ञाता; स नास्ति; संवित्स्वरूपातिरिक्तत्वादेवापरमार्थ इति स नात्मेति परमार्थभूता संविदेवात्मेत्यर्थः। **स्वप्रकाशरूपा सैवात्मेति**; वेदान्तैरात्मनः प्रतिपादितं स्वयंप्रकाशत्वं संविद उपपन्नमिति सैवात्मेत्यर्थः। यद्वा तुच्छत्वशङ्कानिरासार्थमुक्तम्—**स्वप्रकाशरूपेति**। स्वयंप्रकाशत्वं स्वतन्त्रसाधकं चेत्याह—**अजडत्वाच्चेति**। इदं व्यतिरेकि। संवित् आत्मा, अजडत्वात्; यन्नात्मा तज्जडं, यथा घटादीति। एतद्विवृणोति—**अनात्मत्वेति**; **अनात्मत्वव्याप्तम्**; व्याप्तमिति कर्तरि क्तः; व्यापकमित्यर्थः। प्राप्त इतिवत्।

### भावप्रकाशिका

**व्यापकजन्मनिवृत्त्येति**; नानात्वनिवृत्त्यैव जन्मनिवृत्तेरुक्तत्वादिति भावः। अत्र व्याप्तिग्रहस्थलाभावश्चाधिकदूषणं द्रष्टव्यम्। यथावस्थितान्वयेऽपि पर्यवसानबलाद्व्यापकत्वसिद्धिं दर्शयति—**यद्वा यथेति**। **अनुभूतिर्न व्यावृत्तिरूपधर्मभागिति**; इदमनुमानद्वयं नित्यत्वादिधर्मराहित्यरूपद्वितीयपक्षानुमानयोरप्युपलक्षणं द्रष्टव्यम्। 'यतो निर्धूतनिखिल' इत्यस्य ज्ञातृसद्भावसमर्थनमुखेन संविदात्मत्वहेतुत्वं स्वरसतः प्रतीयत इत्यभिप्रेत्य व्याचष्टे—**सकलभेदनिषेधेनेति**। निर्धूतनिखिलभेदत्वस्यात्मत्वेऽद्वारकहेतुसंभवमभिप्रेत्य व्याचष्टे—**यद्वा वेदान्तैरात्मन इति**। 'आश्रयो ज्ञाता' इत्यनयोः पौनरुक्त्यमाशङ्क्य ज्ञातृशब्दविवरणरूपत्वान्न पौनरुक्त्यमित्यभिप्रेत्याह—**स्वरूपातिरिक्त आश्रयो हीति**। तर्हि ज्ञात्रभावस्य को हेतुरित्याशङ्कायां स्वरूपातिरिक्तपदेन ज्ञात्रभावे हेतुरुक्त इति दर्शयति—**संवित्स्वरूपातिरिक्तत्वादेवेति**। 'स्वप्रकाशरूपा सैवात्मा' इति भाष्यप्रथमव्याख्या-

**याप्तजडत्वाच्चेति** भाष्यस्य पौनरुक्त्यं परिहरति—**स्वयंप्रकाशत्वं स्वतन्त्रसाधकं चेत्याहेति** । पूर्वं संविदात्मनोः स्वयंप्रकाशत्वस्य प्रमाणसिद्धत्वात्, स्वयंप्रकाशस्य प्रागभावाद्यभावेनानुत्पन्नत्वात्, अनुत्पन्नस्य च नानात्वायोगात्, संविदात्मनोर्न भेद इति नानात्वाभावसाधनद्वारा संविदात्मसाधकत्वं स्वयंप्रकाशत्वस्योक्तम्; इदानीं व्याप्तिबलेन संविदात्मत्वसाधकत्वमुच्यत इति भावः । **कर्तरि क्त इति**; आप्नोतेर्गत्यर्थकत्वादकर्मकत्वविवक्षया वा "गत्यर्थाकर्मक" इति कर्तरि क्त इति भावः ।

## श्रुतप्रदीपिका

अजत्वात्सजातीयभेदं व्युदस्यति—**अनुत्पन्नेति** । **व्यापकविरुद्धोपलब्धेः**; नानात्वव्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेरित्यर्थः । तद्विवृणोति—**न हीति** । नानाभूतं न ह्यनुत्पन्नं दृष्टम्, अपितूत्पत्तिमदेव दृष्टमित्यर्थः । धीः अनाना अजत्वात्; यन्नाना तज्जन्मवत्, यथा घट इति प्रयोगः । अस्मिन्नर्थे पूर्वोक्ते चान्वय्यनुमानमाह—**भेदेति**; आदिशब्दाज्जन्मादयः । भेदो विकारश्च न धीधर्मः, वेद्यत्वात् रूपवदिति । व्यावृत्तिरूप एकत्वानित्यत्वादिधर्मश्च नेत्याह—**अत इति** । **अन्योऽपि**; एकत्वादिरपि व्यावृत्तिरूपोऽपि । अनुभूतिं पक्षीकृत्यानुभवरूपत्वादिति व्यतिरेकिहेतुः, व्यावृत्तिरूपधर्मं पक्षीकृत्यानुभाव्यत्वमन्वयिहेतुरिति भावः । निर्विशेषत्वादिकमात्मनः श्रूयते; त्वया तु तत्सर्वं कथं संविद उच्यत इत्यत्राह—**यत इति** । विजातीयभेदरूप आश्रयो हि ज्ञाता; स तु संविदतिरिक्तत्वात् घटवदपरमार्थ इति सैवात्मेत्यर्थः । तुच्छत्वव्युदासाय **स्वप्रकाश**शब्दः । आत्मनि श्रुतं निर्विशेषत्वं स्वसिद्धित्वं च संविदि दृष्टमिति सात्मेति च भावः । स्वसिद्धित्वं पृथगेव हेतुरित्याह—**अजडेति** । तदुपपादयति—**अनात्मत्वेति** । **व्याप्त**मिति कर्तरि क्तः । धीरात्मा अजडत्वात्; यदनात्मा तज्जडम्, यथा घट इति ।

## नयप्रकाशिका

किंचानुमानादिविषयेष्वतीतानागतपदार्थेष्वपि ज्ञाततोपपद्यते वा, न वा? द्वितीये ज्ञानत्वादिप्रतीतिव्यवहारसद्भावेऽपि तद्धर्माभाववत् प्रत्यक्षवस्तुष्वपि तदभावः स्यात्; प्रथमे त्वतीतत्वेन वानागतत्वेन वा धर्म्यभावात् धर्मोत्पत्तिरनुपपन्ना । एवं दूषणान्तराण्यप्यूहनीयानि । अतो नानुभूतेरनुमेयत्वम् । न च प्रत्यक्षवेद्यता, अनुभूतेः रूपादिरहितत्वात् ।

न चात्मगुणत्वेन मानसप्रत्यक्षत्वम्, आत्मगुणत्वासिद्धेः । न च कर्मणो व्यतिरिक्तत्वे जातिमात्राश्रयत्वादनुभूतिर्गुण इति वाच्यम्, जात्याश्रयत्वासिद्धेः । तच्च तस्या एकत्वात् । न हि व्यक्त्यैक्ये जातिः । तदैक्यं चोत्तरत्र वक्ष्यते । मानसप्रत्यक्षत्वे तत्सिद्धिरेव न स्यात् । ज्ञानविषयप्रत्यक्षज्ञानस्यापि ज्ञानत्वाविशेषात् प्रत्यक्षान्तरविषयत्वापत्तावनवस्थापातात्, युगपज्ज्ञानानन्त्यप्रसङ्गाच्च । न हि तदिष्टं मानसप्रत्यक्षवादिनाम्; "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति हि तदुक्तम् । अथ स्वयं प्रत्यक्षमपि ज्ञानं चक्षुरादिवत्स्वविषयरागादीन् साधयतीति चेत्, तर्हि चक्षुरादिवत्प्रकाशत्वे सति करणत्वप्रसङ्गः । प्रकाशान्तरोत्पादनेन प्रकाशान्तरं चक्षुरादितुल्यं चेत्, प्रकाशान्तरकरणमेतदपि तथैवेत्यनवस्था । अतो न मानसप्रत्यक्षतानुपपत्त्याद्यभावात् नार्थापत्त्यादिविषयत्वम् । तस्याः स्वतःसिद्ध्यनभ्युपगमे चासिद्धिरेव । अतः स्वयमेव सा सिध्यति । एवमुपपत्तिभिः पारिशेष्यात्तस्याः स्वयंप्रकाशतोक्ता । प्रत्यक्षादिभिरपि तत्सिद्धिः । संविदः स्वरूपानुभवस्यापरोक्षत्वात्प्रत्यक्षताङ्गीकरणीया । तत्स्वरूपं च ज्ञानाज्ञानसाधकं ज्ञानोपाधिकमेव । एवंविधस्वरूपानुभवप्रत्यक्षेण तस्याः स्वयंप्रकाशता सिद्धा । तत्स्वरूपानुभवश्च सुप्तोत्थितस्य 'एतावन्तं कालं न किंचिदहमवेदिषम्' इति स्वापकालाज्ञानपरामर्शदर्शनात् सिद्धः । न ह्यनुभवमन्तरेण परामर्शः । न च सुषुप्तिकाल ऐन्द्रियकप्रत्यक्षसंभवः, येन स्वयंप्रकाशताहानिः स्यात् । असंभवश्च तदेन्द्रियव्यापारोपरतेः । न चाभावानुभवसंभवः, तदा सकलकरणोपरमात् धर्म्यादिज्ञानाभावात् । ननु रथ्यादौ प्रातःकालीनगजाद्यभाव एव, मध्याह्ने 'रथ्यायां प्रातर्गजो नास्ति' इति यथानुभूयते तथा सुषुप्तिकालीन एव ज्ञानाभावः प्रतियोगिस्मरणादिपूर्वकमुत्थितेनानुभूयत इति चेत्—न; तत्र रथ्यादिधर्मविशेषानुभवात् प्रतियोगिस्मरणवैकल्यात् उत्तरकालं प्रतियोगिस्मरणेनानुभूतिधर्मपरामर्शेन गजाद्यभावज्ञानसंभवः; इह तु सुषुप्तिकाले धर्मज्ञानासंभवात् नोत्तरकालेऽपि सौषुप्तिकज्ञानाभावानुभवसिद्धिः । ननु सुषुप्तावप्यात्ममात्रविज्ञानमस्तीत्यत्रापि धर्मिज्ञानसिद्धिरिति चेत्—तर्ह्यात्मनः स्वयंप्रकाशत्वमेवोक्तं स्यात्, प्रकाशाव्यभिचारितयैवात्मस्वरूपाङ्गीकरणात् । आत्मनि प्रकाशव्यभिचारमन्तरेणान्यनिमित्तप्रकाशतात्मनोऽभ्युपगन्तुं न युक्ता । घटादिविषयसंविदाश्रयत्वेनैवात्मनः सिद्धिर्येषामिष्टा तेषां मते सुषुप्तौ विषयानुभवाभावादात्मनः प्रतिभासस्य सुदूरत्वात् न ज्ञानाभावानुभवः । अतो धर्मिज्ञानाभावान्न ज्ञानाभावानुभवसिद्धिः सुषुप्तौ । अथ 'सुषुप्ति-

प्रतीतिकाले न किंचिन्मयानुभूतमस्मर्यमाणत्वात् ; यन्न स्मर्यते तन्नानुभूतम् , यथा सुप्तिः ' इत्यनुमानात् ज्ञानाभावानुभवसिद्धिरिति चेत्—न ; अनुभूतवस्तुनि स्मरणनियमाभावात् । अथ नियमेनेत्यस्मर्यमाणत्वं विशेष्यत इति चेत्—न ; निर्विकल्पकविज्ञानानुभूतवस्तुषु व्यभिचारात् । अनुपपत्त्याद्यभावादर्थापत्त्यादिभिर्न ज्ञानाभावानुभवः । अतो ' न किंचिदवेदिषम् ' इति सुप्तोत्थितपरामर्शः स्वरूपानुभवमेव कल्पयति । विमतिविषय आत्मा स्वयंप्रकाशः, प्रकाशाव्यभिचारित्वात्प्रदीपादिवदित्यनुमानादपि तस्याः स्वयंप्रकाशतासिद्धिः । अनुभूतेरेवात्मत्वमित्युत्तरत्र वक्ष्यते । आत्मनः स्वयंप्रकाशत्वेऽपि प्रकाशाव्यभिचारित्वस्योक्तत्वाद्धेतोर्नासिद्धता । ननु प्रदीपादेः संवेद्यत्वदर्शनान्न स्वयंप्रकाशत्वमिति साध्यविकलो दृष्टान्त इति चेत्—न ; प्रदीपादिप्रकाशस्यानन्याधीनप्रकाशत्वेन स्वयंप्रकाशत्वात् । प्रकाशो नाम तमोविरोधित्वम् । तमश्च द्विविधम्—बाह्यं शार्वरादिकम् ; आन्तरमज्ञानलक्षणं चेति । प्रकाशोऽपि द्विविधः—एको बाह्यतमोविरोधी प्रदीपादिलक्षणः ; अज्ञानविरोधी चैतन्यलक्षणोऽन्यः । अतः प्रदीपादेः प्रकाशाव्यभिचारित्वान्न साध्यवैकल्यम् । नन्वात्मा संवेद्यः, प्रकाशाव्यभिचारित्वात् प्रदीपादिवदित्यनुमानात् संवेद्यतासिद्धेः प्रकरणसमत्वं हेतोरिति चेत्—न ; प्रदीपादेः संवेद्यत्वस्यानात्मत्वकृतत्वात् तत्र प्रकाशाव्यभिचारित्वस्याप्रयोजकत्वात् । ननु दीपादेः स्वयंप्रकाशत्वं तेजोद्रव्यत्वप्रयुक्तम्, न तु प्रकाशाव्यभिचारित्वप्रयुक्तमिति चेत्—न ; पार्थिवपद्मरागादिमणेः स्वत एव तमोविरोधित्वदर्शनात् । नन्वात्मनो धीकर्मतयैव सिद्धिः, वस्तुत्वात् घटवदिति सप्रतिसाधनमिति चेत्—न ; वस्तुत्वादिति सामान्यव्याप्तेः सावकाशत्वात् प्रकाशाव्यभिचारित्वादित्यस्य विशेषविषयत्वेन निरवकाशतया बलीयस्त्वात्, घटादेर्धीकर्मत्वस्याचित्वेनानात्मत्वप्रयुक्तत्वेन वस्तुत्वस्याप्रयोजकत्वाच्च । ननु जाग्रदाद्यवस्थात्रयेऽप्यज्ञानस्यात्मसाक्षित्वेनेष्टत्वात् प्रकाशाव्यभिचारित्वात् अज्ञानस्यापि स्वयंप्रकाशतापातादनैकान्त्यमिति चेत्—न ; अज्ञानस्य स्वयंप्रकाशाव्यभिचारित्वेऽपि प्रकाशस्याज्ञानव्यभिचारित्वात् । ' अनुभूतिरनन्याधीनस्वधर्मव्यवहारा ' इत्याद्यनुमानाच्चास्याः स्वयंप्रकाशता । अर्थापत्त्या च तत्सिद्धिः । अतः स्वयंप्रकाशत्वाभावे कानुपपत्तिरिति चेत्, आत्मप्रतिभास एवानुपपन्न इति ब्रूमः । ननु संविदाश्रयत्वेन वा संविदन्तरकर्मत्वेन वा आत्मप्रतिभासोपपत्तेः क्षीणार्थापत्तिरिति चेत्—न ; अनित्यस्वयंप्रकाशसंविदाश्रयतया आत्मनः प्रतिभा-

सानुपपत्तेः । तदनुपपत्तिश्च तत्प्रागभावप्रध्वंसाभावयोः प्रमाणाभावात् । न हि तस्या एव विद्यमानायाः स्वप्रागभावादौ प्रामाण्यसंभवः, विरोधात् । तस्या असत्त्वे चासाधकत्वादेव न प्रामाण्यम् । अथ स्वक्षणे वर्तमानमेवातीतकालादिव्यापिस्वप्रागभावादि साधयतीति चेत्—न; स्वविषयसाधकत्वेनोपक्षीणत्वात् । न हि संविदः स्वाश्रयविषयातिरिक्तावभासकत्वमिष्टम् । न च संविदाश्रयस्यैव प्रागभावत्वम्, अभावानभ्युपगमादिति वाच्यम्, दृश्ये प्रतियोगिकेवलधर्मिस्वरूपस्य भवतामभावत्वाभ्युपगमात् । ननु संविदाश्रयरूपस्य केवलत्वाभावात् स्वप्रागभावादिः स्वविषय एवेति चेत्—तर्हि सर्वसंविदां स्वप्रागभावादिसाधकत्वेनोपक्षयात् घटादिविषयानवभासकत्वप्रसङ्गः । अतः स्वस्या न स्वप्रागभावादिसिद्धिः । अथ संवित्प्रागभावादि संविदन्तरेण सिध्यतीति चेत्—न; स्वतःसिद्धायाः संविदः संविदन्तरेण विषयीकारानुपपत्तेः । न हि संविदविषयीकारेण तदभावग्रहणम्, तस्या विषयत्वे घटादिवदननुभूतित्वप्रसङ्गः । किंच प्रागभावाद्यसिद्धौ संविद्द्वयासंभवः । संविद्भेदसिद्धौ तत्प्रागभावादिसिद्धिः, एतत्सिद्धौ तत्सिद्धिरिति इतरेतराश्रयप्रसङ्गात्तद्भेदोऽसिद्धः; अतः प्रागभावाद्यभावात् नित्यैव सा । ननु प्रागभावाद्यभावे कथं नित्यत्वमिति चेत्; उच्यते—प्रागभावप्रध्वंसाभावावुत्पत्तिविनाशाभ्यां व्याप्तत्वेन दृष्टौ; प्रागभावादिव्यावृत्तौ संविदुत्पत्त्यादिव्यावृत्तिः सिध्यति । तयोरुत्पत्तिव्याप्तिपरिमाणादिविकाराणामपि संविद उत्पत्तिव्यावृत्तौ व्यावृत्तिः । संविदि नानात्वमपि नास्ति । तत्कथमिति चेत्, अनुत्पन्नत्वादिति ब्रूमः । न ह्यनुत्पन्नस्य नानात्वदर्शनम्; उत्पत्तिमतामेव हि नानात्वम्; भेदो विकारश्च नानुभूतिधर्मः, अनुभाव्यत्वात् रूपादिवदित्यनुमानाच्च तदैक्यम् । अनुभूतेर्नानुभाव्यो धर्मः, अनुभूतित्वात्; यस्यानुभाव्यधर्मत्वं तस्य नानुभूतित्वं यथा घट इत्यनुमानाच्चास्याननुभाव्यो धर्मः । अतोऽस्या निरस्तसमस्तभेदत्वान्नाश्रयसद्भाव इति सैवात्मा । अजडत्वाच्च । अनात्मत्वं हि जडत्वेन व्याप्तम् । तत्स्वव्यापकजडत्वविरोध्यजडत्वदर्शनान्निवृत्तमिति तस्या एवात्मत्वम् ।

## तत्त्वटीका

एतेनैव सजातीयमपि निरस्यति—**अनुत्पन्नमिति** । इयमित्यनेन प्राग्वत्स्वतोऽन्यतश्च नानात्वेनापि दुर्ग्रहेति सूच्यते । **आत्मनि**; अनुभूतिशब्दोपात्ते स्वात्मनीत्यर्थः । तत्र धीप्रतियोगिकभेदो नास्ति; स तु जडेष्वेवेति भावः । अनुत्पन्नशब्देन विवक्षितस्य

हेतोर्व्याप्तिपक्षधर्मत्वे व्यनक्ति—**व्यापकेति** ; नानात्वव्यापकमुत्पन्नत्वम् ; तद्विरुद्धस्यानुत्पन्नत्वस्य पक्षे प्रमितत्वादित्यर्थः । यन्नाना तदुत्पन्नमिति व्यभिचारानुपलम्भेन द्रढयति—**न हीति** । नानाभूतं न ह्यनुत्पन्नं दृष्टमित्यन्वयः । धीः सजातीयरहिता, अजत्वात् ; यन्नैवं तन्नैवं यथा घट इति प्रयोगः । परमाण्वादिसंज्ञास्तु केचिदर्थाः सजातीयवन्तोऽप्यनुत्पन्ना इति परेष्टं मानशून्यमिति भावः । उक्तव्यतिरेकिसाध्ययोरन्वयिनमप्याह—**भेदादीनामिति** । आदिशब्देन विकारा गृह्यन्ते । भेदा विकाराश्च नानुभूतिधर्माः, अनुभाव्यत्वात् रूपादिवदिति । ननु अनुभूतेरसाधारणानि धीत्वस्वप्रकाशत्वनित्यत्वाजत्वनिर्विकारत्वनिर्भेदत्वानि त्वयैवाद्योक्तानि ; अनृतादिव्यावृत्तयश्च प्रागुक्ताः ; तत्पक्षीकारबहिष्कारयोर्वान्वयव्यभिचारौ स्यातामित्यत्राह—**अत इति** ; भावाभावरूपाणां सर्वेषां धर्माणामादिशब्देन संग्रहेण पक्षीकृतत्वादित्यर्थः । एवकारः साधकत्वदार्ढ्यपरः । **अन्योऽपि** ; क्वचिच्छ्रुतिसिद्धोऽस्मदुक्तोऽपीति यावत् । कल्पितैस्तु धर्मैरत्र हेतुसाध्यव्यवहारः ।

ज्ञानभेदनिषेधे तु ज्ञानानामैक्यमत्र नः ।
जडाद्भेदनिषेधे तु तन्मिथ्यात्वान्न तद्भवेत् ॥ ३५८ ॥

जडादिव्यावृत्तयश्च स्वरूपानतिरिक्ता इत्युक्तम् । धीर्निर्धर्मा, अनुभवस्वरूपत्वादिति व्यतिरेकी ; विगीता नानुभूतिधर्माः, अनुभाव्यत्वादिति पूर्वोक्तौ वीतावीताविह पदद्वयेन स्मारितौ । उक्तं च खण्डने—"प्रकाशात्मतामात्रस्यैव स्वतःसिद्धत्वेन जडात्मनां केषांचिद्धर्माणां तदन्तर्भावानुपपत्तिः" इति । अनुभूतेर्निर्विशेषत्वादिसाधनेऽपि जिज्ञासितस्यात्मनः किमायातम्? स हि बह्वीभिः श्रुतिभिर्ज्ञानादिधर्माश्रयत्वेन भातीत्यत्राह—**यत इति** । प्रागुक्तप्रकारेण निर्धूतनिखिलभेदत्वादाश्रयाख्यो विजातीयभेदोऽपि कल्पितः ; अतः स नात्मा, संविदन्यत्वाद् घटवदिति भावः । स्वप्रकाशत्वनिर्गुणत्वे चात्मस्वभावतया भाते संविदि स्थापिते । अनेन श्रुतिसिद्ध आत्मा धीरूपत्वेन प्रत्यभिज्ञाप्यत इत्याशयवतोक्तम्—**सैवात्मेति** । धीः आत्मा, निर्विशेषत्वाद्धीत्वाच्चेति व्यतिरेकिद्वयमिह विवक्षितम् । प्रकृतमजडत्वमपि तादृशं हेतुमाह—**अजडत्वाच्चेति** । व्यतिरेकव्याप्तिं पक्षधर्मतां च व्यञ्जयन् व्यापकनिवृत्त्या व्याप्यनिवृत्तिमाह—**अनात्मत्वव्याप्तमिति** ; अनात्मत्वे व्याप्ये व्याप्तं व्यापकमित्यर्थः ; कर्तरि क्तः । योऽनात्मा स जडः, यथा देहादिः ; धीस्तु न तथा ; तस्मादात्मा ।

### मूलभावप्रकाशिका

**न ह्युत्पन्नमिति**; ततश्चोत्पत्तेर्नानात्वव्यापकत्वान्नानात्वव्यापकोत्पत्त्यभावाद्व्याप्य-भूतनानात्वनिवृत्तिः सिध्यतीति भावः। **भेदादीनामिति**; भेदादिर्नानुभूतिधर्मः, अनुभाव्यत्वात् रूपवदित्यनुमानमिह विवक्षितम्। **अनुभूतेरिति**; अनुभूतिरनुभाव्य-धर्मरहिता, अनुभूतित्वात्; यन्नैवं तन्नैवं यथा घटादिरिति व्यतिरेक्यनुमानं द्रष्टव्यम्। अनुभूतेरधर्मकत्वेऽनुभूतिपक्षकमनुभाव्यपक्षकं चानुमानद्वयं प्रमाणमिति भावः। **ज्ञाता नामेति**; अपारमार्थिकस्यात्मत्वासंभवेन ज्ञातुश्चातिरिक्तस्यापारमार्थिकत्वादिति भावः। **अजडत्वाच्चेत्यत्र** चकारेण पूर्वोक्तो ज्ञात्रन्तराभावरूपो हेतुः समुच्चीयते।

### श्रीभाष्यम्

**ननु च 'अहं जानामि' इति ज्ञातृता प्रतीतिसिद्धा; नैवम्; सा भ्रान्तिसिद्धा रजततेव शुक्तिशकलस्य, अनुभूतेः स्वात्मनि कर्तृत्वायोगात्। अतो 'मनुष्योऽहम्' इत्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवज्ज्ञातृत्वमप्यध्यस्तम्। ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम्। तच्च विक्रियात्मकं जडं विकारिद्रव्याहंकारग्रन्थिस्थमविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव संभवति? दृश्याधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम्।**

### श्रुतप्रकाशिका

तर्केण ज्ञातृत्वे प्रतिक्षिप्ते आत्मनोऽहंप्रत्ययगोचरत्वस्य स्वानुभवप्रत्यक्षसिद्धत्वेन चोदयति---**ननु चेति**। चः चोद्यसमुच्चये। **प्रतीतिसिद्धा**; स्वानुभवरूपप्रतीतिसिद्धेत्यर्थः। अत्राह---**नैवमिति**। प्रतीतेर्भ्रान्तित्वमाह---**सा भ्रान्तिसिद्धेति**। अनुभवविषयत्वेन पूर्वं प्रतीता रजतता यथा शुक्तिज्ञानबाधितत्वात् भ्रान्तिसिद्धा भवति तथेत्यभिप्रायेणाह--**रजततेव शुक्तिशकलस्येति**। भ्रमाधिष्ठानोपपत्तये शकलशब्दः। अविकलवपुषः शुक्तेर्भ्रमास्पदत्वायोगात्। यद्वा ज्ञातृत्वे प्रतीयमाने तत्र ज्ञानांशस्य पारमार्थ्ये, कर्त्रंशस्यापारमार्थ्ये च दृष्टान्ततया **रजततेव शुक्तिशकलस्येत्युक्तम्**। तत्र हीद

मंशः परमार्थः, रजततैवापरमार्थ इति । भ्रान्तिसिद्धत्वमुपपादयति—**अनुभूतेरिति** । ततः किमित्यत्राह—**अतो मनुष्य इति** । कर्तृत्वायोगमुपपादयति—**ज्ञातृत्वं हीति** । यद्वा ज्ञातृत्वं नाम किं ब्रह्मस्वरूपभूतज्ञानाश्रयत्वम्? उतान्तःकरणक्रियारूपज्ञानाश्रयत्वम्? इति विकल्पमभिप्रेत्य प्रथमं शिरो दूषयति—**अनुभूतेरिति** । पूर्वोक्तयुक्तिभिरनुभूतेरेव पारमार्थ्ये सिद्धे तस्या ज्ञातृत्वं स्वात्मनि कर्तृत्वं स्यात्; तत्तु व्याहतमित्यर्थः । **कर्तृत्वम्**; आश्रयत्वम् । ज्ञातृत्वं भ्रान्तपुरुषप्रतीतिसिद्धत्वाचाध्यस्तमित्यभिप्रायेणाह—**अत इति** । पिण्डस्योत्पत्त्यादिभिरात्मव्यतिरिक्तत्वस्य संप्रतिपन्नत्वाद**त्यन्तबहिर्भूते**त्युक्तम् । अथ न केवलं स्वापेक्षया कर्तृत्वमनुपपन्नम्, अपितु स्वपरविभागनिर्विशेषं कर्तृत्वमात्रमेवानुपपन्नमित्यभिप्रायेण द्वितीयं शिरो दूषयति—**ज्ञातृत्वं हीति** । ततः किमित्यत्राह—**तच्चेति** । **विक्रियात्मकम्**; उत्पत्तिविनाशयोगात् क्रियायास्तदाश्रयत्वमपि कादाचित्कमिति तद्विकाररूपमित्यर्थः । **जडम्** ज्ञेयम्; अत एव **विकारिद्रव्याहंकारग्रन्थिस्थम्**; जडत्वविक्रियात्मकत्वसाम्यादिति भावः । ग्रन्थिर्नाम बन्धनस्याशैथिल्यकरो ग्रन्थनविशेषः । अहंकारस्य सर्वभ्रममूलत्वात् **ग्रन्थि**रित्युक्तम् । एतद्विरोधिरूपमाह—**अविक्रिय इति** । साक्षित्वाभ्युपगमेन ज्ञातृत्वमभ्युपगतं भवतीति शङ्कायां साक्षित्वमपि ज्ञानस्वरूपत्वानुगुणमित्यभिप्रायेण **साक्षिणी**त्युक्तम् । अविद्यानुभवरूपत्वमेव साक्षित्वमिति ज्ञानत्वाविरोध इति भावः । **चिन्मात्रात्मनि**; स्वयंप्रकाशे । जडं ज्ञातृत्वमजडस्य न संभवतीति भावः । कर्तृत्वादिर्नात्मधर्मः, दृश्यधीनसिद्धित्वात् रूपादिवदित्यन्वयिनमभिप्रेत्याह—**दृश्यधीनसिद्धित्वादेवेति** । **कर्तृत्वादे**रित्यादिशब्देनाहंप्रत्ययगोचरत्वं गृह्यते । य एव भेदादीनामनुभूतिधर्मत्वाभावे हेतुः, तेनैवेत्येवकाराभिप्रायः ।

### भावप्रकाशिका

ननु 'अहं जानामि' इत्यहमर्थे ज्ञातृत्वस्य प्रत्यक्षसिद्धत्वेऽपि नात्मनो ज्ञातृत्वं प्रत्यक्षसिद्धमित्याशङ्क्याह—**आत्मनोऽहंप्रत्ययगोचरत्वस्य स्वानुभवप्रत्यक्षसिद्धत्वेनेति** । **यद्वा ज्ञातृत्वे प्रतीयमान इति**; अंशवाचिना शकलशब्देनायमर्थः स्मारित इति भावः । ज्ञातृत्वं हीति भाष्यं पूर्वोक्तहेतोरसिद्धिशङ्कापरिहारपरमित्यभिप्रायेण कर्तृत्वायोगमुपपादयति—**ज्ञातृत्वं हीति** । अस्मिन् व्याख्याने स्वात्मशब्दस्वारस्याभावात् उपपादनसापेक्षकर्तृत्वायोगं हेतुमभिधाय तदुपपादनात्पूर्वमेव ततः किमिति शङ्कापरिहारा-

नौचित्याचान्यथा व्याचष्टे—**यद्वा ज्ञातृत्वं नामेत्यादिना** । स्वरूपभूतज्ञानाश्रयत्वविवक्षायां कर्तृत्वशब्दः कथं घटत इत्याशङ्क्याह—**कर्तृत्वमाश्रयत्वमिति** । स्वात्मनि कर्तृत्वायोगहेतोरुपपादननिरपेक्षत्वेऽपि विकल्पितशिरोऽन्तरनिराकरणात् प्राक् ततः किमिति शङ्कापरिहारस्यानुचितत्वात् 'अतो मनुष्योऽहम्' इत्यादिभाष्यं हेत्वन्तरपरतया व्याचष्टे—**ज्ञातृत्वं भ्रान्तपुरुषेति**। अस्मिन् पक्षे अतःशब्दस्य पूर्वोक्तपरामर्शिनो न स्वारस्यमिति द्रष्टव्यम् । **जडत्वविक्रियात्मकत्वसाम्यादिति** ; जडत्वविकारित्वसाम्यादित्यर्थः। **विकारिद्रव्याहंकारेति ; अविक्रियेति साक्षिणि चेति** भाष्ये दर्शनात् । अन्यथा विक्रियाद्रव्याहंकारेति अविक्रियायां साक्षिणीति च भाषणीयम् । न च ज्ञातृत्वस्य विकाररूपस्य कथं विकारित्वमिति वाच्यम्, विकारत्वविकारित्वयोरविरोधात् । यद्यप्याश्रयाश्रयिभावे साम्यमप्रयोजकं, द्रव्यगुणजातिव्यक्त्यादौ तथा भावात्; तथापि जडं जडाश्रितमेव दृष्टं, विकारि च विकार्याश्रितमेव दृष्टमिति भावः। केचित्तु—'विकारिद्रव्याहंकारग्रन्थिस्थमविक्रिये साक्षिणि' इति भाष्यपर्यालोचनायां निर्विकारे विकारस्यावस्थानं न संभवतीत्येव प्रतीयते ; न समयोरेवाश्रयाश्रयिभाव इति मन्यन्ते । "नाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि" इति सुषुप्तिविषयिणी श्रुतिः । अयं सुषुप्तः 'अयमहमस्मि' इत्येवं न जानाति खल्वित्यर्थः ।

## श्रुतप्रदीपिका

स्वानुभवप्रत्यक्षविरोधेन चोदयति—**ननु चेति** । भ्रान्तितया परिहरति—**नैवमिति** । तावदंशस्य पाश्चात्यबाधादित्यभिप्रयन्नाह—**रजतेति** । कथं भ्रान्तित्वमित्यपेक्षायां स्वरूपभूतज्ञानाश्रयत्वं वा ज्ञानक्रियाश्रयत्वं वा ज्ञातृत्वमिति विकल्पमभिप्रेत्य प्रथमं व्युदस्यति—**अनुभूतेरिति** । **कर्तृत्वम्** ; आश्रयत्वम् । अन्यस्य कर्तुरन्यत्वादेव मिथ्यात्वात् स्वयमेव स्वाश्रयः स्यात् ; तद्व्याहतमित्यर्थः । भ्रान्तपुरुषप्रतिपन्नत्वमपि हेतुमाह—**अत इति** । द्वितीयं व्युदस्यति—**ज्ञातृत्वं हीति** । ततः किमित्यत्राह—**तच्चेति** । कादाचित्कत्वात् विक्रियात्मकत्वम् । साक्षित्वमपि न ज्ञातृत्वम्, अपित्वविद्यानुभवरूपत्वमित्यभिप्रायेण **साक्षिणीत्युक्तम्** । कर्तृत्वादेरनात्मधर्मत्वेऽनुमानमाह—**दृश्यधीनेति** । आदिशब्दादहंधीवेद्यत्वम् । अहमर्थो ह्यात्मा, तत्सामानाधिकरण्यात् ।

## नयप्रकाशिका

ननु 'अहं जानामि' इत्यादावात्मनो ज्ञातृता स्वानुभवसिद्धा; स्वानुभवसिद्धापलापे अनुभूतेरप्यपलापः स्यादिति चेत्—न; भेदस्यापरमार्थत्वात्; अनुभूतेः स्वात्मनि कर्तृत्वायोगात्। अतो देहात्माभिमानवत् ज्ञातृत्वमपि भ्रान्तमेव, देहात्माभिमानवतो जायमानत्वात् ज्ञातृत्वस्य। किंच ज्ञातृत्वस्य ज्ञानक्रियाकर्तृत्वात् तस्य विकारात्मत्वेन जडत्वान्नाविकारिसंविद्धर्मत्वम्। तस्याः साक्षिरूपत्वाच्च। साक्षिरूपत्वं नाम सर्वसिद्धिरूपत्वम्। किंतु विकारित्वे विकारान्वययोग्याहंकारस्यैव धर्मः। कर्तृत्वादिर्नात्मधर्मः, दृश्यत्वाद्रूपादिवदित्यनुमानाच्च। सुषुप्त्यादावहंप्रत्ययाभावेऽप्यात्मानुभवदर्शनाच्च ज्ञातृत्वाहंप्रत्ययगोचरत्वादिर्नात्मधर्मः। यदि तद्धर्मवत्ता स्वभावः, तर्हि तदाप्यनुभवः स्यात्। कर्तृत्वादिसद्भावे च देहस्यैवात्मताप्रसक्तिश्च। किंच ज्ञाता नात्मा, कर्तृत्वात् अहंप्रत्ययगोचरत्वाद्वा शरीरवदित्यनुमानाभ्यां च न ज्ञातुरात्मता। अतो ज्ञातृत्वादिरहितस्यैव साक्षिणः प्रत्यगात्मत्वम्। प्रमात्रादिव्यतिरिक्तसाक्ष्यनङ्गीकारे हि व्यवहारोऽनुपपन्नः। तथाहि– ज्ञानादिस्तावत्सर्वसंप्रतिपन्नो दृश्यते; न तेषां बाह्यप्रत्यक्षता; नापि मानसप्रत्यक्षतेत्युक्तं पूर्वमेव ज्ञानस्य मानसप्रत्यक्षत्वनिराकरणेन। न च ज्ञानस्य स्वयंप्रकाशत्वपक्षे न काचिदनुपपत्तिरिति वाच्यम्, आत्माश्रयज्ञानस्वयंप्रकाशवादस्य विकल्पासहत्वात्। तच्च ज्ञानं किं गुणः? द्रव्यं वा? आद्येऽपि पक्षे विकल्पः—अनित्यो नित्यो वेति। अनित्यत्वे आश्रयविनाशोऽपि स्यात्; गुणविनाशस्यान्यथानुपपत्तेः। तच्च विमतिपदस्य वेदनाश्रयजन्मविनाशव्यतिरेकेण जन्मविनाशौ न संभवतः, प्रकाशगुणत्वात् प्रदीपादिप्रकाशवदित्यनुमानाच्च। अथवा संवेदनं यावत्स्वाश्रयभावि, प्रकाशगुणत्वात् प्रदीपप्रकाशवत्; तथा संवेदनं सर्वदा सर्वत्र भवितुमर्हति, सर्वगतद्रव्यगुणत्वात् शब्दवदित्यनुमानाभ्यां वैपरीत्यसिद्धेः। आत्मनः सर्वगतत्वं च श्रुत्या सर्वत्र कार्योपलब्ध्याख्ययुक्त्या च सिद्धम्; दृष्टं च। न च ज्ञानस्यानित्यत्वपरिच्छिन्नत्वप्रतिभासविरोधः, तस्य भ्रान्तित्वात्। अतः सर्वगतप्रकाशवस्तुसिद्धेरनिच्छयापि साक्षिवस्त्वङ्गीकारः। गुणगुण्यादिभेदोऽपि भ्रम इत्युक्तम्। एतेन संवेदनस्य नित्यगुणत्वपक्षोऽपि निरस्तः। न च वेदनस्य द्रव्यत्वम्, द्रव्यस्यान्याश्रयत्वानुपपत्तेः। अतो नित्यसर्वगतस्वयंप्रकाशतया युगपत्सकलवस्तुसाधनसमर्थैकवस्तुव्यतिरेकेण न समस्तव्यवहारसिद्धिः। "साक्षी चेता केवलो निर्गुणश्च"

इति श्रुत्या च साक्षित्वसिद्धिः। नन्विदं साक्षित्वं किं जीवान्तर्गतम्? अथ दृश्यान्तर्गतम्? उत ब्रह्मान्तर्गतमिति विवेचनीयम्। आद्ये जीवस्य प्रमातृत्वैकरूपत्वान्न साक्षित्वसिद्धिः। दृश्यान्तर्भावे तु घटादिवदनवभासकत्वमिति न साक्षित्वम्। ब्रह्मान्तर्भावे ब्रह्मणश्च श्रुत्यैकसमधिगम्यत्वेन संसारसमयेऽनाविर्भावाच्च व्यवहाराङ्गत्वेन न साक्षिप्रत्यक्षसिद्धिरिति चेत्—मैवम्; चोद्यस्याविवेकनिबन्धनत्वात्। तथाहि—'इदं रजतम्' इत्यत्रेदमंशः किं रजतपक्षपाती? किं वा शुक्तिपक्षपाती? आद्ये रजतवत् बाध्यता; द्वितीये शुक्तिवदनवभासता। अथ परमार्थतः शुक्तिपक्षत्वेऽपि 'इदं रजतम्' इति सामानाधिकरण्यादिदमंशस्य प्रतिभासतो रजतपक्षत्वमिति न प्रमाणप्रतीतेर्विरोध इति चेत्, तर्हि भाविपरमार्थतो ब्रह्मपक्षत्वेऽपि प्रतिभासतः साक्षित्वस्य संसार्यन्तर्भाव इति न प्रमाणप्रतिभासयोर्विरोधः। इयांस्तु भेदः—शुक्तित्वमिदमंशान्वये सत्, इदमंशान्वयाभावेऽसत्। भ्रान्तिसमयेऽनवभासमानं प्रमाणेनेदमंशात्मना व्यज्यते। तच्च रजतत्वोपमर्देन। ब्रह्म तु साक्षिभूतमेव सदविद्यया संसारसमयेऽनभिव्यज्यमानमिव भाति। "तत्त्वमसि" इति प्रमाणज्ञानादज्ञानाभिभवे च संसारोपमर्देनावभासत इति साक्षिस्वरूपस्य स्वयंप्रकाशत्वेन प्रत्यक्षत्वाच्च न प्रमाणवेद्यत्वप्रसङ्गः। तस्मात् प्रमातृप्रमाणप्रमेयप्रतीतिभेदविभ्रमस्याधिष्ठानतया तत्तत्साक्षिणः प्रतिभासात् तदन्तर्भावेऽपि वस्तुतो ब्रह्मत्वमेवेति न काचित् क्षतिः। तत्र सर्वत्र साक्षिवेद्यत्वेऽपि किंचिदन्तःकरणवृत्त्युपाधिद्वारा साक्षिवेद्यं, किंचित् तदनपेक्षया। यत्तत्र घटादिवस्तु बुद्धिवृत्तिव्यवधानेन सिध्यति तत्प्रमाणवेद्यम्। यत्तु ज्ञानाज्ञानसुखादि तदनपेक्षमेव सिध्यति तत्साक्षिवेद्यमिति व्यवहारः। ततः सर्वव्यवहारसिद्ध्यर्थं साक्ष्यङ्गीकारः।

### तत्त्वटीका

अत्र ज्ञानाश्रयोऽहमर्थस्त्वात्मेति सर्वलोकस्वानुभवप्रत्यक्षेण बाध इति चोदयति—**ननु चेति**। यथाहुर्निरालम्बनानुमाने—"सर्वलोकप्रसिद्ध्या च पक्षबाधोऽत्र ते ध्रुवम्" इति। स्वतःप्रमात्वमभिप्रेत्यात्र **प्रतीति**शब्दः। स्वारसिकबाधाभावेऽपि यौक्तिकबाधात् खनैल्यादिकल्पत्वं मत्वा प्रतिवक्ति—**नैवमिति**। आत्मनोऽपि ज्ञातृत्वं देहादिज्ञातृत्ववद्बाधितत्वाद् भ्रान्तिसिद्धमित्याह—**सेति**। हेतुत्वपरोऽयं परामर्शः—विमतं ज्ञातृत्वं भ्रान्तिसिद्धं, ज्ञातृत्वस्वरूपत्वात् संमतवदिति। देहादेर्ज्ञातृत्वमिच्छतामप्यविगा-

नार्थमन्यत्राप्येकधीविषये बाध्याबाध्यांशविवेकं व्यनक्ति-- **रजततेति**। अन्यथाख्या-त्यन्वारोहेणेदं निदर्शनम्। स्वपक्षे हि शुक्त्यवच्छिन्नमायांशकर्बुरस्य चैतन्यस्य रजततया विवर्तः। शुक्तौ रजतत्वाबाधेऽपि प्रमाणसिद्धे रजते रजततेव देहादौ बाधिताप्यात्मनि ज्ञातृता स्यादित्यत्रात्मस्वरूपभूतज्ञानाश्रयत्वं वा कर्मकर्त्रवच्छिन्नवृत्तिज्ञानाश्रयत्वं वा ज्ञातृ-त्वमिति विकल्पं मत्वा, आद्येऽपि स्वरूपज्ञानाश्रयत्वमिदं स्वरूपस्यैव, अन्यस्य वेति विकल्पे स्वरूपस्येति पक्षमात्माश्रयेण निरस्यति—**अनुभूतेरिति**। कर्तृत्वमिहाश्रयत्वम्; जनकत्वविवक्षायामप्यात्माश्रयः सिद्धः। कथं तस्यात्मनः प्रत्यक्षादिभिर्ज्ञातृत्वप्रतीतिरित्यत्र तत्संभवम्, अन्यस्य वेति विकल्पितपक्षस्यासंभवं च ज्ञापयितुमाह—**अत इति**; स्वस्य स्वाश्रयत्वायोगादित्यर्थः। अन्तरङ्गाहमर्थधर्माध्यासेनैक्यव्यञ्जनाय **विशिष्टदेहपिण्डे-त्यन्तम्**। **ज्ञातृत्वमिति**; यथा--आत्मनि मनुष्यत्वादिविशिष्टपिण्डत्वमध्यस्तं तथा ज्ञातृभूताहमर्थाभिमानो ज्ञातृत्वमित्यर्थः। तत्रानुभूतिबहिर्भूतत्वमपि हेतुः। स तु 'ज्ञातृत्वं हि' इत्युत्तरवाक्ये स्पष्टः। ज्ञातृत्वमध्यस्तमित्यनेनैवात्मनो वृत्तिज्ञानाश्रयत्व-पक्षोऽपि व्युदस्तः; तदुपपादनाय प्रतिक्षेप्यस्वरूपं निष्कर्षति—**ज्ञातृत्वं हीति**। हिर्हेतौ; यतो ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वम्, अत इत्यर्थः। प्रस्तुते को विरोध इत्यत्राह-- **तच्चेति**। चो हेतौ, उक्ताकारेणाकारान्तरसमुच्चयार्थो वा। **विक्रियात्मकं जडमिति**; व्यवस्थाप्यमाश्रयविशेषणं व्यनक्ति। **विकारिद्रव्याहंकारग्रन्थिस्थमिति**; स्वरूपानुब-न्धित्वाभावादनात्मत्वव्यक्त्यै देहादिवद् ग्रन्थिस्थत्वोक्तिः। ईदृशस्यौचित्योपलम्भमाह— **अविक्रिय इति**। परेषु व्याप्रियमाणेषु निर्व्यापारो हि साक्षी; अतः "साक्षाद् द्रष्टरि संज्ञायाम्" इत्यनुशिष्ट्या "साक्षी चेता केवलो निर्गुणश्च" इति श्रुतिरपि द्रष्टृत्वपरेति न भ्रमितव्यम्; किं त्वविद्यागोचरानुभवस्वरूपपरेत्यभिप्रेत्याह—**साक्षिणीति**। अनेन सूचितः श्रुतिविरोधोऽपि। तन्निर्धर्मत्वविरोधमप्याह—**चिन्मात्रात्मनीति**। "अनुभा-व्यत्वात्" इति प्रागुक्तहेतुनैव कर्तृत्वादेरप्यनात्मधर्मत्वं साधितमिति स्थापयति—**दृश्य-धीनेति**। कर्तृत्वादिर्नात्मधर्मः, दृश्यधीनसिद्धित्वात् रूपादिवदित्यनुमानमत्राभिप्रेतम्। **कर्तृत्वादीति**; आदिशब्देनाहंप्रत्ययगोचरत्वग्रहः।

## मूलभावप्रकाशिका

**अनुभूतेरिति**; अनुभूत्यामस्य पूर्वोक्तरीत्या सिद्धत्वादनुभूतेरनुभवितृत्वलक्षण-

ज्ञातृत्वासंभवादिति भावः । **अत इति** ; स्थूलशरीरैक्याध्यासात् तद्धर्ममनुष्यत्वाद्यध्यासवत् सूक्ष्मशरीरभूतान्तःकरणैक्याध्यासात् तद्धर्मज्ञातृत्वाध्यासोऽपीति भावः । ननु ज्ञातृत्वस्यात्मधर्मत्वमेवास्तु, कुतोऽन्तःकरणधर्मत्वमित्याशङ्क्य विकाररूपस्य ज्ञातृत्वस्य विकाराश्रयत्वयोग्यान्तःकरणधर्मत्वमेव युक्तं, नातादृशात्मधर्मत्वमित्याह——**ज्ञातृत्वं हीत्यादिना** । **जडमिति** ; जडस्य जडधर्मत्वादिति भावः । अनुभाव्यस्य भेदादेर्नानुभूतिधर्मत्वमिति पूर्वोक्तयुक्त्यापीदं पराकृतमित्याह——**दृश्यधीनिति** ।

**श्रीभाष्यम्**

**सुषुप्तिमूर्च्छादावहंप्रत्ययापायेऽप्यात्मानुभवदर्शनेन नात्मनोऽहंप्रत्ययगोचरत्वम् । कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः । अहंप्रत्ययगोचरात्कर्तृतया प्रसिद्धाद्देहात्तत्क्रियाफलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव । तथाहमर्थाज्ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् । एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहंकारः स्वाश्रयतया तमभिव्यनक्ति । आत्मस्थतयाभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः । दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाभिव्यनक्ति । तत्कृतोऽयं 'जानाम्यहम्' इति भ्रमः ।**

**श्रुतप्रकाशिका**

अहमर्थो ह्यात्मा ; तेन समानाधिकरणतया प्रतीतो ज्ञाता आत्मा स्यादित्यत्राह— **सुषुप्तिमूर्च्छादाविति** । "नाहं खलु" इत्यादिश्रुत्युपजीवने**नाहंप्रत्ययापाये**ऽपीत्युक्तम् । आत्मनः कर्तृत्वाहंप्रत्ययगोचरत्वाभावे व्यतिरेक्यनुमानत्रयं प्रसङ्गरूपेणाह— **कर्तृत्व इति** । 'आत्मा न कर्ता ; न चाहंप्रत्ययगोचरः' इति प्रतिज्ञाद्वयम् । अजडत्वात्, प्रत्यक्त्वात्, आत्मत्वादिति हेतुत्रयम् । यत्कर्तृ यदहंप्रत्ययगोचरः, तज्जडं परागनात्मा च दृष्टम् ; यथा शरीरमिति । यद्वा आत्मा न कर्ता, न चाहंप्रत्ययगोचरः;

जडत्वादिप्रसङ्गात् देहवदिति । **जडत्वम्** ; दृश्यतैकस्वरूपत्वम् । **पराक्त्वम्** ; परस्मै भासमानत्वम् । **आत्मत्वम्** ; पुरुषार्थप्रतिसंबन्धित्वम् ; देहं प्रति नियन्तृतया व्यापित्वं वा । तदभावोऽनात्मत्वम् । आदिशब्देन क्षयित्वादिकं विवक्षितम् । अहंप्रत्ययगोचरस्य देहस्यानात्मत्वे सिद्धे ह्यहंप्रत्ययगोचरस्य कर्तुरनात्मत्वप्रसक्तिरित्यत्राह—**अहंप्रत्ययगोचरादिति** । **क्रियाफलस्वर्गादेर्भोक्तुर**त्यनेन देहातिरिक्तत्वं सिद्धम् । **प्रामाणिकानाम्** ; चार्वाकातिरिक्तानाम् । अनात्मनोऽहंकारस्य कर्तृत्वे कथमात्मनः संसारभोक्तृत्वमिति च शङ्का शरीरप्रतिबन्द्या निरस्ता । स्वर्गादिभोक्तुरात्मत्वे सिद्धे ज्ञातैवात्मा स्यादित्यत्राह—**तथेति** । शरीरातिरिक्तात्मनोऽभ्युपगमो हि प्रमाणबलात्क्रियते ; तथा ज्ञातुरपि विलक्षणत्वेन प्रमाणसिद्धत्वात्तथाभ्युपगन्तव्यमित्यर्थः । यद्वा अप्रामाणिकाहंप्रत्ययगोचरत्वेन हि शरीरस्यानात्मत्वादि ; प्रामाणिकाहंप्रत्ययगोचरस्य तु कथमनात्मत्वादीत्यत्राह—**अहंप्रत्ययगोचरादिति** । देहस्याप्रामाणिकाहंप्रत्ययगोचरत्वं प्रमाणबाधादेव हि ज्ञायते ; एवं कर्मफलभोक्तुरौपाधिकाकारवतो ज्ञातुरप्यात्मत्वं प्रमाणबाधितं चेत्, आत्मनस्तद्विलक्षणत्वं स्वीकार्यमित्यर्थः । अतः प्रामाणिकाप्रामाणिकविभागाभावेनाहंप्रत्ययगोचरत्वमात्रमेवानात्मत्वसाधकमिति भावः । अविक्रियात्मनः कथं ज्ञातृत्वसंभव इत्यत्राह—**एवमिति** । यद्वा ज्ञातृत्वमहंकारग्रन्थिस्थमिति पूर्वमुक्तम् ; कथमहंकारस्य ज्ञातृत्वसंभव इत्यत्राह—**एवमिति** । अभिव्यञ्जकत्वप्रयुक्तोऽयमहंकारस्य संविदाश्रयभाव इत्यर्थः । अभिव्यञ्जकोऽस्त्वहंकारः ; कथमस्य स्वाश्रयतयाभिव्यञ्जकत्वमित्यत्राह—**आत्मस्थतयेति** । स्वभावसिद्धशब्देनौत्सर्गिकत्वं विवक्षितम् । क्वचित्प्रमाणबाधश्चेत् न तथेति भावः । दृष्टान्तं दर्शयति—**दर्पणेति** । आत्मस्थतयाभिव्यञ्जनं न दर्पणत्वप्रयुक्तम् ; न च प्रतिबिम्बत्वप्रयुक्तम् ; अभिव्यञ्जकत्वमात्रप्रयुक्तमिति दर्शयितुं **खण्डादि**ग्रहणम् । आदिशब्देन मुण्डादिः । एवं व्यङ्क्तृव्यङ्ग्यभावकृतो ज्ञातृत्वावभासः संविद इत्यत्राह—**तत्कृत इति** ।

## भावप्रकाशिका

**शरीरप्रतिबन्द्या निरस्तेति** ; शरीरस्य कर्तृत्वेऽप्यात्मनो भोक्तृत्वदर्शनादिति भावः । वस्तुतस्तु भोक्तृत्वमप्यात्मनो नास्त्येव । नन्वेवं संसारमोक्षयोर्वैयधिकरण्यप्रसङ्गः, मोक्षस्य चिन्मात्रगतत्वात्, बन्धस्य कर्तृत्वादिरूपस्यान्तःकरणगतत्वादिति चेत्—न ;

कर्तृत्वभोक्तृत्वादिविशिष्टान्तःकरणाध्यासाधिष्ठानभाव एव चिन्मात्रगतः संसार इत्यभ्युपगमेन दोषाभावात् । 'अहंप्रत्ययगोचरात्' इति भाष्यं दृष्टान्ते आपाद्यमानानात्मत्वासिद्धिशङ्कापरिहारपरमिति व्याख्यायास्मिन् व्याख्याने दृष्टान्ते शरीरेऽनात्मत्वासिद्धिशङ्काया अतिमन्दत्वादपरितुष्यन्नाह—**यद्वा अप्रामाणिकाहंप्रत्ययगोचरत्वेन हीति** । अस्मिन् पक्षे 'प्रामाणिकानां प्रसिद्धमेव' इति भाष्यस्थ एवकारो यथाशब्दार्थः । अथवा तथाशब्दबलात् यथाशब्दोऽध्याहर्तव्यः । अस्मिन् पक्षे 'अहंप्रत्ययगोचरात्' इति भाष्यस्थप्रत्ययपदस्य भ्रान्तिरर्थ इति द्रष्टव्यम् । केचित्तु—ज्ञातुरपि विलक्षणत्वेन प्रमाणसिद्धत्वात्तथाभ्युपगन्तव्यम् । 'इत्यर्थः' इत्यस्यानन्तरं **यद्वेति** पदं कोशेषु दृश्यते ; न तस्य सम्यक्त्वं पश्यामः, अप्रामाणिकाहंप्रत्ययगोचरादिति ग्रन्थस्य तथाहमर्थादिति भाष्यगतस्याहमर्थादिति पदस्यावतारिकारूपत्वस्यैव युक्तत्वात् । ततश्चा**हंप्रत्ययगोचरादिति** प्रतीकग्रहणमपि न युक्तम् । अहमर्थादित्येव प्रतीकग्रहणं युक्तम् । न चैतत्पूर्वग्रन्थस्थस्याहंप्रत्ययगोचरादित्यस्य ग्रहणं युक्तम्, देहातिरिक्तत्वसमर्थनपरे तस्मिन्वाक्ये देहातिरिक्तत्वं सिद्धवत्कृत्य शङ्काया अनुत्थितेरित्याहुः । **ज्ञातुरप्यात्मत्वं प्रमाणबाधितं चेदिति** ; प्रामाणिकाहंप्रत्ययगोचरस्यापीति शेषः । 'अविक्रिये साक्षिणि' इत्यादिना पूर्वमात्मनि ज्ञातृत्वासंभवस्योक्तत्वात् उत्तरत्र 'तत्कृतोऽयं जानाम्यहमिति भ्रमः' इत्यात्मनि ज्ञातृत्वभ्रमोपपत्तेर्वक्ष्यमाणत्वाच्च पूर्वापरानुगुण्येनात्मनि ज्ञातृत्वावभासनोपपादनपरतया 'एवमविक्रियानुभवस्वरूपस्यैव' इत्यादि भाष्यं व्याचष्टे—**अविक्रियात्मन इति** । स्ववाक्यस्वारस्यानुरोधेनान्यथा व्याचष्टे—**यद्वा ज्ञातृत्वेति** ।

## श्रुतप्रदीपिका

ज्ञाताप्यात्मेत्यत्राह—**सुषुप्तीति** । वक्ष्यमाणोपजीवनेनापाय उक्तः । अकर्तृत्वानहंतृत्वयोर्व्यतिरेकीण्याह—**कर्तृत्व इति** । देहेऽहंधीर्भ्रान्तिरूपेति न प्रामाणिकी । आत्मनस्तु प्रामाणिकाहंधीवेद्यस्य कथमनात्मत्वमित्यत्राह—**अहंप्रत्ययेति** । यद्वा देहस्यानात्मत्वं कुत इत्यत्राह—**अहंप्रत्ययेति** । तर्हि ज्ञातुरेवात्मत्वं स्यादित्यत्राह—**तथेति** । देहात् ज्ञातुरिव ज्ञातुरप्यात्मनो वैलक्षण्यं मानसिद्धमित्यहंधीवेद्यत्वमात्रमेवानात्मत्वसाधकमित्यर्थः । स्वप्रकाशक्रियारूपज्ञानाश्रयत्वलक्षणं च ज्ञातृत्वमात्मनोऽनुभवरूपस्य न संभवतीत्युक्तम् । संविदोऽहमर्थस्थतया भानं कथमुपपद्यत इत्यत्राह—**एवमिति** । अभिव्य-

ञ्जकतास्तु ; आत्मस्थतया भानं कथमित्यत्राह—**आत्मस्थेति** । स्वभावसिद्धशब्देनौत्सर्गिकत्वं विवक्षितम् ; क्वचित्प्रमाणबाधश्चेन्न तथेति भावः । दृष्टान्तं दर्शयति—**दर्पणेति** । आत्मस्थतयाभिव्यञ्जनं न दर्पणत्वप्रयुक्तम्, न च प्रतिबिम्बत्वप्रयुक्तम्; अभिव्यञ्जकत्वमात्रप्रयुक्तमिति दर्शयितुं खण्डादिग्रहणम् । आदिशब्देन मुण्डादिग्रहणम् । दर्पणत्वादिप्रयुक्तदोषव्युदासाय स्थलत्रयम् । तत्फलमाह—**तत्कृत इति** ।

**नयप्रकाशिका**

नन्वहंप्रत्ययवेद्यताभ्रमस्य किं मूलमिति चेत् संविदोऽहंकाराभिव्यङ्ग्यत्वमेवेति ब्रूमः । अभिव्यञ्जकस्वभावोऽयं यदात्मस्थतयाभिव्यङ्ग्याभिव्यङ्क्तृत्वम्, दर्पणादौ तथा दर्शनात् । अतस्तन्मूलो 'जानाम्यहम्' इति भ्रमः । अयमर्थः—यथा मुखादेर्महत्त्वेऽपि मण्यादिदेशाल्पतया तदध्यासादल्पत्वम्, एवमहंकाराध्यासात् ज्ञातृत्वादिरिति । दर्पणादेर्जडत्वेऽभिव्यञ्जकत्वदर्शनान्न जडाहंकारस्याभिव्यञ्जकत्वमिति न चोद्यावकाशः ।

**तत्त्वटीका**

ननु "अहमेवाहं मां जुहोमि" इत्यादिश्रुतिशतैः प्रत्यक्षानुगुणैरहमर्थ आत्मेति सिद्धेऽहंत्वसामानाधिकरण्यबलाज्ज्ञातृत्वादिकमात्मधर्मः स्यादित्यत्राह—**सुषुप्तिमूर्च्छादाविति** । **आदिशब्देन** मरणमोक्षसंग्रहः । स्वात्मप्रकाशोऽपि तदा नास्तीति जडात्मवादिमतव्युदासाय **आत्मानुभवोक्तिः** । तास्वपि दशासु स्वप्रकाशत्वस्य श्रुतिप्रतिपन्नत्वादिति भावः । अहंबुद्धेरात्मविषयत्वे स्वरूपस्फुरणवत्सुषुप्तावपि सानुवर्तेत ; प्रयोगश्च—'अहं कर्ता' इत्यादिधीर्नात्मगोचरा, सुषुप्त्यादावविद्यमानत्वात् । तथाच "अहंमानोद्भवं दुःखम्" इत्यादि "अविद्याहंमतिः" इति च पठ्यते । अकर्तृत्वानहंत्वयोरुक्तस्य प्रमाणस्यानुग्राहकतर्कानाह—**कर्तृत्व इति** । प्रसङ्गविपर्ययाश्चाजडत्वादयः प्रकृतसाध्यद्वये व्यतिरेकिहेतवोऽभिप्रेताः । यदि जडस्याहंत्वं, तर्हि देहस्यैव तत्किं न स्यात्? बाधा चेत्तर्हि श्रुत्यादिसिद्धस्य बाधायोगादात्मनि तदस्तु ; अनात्मनः कर्तृत्वे कामित्वकर्तृत्वासामानाधिकरण्यात्तन्मूलं भोक्तृत्वमप्यात्मनो न सिध्येत् ; "शास्त्रफलं प्रयोक्तरि" इति नियमस्य जातेष्ट्यादावगत्या निवृत्तिः ; अन्यत्र न तथा ; संसाराभावान्मुक्तिशास्त्रं नारभ्यमित्यत्राह—**अहंप्रत्ययेति** । **कर्तृतया प्रसिद्धाद्देहादिति** ; कथम्? इत्थम्—प्रचुराणां विष्णुक्रमणसर्पणादीनां वैधक्रियाणां साक्षाद्देहाश्रयत्वाद्वाङ्मनसव्यापाराणां देह-

सापेक्षत्वादिति । **प्रामाणिकानाम्**; श्रुत्याद्यनुसारिणामित्यर्थः । तदिहाकर्तुर्भोक्तृतासंभवेन बाधायोगचोद्यं परास्तम् । अहंत्वकर्तृत्वादौ बाधश्च पूर्वोक्तः । सुषुप्त्यादिविषयश्रुतिप्रसिद्ध आत्मा । श्रुतस्य तत्तत्क्रियाश्रयत्वेऽप्यात्मन ऐहिकामुष्मिकतत्फलभोक्तृत्वं प्रामाणिकैः सर्वैरङ्गीकृतम् । तथानात्मनोऽहमर्थस्य कर्तृत्वेऽपि गतिः । स्मर्यते च—"कार्यकारणकर्तृत्वे" इत्यादि । तर्हि भोक्तृत्वादेव ज्ञातृत्वादिकं स्यादित्यत्र दत्तोत्तरत्वं मत्वाह—**तथेति** । अयं भावः—कर्तृत्वभोक्तृत्वविशिष्टोऽहमर्थो नात्मा, अहंधीवेद्यत्वात् देहवत् । अभोक्तृत्वेऽप्यात्मनो भोक्तृत्वाध्यासात्तदुक्तिः । मुक्तिशास्त्रं च तावन्मात्रनिवृत्त्यर्थमिति । न हि कर्ता साक्षी स्यादित्यभिप्रायेण **साक्षित्वोक्तिः** । **प्रतिपत्तव्यम्**; उक्तैर्हेतुभिः "यस्य नाहंकृतो भावः" इत्यादिशास्त्रैश्चेति शेषः । नन्वविद्याशबले चिद्रूपात्मनि 'अहम्' इति प्रथमोऽध्यासस्त्वदुक्तः; तथाच शुक्तिस्थतया रूप्यवद्वास्थतयाहमर्थो भासेत; प्रत्युत तद्धर्मतया धीर्भाति । तथात्वे धियोऽहमर्थविकारत्वं जन्मादिविकाराश्रयत्वं च स्यादित्यत्राह—**एवमिति** । **अभिव्यञ्जक** इति हेतुगर्भम् । **जडोऽपीति** घटवद्व्यञ्जकत्वासंभवशङ्काव्युदासार्थम् । अहंकारस्थतयाभिव्यक्तिमात्रमेव; न तु वास्तवी तत्र वृत्तिः । दर्पणप्रतिहतभान्यायेन तु तद्धर्मत्वोक्तिः; अतो न तद्विकारित्वादिप्रसङ्गः । इन्द्रियवत् व्यञ्जकत्वमस्तु; किमिति स्वनिष्ठतया व्यनक्तीत्यत्राह—**आत्मस्थतयेति** । यथादर्शनं "स्वभावो दुरतिक्रमः" इत्यभिप्रायेण **स्वभावशब्दः** । अभिव्यञ्जकानामीदृक्स्वभावत्वं बुद्धीनां प्रमात्ववदौत्सर्गिकं क्वचिदपवादेऽपि भूयोदृष्ट्या सिध्यतीत्याह—**दर्पणेति** । तत्तद्विशेषप्रयुक्तत्वव्युदासाय बहूदाहृतिः । जातिव्यक्त्युदाहरणेन चक्षुष्प्रतिफलनोपाधिकत्वशङ्का चापास्ता । उक्तप्रकारेणाधिष्ठानवैपरीत्यादिचोद्यस्यापास्तत्वमाह—**तत्कृत इति** । व्यञ्जकसामान्यस्वभावसिद्ध इत्यर्थः ।

## मूलभावप्रकाशिका

अहंप्रतीतेरात्मविषयत्वाभावादपि 'अहं जानामि' इति प्रतीतिबलान्नात्मनो ज्ञातृत्वसिद्धिरित्याह—**सुषुप्तीति** । देहस्यैवानात्मत्वे विवदमानं प्रत्याह—**अहंप्रत्ययेति** । **प्रतिपत्तव्यमिति**; इतरथा स्थूलदेहात् भेदोऽपि न सिध्येदिति भावः । अन्तःकरणज्ञातृत्वसिद्धिप्रकारमुपपादयति—**एवमिति** । **स्वाश्रयेति** बहुव्रीहिः; स्वाश्रितेत्यर्थः ।

श्रीभाष्यम्

स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहंकारेणाभिव्यङ्ग्यत्वमिति मा वोचः, रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वदर्शनात् । जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः । यतः 'अहं जानामि' इति ज्ञातायमहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मः । अत एव सुषुप्तिमुक्त्योर्नान्वेति । तत्र ह्यहमुल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणात्मावभासते । अत एव सुप्तोत्थितः 'कदाचिन्मामप्यहं न ज्ञातवान्' इति परामृशति । तस्मात्परमार्थतो निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविविधविचित्रभेदा विवर्तत इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति ।

श्रुतप्रकाशिका

जडस्याभिव्यञ्जकत्वमयुक्तम्; स्वप्रकाशस्य वस्तुनोऽभिव्यङ्ग्यत्वं चायुक्तम्; संविदभिव्यङ्ग्यस्य च विशेषेण तदभिव्यञ्जकत्वमयुक्तमितीमामाशङ्कां स्वयमेवोत्थाप्य प्रतिक्षिपति—**स्वप्रकाशाया इति** । कुत इत्यत्राह—**रविकरेति** । करतलस्य किरणाभिव्यञ्जकत्वं क्व दृष्टमित्यत्राह—**जालकेति** । एवं ज्ञातृत्वस्यापारमार्थिकत्वमुक्तम्; एतदेव परमार्थवस्तुभासनवेलायामनवभासनप्रतिपादनेनोपपादयति—**यत इति** । अनेन 'अहंप्रत्ययापायेऽपि' इति पूर्वोक्तार्थो विवृतो भवति । यत इति साध्यस्य हेतुतया निर्देशः 'अग्निमत्त्वेन धूमवत्त्वम्' इतिवत् । मुक्तिसमभिव्याहारेण सुषुप्तावप्यहंप्रत्ययापायस्यागमसिद्धत्वं सूचितम् । तदा कथं भासत इत्यत्राह—**तत्र हीति** । "नाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति" इति स्वापविषया श्रुतिः ।

"अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥"

इति मुक्तिविषया स्मृतिः । 'महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च' इति क्षेत्रान्तर्भावश्चोच्यतेऽहंकारस्य । 'अहंकारविमूढात्मा कर्ताहमिति मन्यते' इति तस्य भ्रान्तिसिद्धत्वमुच्यते । हिशब्दः श्रुतिस्मृतिप्रसिद्धिद्योतनार्थः । न केवलं श्रुतिः, सुषुप्तिविषयः परामर्शश्च तथास्तीत्याह—**अत एवेति** । **अत एवेति** साध्यस्य हेतुत्वेन परामर्शः । कथं साध्यसाधनयोर्विपरीतनिर्देशः ? इत्थम्—ज्ञप्तौ यत्साध्यं तदुत्पत्तौ साधनम्, यदुत्पत्तौ साधनं तज्ज्ञप्तौ साध्यम् । तस्मात् 'अग्निमत्त्वादेव हि धूमोद्गमः' इतिवदुत्पत्तौ हेतुत्वमपेक्ष्य **अत एवे**त्युक्तम् । ततः किं प्रस्तुतपूर्ववृत्तत्वचिन्ताया इत्यत्राह—**तस्मादिति** । **तस्मादित्यनेन** 'यदप्याहुः—अशेषविशेष' इत्यारभ्योक्तप्रमाणतर्काभ्यां स्वमतोपपादनमभिप्रेतत् । **निरस्तसमस्तभेदविकल्पेति** ; भेदविकल्पशब्देन ज्ञातृज्ञेयादिभेदस्यावान्तरवैविध्यं विवक्षितम् । निर्विशेषशब्देन स्वगतनित्यत्वादिभेदव्यावृत्तिः । कुत इत्यत्राह—**चिन्मात्रैकरसेति** ; चिन्मात्रत्वादित्यर्थः । अनेन शून्यत्वव्युदासश्च । **कूटस्थम्** ; निर्विकारम् ; सर्वाधिष्ठानं वा । **नित्यसंविदेवेति** ; चिन्मात्रशब्दः स्वयंप्रकाशत्वपरः, संविच्छब्दो विशेष्यपर इत्यपौनरुक्त्यम् । चिन्मात्रस्य कथं भेदसंभव इत्यत्राह—**भ्रान्त्येति** । **भ्रान्त्या विवर्तत** इति करिकलभवन्निर्देशः । **शुद्धम्** ; अविद्यारहितम् । **बुद्धम्** ; स्वप्रकाशम् । **मुक्तम्** ; परमार्थतो भेददर्शनजन्मादिरहितम् । एवंविधब्रह्मात्मैकत्वविद्यालब्धये सर्वे वेदान्ता आरभ्यन्त इत्यर्थः । वेदान्तानामारम्भणीयत्वं नाम तद्विचारस्यारम्भणीयत्वम् । **सर्वे वेदान्ता आरभ्यन्त इति यदप्याहुरिति** पूर्वेणान्वयः । ब्रह्ममीमांसाशास्त्रं किमनारम्भणीयम् ? उतारम्भणीयमिति विचारे बन्धस्य परमार्थत्वेन ज्ञाननिवर्त्यत्वाभावात् ज्ञानप्रतिपादकवेदान्तवाक्यविचाररूपं शास्त्रमनारम्भणीयमिति पूर्वपक्षं कृत्वा बन्धस्य मिथ्यात्वेन ज्ञानमात्रनिवर्त्यत्वात् ज्ञानार्थं वेदान्तविचाररूपं शास्त्रमारम्भणीयमिति हि ब्रह्माज्ञानपक्षे प्रथमाधिकरणार्थः शिक्षितः । अतो बन्धस्य मिथ्यात्वेन ज्ञानमात्रनिवर्त्यत्वात् ज्ञानप्रधानस्य शास्त्रस्य कर्मविचारो न पूर्ववृत्त इत्युक्तं भवतीति वैषम्यम् । उपाय आत्मैकत्वविज्ञानम्, उपेयं निर्विशेषचिन्मात्रं ब्रह्म ; निवर्त्यं च मिथ्याभूतमित्येतत्त्रयं कर्मविचारस्यानपेक्षितत्वाय पूर्वं विस्तरेणोपपादितं निगमनग्रन्थे संक्षिप्तं भवति ।

## भावप्रकाशिका

**एवं ज्ञातृत्वस्यापारमार्थिकत्वमुक्तमिति**; 'यतोऽहं जानामि' इति भाष्यस्याहमर्थस्यैव ज्ञातृतया चिन्मात्रात्मनो यतो ज्ञातृत्वं न पारमार्थिको धर्म इति भावः। **विशेष्यपर इत्यपौनरुक्त्यमिति**; धर्मिस्वरूपपर इत्यर्थः। **भ्रान्त्या विवर्तत** इति कथं निर्देशः? भ्रान्त्या प्रतीयत इति हि विवर्तशब्दार्थः; ततश्च पौनरुक्त्यमित्याशङ्क्याह—**करिकलभवन्निर्देश इति**; "कपोले जानक्याः करिकलभदन्तद्युतिमुषि" इतिवदिति भावः।

## श्रुतप्रदीपिका

स्वसिद्धेरभिव्यङ्ग्यत्वं जडस्याभिव्यञ्जकत्वं कर्मकर्तृविरोधं चाशङ्क्याह—**स्वप्रकाशाया इति**। उपपादयति—**रवीति**। कुत इत्यत्राह—**जालकेति**। परमार्थभानवेलायामभानाच्च तन्मिथ्यात्वमाह—**यत इति**। साध्यस्य हेतुतया निर्देशः 'अग्निमत्तया हि धूमवान्' इतिवदुत्पत्त्यपेक्षया, न तु ज्ञप्त्यपेक्षया। कथं तथा भानमित्यत्राह—**तत्रेति**। "नाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति" इति सुषुप्तौ श्रुतिः। "अहंकारं बलं दर्पम्" इति मुक्तौ स्मृतिः। "महाभूतान्यहंकारः" "अहंकारविमूढात्मा" इत्यादि च हिशब्देन द्योत्यते। सुषुप्तौ प्रबुद्धपरामर्शं च हेतुमाह—**अत इति**; पूर्ववत्। ततः किं कर्मानपेक्षायामित्यपेक्षायां **यदप्याहु**रित्यारभ्योक्तं वस्तुसामर्थ्यमुपसंहरति—**तस्मादिति**; **तस्मात्**; उक्तमानतर्कैरुपपादनात्। **निर्विशेषेति** स्वगतभेदाभावः। चित्त्वं स्वसिद्धत्वमिति न पुनरुक्तिः। **भ्रान्त्या विवर्तत इति**; करिकलभवन्निर्देशः। **शुद्धम्**; अविद्यारहितम्। **मुक्तम्**; जन्ममरणादिरहितम्। वेदान्तानामारभ्यत्वं नाम तद्विचारारम्भणीयत्वम्। वाक्यजन्यमेकत्वज्ञानमुपायः, निर्विशेषवस्तूपेयम्, निवर्त्यमनिर्वाच्याज्ञानमिति त्रिकमिह ग्रन्थे दर्शितम्। बन्धस्य सकारणस्य सत्यत्वे निवर्त्यत्वाभावात् तदर्थशास्त्रानारम्भं पूर्वपक्षीकृत्य बन्धस्य मिथ्यात्वात्तन्निवर्तकज्ञानप्रधानं शास्त्रमारम्भणीयमिति सिद्धान्तितं परैः। अतो मिथ्याभूतबन्धनिवर्तकधियः कर्मानपेक्षत्वान्न कर्मज्ञानं पूर्ववृत्तमिति वस्तुसामर्थ्यमुपपादितं भवति।

## नयप्रकाशिका

नन्वहंकारस्य जडत्वेन संविदभिव्यङ्ग्यत्वात् कथमहंकाराभिव्यङ्ग्यत्वम्? तस्याः स्वयंप्रकाशत्वादिति चेत्—न; लोके करतलरविकरादेः परस्पराभिव्यञ्जकत्वदर्शनात्। करतलं प्रथमं रविकराभिव्यक्तं सत् रविकरस्य स्फुटाभिव्यञ्जकम्। अतो ज्ञातृत्वादि भ्रान्तिरेव।

अत एव हि "अहंकारविमूढात्मा कर्ताहमिति मन्यते" इति स्मृतिः। सुषुप्तावहंकारा-द्यननुवृत्तेश्च भ्रान्तता सिद्धा, शुक्तिकारजतज्ञानादिवत्। न च तत्र ज्ञानविनाशान्नानुवृत्ति-रिति वाच्यम्, राद्धान्त्यभिमतेः।

ननु **सुषुप्तिमूर्च्छादौ** इत्यादिभाष्येण गतार्थत्वात् **यतोऽहं जानामीत्यादि** भाष्यं व्यर्थमिति चेत्—न; तद्भाष्यस्याहंप्रत्ययगोचरत्वादेर्ज्ञप्तिधर्मत्वनिरासपरत्वात्; **यतोऽहमि-**त्यादिभाष्यस्य ज्ञातृत्वादेर्भ्रान्तित्वप्रतिपादनपरत्वाच्च। सुषुप्तौ तदभावश्च 'कदाचि-न्मामप्यहमज्ञातवान्' इति सुप्तोत्थितपरामर्शात्। यदि ज्ञातृत्वादिः स्वभावः, तदाप्यनु-भूयेत परामृश्येत च। न च तत्। ननु ज्ञातृत्वादेर्भ्रान्तत्वे भ्रमस्य च दोषमूलतावश्यं-भाविनी, कार्यस्योपादानापेक्षत्वात्। न च लोके क्लृप्तेन्द्रियदोषस्य तत्कारणत्वम्, तस्य निमित्तकारणमात्रत्वात्। न चात्मान्तःकरणयोस्तत्कारणत्वम्, आत्मनोऽपरिणामित्वात् अन्तःकरणस्य चेन्द्रियसंयोगसापेक्षत्वात्। मिथ्यात्वे च प्रत्ययमात्रपरिवर्तिनि तदयो-गात्, अन्तःकरणस्य च जडत्वेनाज्ञातृत्वादात्मनो भ्रान्त्यभावप्रसङ्गाच्च। अतोऽध्यासोपादानं किमिति चेत्, मिथ्याज्ञानमिति ब्रूमः। तदेवाविद्येत्युच्यते। सत्यवस्तुनो मिथ्यावस्तु-संभेदावभासोऽविद्येति तल्लक्षणम्। अन्यस्यान्यात्मताज्ञानमध्यास इत्यध्यासलक्षणम्। अतोऽध्याससिद्ध्यसिद्ध्योर्मिथ्याज्ञानान्वयव्यतिरेकानुविधायित्वात्तस्यैव विविधाध्यासोपादान-त्वम्। कृत्स्नस्य दृश्यत्वेन मिथ्याभूतस्य जगतो मिथ्याभूतार्थस्यैव कारणत्वयोग्यत्वाच्च नान्यस्य कस्यापि कारणता। ननु जगतो ब्रह्मकारणतेष्टा वेदान्तिनाम्; कथमविद्याकार-णतोच्यत इति चेत्—न; अविद्यासंसृष्टस्यैव कारणत्वेन निष्कर्षे अविद्याया एव कारण-त्वात्। तच्चाज्ञानं ज्ञानप्रत्यनीकं भावरूपमेव। तच्च प्रत्यक्षादिप्रमाणैः। तथाहि— 'अहमज्ञः' इति स्फुटतरसविकल्पकप्रत्यक्षात्तदज्ञानसिद्धिः। न चास्य ज्ञानप्रागभाव-विषयता, 'अहं सुखी' इतिवदस्य प्रत्यक्षरूपत्वात्; अभावश्चेदभावप्रमाणवेद्यता स्यात्। न चाभावस्य प्रत्यक्षत्वपक्षे प्रत्यक्षावभासोपपत्तिरिति वाच्यम्, विकल्पासहत्वात्। 'अहमज्ञः' 'मयि ज्ञानं नास्ति' इत्यनुभवे किं धर्म्यात्मनोऽभावप्रतियोगिज्ञान-रूपार्थस्य प्रतीतिरस्ति वा, न वा? आद्ये ज्ञानसद्भावात्तदभावप्रतीत्ययोगः। द्वितीयेऽपि न तत्प्रागभावानुभवसंभवः, अभावग्रहणस्य धर्मिग्रहणप्रतियोगिस्मरणसापेक्षत्वात्। ज्ञानाभावस्य ज्ञानफललिङ्गाभावानुमेयत्वपक्षे अभावप्रमाणविषयत्वपक्षेऽप्येषानुपपत्तिः समा,

आत्माद्यवगतौ तदभावे चात्मनि ज्ञानाभावप्रतिपत्त्ययोगात् । अज्ञानस्य भावरूपत्वे त्व-धर्मादिवत् ज्ञानसद्भावेऽपि विरोधाभावादिदं प्रत्यक्षं भावरूपाज्ञानविषयमेव । ननु भावरूप-स्याप्यज्ञानस्यापारमार्थ्यात् स्वयंप्रकाशवस्तुयाथात्म्यावभासरूपसाक्षिचैतन्यविरोधान्न स्थितिः, शुक्तियाथात्म्यज्ञाने रूप्यस्येवेति चेत्—न ; साक्षिचैतन्यस्य भ्रमाधिष्ठानचैतन्ययाथात्म्य-विषयत्वाभावात् । किंत्वज्ञानविषयमेव याथात्म्यज्ञानेन हि भ्रमनिवृत्तिः । । अन्यथा जगद-भावः स्यात् , तत्र मिथ्याज्ञानभावात् । अतो नाज्ञानविषयज्ञानेनाज्ञाननिवृत्तिः, यस्य कस्यापि ज्ञानस्य स्वविषयविरोधाभावात् । न हि भ्रान्तिकल्पितरजतादेस्तद्विषयज्ञानेन विरोधः, किंत्वधिष्ठानयाथात्म्यज्ञानेन । नन्वज्ञानविशिष्टत्वेन साक्षिचैतन्यस्यावभासः 'अहमज्ञः' इत्यत्रेष्टः । दृश्यपदार्थतद्विशेषणयो रूपघटादिवत् दृश्यतया भाव्यम् , प्रमा-णायत्तत्वाद्विषयसिद्धेः । प्रत्यग्वस्तुनः साक्षिचैतन्यस्य प्रमाणागोचरस्य कथं तदज्ञानविशिष्ट-त्वेनावभास इति चेत्—न ; एतदनुपपत्तेः साक्षित्वसाधने प्रायेण परिहृतत्वात् । सर्वस्य साक्षिवेद्यत्वेऽपि घटादिजडवस्तूनां बुद्धिवृत्तिव्यवधानेन वेद्यत्वम् ; अज्ञानरागसुखादीनां तदनपेक्षयेति । अतः स्वतःसिद्धप्रत्यग्वस्तुनो न प्रमाणव्यवधानापेक्षेति साक्षिचैतन्यस्य सामान्याकारेण भावरूपाज्ञानविशिष्टावभासो युक्तः । ज्ञानं नामार्थेन्द्रियसंनिकर्षजन्यान्तः-करणव्यापारविशेषः । प्रकाशस्तु तदभिव्यङ्ग्यः । अपरोक्षत्वमेव प्रत्यक्षत्वमिति दर्शन-स्थितिः । अतोऽज्ञानस्य प्रत्यक्षतः सिद्धौ न काचिदनुपपत्तिः । 'विवादाध्यासितं प्रमाणं ज्ञानम्' इत्यनुमानाच्च तत्सिद्धिः । सर्वं प्रत्यक्षादिप्रमाणज्ञानं पक्षः । विवादाध्यासितमिति पदं सिद्धसाधनव्युदासाय । स्वप्रागभावेत्यादिना साध्यधर्मनिर्देशः । तत्र प्रमाणज्ञानं वस्त्वन्तरपूर्वकमित्युक्ते तस्य प्रागभावपूर्वत्वेन सिद्धसाधनतेति तद्व्यवच्छेदाय स्वप्रागभाव-व्यतिरिक्तेत्यंशः । तथापि प्रागभावव्यतिरिक्तकालादिपूर्वकत्वात् तस्य सिद्धसाध्यतेति तद्व्यपोहाय स्वविषयावरणेत्यभिधानम् । तथापि प्रागभावादिव्यतिरिक्तस्वविषयावरणकुड्या-दिभिः सिद्धसाधनमिति तद्व्युदासाय स्वनिवर्त्येति विशेषणम् । तथापि वेद्यसंवित्त्यभिव्य-क्तिप्रागभावस्य पूर्वोक्तलक्षणसंपत्तेः तस्य च वेद्यगतत्वेनात्मगतत्वाभावात् सिद्धसाधनतेति तन्निवृत्त्यै स्वदेशगतेत्युक्तिः । धारावाहिकविज्ञानेषूत्तरज्ञानानां ज्ञानपूर्वकत्वेनाज्ञानपूर्वकत्वा-भावमाशङ्क्य तन्निरासायाप्रकाशितेति हेतुविशेषणम् । अनधिगतार्थगन्तृत्वमेव हि प्रमाण-लक्षणम् । दीपप्रभायाश्च पूर्वोक्तलक्षणयुक्तत्वात् दृष्टान्ततोपपन्ना । नन्वालोकाभावमात्र-

त्वान्न तमसो द्रव्यान्तरत्वमिति चेत्—न; बहुलविरलत्वाद्यवस्थायोगित्वात् रूपवत्वाच्च द्रव्यत्वसिद्धेः। न चालोकवद्देशेपि निमीलिताक्षस्य तमस उपलब्धेः रूपदर्शनाभावमात्रतेति वाच्यम्, पिहितकर्णस्यान्तःशब्दोपलब्धिवद्दूरवदन्धकारोपलब्धेरविरुद्धत्वात्। न चालोकविनाशितस्य तमसः पुनरालोकापाये झटिति दृश्यमानत्वात् कथं सर्वव्यापिद्रव्योत्पत्तिरिति वाच्यम्, महाविद्युत इव स्वमूलकारणसत्त्वे झटित्युत्पत्त्युपपत्तेः। ननु रूपवद्द्रव्यस्य स्पर्शवत्त्वनियतिदर्शनात्स्पर्शानुपलब्धेर्न द्रव्यत्वं तस्येति चेत्—न; वायोरन्यत्र स्पर्शिद्रव्यस्य रूपवत्त्वनियमेऽपि रूपरहितस्य स्पर्शवतो वायोर्द्रव्यत्ववदुपपत्तेः। रविकिरणविततदेशे प्रदीपालोकस्य जन्मविनाशसद्भावात् प्रभादिसद्भावेऽपि तमोबुद्धिदर्शनान्न तावदालोकाभावमात्रम्। न च सर्वालोकाभाव एवेति वाच्यम्, सर्वालोकासंनिधाने तमोनिवृत्त्यभावापत्तेः। तस्य हि सर्वेषामालोकानामभावरूपत्वेन कतिपयालोकसद्भावे तन्निवृत्त्युपपत्तिः। न च रूपदर्शनाभावस्तम इति वाच्यम्, बहुलान्धकारगृहोदरावस्थितस्य बही रूपदर्शनेन समान्तस्तमोदर्शनात्। अतस्तमो द्रव्यान्तरमेव। विशुद्धब्रह्मात्मनि शुक्तिकायां चाहंकाररजताध्यासस्यार्थतो मिथ्याभूतस्य मिथ्याभूतोपादानान्वेषणस्य युक्तत्वात्; सत्योपादानत्वे कार्यस्यापि सत्यताप्रसक्तेः। मिथ्योपादानस्यापि तादृशोपादानान्तरकल्पनायामनवस्थापादनमिति मिथ्योपादानस्य कल्पनीयत्वात्। अर्थापत्त्या च तदज्ञानसिद्धिः—'न किंचिदहमवेदिषम्' इति सुप्तोत्थितपरामर्शान्यथानुपपत्त्या च तत्सिद्धिः, विशिष्टानुभवपूर्वकत्वाद्विशिष्टपरामर्शस्य। सुषुप्तिकाले ज्ञानाभावानुभवसंभवः स्वयंप्रकाशत्वप्रसाधने प्रसाधितः। अतो नित्यात्मचैतन्यस्य स्वप्रकाशेनैव मायादिशब्दवाच्यं ज्ञानविरोधित्वेनाज्ञानमिति चोच्यमानं भावरूपमेव सुषुप्तावनुभूतं परामृश्यते। किंच ज्ञानाभावस्य धर्मिग्रहणादिसविकल्पकज्ञानापेक्षत्वात् तस्यान्तःकरणसापेक्षत्वात् सुषुप्तौ तदभावात् तद्ग्रहणस्याशक्यत्वम्; भावरूपाज्ञानस्य तु निर्विकल्पककेवलसाक्षिचैतन्येन सुषुप्ताववभासस्य सुशकत्वम्। तत्र भावरूपाज्ञानस्य सुप्तोत्थितेन परामर्शो न भ्रमः, बाधानुपलम्भात्। किंच जाग्रदवस्थायामेवाज्ञातार्थप्रश्नान्यथानुपपत्त्या च तत्सिद्धिः। स्वाज्ञातमर्थं किंचित् तदभिज्ञं प्रति 'कोऽसौ मया न ज्ञातः' इति पृच्छति। तत्र यदि ज्ञानाभाव एवाज्ञानं तदा सुषुप्तःवात्तदर्थस्य तदनुवादेन प्रश्नोऽनुपपन्नः। न ह्यप्रतिपन्नार्थानुवादः। अथ सामान्याकारेणावगम्य तमर्थमनूद्य तद्विशेषविशिष्टत्वे प्रश्न इति चेत्—

न; विकल्पासहत्वात्। किं सामान्यविशेषौ भिन्नौ, उताभिन्नाविति। आद्ये सामान्यस्य ज्ञातत्वात् तत्र बुभुत्साभावाद्विशेषस्य चार्थान्तरत्वात् तस्य च सुषुप्तत्वात्तदनुवादेन प्रश्नोऽनुपपन्नः। द्वितीये सामान्यविशेषयोरभिन्नत्वेन सामान्यावगमेनैव विशेषस्याप्यवगतत्वात्, विशेषांशे तु न बुभुत्सेति न प्रश्नोपपत्तिः। अतो ज्ञानाभावस्यैवाज्ञानत्वे प्रश्नप्रतिवचनोच्छेदप्रसङ्गः। अतो ब्रह्मस्वरूपतिरोधानकरं सर्वाध्यासोपादानमनिर्वचनीयं भावरूपमज्ञानमङ्गीकरणीयम्। अथ तस्यानिर्वचनीयत्वं कथमिति चेत्—तस्य सत्त्वे भ्रान्तिबाधायोगात्, असत्त्वे ख्यातिबाधायोगाच्च सत्त्वेन वासत्त्वेन वा तस्य निर्वक्तुमशक्यत्वादिति ब्रूमः, शुक्तिकारजतवत्। अनिर्वचनीयख्यातिः राद्धान्ते व्यञ्जयित्वा निराकरिष्यते।

### तत्त्वटीका

ननु स्वप्रकाशस्य न व्यञ्जकापेक्षा, व्यञ्जकानां च न क्वचिदपि स्वव्यङ्ग्यैर्व्यञ्जनं दृष्टम्; अनुभूतिश्च न व्यङ्क्त्री, अक्षरवज्जडत्वप्रसङ्गात्। अहंकारोऽपि न व्यङ्क्ता, व्यङ्क्तृबुद्ध्यधीनसिद्धित्वाभावेन परमार्थसत्त्वप्रसङ्गात्। न च स्वयं व्यक्तः, अनिष्टत्वात्। अतो मिथो व्यङ्क्तृव्यङ्ग्यत्वेऽन्योन्याश्रयः स्यादिति चोद्यमनूद्य क्षिपति—**स्वप्रकाशाया इति**। सजातीयनिरपेक्षतया स्वयं भातस्यापि परेण व्यङ्ग्यत्वं तदभिव्यञ्जकत्वं च निदर्शयति—**रवीति**। करतलस्य रविकरव्यञ्जकत्वमसिद्धमित्यत्राह—**जालकेति**। एतेन नित्यसिद्धायाः स्वरूपव्यक्तेरन्यैवाहंकारजन्याभिव्यक्तिरित्यपि सूच्यते। पूर्वमहंबुद्धेः सुषुप्त्यादावभावात्सिद्धान्तिसंमतस्वरूपधीत्वयोगेनान्यगोचरत्वमुक्तम्। अत्र प्रत्येतुः प्रत्येतव्यादव्यतिरेकोऽहंत्वम्; तच्चात्मनः कादाचित्कमपि सत्यमिति मन्यमानं प्रत्याह—**यत इति**। व्यापकाभावे व्याप्यं नेति व्यतिरेकव्याप्त्या साध्यस्यात्र साधकसद्भावार्थतया सद्धेतुत्वोक्तिः, न तु तद्बोधकतया। अहंकारस्य धर्मतानिषेधोऽहंत्वधर्मतानिषेधार्थः। ज्ञातृत्वादिकं वा; भावप्रधानम्; ज्ञातृत्वादिसहितमहंत्वमित्यर्थः। **एवकारो**ऽन्यथासिद्ध्यपोहार्थः। ज्ञातृत्वाहंत्वे मिथ्याभूते अनात्मधर्मौ च, सुषुप्त्यादावभातत्वात् मनुष्यत्वादिवदिति प्रयोगः। स्वरूपासिद्धोऽयं हेतुरिति वादिनं प्रत्याह—**तत्रेति**। हिर्हेतौ शास्त्रप्रसिद्धौ वा। "नाहं खलु" इत्यादिभिः सुषुप्तावहंधीनिवृत्तिः सिद्धा; मुक्तौ च "अहंकारं बलं दर्पम्" इत्यादिभिः। न केवलं शास्त्रेण; प्रबुद्धस्य सुषुप्तावस्थात्मपरामर्शप्रकाराच्च

तदानीमहंधीनिवृत्तिमाह—**अत एवेति** । अत्रापि **अत** इति साध्यपरम् । " यदप्याहुः " इत्यादिना प्रपञ्चितं वस्तुसामर्थ्यं परमप्रकृतकर्मनैरपेक्ष्यव्यक्त्यै निगमयति—**तस्मादिति** ; प्रमाणैस्तदनुग्राहकैश्च स्थापनादित्यर्थः । अत्र निर्विशेषं प्राप्यम् । नित्यप्राप्ते तस्मिन्नोपासनादिसाध्या प्राप्तिः । निवर्त्यं मिथ्याभूतज्ञानम् ; तन्निरासे च ज्ञानातिरिक्तं नापेक्ष्यम् । निवर्तकं वाक्यजन्यमैक्यज्ञानम् ; तच्च स्वोत्पत्तौ स्वफले वा न कर्मापेक्षमिति वस्तुत्रयसामर्थ्यनिष्कर्षः । **निरस्ते**त्यादिना सजातीयविजातीयनिवृत्तिः । **भेदविकल्पः** ; तद्वैचित्र्यम् , तद्भ्रमो वा । **निर्विशेषेति** स्वगतव्युदासाय । **चिन्मात्रैकरस**शब्दः प्राग्वत् । ज्ञातृज्ञेयादयो **विवर्ताः** । **भ्रान्त्या विवर्तते** ; भ्रमगोचरमिथ्याभूतविकारवती भवतीत्यर्थः । तच्छब्देन भ्रान्तिः परामृश्यते । **शुद्धमुक्त**शब्दौ अविद्यातत्कार्यनिवृत्त्यर्थौ । **प्रतिपत्तये** ; प्राप्तय इत्यर्थः । **सर्वे वेदान्ताः** ; कारणपराः तच्छोधकाः तदैक्यबोधकाश्च । तेषामारभ्यत्वमिह विचारद्वारा । **इतिः** प्रकारे । 'इति यदप्याहुः' इत्यन्वयः । सकारणस्य संसारस्य सत्यत्वेन ज्ञानबाध्यत्वाभावान्न तदर्थं शास्त्रमारभ्यमित्यत्र तस्य मिथ्यात्वेन धीबाध्यत्वात्तत्प्रधानं शास्त्रमारभ्यमिति परोपन्यस्तवस्तुसामर्थ्यमिह स्पष्टीकृतम् ।

तस्मादनुपयुक्तत्वाद्विरोधाच्चात्र कर्मणः ।
तच्चिन्तावृत्तता नेति वाक्यशेषो मनस्कृतः ॥

### मूलभावप्रकाशिका

**यत इति** ; यतो ज्ञातृत्वमनात्मभूताहमर्थधर्मः, अत एव चिन्मात्रात्मनो नापारमार्थिको धर्म इति भावः । **अत एवेति** ; यतोऽहमर्थो नात्मा, अत एवेत्यर्थः । अहमर्थस्यैवात्मत्वे सुषुप्तिमूर्छयोरप्यहमर्थस्यानुवृत्तिः स्यादिति भावः ।

---

॥ इति महापूर्वपक्षः ॥

# महासिद्धान्तः

## श्रीभाष्यम्

तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणामनादिपापवासनादूषिताशेषशेमुषीकाणामनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम् ।

## श्रुतप्रकाशिका

अथ कर्मविचारपूर्ववृत्तत्वविरोधिवस्तुसामर्थ्यनिरासार्थं परोक्तानामुपायोपेयनिवर्त्यानां प्रमाणतर्काभासमूलत्वं प्रतिजानाति—**तदिदमिति** ; स्वाभिमतानामेव तेषां प्रमाणतर्कोपपन्नतां च संक्षेपेण प्रतिजानाति । अर्थाद्बहुशास्त्रज्ञानां बहुग्रन्थकाराणामपि परेषां स्खलनानुपपत्तिशङ्कां च सम्यग्ज्ञानोत्पत्तिसामग्रीवैकल्यप्रतिपादनमुखेन परिहरति—**तदिदमित्यादिना** । **परमपुरुष**शब्देनोपेयम् , **वरणीयते**त्यादिनोपायम् , **अनादी**त्यादिना निवर्त्यम् , **अनधिगते**त्यादिना परपक्षनैर्मूल्यं , **न्यायानुगृहीते**त्यादिना स्वपक्षस्य समूलताम् , अर्थतोऽनेकविद्वत्परिग्रहं च प्रतिजानीते—**तदिदमिति** ; अनन्तरवाक्यप्रकृतं परोक्तोपायोपेयनिवर्त्यत्रयं विवक्षितम् । **औपनिषदपरमपुरुष**शब्देन " तं त्वौपनिषदं पुरुषं विद्धि " इति श्रुतिं स्मारयति । एतेनास्मदभिमतः प्रमाणप्रमेयविशेषसंबन्धः श्रुत्यैवोक्त इति सूचयति । परमशब्देनेश्वरातिरिक्ततत्त्वव्यावृत्तिः । **वरणीयताहेतुगुणविशेषविरहिणा**मित्यनेन " यमेवैष वृणुते तेन लभ्यः " इत्यभिमतोपायविशेषकथनं फलितम् । अनेन पदेन बहुशास्त्रज्ञबहुग्रन्थकाराणां भ्रमानुपपत्तिशङ्का च परिहृता भवति, सम्यक्शास्त्रार्थज्ञानोत्पत्तौ भगवद्भक्तेरपि सामग्र्यन्तर्भावेण केवलशास्त्रपरिश्रमस्य विकलहेतुत्वात् । यथा—" यस्य देवे परा भक्तिः " इत्यादिका श्रुतिः ; स्मृतिश्च—

"विद्या राजन्न ते विद्या मम विद्या न हीयते ।
विद्याहीनस्तमोध्वस्तो नाभिजानासि केशवम् ॥

धृतराष्ट्रः—

गावल्गणे ते का विद्या या ते विद्या जनार्दने ।
यथा त्वमभिजानासि त्रियुगं मधुसूदनम् ॥

संजयः—

मायां न सेवे भद्रं ते न वृथा धर्ममाचरे ।
शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥"

इति । अत्र भक्त्या शुद्धभावं गतः शास्त्राद्वेद्मि जनार्दनमित्यनेन यथावच्छास्त्रार्थज्ञानोदयस्य भक्तिसापेक्षत्वं सिद्धम् ।

"जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥
पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः ।
रजसा तमसा चास्य मानसं समभिप्लुतम् ॥"

इति वचनाच्च तत्त्वार्थज्ञानस्य भक्तिप्रीतभगवत्कटाक्षसापेक्षत्वं ज्ञायते । ननु "यथा त्वमभिजानासि" "भक्त्या वेद्मि" इति प्रश्नप्रतिवचनाभ्यां विद्याभक्तिशब्दयोरैकार्थ्यं प्रतीयते; भक्तिरूपा च विद्या मोक्षायेति प्रागुपपादितम्; ततश्च शास्त्रज्ञानमूला भक्तिः, भक्तिमूलं शास्त्रज्ञानमित्यन्योन्याश्रय इति चेत्—नैवम्; श्रवणवेलायामेव पदार्थतयावगम्यमानेषु परमात्मगुणादिष्वनुकूलबुद्धिगोचरत्वात् विद्याभक्तिशब्दयोस्तेन सम्यग्वाक्यार्थनिर्णयलाभः । पूर्वपक्षतयोपन्यस्यमानेऽपि सुगताभिमतवेदाप्रामाण्यादौ हि भवति प्रद्वेषो वैदिकानाम्; भगवद्गुणादिष्वनुरक्तचित्तता भवति । न चैषा साक्षात्कारकल्पनिरन्तरध्यानरूपा भक्तिः । अतो नान्योन्याश्रयः । अथ शास्त्रार्थयाथात्म्यज्ञानोत्पत्तिहेतुभूतभक्तिविरोधिनमाह—**अनादीति** । यद्वा सम्यग्ज्ञानहेतुभूतभक्त्यभावात् सम्यग्ज्ञानविरोधिपापानुबन्धमाह—**अनादीति** । **वासना**शब्देन पापस्य दृढमूलत्वेन दुर्निरासत्वमुक्तम् । वासनया पापं, पापेन वासना; अज्ञानेन पापवासना, पापवासनया अज्ञानमिति चान्योन्याश्रयपरिहारायानादिशब्दः । **शेमुषी**; मोक्षोपयोगि ज्ञानम् । अशेषशब्दस्यो-

पायोपेयनिवर्त्यविषयविध्वशेमुषी दूषितेति भावः। अनेनार्थात् स्वपक्षे निवर्त्यं चोक्तं भवति, कर्मण एव मोक्षप्रतिबन्धकत्वात्। दूषितशेमुषीकत्वफलं सम्यग्ज्ञानाभावमाह—**अनधिगतेति**। प्रत्यक्षविरोधे शास्त्रप्राबल्यस्य परेणोक्तत्वात् पदशः समुदायेन च सविशेषपरत्वप्राधान्येन च प्रथमं शब्दप्रमाणमाह—**पदेति**। प्रकृतिप्रत्यययोगेन पदत्वमिति न ज्ञातमिति पदशब्दस्य भावः। **वाक्यस्वरूपेति**; वाक्यमनेकपदार्थसंसर्गविशेषाभिधायीति च न ज्ञातमिति भावः। **तदर्थयाथात्म्यम्**; तात्पर्यविषयः। **प्रत्यक्षादीति**; आदिशब्दादनुमानम्। सकलशब्देन स्पार्शनचाक्षुषादिप्रत्यक्षावान्तरभिदा विवक्षिता; अन्वयव्यतिरेकाद्यनुमानावान्तरभिदा च विवक्षिता। यद्वा तत्तद्वाद्यभिमतार्थापत्त्यादिप्रमाणान्तरविषयः सकलशब्दः। **वृत्तम्**; बोधनम्। **तदितिकर्तव्यतारूपेति**; तर्केण प्रमाणबाधवचनात् प्रमाणानुग्राहकस्तर्क इति च न ज्ञातमिति भावः। प्रमाणानुग्राहकतयैव हि वयं तर्कमङ्गीकुर्म इत्यत्राह—**समीचीनन्यायेति**। अनुग्राहकबुद्ध्या स्वीकृतस्यापि तर्कस्य प्रमाणविरुद्धत्वात् सोऽसमीचीन इति भावः। अपच्छेदनयादिसमीचीनन्याया एव हि स्वीकृता इत्यत्राह—**न्यायमार्गाणामिति**। अयमपच्छेदन्यायविषयः, अयं सामान्यविशेषन्यायविषय इति तत्तन्न्यायसंचारविषयविभागोऽपि नावगत इति भावः। तर्हि किमवलम्ब्य प्रबन्धाः कृता इत्यत्राह—**विकल्पासहेति**। **कुतर्काः**; प्रमाणविरुद्धा मूलशैथिल्यमिथोविरोधादिदोषान्तराक्रान्ताश्च तर्काः। ते च त्रिचतुरपदस्थायिनोऽपि न भवन्ति; किंतु विकल्पितान्यतरशिरःपरिग्रह एव भङ्गुरा इत्यत्राह—**विकल्पासहेति**। तर्कस्य विकल्पासहत्वं नाम तद्विषयसाधनादिविकल्पासहत्वमेव। **विविधेति**; 'ब्रह्मणोऽनुभाव्यत्वेऽननुभूतित्वम्' 'प्रत्यक्षं सन्मात्रग्राहि' 'वेदान्तवेद्यं ब्रह्म प्रमाणान्तरागोचरम्' इत्यादिरूपं कुतर्काणामन्योन्यव्याहतिवैविध्यं विवक्षिम्। ईदृशकुतर्का एव **कल्कम्**; असारभूतं बौद्धैरात्तसारमृजीषमित्यर्थः। एतेन **कल्पितम्**; उत्कीर्णम्। इतिर्हेतौ; केषांचित्समीचीनार्थान्तरविषयज्ञाने सति ह्यस्यासमीचीनत्वनिश्चय इत्यत्राह—**न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरिति**। अनेन पूर्वोक्तविपरीताकार उक्तः। बहुवचनेन स्वपक्षस्य भगवद्बोधायनाद्यनेकशिष्टपरिग्रहः सूचितः। **अनादरणीयमिति**; शिष्यशिक्षासु पूर्वपक्षोपन्यासकौशलार्थमप्यादर्तुमयोग्यमित्यर्थः। "अशेषविशेषप्रत्यनीकचिन्मात्रम्" इत्यारभ्य "सर्वे वेदान्ता आरभ्यन्ते" इत्यन्तेन यदप्याहुस्तदनादरणीयमित्यन्वयः।

### भावप्रकाशिका

**प्रतिजानाति—तदिदमितीति**; वक्तुमुत्कण्ठत इत्यर्थः। "संप्रतिभ्यामनाध्याने" इत्याध्याने प्रतिषेधादात्मनेपदं न भवति। आध्यानमुत्कण्ठा। अत्र च प्रतिपूर्वस्य जानातेरुत्कण्ठार्थत्वस्य विवक्षितत्वात्। **प्रतिजानीते** इति पाठः सुगम एव। केचित्तु 'परमपुरुषशब्देनोपेयम्' इत्यादिग्रन्थे 'प्रतिजानाति' इति पाठो युक्तः, अर्थौचित्यात्; तत्र परमपुरुषादिशब्दैः स्मरणमात्रस्य युक्तत्वात्। इह तु 'प्रतिजानीते' इत्येव युक्तम्। लेखकदोषवशादिदं व्यत्यस्तमिति वदन्ति। **प्रमाणप्रमेयविशेषसंबन्ध इति**; प्रमाणविशेष उपनिषत्, प्रमेयविशेषः परमपुरुषः, तयोः प्रतिपाद्यप्रतिपादकभावः संबन्धः "तं त्वौपनिषदं पुरुषम्" इति श्रुत्यैव स्पष्टीकृत इत्यर्थः। **अत्र भक्त्या शुद्धभावं गत इति**; न च 'भक्त्या शास्त्राद्वेद्मि' इत्येवान्वयोऽस्तु, न तु 'भक्त्या शुद्धभावं गतः' इति भक्तेर्भावशुद्धिहेतुतयेति वाच्यम्, शास्त्रादित्यनेनैव हेत्वाकाङ्क्षाशान्त्या तत्र भक्तेर्हेतुत्वेनानन्वयात्; भावशुद्धेर्हेतुसाकाङ्क्षत्वाच्च 'भक्त्या शुद्धभावं गतः' इत्येवान्वय इति भावः। अनादिपापवासनेत्यादिकमौपनिषदेत्यादिपूर्वविशेषणहेतुत्वेन व्याख्यायेदानीं कार्यत्वेन व्याचष्टे—**यद्वा सम्यग्ज्ञानेति**। **दुर्निरासत्वमिति**; दुःखेन निरासो यस्येति बहुव्रीहिः; दुर्निरसत्वमिति पाठः सुगम एव। **यद्वा तत्तद्वाद्यभिमतेति**; अयं भावः—सकलाभिमतं प्रमाणं सकलप्रमाणम्; येन येन यदभिमतं तत्सर्वमित्यर्थः। अत एव भाष्ये वक्ष्यति—'प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषयः' इति। प्रत्यक्षादि च सकलप्रमाणं चेति द्वन्द्वः; न तु कर्मधारय इति भ्रमितव्यम्, तथात्वेऽर्थापत्त्याद्यसंग्रहापत्तेः। आदिशब्दादनुमानमिति प्रागुक्तेः। यद्वा आदिपदेनासंकोचेनार्थापत्त्यादिप्रमाणान्तरस्यापि परिग्रहार्थः सकलशब्द इति।

### श्रुतप्रदीपिका

अथ परोक्तोपायोपेयनिवर्त्यानां मानतर्कापेततां स्वाभ्युपगतानां तु तदुपपन्नतां च प्रतिजानन् बहुशास्त्रज्ञानां बहुग्रन्थकृतां स्खलनासंभवं च सम्यग्ज्ञानसामग्र्यवैकल्यप्रदर्शनेन परिहरति—**तदिदमित्यादिना**। **तदिदम्**; परोक्तोपायादित्रिकम्; 'आरभ्यन्त इति यदप्याहुस्तदिदमनादरणीयम्' इत्यन्वयः। "तं त्वौपनिषदं पूरुषं विद्धि" इति श्रुतिं स्मारयति—**औपनिषदेति**। उत्तीर्णव्युदासाय परमशब्दः। इत्युपेयम्। उपा-

यमाह—**वरणीयतेति** । निवर्त्यमाह—**अनादीति** । "शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि" "यस्य देवे परा भक्तिः" इति च भक्तेः सम्यग्धीहेतुत्वात् तद्विरहः सामग्रीवैकल्यमिति भावः । भक्त्यभावहेतुं वा भक्तिनिरसनीयं तदभावादनुवृत्तं वाह—**अनादीति** । पापाज्ञानयोस्तद्वासनयोश्चान्योन्याश्रयपरिहारायानादिशब्दः । उपायादित्रयविषयबुद्धयोऽशेषशब्दोक्ताः । शेमुषीदोषफलमाह—**अनधिगतेति** । शास्त्रप्राथम्यं सविशेषपरत्वातिशयात् पराभिमतप्राबल्याच्च । आदिशब्दादनुमानम् । प्रत्यक्षानुमानयोरवान्तरभिदापरः सकलशब्दः । **वृत्तम्** ; बोधनम् । अर्थभेदवत्प्रकृतिप्रत्ययात्मकं पदम् ; तत्समुदायात्मकं वाक्यम् ; तस्यार्थयाथात्म्यं तात्पर्यम् ; प्रत्यक्षादेः स्वरसवृत्तिः ; न्यायानां मानानुग्राहकत्वम् ; तथाभिमानेऽपि स्वोक्तानां मानबाधकत्वम् ; तेषामुचितविषयविशेषाश्चेत्येतत्सर्वं चानधिगतमित्यर्थः । तर्हि किमवलम्ब्य कृतमित्यत्राह—**विकल्पेति** । प्रथमकक्ष्यायामेव भङ्गुरैर्व्याहतैर्बौद्धाद्यात्तसारतया ऋजीषैः कुतर्कैः कल्पितमित्यर्थः । स्वमतस्य मानतर्कोपपन्नतां बोधायनटङ्कादिबहुशिष्टपरिग्रहं चाह—**न्यायेति** । **अनादरणीयम्** ; आदर्तुमयोग्यम् ।

## नयप्रकाशिका

तदेतदनुपपन्नम् , तयोरैक्यादेः साधितत्वात् । न च पूर्वोत्तरभागयोः पौर्वापर्ये न प्रमाणमिति वाच्यम् , लिङ्गप्रमाणस्योक्तत्वात् । कथम् ? अध्ययनतः प्रथमं धीस्थाः कर्मपराः श्रुतय इति तद्विचारप्राथम्यादेरुक्तत्वात् ; केवलकर्मज्ञानस्य विरक्तिहेतुत्वादिभिश्च । न च कर्मानधिगमेऽपि ब्रह्मविचारोपपत्तिः, कर्मफलानां क्षयित्वानिश्चये तत्र प्रवृत्त्यनुपपत्तेः । न हि विचारव्यतिरेकेण तत्क्षयित्वादिनिश्चयः । उद्गीथादिविद्यानामभ्युदयफलत्वेऽपि ब्रह्मकाण्डान्तर्विचारात्कर्मविचारापेक्षा, विचारमात्रस्यापि तदपेक्षत्वात् । तद्विद्यानामपि मोक्षोपायविद्याङ्गत्वमप्यस्तीत्युक्तम् । कर्मणां विद्याङ्गत्वाच्च तज्ज्ञानापेक्षा । विद्याङ्गत्वं च "यज्ञेन" इत्यादिश्रुतेः । न च सकलभेदोपमर्दित्वाद्ब्रह्मज्ञानस्य कर्मणो भेदावलम्बित्वाद्विरोधः, ब्रह्मज्ञानस्य भेदोपमर्दित्वाभावात् । तच्चोत्तरत्र वक्ष्यते । न च वेदनमात्रस्य मोक्षोपायत्वश्रवणात् "न कर्मणा न प्रजया" इत्यादौ कर्मत्यागश्रवणाच्च न कर्मापेक्षेति वाच्यम्, "तमेवं विद्वान्" इत्यादौ वेदनस्योपायतामात्रावगतेः । न तु स्वाङ्गकर्मनिवृत्तिप्रतीतिः । किंच साङ्गवेदनस्योपायत्वाद्वेदनस्योपायत्वाभिधानेऽपि न विरोधः, प्रधानस्यैव साधनत्वात् ।

केवलज्ञानस्यैवोपायत्वे शमादेरप्यङ्गता न स्यात्। कर्मत्यागश्रुतिः कर्तृत्वममताफलत्यागपरा; तच्च "सङ्गं त्यक्त्वा फलं चैव" इत्यादिस्मृतेः। इतिहासपुराणाभ्यां हि वेदोपबृंहणम्।

"यैः स्वधर्मपरैर्नाथ नरैराराधितो भवान्।
ते तरन्त्यखिलामेतां मायामात्मविमुक्तये॥"

इति कर्मसहितज्ञानस्यैव मोक्षसाधनत्वश्रवणात्। न च तत्र केवलकर्मण एव मोक्षसाधनत्वप्रतीतिरिति वाच्यम्, परमात्मसमाराधनत्वेनानुसंधानात् परमात्मज्ञानस्यानुसंहितत्वात् "वर्णाश्रमाचारवता" इत्यादौ मार्गान्तरनिषेधाच्च। परमात्मप्रसादादेव हि मोक्ष इति "ततो ह्यस्य बन्धविपर्ययौ" "फलमत उपपत्तेः" इत्यादिषूक्तम्। "मयि सर्वाणि कर्माणि" इत्यादौ सर्वकर्मणां स्वाराधनतामभिधाय "ये मे मतम्" इत्यनेन शास्त्रीयकर्मकारिण एव कर्ममोक्षस्य भगवताभिहितत्वात्। "ये त्वेतत्" इत्यनेन विपरीतकारिणो निन्दितत्वाच्च। "सर्वापेक्षा" इत्यादौ यज्ञादेर्विद्याङ्गत्वस्य प्रसाधितत्वात्, आप्रयाणादहरहरनुष्ठेयत्वप्रसाधनाच्च। न च कर्मणां परंपरयोपायत्वकथनमात्रपरत्वं तत्सूत्राणां "यज्ञेन" इत्यादिश्रुतेश्चेति वाच्यम्; तत्र पारंपर्येणोपायत्वाप्रतीतेः। न च "विविदिषन्ति" इति विविदिषायामेव विनियोगात्तत्प्रतीतिरिति वाच्यम्, अत्रेच्छाया ज्ञानप्रधानत्वेन ज्ञानाङ्गविधिपरत्वस्यैव युक्तत्वात्। न च प्रधानस्यापि वेदनस्य शब्दप्रकृत्यर्थत्वेनाप्रधानत्वात् इच्छायाश्च प्रत्ययार्थत्वेन प्राधान्यमिति वाच्यम्, प्रत्ययांशस्यैव प्रधान्यमिति न नियमः; किंतु समभिव्याहारतो वा तात्पर्यतो वा प्रकृत्याद्यन्यतरस्य प्राधान्यनिश्चयः। प्रत्ययार्थप्राधान्ये "पाशान्" इति प्रत्ययानुरूपं "अदितिः पाशान्" इति मन्त्रस्योत्कर्षः स्यात्। तत्र प्रकृत्यंशस्यैव प्राथम्यादाश्रयत्वाच्च प्राधान्यमित्यनुत्कर्ष उक्तः। न च तत्र सुबन्तत्वात् तथेति वाच्यम्, "व्रीहीन् प्रोक्षति" इत्यादौ प्रोक्षणस्य प्राधान्यापत्तेः। तत्र व्रीहीणां प्राधान्यमुक्तम्। न च तत्र द्वितीयाविभक्तिसामर्थ्यात्प्राधान्यमिति वाच्यम्, "सक्तून् जुहोति" इत्यादावपि तथात्वापत्तेः। अतो वेदनस्य प्रधानत्वनिश्चयेऽन्वययोग्यत्वे च तदर्थ एव यज्ञादिः। 'राजपुरुषमानय' इत्यादौ त्वभिप्रायवशादानयनकार्यानन्वयो राज्ञः। वेदे तु नाभिप्राय इत्याकाङ्क्षादिरेवान्वयकारणम्। एवं च वेदनस्य न प्राधान्यहानिः। प्राधान्याहानादेवार्थसंभवे नान्यार्थता युक्ता। किंच "ब्रह्म-

जिज्ञासा " इत्यत्रापि प्रत्ययार्थस्यैव स्वीकार्यता स्यात् । तत्र तु मिथ्यावादिनोऽपि ज्ञानप्राधान्यमिष्टम् । यज्ञादिकर्मणां परंपरोपयोगे च न प्रमाणम् ; प्रत्युत " सत्त्वशुद्धौ ध्रुवा स्मृतिः " इत्यादौ सत्त्वशुद्ध्यापादनद्वारेण वर्णाश्रमाचाराहारशुद्ध्यादेर्विद्योत्पादकत्वमेव श्रूयते । तच्छुद्धिः कर्मणैवेत्युक्तम् । न चाङ्गत्वे संन्यासिनामपि ज्योतिष्टोमाद्यनुष्ठानं स्यात्, यज्ञेषु प्रयाजादेरिवेति वाच्यम्, तेषामपि जपयज्ञादेर्विद्यमानत्वात् । न हि ज्योतिष्टोमादिविशेषश्रुतिः । " यज्ञेन " इत्यादौ येषां हि यद्यज्ञेऽधिकारः तद्यज्ञानामेव तद्विद्याङ्गत्वम् । न हि केवलवर्णाश्रमाचारमात्रता तेषाम्, तत्र संन्यासिधर्मप्रकरणे जपोपवासादेर्विधीयमानत्वात् । आश्रमकर्मणां सन्ध्यावन्दनादीनां तु तदधिकारापादनमात्रत्वमेव, " सन्ध्याहीनोऽशुचिर्नित्यम् " इत्यादिस्मृतेः । न च संन्यासाश्रमस्य मोक्षार्थत्वात् तत्र च यज्ञोपवीतादेः सर्वकर्मणां च " अथ परिव्राट् " इत्यादौ त्यागस्य श्रवणात् स्मरणाच्च न विद्योपयोगिता कर्मणामिति वाच्यम्, सर्वकर्मणां त्यागाप्रतीतेः; संन्यासाश्रमस्य मोक्षैकफलत्वनियमाभावाच्च ; " ब्राह्मं संन्यासिनां स्मृतम् " इत्यादावर्वाचीनफलश्रवणात् ; " एकान्तिनः सदा ब्रह्म " इत्यादावविशेषेण सर्वाश्रमिणां ब्रह्मध्यानादपुनरावृत्तिश्रवणादुत्तरत्र तथैव प्रसाधितत्वाच्च । संन्यासाश्रमिणामेव मोक्षसद्भावे हि गृहस्थाश्रमिणो ज्ञानसद्भावेऽपि न मुक्तिः स्यात् । तथात्वे आश्रमस्यैव मोक्षप्रयोजकत्वं, न ज्ञानस्य । कर्मणां तु त्याज्यत्वे आश्रमकर्मणोऽपि त्यागः स्यात् । अथाश्रमकर्मणो विहितत्वादनुष्ठानमिति चेत्, तर्हि न सर्वकर्मत्यागः । न च यज्ञोपवीतत्यागः, श्रुतेरभावात् । " अयज्ञोपवीती कथं ब्राह्मणः " इति तु प्रक्षिप्तमेव, पूर्वं त्यागवचनाभावादनुपपत्तेः । " अथ प्रव्रजेत् " इति पूर्वं सर्वकर्मत्यागवचनसद्भावात् यज्ञोपवीतस्यापि त्यागसिद्धिरिति चेत्—न ; तत्र सर्वत्यागवचनाभावात् ; तथात्वे विवर्णवासस्त्वादेरपि त्यागः स्यात् । अथ विवर्णवासस्त्वं विधीयत इति चेत्—न ; प्रतिषिद्धविधानेन विकल्पापत्तेः । अथ पर्युदासविधिरिति चेत्—न; विवर्णवासस्त्वमुण्डत्वादेरप्राप्तत्वात् । "अथ परिव्राडेकशाटी" इत्यादिश्रुतावयज्ञोपवीतत्वं विधीयत इति चेत्—न ; तादृशश्रुतेरदृष्टचरत्वात् । तादृशश्रुतिसद्भावेऽपि तस्याः पूर्वधृतयज्ञोपवीतत्यागमात्रपरत्वमेव, न संन्यासाश्रमाङ्गयज्ञोपवीतत्यागपरत्वम् " नखानि निकृत्य पुराणयज्ञोपवीतवसनकमण्डलूंस्त्यक्त्वा नवानि गृह्णीयात् " इति स्मृतेः । न चैवंविधस्मृतिर्न दृष्टचरेति वाच्यम्, गौतमभाष्यकारादिभिरुपात्तत्वात् । संन्यासप्रकरण एव

"तच्छंयोरावृणीमहे" इति यज्ञोपवीतं गृह्णीयादिति कात्यायनस्मरणात् । "नखानि निकृत्य यज्ञोपवीतं विसृजेत्" इत्यादिजाबालश्रुतेरप्ययमेवार्थः । तच्छ्रुतेरनुवादेन "नखानि निकृत्य पुराणयज्ञोपवीतम्" इत्यादिस्मृतेर्विशेषविधिपरत्वात् । न च श्रुतिविरोधात् स्मृतेस्त्याज्यतेति वाच्यम्, विरोधाभावात् । एकस्यैव त्याज्यत्वधार्यत्वविधावेव हि विरोधः, न त्वन्यत्यागविधावन्यग्रहणविधौ च । न च त्यागवचनादेव न धार्यत्वमिति वाच्यम्, काषायवसनस्यापि तथात्वापत्तेः । अथ तत्र विधानात् ग्रहणमिति चेत्, यज्ञोपवीतादेरपि तथा विधानादेव ग्रहणमिति समः समाधिः । अथ श्रौतार्थस्य न स्मृतिविहितार्थापेक्षेति चेत्—न; युञ्जनादिमन्त्राणां स्मार्तानुष्ठानशेषत्वाभावापत्तेः; गार्ह्यकर्मानुष्ठानोच्छेदापत्तेश्च । अतो विप्रकीर्णशाखामूलत्वेन स्मर्तृभिः सर्वशाखान्यायेन विहितसर्वाङ्गोपसंहारः कार्य एव । न हि संन्यासिनां ताम्बूलचर्वणादिनिषेधवत् "न यज्ञोपवीतं बिभृयात्" इति शास्त्रं विद्यते । किंच "आचमने यज्ञोपवीती स्यात्" इत्याचमनाङ्गत्वविधानाच्च न यज्ञोपवीतत्यागः । नन्वाचमनाङ्गत्वेन शिखित्वविधावपि छन्दोगादेः "मुण्डः शिखी वा" इत्यादिवचनात् शिखाव्यतिरेकेणाचमनादिसिद्धिवदत्रापि परमहंसाधिकारिण आचमनादिसिद्धिरस्त्विति चेत्—न; मुण्डत्वे वचनवत् "यज्ञोपवीतं न धारयेत्" इति वचनाभावात् । "यज्ञोपवीतं विसृजेत्" इति वचनस्य गतिरुक्ता । 'यज्ञोपवीती वा' इति न विकल्पश्रवणं "मुण्डः शिखी वा" इतिवत्, येन यज्ञोपवीतग्रहणवाक्यस्यान्यपरता कल्प्येत । तस्मात् "यज्ञोपवीत्येवाधीयीत" इत्यादिश्रुतेश्च तद्धारणस्यावश्यकता, संन्यासिनोऽप्यध्ययनस्यात्याज्यत्वात् "वेदमेकं न संन्यसेत्" इति वचनात् प्रणवाभ्यासाङ्गीकाराच्च । प्रणवोऽपि हि वेद एव । किंच यथार्थमेव हि यज्ञोपवीतम्, संन्यासिनोऽपि ध्यानयज्ञसद्भावात् । "ध्यानयज्ञपरो नित्यम्" "ज्ञानयज्ञेन चाप्यन्ये" इत्यादिस्मरणात् ध्यानस्य यज्ञत्वम् ।

"आरण्यवृत्तस्य जितेन्द्रियस्य सर्वात्मकप्रीतिनिवर्तकस्य ।
अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्य ॥"

इत्यादिस्मृतेः संन्यासिनां ध्यानस्य कर्तव्यता सिद्धा । वाक्यार्थज्ञानार्थत्वेनापि ध्यानस्याङ्गीकृतत्वाच्च । किंच वसिष्ठेन संन्यासप्रकरणे "यज्ञोपवीत्युदकमण्डलुहस्तः" इति यज्ञोपवीतस्मरणाच्च ।

" ब्रह्मसूत्रं त्रिदैवत्यं ब्रह्मविष्णुशिवात्मकम् ।
परित्यजन्ति ये विप्रा मोहात्तर्कोपजीविनः ॥
स्वर्गापवर्गमार्गाभ्यां प्रच्युतास्ते न संशयः ।"

इत्यादिस्मरणाच्च ।

" ब्रह्मसूत्रपरित्यागाद् ब्रह्मचारी गृही वनी ।
परिव्राट् चापि पतितस्तस्मात्तन्न परित्यजेत् ॥"

इत्युशनःस्मृतेश्च । अतः संन्यासिनां यज्ञोपवीतधारणमेव स्मृतिषु दृश्यते, न तु विपरीतम् । बोधायनीये यज्ञोपवीतत्यागवचनमपि पूर्वधृतयज्ञोपवीतविषयमेव । अथवा पितृयज्ञस्य दर्शाङ्गत्ववचनवत् पूर्वपक्षनयमूलम् । तथैकदण्डस्मरणमपि, बहुस्मृतिविरोधात् । अतस्त्रिदण्डमेव धार्यं यतिभिः ।

" त्रिदण्डेन यतिश्चेति लक्षणानि पृथक्पृथक् ।"

इति दक्षेणाश्रमलक्षणाभिधाने संन्यासिनस्त्रिदण्डस्यैव लक्षणत्वेनाभिधानाच्च । लक्षणं ह्यसाधारणो धर्मः । एकदण्डस्य पाक्षिकत्वेनापि यतिलक्षणत्वे 'एकदण्डेन वा' इति लक्षणाभिधानं स्यात् । नैतदस्ति ।

" त्रिदण्डं वैष्णवं लिङ्गं विप्राणां मुक्तिसाधनम् ।
निर्वाणं सर्वधर्माणामिति वेदानुशासनम् ॥"

इति दत्तात्रेयस्मरणाच्च । एवं सर्वत्र त्रिदण्डमेव हि स्मर्यते । यद्यपि "मुण्डः शिखी वा" इत्याद्यनेकस्मृतिषु मुण्डत्वस्य शास्त्रार्थत्वप्रतीतिः, तथापि तन्नास्मदीयैरनुष्ठेयम् ; अस्मदाचार्याननुष्ठानात् । "येनास्य पितरो याताः" इत्यादिस्मरणात् तदाचारश्चानुसरणीयः, विपरीतस्तु वर्ज्यः । "अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु" इत्यादिस्मरणात् शिष्टलोकगर्हितार्थस्य वर्जनीयत्वात् । ननु त्रिदण्डयज्ञोपवीतादेर्ग्रहणस्य कुटीचकबहूदकादिविषयतास्तु ; तत्त्यागवचनस्य परमहंसविषयतास्तु ; एवं च सर्वत्यागश्रुतेश्च न बाध इति चेत्—न ; सर्वत्यागश्रुत्यभावस्योक्तत्वात् । "न कर्मणा" इत्यादिश्रुतेस्तु फलत्यागादिपरत्वाभिधानात् । कर्मपरित्यागमतस्य कुदृष्टित्वेनापस्तम्बेन "सर्वतः परिमोक्षमेके । सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् । बुद्धे क्षेमप्रापणम् । तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत" इति प्रतिषिद्धत्वाच्च ।

एतत्स्मृत्यैव मिथ्यावादिपक्षस्य सोपस्करस्य शास्त्रविरुद्धत्वमनुपपन्नत्वं चोक्तम् । परमहंसानामितरेषां चाविशेषेण पराशरस्मृतौ त्रिदण्डस्यैव लक्षणत्वेनाभिधानात्—"तत्र परिव्राजकाश्चतुर्विधा भवन्ति—कुटीचकाः, बहूदकाः, हंसाः, परमहंसाश्चेति । तत्र कुटीचका नाम पुत्रादिभिः कुटीं कारयित्वा कामक्रोधलोभमोहमदमात्सर्यादीन् परित्यज्य विधिवत्संन्यासं कृत्वा त्रिदण्डजलपवित्रकाषायवस्त्रधारिणः स्नानशौचाचमनजपस्वाध्यायब्रह्मचर्यध्यानतत्पराः पुत्रादेरेव भिक्षाकालेऽन्नं यात्रामात्रमुपयुञ्जानास्तस्यां कुटौ नित्यं वसन्त आत्मानं मोक्षयन्ते । बहूदका नाम त्रिदण्डकमण्डलुजलपवित्रपात्रशिक्यकाषायवस्त्रधारिणो वेदार्थावबोधकाः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षचर्यां चरन्त आत्मानं मोक्षयन्ते । हंसा नाम त्रिदण्डजलपवित्रशिक्ययज्ञोपवीतिनो गोमूत्रगोमयाहारा एकरात्रं त्रिरात्रं षड्रात्रं मासोपवासपक्षोपवासकृच्छ्रचान्द्रायणसांतपनमहासांतपनपराकतुलापुरुषादीनि व्रतानि चरन्तो गोद्विजाश्रितेषु पुण्येषु देशेषु वसन्त आत्मानं मोक्षयन्ते । परमहंसा नाम त्रिदण्डजलपवित्रशिक्ययज्ञोपवीतिनोऽन्तर्वासोबहिर्वासोधारिणो ग्रामैकरात्रवासिनो नगरतीर्थावसथेषु पञ्चरात्रवासिनो भिक्षाकाले शीर्णपर्णपुटं कृत्वा ब्राह्मणकुलादेव भैक्षं गृहीत्वा अष्टौ ग्रासानेव भुञ्जानाः सन्ध्योपासनतत्परा नित्यं वृक्षमूले वसन्त आत्मानं मोक्षयन्ते" इति । किंच परमहंसानामेवंविधलक्षणव्यतिरेकेण न लक्षणान्तरस्मरणं दृश्यते । प्रायेण मिथ्यावादिनः श्रौतस्मार्तकर्माणि त्यजतो हारीतशातातपाभ्यामुक्तस्वभावानेव मन्यामहे । तथाहि—त्रिदण्डिनां सर्वाश्रमेभ्योऽप्युत्कृष्टत्वाद्यभिधाय ताभ्यामेवमुक्तम्—

"प्राप्ते कलियुगे घोर इतोऽन्ये क्षुद्रलिङ्गिनः ।
संभविष्यन्ति ते सर्वे गौतमाग्निविदीपिताः ॥

वेदार्थांश्चान्यथा सर्वान् प्रवक्ष्यन्ति कलौ युगे ।
नग्नाः प्रच्छन्नबौद्धाश्च विनिन्दन्ति त्रयीमयम् ॥

रात्रौ वेदरहस्यानि प्रवक्ष्यन्त्यल्पमेधसः ।
भक्षयिष्यन्ति शूद्रान्नं वयं मुक्ता इति छलात् ॥

अन्यानपि स्वधर्मस्थान् प्रेरयिष्यन्ति ते कलौ ।
एकवेणुं समाश्रित्य जीवन्ति बहवो द्विजाः ॥

रौरवे नरके घोरे कर्मत्यागात्पतन्ति ते ।
तस्मात् तान्नालपेत्प्राज्ञो न निरीक्षेत वापि तान् ॥
आलोकनेन तेषां तु शुध्यन्ते भानुदर्शनात् ।
नग्नं वानुपनीतं वा यः श्राद्धे भोजयेद् द्विजम् ॥
रेतोमूत्रपुरीषाणि स पितृभ्यः प्रयच्छति । "

इति । अतः श्रुतिसद्भावेऽपि नैकदण्डस्वीकारः, वेदार्थविप्लावकपरिगृहीतत्वात् ऋषिभिर्निन्दितत्वाच्च । मधुपर्के गोरुपाकरणविधानेऽपि तस्य ऋषिनिन्दितत्वेनाननुष्ठानवत् । अज्ञानादिनैकदण्डपरिग्रहे हारीतशातातपाभ्यामेव विशेष उक्तः—

" प्रेरणादथवा लोभादेकदण्डं समाश्रितः ।
भूयो निर्वेदमापन्नस्त्रिदण्डं धारयेद्बुधः ॥ "

इति । " संन्यसेत्सर्वकर्माणि " इत्यादिरपि प्रकृतगृहस्थाद्याश्रमधर्मपरः, सर्वनामशब्दस्य प्रकृतपरामर्शित्वात् । " संन्यासस्तु महाबाहो दुःखम् " इत्यत्र प्रश्नोत्तररूपेण कर्मानुष्ठानस्य भगवदर्जुनाभ्यां प्रतिष्ठितत्वाच्च न स्वरूपत्यागः; स्वरूपत्यागस्याशक्यत्वाच्च । यथोक्तम्—" न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः " इति । किंच संन्यासाश्रमिण एव मोक्ष इत्युक्तिरपि व्यर्था, अपशूद्राधिकरण आद्यवर्णत्रयस्य मोक्षार्थानुष्ठानाधिकारस्य स्थाप्यमानत्वात् । अत एव कर्मत्यागस्य ज्ञानाङ्गत्वोक्तिरपि व्यर्था । कर्तृत्वादित्यागस्तु सर्ववर्णेष्वपि संभवति । कर्तृत्वादिश्च परमात्माधीन इति वक्ष्यते " परात्तु " इत्यादौ । " क्षीयन्ते चास्य कर्माणि " इत्यादिश्रुतिरपि न विद्याङ्गत्वेनानुष्ठेयकर्मफलक्षयपरा, तत्कर्मणां ज्ञानाङ्गत्वेन पृथक्फलत्वाभावात्; किंतु पूर्वसंचितकर्मक्षयपरेति " तदुत्तरपूर्वाघयोः " इत्यत्रोक्तम् । " अविद्यया मृत्युं तीर्त्वा " इत्यादौ च कर्मणो विद्याङ्गताधीः, विरोधिनिरसनद्वारा विद्याङ्गत्वप्रतीतेः । न च सनत्सुजातवचनात् मृत्युशब्दस्याविद्यापरता, तत्राविद्यापरशब्दाभावात् । प्रमादशब्दस्य त्वनवधानमात्रपरत्वादनवधानस्य पापफलत्वात् पापकर्मपरत्वमेव युक्तम् । न च ब्रह्मव्यतिरिक्तस्य मिथ्यात्वेन ज्ञानबाध्यतया विद्याविरोधिनिरसनाय नोपायान्तरान्वेषणमिति वाच्यम्, पापसत्त्वे विद्योदयस्यैवासंभवात्; ब्रह्मव्यतिरिक्तस्य मिथ्यात्वाभावात् ज्ञानबाध्यत्वासिद्धेश्च । तच्च वक्ष्यते । न च यावद्धर्मविचारं मुमुक्षुणानुष्ठीयमानकर्मानर्थक्यपरिहारायाङ्गत्वपक्षे ब्रह्मविचारस्य प्राथम्यमिति वाच्यम्,

ब्रह्मविचारप्राथम्येऽपि यावत्कर्मस्वरूपस्य न विचारतो निश्चयस्तावदनुष्ठानानुपपत्तेः प्रथममध्ययनक्रमाद्धीस्थत्वेन कर्मणस्तद्विचारस्यैव प्राथम्यम् । ज्ञान्यज्ञानिसाधारणत्वाच्च तद्विचारस्य । न च स्वेष्टसाधन एव प्रवृत्त्युपपत्तेर्न साधारणार्थप्रवृत्तिरिति वाच्यम्, मिथ्यावादिपक्षे तत्त्वावेदकवाक्यार्थज्ञानस्यैव मोक्षोपायत्वात् तावन्मात्रस्यैव विचार्यत्वेनोपासनावाक्यविचारानुपपत्तेर्वेदान्तशास्त्रस्यानारम्भणीयत्वप्रसक्तेः । अथ तस्य तद्वाक्यावधिपरिज्ञानायोपासनविधिविचार इति चेत्, तर्हि स्वानुष्ठेयकर्मावधिपरिज्ञानार्थमन्यकर्मविचार इति समः समाधिः । किंच ब्रह्मविचारस्य प्राथम्ये यावद्ब्रह्मविचारं कर्मानिश्चयेनाननुष्ठाने प्रत्यवायित्वम्; ततश्च पापित्वेनाविद्योदय एव स्यात् । न च नित्यकर्माल्पानुष्ठानात् प्रत्यवायपरिहारः, सामर्थ्यादिसद्भावेऽल्पानुष्ठानस्याशास्त्रार्थत्वात् । असामर्थ्ये ह्यल्पानुष्ठानानुग्रहः । न च वेदनाभावादपरिपूर्णानुष्ठानमिति वाच्यम्, वेदनस्य प्रथमत एव संपाद्यत्वात् । कर्माननुष्ठाने ब्रह्मविद्यानधिकार एव । तच्चापशूद्राधिकरण उक्तम् । न च संन्यासाश्रमधर्ममात्रस्यापि विद्याङ्गत्वसंभवान्नाग्निहोत्रादिविचारोपपत्तिरिति वाच्यम्, गृहस्थस्यापि ब्रह्मविद्याधिकारात् तदर्थत्वेन तद्विचारोपपत्तेः । न च तर्हि संन्यासिनो न तद्विचार इति वाच्यम्, कर्मकाण्डे कर्मणामेवाक्षय्यत्वादिफलश्रवणात् तदनिश्चये ब्रह्मज्ञानप्रवृत्त्यनुपपत्तेः । विचारादेव हि "अक्षय्यं ह वै" इत्यादिश्रुतेरर्थवादत्वनिश्चयः । पूर्वकाण्डन्यायोपयोगाच्च तदपेक्षा । न च तन्न्यायानां सगुणविद्यास्वेवोपयोगात् तासां कर्मान्तर्गतत्वान्न विद्यायास्तदपेक्षेति वाच्यम्, सर्वासां सगुणविद्यात्वात् । तच्चोत्तरत्र वक्ष्यते । किंच वस्तुतस्तासां कर्मान्तर्भावेऽपि ब्रह्मविचारान्तर्विचारितत्वात् तन्निश्चयायापि तन्न्यायापेक्षा । उत्तरमीमांसा सोपाधिकब्रह्मविषयतयेष्टा, ज्ञप्तिमात्रस्य शास्त्रविषयत्वात् । अत एव हि शास्त्रादौ युष्माभिरध्यासोपपादनम्, शास्त्रस्य तद्व्यावृत्तिपरतया प्रामाण्याङ्गीकारात् । वेदान्तशास्त्रस्य कृत्स्नस्य सगुणविषयत्वमेवेति भवद्भिरेव पूर्वकाण्डापेक्षार्थादुक्ता, सकलभेदव्यावृत्तवाक्यार्थज्ञानस्य तदुपयोगाभावेऽपि विचारस्य तदपेक्षत्वात् । तत्त्ववादेन परवाक्यविचारे सर्वशाखाप्रत्ययन्यायादेरुपयोगः क्रियते । चत्वारिंशत्संस्काराणामावश्यकत्वात् विविदिषोत्पत्त्यर्थत्वेनाप्यनुष्ठेयत्वात् कर्मविचारापेक्षा । न च भवान्तरीयतत्कर्मभिरपि पापक्षयसंभवान्न नियमेन तद्विचारस्य हेतुत्वमिति वाच्यम्, विविदिषोत्पत्त्यर्थत्वस्य निराकृतत्वात्; चत्वारिंशत्संस्कारात्मकगुणाष्टकयुक्तस्य मोक्षफलत्व-

वचनाच्च । यद्यपि केवलसंस्कारादेर्न मोक्षहेतुत्वं, तथापि स्वाङ्गिविद्याद्वारा मोक्षहेतुत्वात् मोक्षहेतुत्वोक्तिरप्युपपन्ना । विद्याङ्गत्वेन कर्मणामहरहरनुष्ठेयत्वप्रसाधनाद्धेतुत्वेन नियतिश्च सिद्धा । किंच शमादेः पूर्ववृत्तत्वे न किंचन प्रमाणम् । न च तदभावे जिज्ञासानुपपत्तिः प्रमाणमिति वाच्यम् , जिज्ञासाप्रवृत्तेः पूर्वमेव मुमुक्षोः शमादियोगित्वे विद्याङ्गत्वेन तदभिधानानुपपत्तेः, तद्विषयविचारानुपपत्तेश्च । विचार्यते हि " शमदमाद्युपेतः स्यात् " इत्यत्र । न च कर्मणां विद्याङ्गत्वेन विचार्यत्वसिद्धौ तदङ्गत्वविधेस्तद्विचारस्यानुपपत्तिः समेति वाच्यम् , कर्मस्वरूपज्ञानमात्रस्यात्रोपयुक्तत्वात् अङ्गत्वेनात्र विधेयत्वात् । न हि कर्माज्ञाने तदनुष्ठानोपपत्तिः । शमादिसिद्धावेव तु जिज्ञासाप्रवृत्त्युपपत्तिरिति कथं ज्ञानाङ्गत्वविध्युपपत्तिः शमादेः । न चास्माकमिव कर्मणोऽङ्गत्वोपयोगापेक्षया कर्मविचारवत् शमादिविचरस्तदपेक्षा च ब्रह्मविचारस्याङ्गीकृतः । किंच नित्यानित्यवस्तुविवेकस्य मीमांसाश्रवणात् पूर्वमेव सिद्धौ शास्त्रश्रवणवैयर्थ्यम् । शास्त्रे नित्यानित्यप्रसाधनवैयर्थ्यं च । प्रसाध्यते हि तत् " न वियदश्रुतेः " इत्यादौ । ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वेनाभिमतत्वात् ब्रह्मण एव नित्यत्वाभिधानाच्च तदुभयस्य ज्ञातत्वे किमर्थं शास्त्रश्रवणम् ? न चाभासमात्रतद्विवेकस्य पूर्ववृत्तत्वमिति वाच्यम् , आभासज्ञानस्याविवेकत्वात् । तात्त्विकज्ञान एव हि तद्विवेकः । शास्त्रस्य ब्रह्मतद्व्यतिरिक्तयोः सत्यत्वमिथ्यात्वयोरेव प्रामाण्यमङ्गीकृतम् । एवं च हेतुहेतुमतोरविशिष्टता च, उभयोरेकस्वरूपत्वात् । न च कर्मतत्फलानां स्वरूपज्ञानमात्रमेव नित्यानित्यवस्तुविवेक इति वाच्यम् , ब्रह्मण एतत्फलव्यतिरिक्तत्वात् तदतिरिक्तनित्यवस्त्वनङ्गीकारात्तयोश्च ज्ञातत्वात् । न च व्यावहारिकनित्यानित्यवस्तुनोर्विवेकस्य विचारहेतुत्वमिति वाच्यम् , तादृशज्ञानस्य वस्तुतोऽविवेकत्वस्योक्तत्वात् । तादृशानित्यत्वादिज्ञानस्यापि पूर्वकाण्डावसेयत्वात् तस्य पूर्ववृत्तता सिद्धा । स्वर्गादिफलयागादिकरणे प्रयाजादीतिकर्तव्यतानां कर्तृत्वज्ञानस्वरूपस्य स्थिरत्वविवेक इति तस्य च श्रुतिलिङ्गादिप्रमाणावसेयत्वात् , तस्य च पूर्वकाण्डस्थत्वात् । न च " परीक्ष्य लोकान् " इत्यादिश्रुत्यैवानित्यादिज्ञानमिति वाच्यम् , कर्मपरीक्षणस्यापि मीमांसावसेयत्वादित्युक्तत्वात् । न च ब्रह्मव्यतिरिक्तस्य परिच्छिन्नत्वेन कार्यत्वात् ब्रह्मणोऽपरिच्छिन्नत्वेनाकार्यत्वमित्यनुमानाभ्यां नित्यादिवस्तुविवेक इति वाच्यम् , परिच्छिन्नत्वहेतोः कालात्ययापदिष्टत्वात्; जीवानां परिच्छिन्नत्वेऽपि "न जायते म्रियते" इत्यादिश्रुत्या नित्य-

त्वप्रतीतेः। न च तेषां ब्रह्माव्यतिरेकान्नित्यत्वमिति वाच्यम्, तदव्यतिरिक्तत्वस्यासिद्धत्वात्। "तदधिकं तु भेदनिर्देशात्" इत्यत्र च भेदः साधितः। तादृशजीवस्य नाशाङ्गीकारे चाकृताभ्यागमादिदोषश्च। "अजामेकाम्" इत्यादिश्रुतेरव्याकृतस्य परिच्छिन्नस्यापि कारणावस्थस्याकार्यत्वाच्च कारणावस्थस्य निरन्वयाविनाशेन नामरूपविभागानर्हतया ब्रह्मणि संकोचेनावस्थितिरेव नाश इत्युत्तरत्र प्रसाधितम्। 'सर्वं कार्यं कात्स्न्र्येन विनश्यति' इत्यनुमानस्यापि निरन्वयविनाशपरत्वे कालात्ययापदिष्टता। संकोचमात्रपरत्वे सिद्धसाधनत्वम्। सुषुप्तावात्मसुखविनाशाभावाद्दृष्टान्तश्च साध्यविकलः। तदभावश्च 'सुखमहमस्वाप्सम्' इति स्वापकालीनसुखपरामर्शात्। न ह्यननुभूतार्थपरामर्शः। अनुमानान्नित्यानित्यवस्तुविवेकसिद्धौ शास्त्रस्यानुवादकस्य न प्रामाण्यम्। अनन्यप्रमाणविषयत्वं हि शास्त्रस्य। शास्त्रश्रवणस्य विधेयत्वोक्तिरपि व्यर्था, रागादेव तत्र प्रवृत्तेरुक्तत्वात्। ज्ञानमेव विधेयमिति चोक्तम्। न च प्रत्यक्षादिना घटादिज्ञानस्येव यथाप्रमाणं ज्ञानस्य स्वयमेव जायमानत्वेन न विधेयत्वमिति वाच्यम्, वाक्यजन्यज्ञानान्यस्यैव ध्यानरूपज्ञानशब्दवाच्यत्वेन विधेयत्वादित्युक्तत्वात्। अतः कर्मणां शमादीनां च विधेयज्ञानाङ्गत्वमेव। एवं च "शान्तो दान्त उपरतस्तितिक्षुरात्मन्येवात्मानं पश्येत्" इति श्रुतेर्मुख्यार्थतालाभश्च। अन्यथा श्रवणादिलक्षणा। अथ "तपसा ब्रह्म विजिज्ञासस्व" इति विचारस्यैव विधेयत्वप्रतीतेः श्रवणस्यैव विधेयत्वमिति चेत्—न; तत्रापि ज्ञानप्राधान्यात् तस्यैव विधेयत्वात्। "स तपस्तप्त्वा। अन्नं ब्रह्मेति व्यजानात्" इत्यादि श्रवणात् ज्ञानस्यैव लब्धत्वप्रतीतेश्च। श्रवणविधिपरत्वे तु 'ब्रह्मेत्यशृणोत्' इत्यादि वाक्यं स्यात्। अतः "तपसा ब्रह्म" इत्यादिवाक्यैरपि कर्मणो विद्याङ्गत्वमेवोच्यते। न च श्रवणद्वारा ध्यानमननयोर्वाक्यार्थज्ञानोत्पादकत्वेनाङ्गत्वम्, न्यायसहितवाक्यमात्रादेव तदर्थज्ञानोत्पत्तेः। प्रत्युत ज्ञानस्याभावे ध्यानानुष्ठानायोगात् ज्ञानस्यैव ध्यानाङ्गत्वम्। अतः कर्मज्ञानस्यैव पूर्ववृत्तत्वम्, न साधनचतुष्टयस्येति सिद्धम्। ननु ब्रह्मव्यतिरिक्तस्य न कथं मिथ्यात्वमिति चेत्—बाध्यत्वादर्शनादिति ब्रूमः। वाक्यार्थज्ञानसद्भावेऽपि न हि जगद्भ्रमनिवृत्तिः। ननु वाक्यार्थज्ञानं न कस्यापि तत्पूर्वं जातमिति चेत्, तर्हि तत्परमपि न कस्यापि जायेत। यदि पूर्वं जातं स्यात् ब्रह्माज्ञानस्य विनष्टत्वेन भ्रमानुवृत्तिर्न स्यात्। जीवाज्ञानपक्षानुपपत्तिस्तु आरम्भणाधिकरणे प्रपञ्चिता। अथ भेदवासनाया ज्ञानोदयविरोधित्वेन तत्सद्भावे

न ज्ञानोत्पत्तिः। न च व्युत्पन्नस्य वाक्यश्रवणमात्रात् ज्ञानं जायत इति वाच्यम्, तस्यानिवर्तकत्वात्। पश्चात्तदसंनिधान एव श्रवणादिपरंपरयोपपद्यत इति चेत्—न; ज्ञानोत्पत्तिसहकारिसंपत्तौ तदनुत्पत्त्यनुपपत्तेः। वाक्यस्य स्वार्थबोधकत्वव्युत्पत्तेश्च व्यतिरिक्तसहकार्यन्तरे प्रमाणाभावात्। न च सामग्रीसद्भावेऽपि मन्त्रादिप्रतिबन्धकसद्भावे वह्नेर्दहनकार्याजनकत्ववत् वाक्यं न ज्ञानजनकमिति वाच्यम्, तद्वासनाया अपि मिथ्यात्वेन ज्ञानबाध्यतया बाधकज्ञानोत्पत्तिप्रतिबन्धकत्वानुपपत्तेः। रज्जुसर्पादौ वासनासद्भावेऽपि निश्चेष्टत्वादिलिङ्गेन वा आप्तवाक्याद्वा भ्रमबाधकज्ञानोत्पत्तिदर्शनाच्च। तद्वासनायाश्च तदुत्पत्तिनिरोधकत्वे कदाचिदपि ज्ञानोत्पत्तिर्न स्यात्। अथ केनचित् कारणेन तद्विनाशे तज्जननसंभव इति चेत्, तर्हि वाक्यार्थज्ञानार्थप्रवृत्तेर्व्यर्थता स्यात्। मिथ्यारूपवासनायाः कारणान्तरेण विनाशवदितरभ्रमस्यापि तज्ज्ञानव्यतिरेकेण विनाशसंभवात्। न च चन्द्रैकत्वादिज्ञानेऽपि द्विचन्द्रत्वाद्यनुवृत्तिवत् ज्ञानाच्छिन्नमूलं भेदमात्रमनुवर्तत इति बाधकमिति वाच्यम्, वासनाकारणस्यापि मिथ्यात्वेन ज्ञानबाधितत्वात् बाधितानुवृत्त्यनुपपत्तेः। न हि क्षणिकस्य ज्ञानस्य कारणव्यतिरेकेणानुवृत्त्युपपत्तिः। न चावृत्त्युपयोग्यंशव्यतिरेकेण तज्ज्ञानबाध्यत्वमिति वाच्यम्, तदङ्गस्य मिथ्यारूपत्वेऽपि तज्ज्ञानाबाध्यत्वे कदाचिदप्यविनाशापत्तेः। छिन्नमूलस्यानुवृत्त्युक्तिरप्यनुपपन्ना, छिन्नमूलस्य प्रबन्धेन वृत्त्ययोगात्। द्विचन्द्रज्ञानादेस्तु स्वकारणदोषतिमिरादेः परमार्थत्वेन ज्ञानाबाध्यत्वादनुवृत्तिः। किंच युष्मद्गुरुपरंपराया निर्विशेषाद्वितीयज्ञानसद्भावे स्वनिश्चयानुरूपज्ञानोपदेशो नोपपन्नः, ज्ञप्तिमात्रव्यतिरिक्तशिष्यादीनां मिथ्यात्वावगतेः। न ह्यसत्त्वेन ज्ञातेभ्य उपदेशोपपत्तिः। प्रतिबिम्ब इति तेभ्यो ह्युपदेशे सुतरां भ्रान्तिर्गुरुपरंपराया इत्यनादेयं वाक्यम्, अज्ञता च। युष्मदीयगुरुज्ञानादेव ब्रह्माज्ञानविनाशादुपदेशादिर्व्यर्थश्च। न च काल्पनिकत्वेन प्रवृत्त्युपपत्तिः, गुरोः काल्पनिकत्वनिश्चयादुपदेशादिप्रवृत्त्यनुपपत्तेः।

तत्त्वटीका

अथानूदितनानार्थदोषजालमहोदधेः।
संक्षिप्तप्रतिपत्त्यर्थं तदित्यादि निबध्यते ॥ ३६० ॥

प्रकाशयति तत्कारः परैरुक्तमनेकधा।
अनेकग्रन्थसन्दर्भसाधितं तदुदीर्यते ॥ ३६१ ॥

दूष्यकात्स्न्यैमिदं वक्ति प्रस्फुरद्दोषतामपि ।
आभासत्वमतो वक्तुमिदंशब्दः प्रयुज्यते ॥ ३६२ ॥
किं चासारमिदं सर्वं सति सारे हि कुत्रचित् ।
सारासारौ विवेक्तव्यौ मल्लिकादिसमैरपि ॥ ३६३ ॥
यदि नोद्ध्रियते न्यायैः श्रुतिशल्यमिदं मतम् ।
उपप्लूयेत सन्मार्गस्तदाहुर्बाह्यदूषणे ॥ ३६४ ॥

"प्रमाणत्वाप्रमाणत्वे पुण्यपापादि तत्फलम् ।
विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना ॥
सर्वेषु लक्षणेष्वेव स्वप्रमाणगतैः स्थितिः ।
वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता ॥
कर्मभ्यः फलसंबन्धः पारलौक्यैहलौकिकः ।
सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु ॥
तस्माद्धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसंमतैः ।
अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति ॥"

इति । अत्र व्यावहारिकव्यवस्थया समाधिस्तु सांप्रतव्यवस्थावदपाकरिष्यते । अत्र तदिदं परोक्तमुपायादित्रयमनादरणीयमिति साध्यम् ; **औपनिषद**इत्यादिना तद्धेतूक्तिः । स्वपक्षे च प्राप्यादयस्त्रय इह परमपुरुषतद्भक्तितदपराधाः सूच्यन्ते । **औपनिषद**शब्देन "तं त्वौपनिषदं पुरुषम्" इत्यादि वाक्यं स्मारयता स्वपरपक्षयोः साधनदूषणोक्तिः । परेषां तु ब्रह्मणो वेद्यत्वानभ्युपगमात्तदिष्टविपरीतसगुणत्वादिश्रुत्या च बाधप्रदर्शनम् । **परमपुरुष**त्वोक्तिरीश्वरोत्तीर्णताव्युदासाय ; अर्थात् त्रिमूर्तिसाम्योत्तीर्णतादिपक्षापोहः । सम्यग्ज्ञानानुपपत्त्यै भक्तिविरहाद्युक्तिः । भक्तिर्हि सम्यग्धीहेतुतया "यस्य देवे परा भक्तिः" "शुद्धभावं गतो भक्त्या" इत्यादिषु ख्याता । **पापस्य वासना** ; तत्त्वज्ञाननिवृत्तिर्मिथ्याज्ञानादेः सजातीयारम्भस्योत्पादनशक्तिः । तस्यास्तत्त्वधीनाशकत्वं "पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः" इयादिषु प्रसिद्धम् । बीजाङ्कुरन्यायसूचनाय **अनादि**शब्दः । **अशेष**शब्देन मानतर्कप्राप्योपायादिसर्वसंग्रहः । पापस्य भक्त्या निवर्त्यत्वं भक्त्यभावे यथार्हं हेतुसाध्यभावो भक्तिनिरोधद्वारं चात्र सूच्यम् । भक्त्यभावादिनोक्तार्थाभ्यां मानतदितिकर्तव्यतादौ सर्वत्र

प्रमितिसामग्रीशैथिल्येन बहुविदामपि भ्रमादिसंभवमाह—**अनधिगतेति**। 'सम्यक्' इत्युपस्कार्यम्। पदस्वरूपम्; प्रकृतिप्रत्ययसमुदायात्मकम्। वाक्यस्वरूपं तु तादृशां संघातः। **तदर्थः**; मुख्यामुख्यरूपः पदार्थो वाक्यार्थश्च। **तद्याथात्म्यम्**; दुस्त्यजभेदगर्भत्वं वाक्यार्थस्य यथार्हतात्पर्यगोचरत्वं च। भेदभूयस्तया विरोधे सति प्रबलतया परेष्टत्वाच्च प्रत्यक्षादेः पूर्वं वाक्यस्योक्तिः। **आदि**शब्देन स्वपराभ्युपेतग्रहः। **सकल**शब्दः सावान्तरभेदपरः, परेष्टमानान्तरपरो वा। **वृत्तम्**; स्वरसतः स्वार्थसाधनमुपजीव्यानुविधानं च। तच्छब्देन प्रमाणपरामर्शः। **न्यायः**; तर्कः। **समीचीनत्वं** साङ्गपञ्चकत्वम्। **मार्गः**; तत्तत्प्रतिपादकविद्यास्थानम्। यद्वा विरुद्धजिज्ञासावारणरूपोऽनुग्रहः। संबन्धसामान्ये षष्ठी। कुतस्तर्हि मानशून्यस्योत्थानमित्यत्र बाह्यमतवदित्यभिप्रायेणाह—**विकल्पेति**। **विकल्पासहत्वम्**; विकल्पमात्रे स्पष्टदोषत्वम्। वेद्यत्वावेद्यत्वादिविरुद्धगोचरत्वाभिप्रायेण **विविध**शब्दः। तर्केषु सारो बाह्यैरात्तः, वेदप्रामाण्याद्यनादरेणोत्थानात्। इदं तु तद्दजीषैः कल्पितम्। स्वमतस्य सत्तर्कान्वितमानसिद्धतां बोधायनटङ्कद्रमिडादिमहत्तरपरिग्रहप्राचुर्यं च सूचयति—**न्यायेति**। **अनादरणीयम्**; आदरानर्हम्; उन्मत्तजल्पितवदुपेक्षणीयमित्यर्थः। एतेन दृष्टापह्नोतॄणां वादानधिकारः सूच्यते। उक्तं हि वेदार्थसंग्रहे—"सर्वशून्यवादिनो ब्रह्मव्यतिरिक्तवस्तुमिथ्यात्ववादिनश्च स्वपक्षसाधकप्रमाणपारमार्थ्यानभ्युपगमात् अभियुक्तैर्वादानधिकार एव प्रतिपादितः" इति। तथा चाहुः—"अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः" इति। तत्प्रतिक्षेपस्त्वन्वारोहेण; शिक्षणीयान् शिष्यादीन् प्रति वा।

### मूलभावप्रकाशिका

सिद्धान्तमारभते—**तदिदमिति**। परमपुरुषवरणीयताहेतुर्गुणविशेषो भगवद्भक्तिः, "यमेवैषः" इति श्रुतिव्याख्यानावसरे तथा प्रतिपादितत्वात्। **पदवाक्यस्वरूपम्**; प्रकृतिप्रत्ययसंघातः पदस्य स्वरूपम्, पदसंघातो वाक्यस्वरूपमित्यर्थः। **प्रमाणवृत्तम्**; प्रमाणप्रवृत्तिः।

### श्रीभाष्यम्

**तथाहि—निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनि 'इदं प्रमाणम्' इति न शक्यते वक्तुम्, सविशेषवस्तुविषयत्वात्सर्वप्रमाणा-**

नाम् । यस्तु 'स्वानुभवसिद्धम्' इति स्वगोष्ठीनिष्ठः समयः सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः, 'इदमहमदर्शम्' इति केनचिद्विशेषेण विशिष्टविषयत्वात्सर्वेषामनुभवानाम् । सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद्युक्त्याभासेन निर्विशेष इति निष्कृष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैर्निष्कृष्टव्य इति निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते । अतः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति न क्वचिन्निर्विशेषवस्तुसिद्धिः । धियो हि धीत्वं स्वप्रकाशता च, ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः । स्वापमदमूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः । स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेके विशेषाः सन्त्येव । ते च न वस्तुमात्रमिति शक्योपपादनाः, वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात्; स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात् । अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम् ।

### श्रुतप्रकाशिका

एवं संक्षेपेण प्रतिज्ञातमर्थमुपपादयितुमुपक्रमते—**तथाहीति** । ननु पूर्वपक्षिणा प्रथमं वेदान्तवाक्यविशेषानुदाहृत्य तत्र निरूपणीयं सर्वं निरूप्य ततश्च तद्व्यतिरिक्तप्रमाणतर्काः प्रदर्शिताः ; अतः सिद्धान्ते च तेन क्रमेण तत्प्रतिक्षेपो युक्तः ; तत्कथं प्रथमं सकलप्रमाणाविषयत्वनिरूपणं संगच्छते । उत्तरत्र च कथं प्रत्यक्षादिनिर्विशेषविषयत्वनिरासपूर्वं वेदान्तवाक्ययोजना क्रियते ? उच्यते—प्रत्यक्षविरोधे शास्त्रप्राबल्याभ्युपगमात् परेण वेदान्तवाक्यानि प्रथममुदाहृत्य पश्चात्तदन्यद्वक्तव्यं सर्वमुक्तम् ; प्रबलतयाभिमतप्रमाणपुरस्कारो ह्युचितः । सिद्धान्तिना तु प्रत्यक्षविरोधे शास्त्रप्राबल्यानभ्युपगमात् प्रत्यक्षादेर्निर्विशेषविषयत्वव्युदसनपूर्वकं तदविरोधेन वेदान्तवाक्यानि स्वरसतो व्याख्यास्यन्ते । तत्र निर्विशेषचिन्मात्रपारमार्थ्यस्य परेण प्रथमप्रतिज्ञातस्य सामान्येन सकलप्रमाणबहिष्कृ-

तत्स्वरूपं दूषणं प्रथमं प्रतिजानीते—**निर्विशेष इति**। अर्थात्प्रमाणस्वभावश्च स्वपक्षानुगुणो निरूपितो भवति। खपुष्पमपि स्वानुभवसिद्धमिति वक्तुं शक्यमिति तद्व्यावृत्त्यर्थमिदंशब्दः। परसंप्रतिपत्तिपदं प्रमाणं न किंचिदपीति भावः। यद्वा न कदाचिदपि प्रमाणव्यक्तिर्निर्विशेषगोचरेत्येकवचनाभिप्रायः। कुत इत्यत्राह—**सविशेषेति**। ननु विशेषा हि निर्विशेषाः; तत् कथं निर्विशेषवस्तुनोऽप्रामाणिकत्वम्? उच्यते—धर्मेण धर्मी सविशेषः; धर्मिणा च धर्मः सविशेषः; कस्यचिद्धर्मभूतं धर्मि वा यन्न भवति तत्प्रमाणशून्यमिति हि ग्रन्थार्थः। विशेषो व्यावर्तकः। धर्मी च स्वगतधर्मस्याश्रयान्तरगतधर्माद्व्यवच्छेदक इति विशेषशब्दवाच्यः। किंच विशेषो निर्विशेष इति शब्दौ किं पर्यायौ, न वा? आद्ये सहप्रयोगानुपपत्तिः। द्वितीये तु न निर्विशेषत्वम्, बोध्यभेदमन्तरेणापर्यायत्वायोगात्। ननु कथं सर्वप्रमाणानां सविशेषविषयत्वम्? न हि गन्धादिग्राहि प्रमाणं गन्धादिकं साश्रयमावेदयति—नैवम्; आश्रय एव विशेष इति नियमाभावात्; संविदोऽपि सर्वविशेषणतया सर्वार्थवैशिष्ट्यमुपपद्यते; 'अयं गन्धोऽनुभूयते' इति कालादिविशेषावच्छिन्नतयैव गन्धादिप्रतीतेश्च सविशेषविषयतोपपत्तिः। तथा प्रतीतिश्च वक्ष्यते। तर्हि न वयं प्रमाणान्तरेण निर्विशेषवस्तुसिद्धिमभ्युपगच्छामः; स्वानुभवसिद्धं हि तदित्यत आह—**यस्त्वति**। तुशब्देन समयं विशिंषन् समयवैशिष्ट्यमूलं स्वानुभवलक्षणप्रमाणवैषम्यमभिप्रैति। **स्वगोष्ठीनिष्ठ इति**; परवाद्यसंमतत्वं दर्शयति। आत्मसाक्षिकानुभवस्य सविशेषत्वं दर्शयति—**इदमहमिति**। **विशिष्टविषयत्वादिति**; विशिष्टो विषयः स्वयमनुभव एव; 'शिलापुत्रकस्य शरीरम्' इतिवदयं निर्देशः, अन्यथा स्वानुभवनिर्विशेषत्वनिरासे घटादिसविशेषत्वसाधनस्यानुपयोगात्। 'अनुभूयमानोऽप्यनुभवः' इत्युपरितनग्रन्थस्याप्येवमेवार्थः, स्वानुभवसिद्धमित्यनेनैकार्थ्यात्। न चानुभवशब्दोऽनुव्यवसायपरः; न ह्यनुव्यवसायरूपं प्रत्यक्षमिष्टम्, अतीतविषयतया प्रत्यक्षत्वानुपपत्तेः। परज्ञानं प्रमुषितसंस्कारं स्वज्ञानं चानुमेयम्। अन्यत्तु स्मृतिविषयम्। न च स्मृतिविषयत्वमिह विवक्षितम्, अनुभवशब्दस्यातदर्थत्वात्। अतोऽनुभूयत्वमवभासमानत्वम्। इदमहंशब्दाभ्यां सकर्मकर्तृकएवानुभव इत्युक्तम्। **अदर्श**मित्यनेनापरोक्षत्वविशेषान्वयोऽभिप्रेतः। अतीतत्वं त्वविवक्षितं, तदा स्वतःसिद्धत्वायोगात्। **केनचिद्विशेषेणेति**; उक्तेष्वप्यन्यतमविशेषणमन्ततो गत्वाप्यवर्जनीयमिति भावः। यद्वा **अदर्शमित्यत्रे**तिशब्दः प्रकारवचनः प्रकृतसजातीय-

रूपं विशेषं यावत्संभवं गृह्णाति। तेन परोक्षत्ववर्तमानत्वादिकं **केनचिदिति** विवक्षितं स्यात्। परोक्षत्वं विषयद्वारा। ननु न हि वयम् 'इदमहमदर्शम्' इति प्रतीतिमपलपामः; सा तु तर्कव्यवस्थापितविषया निर्विशेषे प्रमाणमित्यत्राह—**सविशेषोऽपीति।** स्वव्याघातस्य दर्शयिष्यमाणत्वात् **युक्त्याभासेनेत्युक्तम्।** **निर्विशेष इति निष्कृष्यमाण इति;** यदा निर्विशेष इति निष्कृष्यते तदानीमेवं हि निष्क्रष्टव्य इत्यर्थः। कथं निष्क्रष्टव्य इत्यत्राह—**सत्तातिरेकिभिः स्वासाधारणैरिति;** सत्तानतिरेकी चेत्, पक्षाविशिष्टो हेतुः स्यात्; तदयुक्तम्; पक्षव्यापको हि हेतुः। किंचान्यस्य द्रव्यान्तराद्व्यावर्तकधर्मस्यैव स्वव्यावृत्तिरूपत्वसंभवः। स्वरूपे प्रतिपन्ने स्वस्यान्यतादात्म्यभ्रमविरोधिनश्च स्वरूपमेव व्यावृत्तिः, यथा शुक्तित्वादेः। ब्रह्मणस्तु वस्त्वन्तरस्यान्यस्मात् व्यावृत्तिरूपधर्मत्वाभावात् स्वरूपे भासमाने भ्रमसहत्वाच्च न स्वरूपमेव व्यावृत्तिरिति वक्ष्यमाणशौक्ल्यादिदृष्टान्तवैषम्याभिप्रायेण **सत्तातिरेकिभिरित्युक्तम्।** साधारणश्चेत् हेतुरनैकान्तिको भ्रमाविरोधी च स्यात्, यथा शौक्ल्यादि। असाधारणं शुक्तित्वमेव हि रजतभ्रमविरोधि। अतः **स्वासाधारणैरित्युक्तम्।** स्वशब्देन व्यधिकरणासिद्धिपरिहारः। **स्वभावविशेषैः;** धर्मविशेषैः। एवं सामान्येनार्थशरीरमुक्तम्; अतस्त्वयापि निरासकहेतुतयाभिमतानां सत्तातिरेकित्वस्वासाधारणधर्मत्वे अवर्जनीये इत्यभिप्रायेण **सत्तातिरेकिभिः स्वासाधारणैरिति** पुनः कथनम्। ये ये हेतवः सविशेषघटादिवस्तुव्यावृत्ताः सामान्येन सकलविशेषाभावसाधकाः, तेऽर्थसामर्थ्यात् सामान्यान्तर्गतं स्वात्मानमपि निवर्तयेयुरेवेत्यत्राह—**अतः कैश्चिदिति।** **अतः;** तेषां सत्तातिरेकित्वस्वासाधारणत्वयोरवश्याभ्युपगन्तव्यत्वादित्यर्थः। **कैश्चिदिति;** स्वासाधारणैः प्रामाणिकैरित्यर्थः। **विशिष्टस्यैवेति;** निर्विशेषत्वसाधकनिवृत्तौ निर्विशेषत्वासिद्धेः, तदनिवृत्तौ तैरेव सविशेषत्वप्रसङ्गाच्चेत्यभिप्रायः। **अन्य इति;** निर्विशेषत्वसाधकहेतवो येभ्यो घटादिभ्यो व्यावृत्ताः, तद्गता इहाप्रामाणिका रूपादयो विशेषा अस्मिन्निरस्यन्ते, न तु सर्वविशेषाः। अनग्निमन्त्वव्यावृत्तो धूमः पक्षेऽनग्निमत्त्वमेव निवर्तयति, न त्वाकारान्तरमित्यर्थः। **न क्वचिदिति;** स्वानुभवे प्रत्यक्षादिप्रमाणान्तरेष्वपीत्यर्थः। स्वव्याघातप्रसङ्गेन सकलविशेषनिवृत्तेः साधयितुमशक्यत्वान्न निर्विशेषवस्तुसिद्धिरित्युक्तं भवति। एवं कर्मकर्तृव्युदासमभ्युपगम्य सविशेषत्वमापादितम्; अथ कर्मकर्तृनिरास एव दुःशक इत्याह—**धियो हीति।** **धीत्वम्;** विषय-

प्रकाशकत्वम् । **स्वप्रकाशता** ; अनन्याधीनप्रकाशत्वम् । एतदुभयं स्वप्रकाशवादे साधनतया साध्यतया च परेणोपन्यस्तम् । **ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेरिति** ; नियमेन स्वाश्रयं प्रति विषयप्रकाशकतयावभासमानत्वाद् धीत्वस्वप्रकाशत्वे सिध्यत इत्यर्थः । धीत्वं विषयसाधनत्वं, तथावभासमानत्वादिति न साध्याविशिष्टता । यद्युपलब्धिसिद्धं सकर्मकर्तृत्वं नाङ्गीकुरुषे, ततः सकर्मकर्तृत्वहेतुकं स्वप्रकाशत्वमपि न सिध्येदिति भावः । यद्वा धीत्वं धीस्वरूपमात्रम् । हिशब्द उपलब्धेः सर्वसंप्रतिपत्तिं दर्शयति । ननु न कर्मकर्त्रवच्छिन्नं ज्ञानमात्मभूतम् ; अन्यदेव तु स्वापाद्यवस्थानुभूतं निर्विशेषं साध्यत इत्यत्राह—**स्वापेति** । **अनुभवः** आत्मस्फुरणम् । न हि तदा धर्मभूतज्ञानस्फुरणम् । **स्वावसरे** ; अहमर्थस्यैवात्मत्वसमर्थने । **निपुणतरम्** ; परप्रयुक्तयुक्त्यैवेति भावः ; 'सुखमहमस्वाप्सम्, मामप्यहं न ज्ञातवान्' इत्यादिना परोक्तपरामर्शेनैवेति यावत् । यद्वा **निपुणतरम्** ; समर्थतरम् । एतदुक्तं भवति—किं त्वया स्वानुभवाधीनं निर्विशेषत्वं कर्मकर्त्रवच्छिन्नस्य ज्ञानस्योच्यते ? उत 'अहम्' इति भासमानस्यात्मस्वरूपभूतज्ञानस्य ? उत तदुत्तीर्णस्य ? आद्ये कर्मकर्त्रवच्छेदनियमादेव न निर्विशेषत्वम् । द्वितीये प्रत्यक्त्वानुकूलत्वादिभिः सविशेषत्वमवर्जनीयमिति वक्ष्यते । तृतीये शून्यत्वादेव न निर्विशेषत्वं साध्यमिति । मुखान्तरेण सविशेषत्वमाह—**स्वाभ्युपगताश्चेति** ; आदिशब्देन स्वप्रकाशत्वैकत्वानन्दत्वादयोऽपि विवक्षिताः । ते वस्तुमात्रमिति ह्युक्तमित्यत्राह—**ते चेति** । उपपादयति—**वस्त्विति** । बौद्धैः क्षणिकत्वमुक्तम्, अनेन तु नित्यत्वम् ; वैशेषिकादिभिश्च जडत्वबहुत्वे, अनेन तु स्वप्रकाशत्वैकत्वे ; स्वरूपं तु तैः सर्वैरभ्युपगतम् । अतो विप्रतिपत्तिविषयः संप्रतिपत्तिविषयश्चैक एवेति वक्तुमयुक्तमित्यर्थः । विमत्यनन्तरभाविना तदुपपादनेन च स्वरूपातिरिक्ततां द्रढयति—**स्वाभिमतेति** । क्षणिकत्ववादिनं प्रति वस्तुनित्यत्वं साधयता त्वया स्वरूपमात्रातिरेकेण किंचित्साधितमस्ति वा ? न वा ? अस्ति चेत्, सधर्मत्वम् । नो चेत्, सिद्धसाधनत्वम् ; स्वरूपमात्रस्याभिमतत्वात् । 'संविन्नित्या' इति प्रतिज्ञावाक्यगतौ धर्मधर्मिशब्दौ किं पर्यायौ ? न वा ? आद्ये साधनायासो निष्फलः । द्वितीये स्वरूपातिरिक्तधर्मान्तराङ्गीकार इति भावः । '**स्वमतोपपादनान्न वस्तुमात्रमिति शक्योपपादना:**' इत्यन्वयः । पूर्वं सविशेषत्वनिरासकहेतुभिः सविशेषत्वमुक्तम् ; अनन्तरं साध्यधर्मैः ; ततः कतिपयविशेषसाधक-

हेतुभिः । एते निरासकसाध्यसाधनधर्मा अपरमार्था इत्यत्राह—**अत इति** । **अतः**; विशेषव्युदासकत्वेन साध्यत्वेन साधकत्वेन च केषांचिद्धर्माणां त्वयोक्तत्वात् । परमार्थभूतैस्तैस्तैर्विशिष्टमित्यर्थः । **प्रामाणिकैरि**त्यनेन **कैश्चिदिति** पूर्वोक्तस्यार्थस्यापि विशेषो दर्शितः । **विशिष्टमेवेति**; पूर्वोक्तसत्तातिरेकित्वस्वासाधारणत्वाभावे भ्रमोच्छेदो न स्यात्; निरासकधर्मापारमार्थ्ये शुक्तित्वापारमार्थ्ये रजतसत्यत्ववन्निरसनीयाकारसत्यत्वं प्रसजेत्; साध्यधर्मापारमार्थ्ये च नित्यत्वादिविपरीताकारस्य सत्यत्वप्रसङ्गः; साधकापारमार्थ्ये च साध्यनित्यत्वादिविपरीताकारस्य सत्यत्वमापद्येतेति भावः ।

## भावप्रकाशिका

**तद्व्यावृत्त्यर्थमिदं शब्द इति**; शृङ्गग्राहिकया संप्रतिपन्नं किंचिन्निर्दिश्य इदं प्रमाणमिति न शक्यते दर्शयितुमिति भावः । एकवचनानुसारेणान्यथा व्याचष्टे—**यद्वा न कदाचिदपीति**; अत्र केचित्—यद्वेति पदं लेखकस्खलनकृतम्, तद्राहित्येनैव ग्रन्थस्वारस्यमस्तीति मन्यन्ते । **गन्धोऽनुभूयत इति**; अनुभूतेर्विशेषणत्वेन भानात् सर्वस्याप्यर्थस्यानुभूतिरूपविशेषणविशिष्टत्वमेव, न निर्विशेषत्वमित्यर्थः । ननु 'यस्तु स्वानुभवः प्रमाणत्वेनोपन्यस्तः' इत्येवं तुशब्देन स्वानुभवलक्षणप्रमाणविशेषे प्रदर्शनीये तुशब्देन समयविशेषप्रदर्शनमसंगतमित्याशङ्क्य समयवैषम्यप्रदर्शनस्यापि मूलभूतस्वानुभवलक्षणप्रमाणवैषम्यप्रदर्शनपर्यवसन्नत्वान्न दोष इत्याह—**तुशब्देन समयं विशिंषन्निति** । ननु विशिष्टो विषयः स्वयमेव चेत्, विशिष्टो विषयो यस्येति बहुव्रीहिनिर्देशः कथमित्याशङ्क्याह—**शिलापुत्रस्य शरीरमितिवदयं निर्देश इति** । **स्वानुभवसिद्धमित्यनेनैकार्थ्यादिति**; अनुभवान्तरव्युदासपरग्रन्थैकार्थ्यादौपचारिकत्वस्यैव वक्तुं युक्तत्वादित्यर्थः । ननु स्वानुभवशब्दस्याप्यनुव्यवसायरूपज्ञानान्तरपरत्वसंभवात् कथं तदैकार्थ्येनोक्तार्थपरत्वनिश्चय इत्यत्राह—**न चानुभवशब्दोऽनुव्यवसायपर इत्यादिना** । **अतीतविषयतयेति**; वर्तमानज्ञानस्य स्वप्रकाशतयानुव्यवसायस्य वर्तमानविषयत्वासंभवेनातीतविषयत्वनियमादतीतत्वस्य प्रत्यक्षत्वानुपपत्तेरित्यर्थः । **प्रमुषितसंस्कारमिति**; अनुद्बुद्धसंस्कारमित्यर्थः । **अन्यदिति**; उद्बुद्धसंस्कारमित्यर्थः । न च घटानुभवसंस्कारात् घटस्यैव स्मृतिविषयत्वम्, न घटज्ञानस्येति वाच्यम्, तस्य स्वप्रकाशतया तज्जन्यस्मृतेरेवानुभवस्मृतित्वोपपत्तेः । नन्वनुमितिसामग्री स्मृतिसामग्र्यपेक्षया बलवती; अनुमित्सा-

सत्त्वे तु ततस्तराम् ; ततश्चाप्रमुषितसंस्कारस्यापि ज्ञानस्यानुमितिविषयत्वं संभवत्येवेति चेत्——न ; 'स्वानुभवप्रत्यक्षसिद्धम्' इति तद्गोष्ठीसमयस्य तथाप्यनिर्वाहादित्याशयात् । **परोक्षत्वं विषयद्वारेति;** अनुमित्यादिज्ञानस्यापि स्ववृत्तिवर्तमानस्य सर्वस्यापरोक्षत्वादिति भावः । **पक्षाविशिष्टो हेतुः स्यादिति;** पक्षाभिन्नो हेतुः स्यादित्यर्थः । ततश्च स्वरूपासिद्धो हेतुः स्यादिति भावः । **पक्षव्यापको हि हेतुरिति;** पक्षवृत्तिर्हेतुरित्यर्थः । **किंचान्यस्येति ;** स्वसंबन्धादर्थान्तरे तद्व्यवहारहेतोरेव स्वव्यावृत्तिरूपत्वादिति भावः । **व्यधिकरणासिद्धीति ;** स्वरूपासिद्धीत्यर्थः । ततश्च 'स्वासाधारणैः' इत्यनेन स्ववृत्तित्वे सति व्याप्यत्वमिति सिध्यति । ततश्च सत्तातिरेकित्वं स्वासाधारणत्वोपयुक्तमित्यत्र तात्पर्यम् । अतो न 'सत्तातिरेकिभिः' इत्यस्य वैयर्थ्यं शङ्कनीयम् । **धीत्वस्वप्रकाशत्वे सिध्यत इत्यर्थ इति;** धीत्वे साधिते तेन स्वप्रकाशत्वं सिध्यतीत्यर्थः । ननु **धीत्वं स्वप्रकाशता च, ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेरिति** भाष्ये धीत्वस्वप्रकाशत्वयोः साधिका स्वविषयप्रकाशनतयोपलब्धिरिति प्रतीयते ; तस्या धीत्वसाधकत्वं धीत्वस्य च स्वप्रकाशतासाधकत्वमिति व्याख्याने भाष्यस्वारस्यं नास्तीत्यपरितोषादन्यथा व्याचष्टे——**यद्वा धीत्वं धीस्वरूपमात्रमिति** । धीस्वरूपं तस्य स्वप्रकाशत्वं च विषयप्रकाशनस्वभावतयोपलब्धेः सिद्धमिति भाष्यार्थ इत्युक्तं भवति । **आत्मस्फुरणमिति ;** आत्मस्वरूपस्फुरणमित्यर्थः । भाष्ये—**स्वाभिमततद्विधाभेदैश्चेति ;** 'अनुत्पन्नत्वान्नित्यत्वम्, नित्यत्वादात्मनो नानात्वमपि न संगच्छते' इत्येवं परेण साधनादिति भावः । **पूर्वं सविशेषत्वनिरासकहेतुभिः सविशेषत्वमुक्तमिति ;** 'अतः कैश्चिद्विशेषैर्विशिष्टस्य' इति भाष्येणेत्यर्थः । **अनन्तरं साध्यधर्मैरिति ;** 'धियो हि धीत्वं स्वप्रकाशता च' इति भाष्येणेत्यर्थः । **ततः कतिपयेति ;** 'ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः' इति भाष्येणेत्यर्थः । केचित्तु——'स्वाभिमततद्विधाभेदैः' इति भाष्येणेत्यर्थ इति व्याचक्षते ।

## श्रुतप्रदीपिका

एवं संक्षेपतः प्रतिज्ञातमर्थमुपपादयितुमारभते—**तथाहीति** । अत्र प्रबलतयाभिमतमानान्तरपुरस्कारेणोपन्यस्य ततः श्रुत्या तद्विरुद्धार्थप्रतिपादनायोगात् मानान्तराणां सविशेषपरत्वं दर्शयितुं निर्विशेषे मानाभावं प्रतिजानीते—**निर्विशेषेति** । **इदम् ;** प्रमाणत्वेन लोकप्रसिद्धं, परसंमतं वा । हेतुमाह—**सविशेषेति** । विशेषो न निर्विशेषः ; कस्य-

चिद्धि सः। धर्मतया धर्मितया वान्याननुबन्धि वस्तु नेत्यर्थः। निर्विशेषं न मानगम्यम्, किंतु स्वसिद्धीत्यत्राह—**यस्त्वति**। **स्वगोष्ठीनिष्ठः**; सर्वलोकसर्वपरीक्षकासंमतः। अनुभवं दर्शयति—**इदमिति**। सविषयत्वसाश्रयत्वापरोक्षत्वादिर्विशेषः। विशिष्टविषयशब्द औपचारिकः; विशिष्टविषयतया भासमानत्वं विवक्षितम्। **अनुभूयमान** इत्यत्रापि तथा। प्रतीतत्वेऽपि युक्तिबाधितं सविशेषत्वमित्यत्राह—**सविशेषोऽपीति**। **निष्कृष्यमाणः**; निष्कर्षदशायाम्। पक्षानतिरेकप्रसङ्गात् स्वरूपस्य धर्मेतरत्वभ्रमसहत्वाभ्यां शौक्ल्यादिवैधर्म्याच्च **सत्तातिरेकिभिरि**त्युक्तम्। अनैकान्त्यभ्रमविरोधव्यधिकरणासिद्धिव्युदासाय **स्वासाधारण**शब्दः। सामान्येन शिक्षितोऽर्थस्तवाप्यवर्जनीय इति पुनः कीर्तनम्। विशेषव्युदासकत्वात् स्वयं च निवर्तन्त इत्यत्राह—**अत इति**। **अत**; उक्तलक्षणविशेषावश्यंभावात्; निरासकासिद्धौ निरासासिद्धेरिति भावः। **कैश्चित्**; प्रामाणिकैः। **अन्ये**; घटादिगतरूपाद्याः। **क्वचित्**; प्रत्यक्षादौ। स्वानुभवे च कर्मकर्तृव्युदासमभ्युपगम्य निरासकैः सविशेषत्वमुक्तम्; अथ स एव नेत्याह—**धियो हीति**। **धीत्वम्**; विषयप्रकाशकत्वम्। **स्वप्रकाशता**; अनन्याधीनप्रकाशत्वम्; साधनं च साध्यं चेत्यर्थः। ज्ञातृज्ञेयसंबन्धनियमोपलब्धेरिति हेत्वर्थः। न विषयभासनं स्वभावः, स्वापादावदृष्टेरित्यत्राह—**स्वापेति**। **अनुभवः**; आत्मस्फुरणम्। **स्वावसरे**; अहमर्थात्मत्वसमर्थनावसरे। **निपुणतरम्**; परोक्तयुक्त्यैवेति भावः। परसाध्यैः सविशेषत्वमाह—**स्वेति**। ते स्वरूपमित्यत्राह—**ते चेति**। परं प्रति स्वरूपं साध्यं चेत् सिद्धसाध्यता। अतो विगीतमविगीतं च नैकमित्यर्थः। उपपादयति—**वस्त्वति**। बौद्धैः क्षणिकत्वमुक्तम्, अनेन तु नित्यत्वम्; वैशेषिकादिभिश्च जडत्वबहुत्वे, अनेन तु स्वप्रकाशत्वैकत्वे; स्वरूपं तु सर्वैरभ्युपेतम्; अतो विप्रतिपत्तिविषयः संप्रतिपत्तिविषयश्चैक एवेति वक्तुमयुक्तमित्यर्थः। विमतिफलभूतादुपपादनाच्चातिरेकमाह—**स्वाभिमतेति**। साधकैश्च सविशेषत्वं फलितम्। स्वाभिमतशब्दः साधनविशेषणम्। न च सिद्धं साध्यं चैकमित्यर्थः। साध्यसाधनधर्मा मिथ्येत्यत्राह—**अत इति**; उक्तैर्हेतुभिः। साध्याद्यप्रामाणिकत्वे प्रमाणोपन्यासवैयर्थ्यं विपरीताकारप्रसङ्गश्चेति प्रामाणिकपदस्याभिप्रायः।

## तत्त्वटीका

संक्षिप्तं परनिरसनं प्रपञ्चयितुमुपक्रमते—**तथाहीति**। तत्र प्राप्यस्य निर्विशेषत्वं मानशून्यतया क्षिपति—**निर्विशेष इति**। **निर्विशेषे वस्तुनीति** विशेषणात् स्ववचनविरोधोऽप्यत्र सूच्यते। तस्मिन्मानमस्तीति सामान्योक्तिरयुक्ता। अतो लोकतः स्वमत्या वा सिद्धस्य विशेषतो वक्तव्यत्वाय **इदं**शब्दः। परैरुच्यमाने वक्तुं शक्यत्वं कथं क्षेप्यम्? विशेषे च निर्विशेष एव त्वयापि मानं वाच्यमित्यत्राह—**सविशेषेति**। कस्याप्यत्र प्रमाणीकर्तुं शक्यत्वं निषिध्यते; न तु तद्वचनमात्रम्। विशेषप्रमाणमपि न निर्विशेषविषयम्, तत्तदाश्रयादिभिर्विशेषशब्दवाच्यत्वादिभिश्च तद्वैशिष्ट्यात्। अस्ति हि क्वचिदाश्रितैः क्वचिदाश्रयादिभिश्च भिन्नधीः। गुणादिरूपे च विशेषे स्वपरनिर्वाहकत्वं वक्ष्यत इति नानवस्था। स्वतः सिद्धे माननैरपेक्ष्यवादमनूद्य क्षिपति—**यस्त्विति**। **स्वानुभवसिद्धम्**; स्वप्रकाशप्रत्यक्षसिद्धमित्यर्थः। **स्वगोष्ठीनिष्ठः**; लौकिकपरीक्षकसंनिधौ दुर्वच इत्यर्थः। **समयः**; परिभाषाप्राय इति भावः। सर्वहृदयाविसंवादाद्राधानर्हत्वाभिप्रायेणा**त्मसाक्षि**त्वोक्तिः। उक्तं व्यनक्ति—**इदमिति**। अत्र पदत्रयेण विषयाश्रयस्वगतविशेषप्रदर्शनम्। **केनचिदिति** तदवान्तरविशेषप्रदर्शनार्थम्। **विशिष्टविषयत्वात्**; विशिष्टस्वरूपप्रकाशरूपत्वात्। यद्वा अनुभवपरामर्शरूपाणां ज्ञानानां विशिष्टपूर्वानुभवगोचरत्वादित्यर्थः। तथा च 'अदर्शम्' इत्यपि स्वरसम्। सर्वशब्दः पुरुषान् अनुभवान्वा ब्रूते। सर्वदृष्टेऽपि युक्तिबाधं क्षिपति—**सविशेष इति**। **अनुभूयमान इति**; अत्रापि प्रकाशमान इति वा परामृश्यमान इति वार्थः। **केनचित्**; धीत्वादिना व्यतिरेकिणा। **युक्ति**शब्द इहानुमानार्थः। निश्चितदोषप्रत्यक्षसिद्धज्वालैक्यबाधकाद् व्यावृत्त्यर्थं स्वनिष्कर्षेणाभासतोक्ता। **निष्कृष्यमाण** इत्यन्तोऽनुवादः। तदैव सविशेषत्वधीसूचनाय वर्तमाननिर्देशः। यदि पक्षस्वरूपमेव हेतुः, तदा दृष्टौ साध्यसंदेहः साधनाकाङ्क्षा च न स्यात्। न च स्वयं स्वधर्मः; नापीदं स्वपरनिर्वाहस्थानम्; तस्मादन्यत्वाभिप्रायेण **सत्तातिरेकि**त्वोक्तिः। स्वरूपातिरिक्तं सत्तामात्रं भासमानत्वादिकं वा व्यभिचारान्न हेतुरिति भावः। अत एव स्वासाधारणत्वमुक्तम्। तेन स्वरूपासिद्धिव्यधिकरणासिद्धिविरोधानैकान्त्यानां भ्रमसहत्वस्य साध्यसंदेहार्हधर्मिस्वरूपैक्यस्य च निरासः। सत्तातिरेकित्वादेः पक्षे युक्त्या स्थापनाय पुनर्ग्रहणम्। **निष्कर्षहेतुभूतैरिति** हि तत्स्थापनम्। न हि धर्मिस्वरूपासाधारणं सत्तादि-

धर्ममात्रं वा सविशेषात् व्यावृत्तिं साधयेदिति भावः। साधनकाले हेतुस्तिष्ठति, साध्यकाले तु स्वयमपि गलतीति धर्मवादवादिना त्वया न वक्तुं युक्तम्। अनुभूतित्वनिवृत्तौ च कथमनुभूतिः स्यादित्यभिप्रायेण **सविशेष एवावतिष्ठत** इत्युक्तम्। अन्यथा स्वरूपासिद्धिः स्यादित्यभिप्रायेणैवकारः। सर्वविशेषनिषेधको हेतुः स्वपरनिर्वाहकनीत्या कतकरजोवत्स्वात्मनोऽपि निवर्तकः स्यादित्यत्राह—**अत इति**; स्वस्मिन्निषिद्धे सविशेषत्वव्यापकाननुभूतित्वनिवृत्त्ययोगात्साधकाभावेन साध्यासिद्धिप्रसङ्गादित्यर्थः। **कैश्चित्**; हेतुतया प्रमितैस्तत्समानयोगक्षेमैश्च। यद्येतद्धेतुराहित्यमेतद्धेतुमत्त्वेन साध्यते, तदा प्रतिज्ञाहेत्वोर्विरोधश्च स्यादिति भावः। **अन्ये**; प्रमितिसिद्धस्वधर्मव्यतिरिक्ताः। **न क्वचित्**; न हि स्वानुभवे स्वस्य निर्विशेषत्वं सिध्यति। एवं तत्परामर्शेऽनुमानादौ चेत्यर्थः। हेतुरूपस्वगतविशेषः स्थापितः; अथ 'इदमहम्' इत्युक्तविषयाश्रयाभ्यामपि वैशिष्ट्यं स्थापयति—**धिय इति**। हिः प्रसिद्धौ। **धीत्वम्**; कस्यचित्प्रकाशात्मता; स्वैः स्वस्येति विशेषतः स्वप्रकाशता। "प्रकाशश्च कस्मैचित्" इति वक्ष्यति। पूर्वं त्वदुक्तो हेतुस्तत्साध्यं चेत्यर्थः। "निष्कृष्टा विषयधीरेव ब्रह्म" इति वदन्तं प्रत्यत्र **ज्ञातु**रित्यादिकमुच्यते। स हि "स्वसंबन्धादर्थान्तरे" इत्यादिकमप्याह। स्वमते त्वहमर्थस्यात्मनः प्रसिद्धधीव्यतिरिक्ततया विषयाश्रयावच्छिन्नप्रकाशत्वाभावेऽपि श्रुतिबलेन स्वप्रकाशत्वात्तद्गुणसारत्वाच्च ज्ञानत्वव्यपदेशः सूत्रितः। यथोपलम्भं वस्तुस्वभावः स्थाप्यः, अन्यथातिप्रसङ्गादित्यभिप्रायेण **उपलब्धे**रित्युक्तम्। विषयरहितोऽप्युपलम्भः कदाचिदस्ति; अतो न तद्भासनस्वभावतेत्यत्राह—**स्वापेति**। **अनुभवः**; आत्मभावनम्। **स्वावसरे**; तदुपपादनोचिते अहमर्थात्मत्वस्थापनकाले। **निपुणतरम्**; उपपन्नतरमित्यर्थः; परोक्तयुक्त्यैव साधनात्तैरपि संमन्तव्यमिति भावः। निर्विशेषत्वसाधकैर्विषयाश्रयाभ्यां च सविशेषत्वमुक्तम्। अथ परोक्तैः साध्यैश्च तदाह—**स्वाभ्युपगता इति**। तेषु मानसिद्धांशस्य स्वमतेऽपि सिद्धिद्योतनार्थ **एवकारः**। ते धियोऽनतिरिक्ता इत्यत्राह—**त इति**। संमतिविमतिभ्यां भेदमाह—**वस्त्विति**।

धीस्वरूपस्य सत्यत्वं बौद्धादेरपि संमतम्।
अतो धीमात्रसाध्यत्वे दुस्त्यजा सिद्धसाध्यता ॥ ३६५ ॥

तद्धर्मसाधने तु स्यात् स्वसिद्धान्तविरुद्धता।
स्वसाध्यानां मृषात्वोक्तिर्वृषलोद्वाहमन्त्रवत् ॥ ३६६ ॥

विमतिमूलस्वेष्टसमर्थनेन च सिद्धात् साध्यानामन्यत्वमाह—**स्वाभिमतेति** । हेतुतया स्वाभिमतैर्धीधर्मभेदैरित्यर्थः । तेन धीस्वरूपात्साध्येभ्यश्च व्यावृत्तैः साधकैरपि सविशेषत्वसिद्धिः । तेषां हेतूनां साध्यानां च कल्पितत्वपक्षोऽपि **स्वाभिमत**शब्देन **स्वमतोपपादनादि**त्यनेन च निरस्तः । यदि क्षणिकत्वादिकमिव नित्यत्वादिकमपि कल्पितं, कुतस्तदा ते क्वचित्पक्षपातः? तादृशनित्यत्वादिसाधने च न कथं परः सिद्धसाध्यतां ब्रूयात्? रज्जुसर्पनयात्तद्विरुद्धं च सत्यं स्यात् । हेतूनां च तथात्वे बाष्पारोपितधूमवदसाधकत्वम् । यदि ब्रूयात्—आरोपितधूमादेरसाधकत्वं न कल्पितत्वात्, किंतु व्याप्तिशून्यत्वात्; सत्यां तु तस्यामसत्यस्यापि साधकत्वं दृष्टमिति; तदसत्, व्याप्तेरप्यत्र कल्पितत्वाङ्गीकारात्; तादृशी च बाष्पधूमे सिद्धेति । यथा च माध्यमिकोक्तबाधकप्रामाण्यमिथ्यात्वेन बाध्यस्य ब्रह्मणः सत्यत्वम्, एवं विशेषबाधकप्रामाण्यमिथ्यात्वेऽपि तत्सत्यत्वं दुस्त्यजम् ।

अत्र सत्यमसत्यं वा साधनं दूषणं च वः ।
सत्यत्वे सद्वितीयत्वमसत्यत्वे त्वनर्थता ॥ ३६७ ॥

पारिशेष्याद्विशेषसत्यत्वपक्षमभ्युपगमयति—**अत इति** । वस्तुमात्रकल्पितत्वयोर्दुर्वचत्वादित्यर्थः । **प्रामाणिकविशेषैः**; हेतुभिः साध्यैः सविशेषैर्विषयाश्रयैश्चेति यावत् । अन्यथा तुच्छत्वद्योतनार्थ **एव**कारः ।

सामान्यतो हि धीस्थेऽर्थे विशेषस्याग्रहे सति ।
स्यादध्यासस्त्वदिष्टे तु द्वयाभावाद्भवेन्न सः ॥ ३६८ ॥

**मूलभावप्रकाशिका**

सविशेषानुभवमेव दर्शयति—**इदमहमिति** । **सर्वेषामनुभवानामिति**; सर्वेषां ज्ञानविषयकानुभवानां कर्तृकर्मविशिष्टज्ञानविषयत्वादित्यर्थः । ननु च कर्मकर्तृत्वादिविशेषणविशिष्टाया अनुभूतेः 'अनुभूतिर्धर्मरहिता अनुभूतित्वात्' इत्यादिहेतुभिर्निर्विशेषत्वं प्रसाध्यत इत्याशङ्क्य, अनुभूतित्वादिहेतुभिः सविशेषत्वमवर्जनीयमिति न कथंचिन्निर्विशेषसिद्धिरित्याह—**सविशेषोऽपीत्यादिना** । ज्ञातुर्विषयप्रकाशनस्वभावतयोपलभ्यमानत्वेन हेतुना अहंज्ञानस्य विषयप्रकाशकत्वलक्षणं ज्ञानत्वमनन्याधीनप्रकाशत्वलक्षणं स्वप्रकाशत्वं च परेण साधनीयम्; कर्मकर्तृवैशिष्ट्यनिरासे पराभिमतयोस्तयोरप्यसिद्धिः स्यादित्याह—**धियो हीति** । ननु स्वापमदमूर्छासु 'अयमहम्' इति इदंत्वाहंत्वादिविशेषानुपलम्भात् तत्का-

लीनानुभव एव निर्विशेषानुभवे प्रमाणमित्याशङ्क्य निराकरोति—**स्वापेति**। **स्वावसर इति**; अहमर्थात्मत्वसमर्थनावसर इत्यर्थः। स्वाभ्युपगमविरोधमाह—**स्वाभ्युपगताश्चेति**। **नित्यत्वादय इति**; आदिपदेन सत्यत्वज्ञानात्वादयो विवक्षिताः। ननु परैरानन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः, ते चापृथक्त्वेऽपि पृथगिवावभासन्त इत्युक्तत्वान्नित्यत्वादिधर्माणां न ब्रह्मात्मत्वमित्याशङ्क्याह—**न वस्तुमात्रमिति**। **विधाभेदेति**; नित्यत्वादीनां वस्तुमात्रत्वे 'इदं नित्यम्, अनित्यम्' इत्यादिविवादा न स्युः। वस्तुस्वरूपस्य नित्यत्वादेरप्यसंभवादविवादत्वादिति भावः। **स्वाभिमतेति**; 'स्वतःसिद्धत्वादनुभूतेरनुत्पन्नत्वम्; अनुत्पन्नत्वादेव नानात्वाभावः' इत्येवं साधयता त्वया साधनस्य साध्यस्य च धर्मस्य भेदोऽभ्युपगन्तव्यः, अभेदे साध्यसाधनभावासंभवादिति भावः।

### श्रीभाष्यम्

**शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम्, पदवाक्यरूपेण प्रवृत्तेः। प्रकृतिप्रत्यययोगेन हि पदत्वम्। प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम्। पदभेदश्चार्थभेदनिबन्धनः। पदसंघातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यान्न निर्विशेषवस्तुनि शब्दः प्रमाणम्।**

### श्रुतप्रकाशिका

इत्थं स्वानुभवप्रसङ्गात्तत्रापि सविशेषत्वमुपपादितम्। अथ प्रथमप्रतिज्ञातं सर्वप्रमाणानां सविशेषविषयत्वं वक्तुमारभते। तत्र परेण प्रत्यक्षाद्बलीयस्त्वेनोक्तत्वात् सविशेषबोधकत्वातिशयस्य स्वाभिमतत्वाच्च प्रथमं शब्दस्य सविशेषविषयत्वमाह—**शब्दस्य त्विति**। तुशब्दः परोक्तबलीयस्त्वसूचकः। **विशेषेणे**तिपदेन सविशेषवस्तुबोधकत्वातिशय उच्यते। यद्वा सर्वप्रमाणानां सविशेषगोचरत्वे प्रतिज्ञाते चिद्वस्तुन्यन्तरङ्गतया स्वप्रकाशवृत्तिं निरूप्य तदनन्तरमात्मनि प्रत्यक्षादिभ्योऽन्तरङ्गत्वेनोभयवादिसंमतस्य शास्त्रस्य सविशेषविषयत्वमाह—**शब्दस्य त्विति**। सविशेषगोचरत्वे प्रमाणान्तरेभ्योऽतिशयो **विशेषणे**त्युच्यते। तुशब्देन तदौपयिकं शब्दस्य सविशेषगोचरप्रत्यक्षादिपूर्वकत्वं विशेष उच्यते।

प्रतिज्ञातस्य हेतुमाह—**पदवाक्यरूपेणेति**। ततः किं सविशेषविषयत्वस्येति शङ्कायां पदरूपेण प्रवृत्तिं विवृणोति—**प्रकृतीति**। ततः किमित्यत्राह—**प्रकृतिप्रत्यययोरिति**। **पदस्यैवेति ;** वाक्यं तावदास्ताम्, पदमेव सविशेषपरमिति भावः। वाक्यरूपेण प्रवृत्तिं विवृणोति—**पदभेदश्चेति**। **पदभेदः ;** पदानां परस्परभेदः। न केवलं प्रकृतिप्रत्ययभेद एवार्थभेदहेतुः, पदभेदोऽपीति चार्थः ; अन्यथा पदान्तरवैयर्थ्यादिति भावः। पदभेदस्यार्थभेदनिबन्धनत्वेऽपि वाक्यैकत्वान्निर्विशेषत्वसिद्धिरिति शङ्कायां वाक्यस्य सविशेषविषयत्वं वदन् निर्विशेषे प्रामाण्याभावमुपसंहरति—**पदसंघातेति**। तत्तत्पदाभिधेयानां संसर्गविशेष एव वाक्यप्रतिपाद्यः, न तु तत्तत्पदार्थप्रहाणेनार्थान्तरमित्यर्थः। ननु निर्विशेषशब्देन निर्विशेषं वस्तु किं प्रतिपन्नम ? उताप्रतिपन्नम् ? उत सविशेषं वस्तु प्रतिपन्नम् ? आद्ये निर्विशेषवस्तुनः शब्देन प्रतिपादनान्निषेधोऽनुपपन्नः। द्वितीये तु निषेध्याप्रतिपत्तेर्निषेधोऽनुपपन्नः। तृतीये तु सविशेषनिरासः कृतः स्यात्—नैवम् ; भ्रान्तिप्रमितिविभागात् निर्विशेषे वस्तुनि शब्दस्य प्रमाणभावो हि निषिध्यते, न तु भ्रमहेतुत्वम्। अतो निर्विशेषशब्दजनिता मिथोऽन्वयानर्हार्थगोचरा भ्रान्तिः प्रमितिजनकैः शब्दैर्बाध्यत इत्युक्तम्। अधिकरणतदसाधारणनिषेध्यप्रतिपक्षधर्मतो विशेषशब्दस्य संकोचानभ्युपगमे ह्यधिकरणालाभान्निषेधकशब्दस्यानन्वय एव स्यात् ; न हि निर्विभक्तिकः पदान्तरानन्वितो निर्विशेषशब्दोऽर्थाभिधायी। अतः संकोचाभावे व्याघातः। यद्यपि कथंचिद्विभक्त्यर्थो न विवक्षितः, तथापि निर्विशेषपदस्य बहुव्रीहित्वादन्यपदार्थाभिधानमवर्जनीयम्। तत्पुरुषपदप्रयोगे चाधिकरणाभिधानमवर्जनीयम्। अतो यदि निर्विशेषशब्दः प्रमाणभूतवाक्यस्थस्तदा विषयविभागो द्रष्टव्यः, सकलविशेषशून्यप्रतिपादनासामर्थ्यात्। 'नगरे को विशेषः ?' इत्युक्ते 'न कश्चिदपि' इत्यादिषु विशेषनिषेधः संकुचितविषयो दृष्टः ; तथा शास्त्रेष्वपि "अविशेषास्ततो हि ते" इति गन्धादिगुणान्वितानामपि पृथिव्यादीनां शान्तत्वघोरत्वमूढत्वरूपकतिपयविशेषविरहविवक्षया अविशेषशब्दः प्रयुज्यते।

## भावप्रकाशिका

**स्वप्रकाशवृत्तिं निरूप्येति ;** पूर्वस्मिन् पक्षे स्वप्रकाशवृत्तिः प्रतिज्ञातसर्वप्रमाणसविशेषविषयत्वाननुप्रविष्टा; द्वितीयपक्षे तु सापि तत्र निवेशितेति विवेकः। **अन्तरङ्गत्वेनोभयवादिसंमतस्येति ;** पूर्वस्मिन् पक्षे परोक्तं बलीयस्त्वं न सिद्धान्तिसंमतम्। सिद्धा-

न्तिसंमतः सविशेषवस्तुबोधकत्वातिशयो न परसंमतः। अस्मिन् पक्षे अन्तरङ्गत्वाकार उभयसंमत इति विवेकः। **ननु निर्विशेषशब्देनेति**; 'निर्विशेषं वस्तु नास्ति' इत्यत्र निर्विशेषशब्देनेत्यर्थः। **निषेधोऽनुपपन्न इति**; प्रतीतेः सर्वस्या अपि प्रमारूपत्वादित्यभिमानः। **भ्रान्तिप्रमितिविभागादिति**; प्रमितिविषयनिषेधे हि दोषः, न भ्रान्तिविषयनिषेध इति भावः। **निर्विशेषशब्दजनितेति**; प्रमाणाभासप्रसक्ता भ्रान्तिः 'निर्विशेषं नास्ति' इति प्रमाणेन बाध्यत इत्यर्थः। भ्रान्तित्वे हेतुमाह—**मिथोऽन्वयानर्हार्थगोचरेति**; परस्परानन्वितार्थान्वयविषयत्वमेव भ्रान्तित्वमिति भावः। केचित्तु—**ननु निर्विशेषशब्देन निर्विशेषं वस्त्विति** ग्रन्थमन्यथा व्याचक्षते—'न निर्विशेषवस्तुनि शब्दः प्रमाणम्' इति भाष्यवाक्यस्थनिर्विशेषशब्देनेत्यर्थ इति। अस्मिन् पक्षे निर्विशेषवस्तुनः शब्देन प्रतिपादने **निषेधोऽनुपपन्न** इति ग्रन्थः स्वरसः। तथा **नैवं, भ्रान्तिप्रमितिविभागान्निर्विशेषवस्तुनि शब्दप्रमाणाभावो निषिध्यते** इति च स्वरसः। अत्र पक्षे **निर्विशेषशब्दजनिता मिथोऽन्वयानर्हार्थगोचरा भ्रान्तिः प्रमितिजनकैः शब्दैः** इत्यस्यायमर्थः—निर्विशेषशब्दजनिता परस्परान्वयायोग्यधर्मधर्मिविषयकनिर्विशेषशब्दत्वभ्रान्तिः 'निर्विशेषं न शाब्दम्' इति शब्दप्रमाणकत्वाभावप्रमितिजनकैः शब्दैर्बाध्यते, भ्रान्तित्वेन ज्ञाप्यते; भ्रमत्वबुद्धिर्हि बाध इति। **अधिकरणतदसाधारणेति**; अधिकरणत्वतः अधिकरणासाधारणनिषेध्यप्रतिपक्षधर्मतश्चेत्यर्थः। विशेषाभावाधिकरणस्य निर्विशेषशब्दार्थस्य ब्रह्मणः परेणाप्यङ्गीकृतत्वादधिकरणशब्दो भावप्रधान एव। तदसाधारणभूतो निषेध्यप्रतिपक्षधर्मः। **अधिकरणालाभान्निषेधकशब्दस्यानन्वय एव स्यादिति**; विशेषाभावाधिकरणत्वरूपनिर्विशेषशब्दप्रवृत्तिनिमित्ताभावे निर्विशेषशब्दस्यानर्थकत्वमेव स्यादित्यर्थः। दूषणान्तरमाह—**न हि निर्विभक्तिक इति**। ततश्च विभक्त्यर्थसंख्यान्वयोऽपि स्यादिति भावः। **पदान्तराननन्वित इति**; ततश्च 'निर्विशेषं वस्त्वस्ति' इत्युक्ते वस्तुत्वास्तित्वान्वयावश्यंभाव इति भावः। **अन्यपदार्थाभिधानमिति**; "अनेकमन्यपदार्थे" इत्यनुशासनादन्यत्वरूपार्थाभिधानमवर्जनीयमिति भावः। इदमुपलक्षणम्। मत्वर्थे बहुव्रीहेरनुशिष्टत्वान्मत्वर्थात्मकसंबन्धरूपविशेषाभिधानमवर्जनीयमित्यपि द्रष्टव्यम्। **तत्पुरुषपदप्रयोगे चेति**; 'निर्गतो विशेषात्' इत्येवं "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासेन निर्गमनक्रियाश्रयत्वस्य प्रतीत्यवश्यंभावादिति भावः।

श्रुतप्रदीपिका

प्रसक्तानुप्रसक्त्या स्वानुभवस्य सविशेषसाधकत्वमुक्तम् । अथ प्राक् सामान्येन प्रतिज्ञातं सर्वमानसविशेषविषयत्वं तत्तद्विशेषप्रदर्शनेन विवृण्वन् परपक्षे प्रत्यक्षात् प्रबलं स्वपक्षे सुतरां सविशेषपरं च शब्दं निरूपयति—**शब्दस्य त्विति** । पदरूपेण प्रवृत्तिं विवृणोति—**प्रकृतीति** । ततः किमित्यत्राह—**प्रकृतिप्रत्यययोरिति** । **पदस्यैवेति** ; वाक्यं तावदास्ताम् , पदमेव सविशेषपरमिति भावः । वाक्यरूपेण प्रवृत्तिं विवृणोति—**पदभेदश्चेति** । वाक्यार्थैक्यान्निर्विशेषसिद्धिशङ्कां परिहरन्निगमयति—**पदसंघातेति** ; पदार्थसंसर्गविशेषो वाक्यार्थः । निर्विशेषशब्दात्प्रतीतिमात्रं, न तु प्रमितिः, विभक्तीतरपदयोगावश्यंभावात् व्याहतेरित्यभिप्रायवान् प्रमाणशब्दः । इत्थं विभागाभावे पूर्वपक्षसिद्धान्तरूपेण न सकलशास्त्रप्रवृत्तिः । तस्मादयं भ्रान्तिप्रयुक्तश्चेत्संकोचः कार्यः, 'नगरे को विशेष ?' इति पृष्टे 'न कश्चिद्विशेषः' "अविशेषास्ततो हि ते" इत्यादिवत् ।

तत्त्वटीका

एवं स्वानुभवसिद्धिप्रसक्तानुप्रसक्तमुपसंहृत्य प्रागुक्तं सर्वप्रमाणानां सविशेषविषयत्वं विवृण्वन् प्रत्यक्षात् प्रबलतया पराभिमतं शब्दं तावद्विशिष्टपरमाह—**शब्दस्येति** । तुशब्दो विशिष्टविषयप्रत्यक्षाद्युपजीवित्वं परकल्पितशास्त्रप्राबल्यं वा द्योतयति । वाक्यात्मना सविशेषबोधनेन प्रत्यक्षात् समधिकत्वव्यञ्जनाय **विशेषेण**त्युक्तम् । **एव**कारेण यत्किंचिन्निमित्ताभावे शब्दस्य प्रवृत्तिरेव न स्यादिति व्यज्यते ।

सत्यनित्यत्ववेद्यत्ववाच्यत्वादौ तु साश्रये ।
तत्तच्छब्दप्रवृत्तिः स्यात् स्वान्यनिर्वाहकत्वतः ॥ ३६९ ॥

**अभिधानसामर्थ्यम्**—कयाचिद् वृत्त्या बोधनार्हत्वमित्यर्थः । विशिष्टार्थत्वातिरेके निदानमाह—**पदे**ति । तत्र पदेऽपि वाचकांशभेदमाह—**प्रकृती**ति । **हि**शब्दः "सुप्तिङन्तं पदम्" "विभक्त्यन्ताः पदम्" इत्यादिशास्त्रान्तरप्रसिद्धिहेतुमवधारणं वा व्यनक्ति । ततः किमित्यत्राह—**प्रकृतिप्रत्यययोरिति** । यद्यपि स्वार्थे केचित्प्रत्यया विहिताः, तथापि प्रत्ययान्तरेण संख्यादिवैशिष्ट्यं प्रायशस्तत्रापि स्यादिति भावः । एवं गोत्वादिपदेष्वपि द्रष्टव्यम् । **पदस्यैव** ; वाक्यस्थस्य तदंशमात्रस्यापीत्यर्थः । **अवर्जनीय**मित्यनेनाभिहितान्वयवादिभिरपि पदांशयोरन्वितार्थत्वं स्वीकृतमिति सूच्यते । वाक्यस्यापि

सर्वविशिष्टपरत्वं वक्तुं तदुपयुक्तमाह—**पदभेदेति** । प्रमाणभूतैकवाक्यस्थविषयमिदम् । वीप्सादौ च तात्पर्यभेदादर्थभेदोऽस्त्येव । उक्तार्थेन वाक्ये फलितमाह—**पदसंघातेति** । अभिहितान्वयमतेन संसर्गोक्तिः । **विशेष**शब्दोऽपूर्वार्थः । मतान्तरे तु संसर्गविशिष्टे तात्पर्यम् । यद्यपि "अर्थैकत्वादेकं वाक्यम्" इति न्यायादेक एव वाक्यार्थः, तथापि लिङ्गसंख्याकारकाद्यनेकांशगर्भोऽसौ ; न तु क्वचिदपि निर्धूतनिखिलांशं किंचित् शब्द-बोध्यम् । अखण्डवाक्यार्थादिक्लृप्तिस्तु निरसिष्यते । निर्विशेषशब्दोऽप्याप्तप्रयुक्तश्चेद्वि-शिष्टतया प्रमितमन्यपदार्थं विवक्षितविशेषरहितं लिङ्गसंख्यादियुक्तमेव ब्रूते । न चैकं पदं प्रमाणम् । अध्याहारादिना पदान्तरयोगे तु 'नगरं निर्विशेषम्' "तन्मात्राण्यविशेषाणि" इतिवत्तात्पर्यवशेन संकुचितवृत्तिः स्यात् । भ्रान्तोक्तश्चेन्न प्रमितिहेतुत्वम् ।

शब्दस्यातोऽनुमानत्वमप्रमाणत्वमेव वा ।
वदद्भिरपि दुर्वारं विशिष्टार्थावबोधनम् ॥ ३७० ॥

अविनाभावतोऽन्येन संबन्धेन विशिष्टधीः ।
शब्दात्स्यान्नानुमानत्वं ततोऽस्येत्यपि सुग्रहम् ॥ ३७१ ॥

प्रत्यक्षवद्विशिष्टार्थे बुद्धेर्बाधाद्यभावतः ।
मानत्वादिह चार्वाकजल्पश्च वितथोद्यमः ॥ ३७२ ॥

मनोजन्यतयात्रापि प्रत्यक्षत्वे विवक्षिते ।
न नः काचित् क्षतिस्तत्तु न प्रत्यक्षस्य लक्षणम् ॥ ३७३ ॥

एतत्सर्वं मत्वोक्तम्—**न निर्विशेषवस्तुनि शब्दः प्रमाणमिति** ।

## मूलभावप्रकाशिका

**न निर्विशेषवस्तुनीति** ; अखण्डार्थस्य सत्यज्ञानादिवाक्यस्य निर्विशेषवस्तुनि प्रामाण्यमुत्तरत्र निषिध्यत इति भावः ।

## श्रीभाष्यम्

प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेष-वस्तुनि प्रमाणभावः । सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वा-देव सविशेषविषयम् । निर्विकल्पकमपि सविशेषविषयमेव, सविकल्पके

स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसंधानहेतुत्वात् । निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणं, न सर्वविशेषरहितस्य; तथाभूतस्य कदाचिदपि ग्रहणादर्शनात्, अनुपपत्तेश्च । केनचिद्विशेषेण 'इदमित्थम्' इति हि सर्वा प्रतीतिरुपजायते; त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात् । अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम् । द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते । तत्र प्रथमपिण्डग्रहे गोत्वादेरनुवृत्ताकारता न प्रतीयते । द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः । प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयमिति द्वितीयादिग्रहणस्य सविकल्पकत्वम् । सास्नादिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यत इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्; न पुनः संस्थानरूपजात्यादेरग्रहणात् । संस्थानरूपजात्यादेरप्यैन्द्रियकत्वाविशेषात् संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्तु 'इत्थम्' इति गृह्यते । अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिवत् संस्थानवच्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव । अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् ।

### श्रुतप्रकाशिका

एवं ज्ञानस्वरूप आत्मन्यन्तरङ्गतया स्वानुभवशब्दौ निरूपितौ । अथ व्यतिरिक्तप्रमाणेषु मूलभूतस्य प्रत्यक्षस्य सविशेषविषयत्वमुपपादयति—**प्रत्यक्षस्येत्यादिना** । निर्विकल्पकानुभूतार्थस्य सविकल्पके प्रतिसंधानस्य वक्ष्यमाणत्वात्तदुपयोगित्वेन च सविकल्पकस्वरूपं प्रदर्शितम् । अथ निर्विकल्पकस्य सविशेषविषयत्वं प्रतिजानीते—**निर्विकल्पकमपीति** । एकजातीयपिण्डेषु द्वितीयादिपिण्डग्रहणस्य सविकल्पकत्वं प्रथमपिण्डग्रहणस्य

निर्विकल्पकत्वं च हृदि निधाय हेतुमाह—**सविकल्पक इति**। विशिष्टप्रतिसंधानमिति षष्ठीसमासः, कर्मधारयो वा। **स्वस्मिन्**; निर्विकल्पके, अनुभूतजात्यादिपदार्थविशिष्टवस्तुविषयस्य प्रतिसंधानस्य सविकल्पके हेतुत्वादित्यर्थः। प्रथमपिण्डस्य विशिष्टतयावगतत्वमर्थलब्धम्, प्रथमपिण्डे जातिविशिष्टतया प्रतीते हि द्वितीयादिषु जात्यनुवृत्तिबुद्धिलक्षणं प्रतिसंधानं घटते। कथं प्रतिसंधानम्? सकलविशेषशून्यविषयं हि निर्विकल्पकमिति हेत्वसिद्धिमाशङ्क्याह—**निर्विकल्पकं नामेति**। सकलविशेषवैधुर्याभावमुपपादयति—**तथाभूतस्येति**। सकलविशेषशून्यग्रहणं किं दर्शनादभ्युपगम्यते, किं वा अनुपपत्त्या कल्प्यत इति विकल्पे न तावद्दर्शनमित्याह—**कदाचिदपीति**। कल्पनं व्युदस्यति—**अनुपपत्तेरिति**। निर्विशेषज्ञानबाधिकैवानुपपत्तिर्दृश्यते; तत्कल्पिका तु दूरतो निरस्तेति भावः। अदर्शनं विवृणोति—**केनचिदिति**; प्रकारविशेषनियमो नेति भावः। उत्तरत्र 'ग्रहणायोगात्' इति पञ्चम्या हेतुत्वं स्फुटम्। अत्र पञ्चमीस्थाने हिशब्दः। 'इदमित्थम्' इति प्रतीतिमेव विवृण्वन्नर्थात् सकलविशेषशून्यग्रहणकल्पनामपि व्युदस्यति—**त्रिकोणेति**। अनुपपत्तिं विवृणोति—**ग्रहणायोगादिति**। अध्याहृतशङ्कावाक्येन ग्रहणायोगादिति पञ्चम्या अन्वयः। **त्रिकोणम्**; गोमुखम्। **ग्रहणायोगात्**; दृष्टव्याप्तिविरोधेन सकलविशेषशून्यग्रहणकल्पनस्यानुपपन्नत्वादित्यर्थः। **अनुपपत्ते**रित्यनेन विपक्षे बाधकस्तर्कोऽप्यभिप्रेतः सविशेषविषयत्वाभावे प्रत्ययत्वमेव हीयेतेति। अस्य तर्कस्यानुग्राह्यं प्रमाणं प्रत्यक्षं योग्यानुपलम्भश्च। यद्वा **अनुपपत्ते**रित्यनेन सविशेषविषयत्वे साधकप्रमाणं विवक्षितम्—'प्रथमाक्षसंनिपातजं ज्ञानं सविशेषविषयं, ज्ञानत्वात् प्रतिपन्नवत्' इति। एवं साधकप्रमाणाभावबाधकप्रमाणसद्भावाभ्यां विवक्षितकतिपयविशेषशून्यग्रहणं निर्विकल्पकमिति सिद्धम्। अनेन निर्विकल्पकशब्दस्य संकुचितवृत्तित्वं फलितम्; स च संकोचः कस्मिन्विषय इत्यत्राह—**अत इति**। **अतः**; उक्तादर्शनानुपपत्तिभ्यामित्यर्थः। प्रथमद्वितीयपिण्डयोर्निर्विकल्पकसविकल्पकशब्दौ न संकेतितौ; अतस्तयोः पिण्डयोर्वैषम्यं वक्तव्यमिति शङ्कायां ग्राह्याकारभेदं दर्शयति—**तत्रेत्यादिना** वाक्यद्वयेन। गोत्वानुवृत्तिप्रतीत्यप्रतीत्योः सविकल्पकनिर्विकल्पकशब्दयोः प्रवृत्तिनिमित्ततां दर्शयति—**प्रथमप्रतीतीत्यादिना** वाक्यद्वयेन। पूर्वग्रन्थोक्तं गोत्वं संस्थानशब्देन विशेषितम्। तेन पराभिमतविलीनाज्यगतघृतत्वादेरिव

प्रत्यक्षत्वे व्यञ्जकापेक्षया विलम्बो नास्तीति दर्शितम् । तदेव संस्थानमनन्तरग्रन्थे सास्नादिशब्देन निर्दिश्यते । एवमनुवृत्तिग्रहाग्रहाभ्यां सविकल्पकत्वं निर्विकल्पकत्वं चोक्तम् । नानुवृत्तिमात्राग्रहणान्निर्विकल्पकत्वं, किंतु जात्यग्रहणाच्च ; अनुवृत्त्यग्रहणे हि जातिरेवागृहीता स्यादिति शङ्कायामाह—**न पुनः संस्थानेति** । अत्राग्रहणानुपपत्तिद्योतकः **संस्थानरूप**शब्दः । गोत्वादेरसाधारणधर्मभूतानुवृत्त्यग्रहणात् गोत्वादिर्न गृहीत इति शङ्कायामग्रहणानुपपत्तिमेव विवृणोति—**संस्थानरूपजात्यादेरपीति** । ग्रहणकारणभूतेन्द्रिययोग्यतायामपि स एव हेतुरिति द्योतनाय पुनः संस्थानशब्दोक्तिः । निर्विकल्पकस्य सविशेषविषयत्वे प्रमाणत्वेन सविकल्पके निर्विकल्पकानुभूतार्थविशिष्टप्रत्यभिज्ञानं पूर्वमुक्तम् । पराभिमतनिर्विकल्पकाभावे योग्यानुपलम्भः प्रत्यक्षं च प्रमाणम् । तयोरनुग्राहकस्तर्कश्चानेनोक्तो भवति । किं प्रमाणानुपपत्त्या प्रमेयानुपपत्त्या वा वस्तुमात्रग्रहणाभ्युपगम इति विकल्पमभिप्रेत्य प्रमाणानुपपत्तिं प्रथमं व्युदस्यति—**ऐन्द्रियकत्वाविशेषादिति** । अनेन पृथिव्यपृथक्सिद्धगन्धादिव्यावृत्तिः । कथमैन्द्रियकत्वम् ? समवायस्यानैन्द्रियकत्वात्तदयुक्तमिति चेत् , तर्हि सविकल्पकेऽपि विशिष्टग्रहणमनुपपन्नम् । अतो न भिन्नेन्द्रियग्राह्यत्वमिति न प्रमाणानुपपत्तिः । असंनिहितत्वं प्रमेयानुपपत्तिः ; अपृथक्सिद्धत्वेन तन्नास्तीति परिहरति—**संस्थानेनेति** । अनेन चाक्षुषत्वेऽपि पृथक्सिद्धदण्डादिव्यावृत्तिः । एकेन्द्रियग्राह्यत्वे सत्यपृथक्सिद्धत्वात् प्रमाणप्रमेयानुपपत्तिर्नास्तीति ससंस्थानमेव वस्तु गृहीतमित्यर्थः । एवं पूर्वं संस्थानरूपशब्देनाभिप्रेतोऽर्थो विवृतो भवति । **इत्थमिति** ; अनुवृत्त्यग्रहणान्न संस्थानरूपजात्यग्रहः शङ्कनीयः, प्रकारप्रकारिभावेन ग्रहणोपपत्तेरिति भावः । प्रथमपिण्डग्रहणेऽनुवृत्त्यग्रहणात् गोत्वं न गृहीतं चेत् द्वितीये पिण्डेऽपि गोत्वं दुर्ग्रहम् , अनुवृत्त्यग्रहणात् । अनेकव्यक्त्यन्वयरूपा ह्यनुवृत्तिः । सा चान्वयिनः पदार्थस्य पूर्वव्यक्तिनिष्ठतापरामर्शेनैव द्वितीयादिषु गृह्यते । अतः प्रथमपिण्डे गोत्वाग्रहात्तदन्वयापरामर्शेन द्वितीयव्यक्त्यन्वयरूपानुवृत्तिर्द्वितीयेऽपि दुर्ग्रहेति तत्रापि गोत्वमगृहीतम् । एवं प्रथमद्वितीयव्यक्त्यन्वयापरामर्शाच्च तृतीयेऽप्यनुवृत्तिरगृहीतेति गोत्वमगृहीतम् । एवं व्यक्त्यन्तरेष्वपि गोत्वं दुर्ग्रहं स्यात् । अतः प्रथमपिण्डग्रहण एव गोत्वग्रहणमभ्युपेत्यम् । एवं सकलविशेषशून्यवस्तुग्रहणं व्युदस्तम् । जात्यादयो विशेष्यं च पृथक् पृथक् निर्विकल्पके गृहीतम् ; सविकल्पक एव विशिष्टतया ग्रहणमिति पक्षश्चार्थान्नि-

रस्तो भवति। विशेषणं विशेष्यं च पृथक् पृथक् गृहीतमिति कथमवगतम्? दण्डकुण्डलादिषु विशेषणविशेष्ययोः पृथक् पृथक् ग्रहणपूर्वकत्वदर्शनादिति चेत्, तत्र किमपृथक्स्थितिवेलायां पृथक् ग्रहः? उत पृथक् स्थितिवेलायाम्? न प्रथमः; विशिष्टत्वेनैव ग्रहणात्। पृथक् स्थितिवेलायां तु विशिष्टग्रहणमेव नास्तीति न तत्प्रति हेतुत्वम्। अतः पृथक् ग्रहणस्य विशिष्टग्रहणहेतुत्वाभावान्न गोत्वादौ पृथक् ग्रहणप्रसङ्गः। ननु विशेषणविशेष्यभावस्य सप्रतियोगिकत्वात् तज्ज्ञानस्य प्रतियोगिस्वरूपज्ञानमपेक्षितमिति विशिष्टप्रतिपत्तेर्जात्यादिपदार्थस्वरूपमात्रग्रहणपूर्वकत्वं स्वीकार्यम्; उच्यते—प्रतियोगिज्ञानापेक्षा नाम किं विशिष्टज्ञाने प्रतियोग्यवभासनियमः? उत तत्तज्ज्ञानस्य विशिष्टज्ञानहेतुत्वम्? प्रथममभ्युपगच्छामः। द्वितीये च जात्यादयः पदार्थाः प्रथमं मिथो व्यावृत्ततया गृहीताः, न वा? न चेत्, अव्यावृत्ततया गृहीतानां पूर्वोत्तरज्वालानामिव विशेषणविशेष्यभावे प्रतियोगिताप्रतीतिर्नोपपद्येत। यदि व्यावृत्ततया गृहीताः, तदा व्यावृत्तिश्च विशेषणविशेष्यभावेन पारतन्त्र्यादिलक्षणेन तदौपयिकाकारान्तरेण वा यदि न स्यात् विशेषणविशेष्यभावव्यत्यासप्रतीतिः प्रसज्येत। वस्तुसामर्थ्याद्वास्तव एव विशेषणविशेष्यभावः प्रतीयत इति चेत्, तर्हि वस्तुसामर्थ्यं नाप विशेषणविशेष्यभावरूपं तदौपयिकाकारान्तररूपं वा स्यात्। वस्तुस्वभावस्य सत्तयोपकारकत्वे वस्तुस्वभावादेव विशिष्टप्रतीतिसंभवात् स्वरूपमात्रग्रहणकल्पनमयुक्तम्। ज्ञाततयोपकारकत्वे तेन स्वभावेन व्यावृत्ततया विशेषणस्य प्रागवगतिरस्तीति प्रथमत एव विशिष्टप्रतीतिरभ्युपगता स्यात्। ततो वरं द्रव्यस्यैव प्रथमं विशिष्टतया प्रतीत्यभ्युपगमः। तस्यापि स्वभावस्य स्वविशेष्यभूतं विशेषणं प्रति विशेषणत्वं न प्रथममवगतं, किंतु स्वरूपमात्रमिति चेत्—तर्हि विशेषणतत्स्वभावयोर्विशेषणविशेष्यभावव्यत्यासः प्रतीयेत। तत्परिहाराय तस्य वस्तुस्वभावस्याकारान्तराभ्युपगमेऽनवस्था। यदि व्यत्यासविशिष्टप्रतीतिप्राथम्यप्रसङ्गपरिहाराय जात्यादीनां स्वरूपमेव विशेषणभावो विशेष्यभावश्च, न त्वाकारान्तरमित्यभ्युपगम्येत, तदा प्रथमप्रतिपत्तिर्विशेषणतया विशेष्यतया च स्यात्; तदप्रतिपत्तौ स्वरूपस्यागृहीतत्वप्रसङ्गात्। तथैव प्रतीतौ प्रथमत एव विशिष्टप्रतीतिः स्यात्; एकस्यां प्रतीतौ विशेषणतया विशेष्यतया च जात्यादीनां प्रतिपन्नत्वात्। अतः प्रथमत एव परस्परप्रतियोगिकविशेषणविशेष्यभावप्रतिपत्तिः संभवतीत्यभ्युपगन्तव्यम्। एवं सति विशिष्टग्रहणस्य पृथग्ग्रहणपूर्वकत्वे भिन्नसामग्रीवेद्यवस्तु-

गोचरत्वमुपाधिः स्यात्। पक्षव्यतिरिक्तव्यवच्छेद्याभावेऽप्युक्ततर्कबलात् पक्षव्यवच्छेद्यत्वसिद्धेरुपाधित्वं युक्तम्; यथा प्रध्वंसाभावस्यादिमत्त्वादन्तवत्त्वे भावरूपादिमत्त्वमुपाधिर्भवति, भावोन्मज्जनप्रसङ्गरूपतर्कबलात्; यथा चाग्निमत्त्वाद्धूमानुमाने आर्द्रेन्धनवत्त्वमुपाधिः सर्वत्राग्निमति धूमोपलम्भप्रसङ्गतर्कबलाद्भवति तद्वत्। अतः प्रथमपिण्डग्रहण एव गोत्वं गृह्यते; द्वितीयादिष्वनुवृत्तिग्रहणमित्यभ्युपेत्यम्। अतो यथोक्तस्वरूपे एव निर्विकल्पकसविकल्पके। अनुवृत्तिग्रहाग्रहौ हि सविकल्पकनिर्विकल्पकयोः प्रयोजकौ कथितौ, तत्कथं द्वितीयादिग्रहणस्य सविकल्पकत्वमित्यत्राह—**अत इति। अतः**; प्रथमग्रहण एव ससंस्थानवस्तुग्रहणात्। अनुवृत्तिग्रहणविधुरप्रथमेतरग्रहणेषु कथं सविकल्पकत्वमित्यत्राह—**द्वितीयादीति। द्वितीयादिपिण्डग्रहणेषु**; द्वितीयादित्वेन पिण्डग्रहणेषु। अनेन संस्कारसचिवग्रहणं सविकल्पकम्; इतरन्निर्विकल्पकमिति सिद्धम्। एतेन न केवलं जात्यनुवृत्त्यैव सविकल्पकत्वम्; जातिगुणादिष्वन्यतमानुवृत्तिविशिष्टग्रहणमपि सविकल्पकमिति सिद्धम्। सर्वविधानुवृत्तिविकलग्रहणमेव निर्विकल्पकम्; यथा एकव्यक्तौ प्रथमाक्षसंनिपातजं ज्ञानम्। नन्वेकव्यक्तावपि संस्कारजन्यं देशकालाद्यनुवृत्तिविशिष्टग्रहणं सविकल्पकं स्यात्; स्यादेव; संस्कारजन्यत्वानुवृत्तिगोचरत्वाविशेषात्। एकजातीयद्रव्येषु प्रथमपिण्डग्रहणमित्युक्तिस्तु जात्यननुवृत्तिप्रदर्शनार्था। **संस्थानिवत् संस्थानवदिति**; दृष्टान्तद्वयप्रदर्शनं स्पष्टीकरणार्थम्। पिण्डधर्मः संस्थानं, तद्धर्मोऽनुवृत्तिरिति धर्मधर्मिभावरूपसाम्यनिबन्धनं च दृष्टान्तद्वयोपादानम्। एवं सविकल्पकनिर्विकल्पकयोः संस्कारसचिवत्वतद्विरहौ सामग्रीवैषम्यं, गोत्वाद्यनुवृत्तितद्विरहौ ग्राह्याकारवैषम्यमित्युक्तं भवति। द्विविधस्यापि प्रत्यक्षस्य सविशेषेण विषयत्वं निगमयति—**अत इति**।

## भावप्रकाशिका

**निर्विकल्पकानुभूतार्थस्येति**; सविकल्पकानुभूयमानत्वप्रतिसंधानहेतुत्वस्य निर्विकल्पके निरूपणीयतया तस्य सविकल्पकज्ञानसाध्यत्वात् सविकल्पकं प्रथमं निरूपितमिति भावः। पश्चादुद्दिष्टस्य बुद्धिस्थत्वं चकारात् समुच्चीयत इत्यपि द्रष्टव्यम्। **सविकल्पकस्वरूपं प्रदर्शितमिति**; पश्चादुद्दिष्टमपि प्रागिति शेषः। **कल्पनामपि व्युदस्यति–त्रिकोणेति** इति ग्रन्थानन्तरं 'यद्वा अनुपपत्तिं व्युदस्यति–त्रिकोणेति' इति पाठः सुगमः। **अध्याहृतशङ्कावाक्येन ग्रहणायोगादिति पञ्चम्या अन्वय इति**; सर्वविशेषवियुक्तस्य ग्रहणं

कल्प्यमिति शङ्कावाक्यप्राप्तप्रतिक्षेपकत्वेनेत्यर्थः । **कस्यचिदपि पदार्थस्य ग्रहणायोगान्न सर्वविशेषवियुक्तस्य ग्रहणं कल्प्य**मित्यध्याहृतकल्प्यपदेनान्वय इति भावः । तमेवान्वयं दर्शयति—**दृष्टव्याप्तीत्यादिना । प्रथमद्वितीयपिण्डयोरिति** ; प्रथमद्वितीयपिण्डग्रहणमित्यर्थः । **गोत्वानुवृत्तिप्रतीत्यप्रतीत्योरिति** ; गोत्वानुवृत्तिविषयकत्वतदभावयोरित्यर्थः । **पृथिव्यपृथक्सिद्धगन्धादिव्यावृत्तिरिति** ; चक्षुषा पृथिवीग्रहणेऽपि न गन्धग्रहणं, गन्धस्य चक्षुरयोग्यत्वात् ; इह तु न तथेति भावः । **अपृथक्सिद्धत्वेन तन्नास्तीति परिहरतीति**; 'संस्थानेन विना संस्थानिनः प्रतीत्यभावात्* ' इत्यस्य भाष्यस्य संस्थानेन विना संस्थानिनोऽभावादित्येवार्थः । प्रतीत्यभावकथनं तदुपपादनायेति भावः । **संस्थानशब्देनाभिप्रेतोऽर्थ इति** ; अपृथक्सिद्धत्वमेव संस्थानशब्देनाभिप्रेतमिति भावः । यद्वा ' इत्थम् ' इत्यनेन विवृतो भवतीति योजना । **प्रकारप्रकारिभावेन ग्रहणोपपत्तेरिति** ; जातिव्यक्तिमात्रयोरिति शेषः । **जात्यादयो विशेष्यं चेति** ; अत्र विशेषणमात्रमेव गृह्यते, न विशेष्यमिति कश्चित्पक्षः । विशेषणवद्विशेष्यं च गृह्यत एव ; वैशिष्ट्यमात्रं न गृह्यत इत्यपरः । **ननु विशेषणविशेष्यभावस्य सप्रतियोगिकत्वादिति** ; दण्डविशिष्टज्ञाने दण्डे पुरुषप्रतियोगिकविशेषणत्वं भासते ; पुरुषे च दण्डप्रतियोगिकविशेष्यत्वम् । ततश्च विशिष्टज्ञानविषयीभूतस्य विशेषणविशेष्यभावस्य सप्रतियोगिकत्वात् तज्ज्ञानं पूर्वमपेक्षितमिति भावः । न च निर्विकल्पकवादिना विशेषणज्ञानस्यैव हेतुत्वमभिप्रेतं, न विशेष्यज्ञानस्येति वाच्यम् ; अस्य मतान्तरत्वेनादोषात् । **तस्यापि स्वभावस्य स्वविशेष्यभूतमिति** ; जात्यादेर्विशेषणत्वस्वभावलक्षणविशेषणत्ववैशिष्ट्यं न प्रथमतोऽवगतम् , येन प्रथमतो विशिष्टप्रतीत्यभ्युपगमः स्यादिति भावः । **विशेषणत्वं न प्रथमामिति** ; विशेषणत्ववैशिष्ट्यमित्यर्थः । **किंतु स्वरूपमात्रमिति चेदिति** ; परस्पराविशिष्टानि व्यक्तिजातितद्विशेषणत्वानि प्रतिपन्नानीत्यर्थः । तावतापि विशेषणविशेष्यभावाव्यत्यासासंभवादिति भावः । **विशेषणतत्स्वभावयोरिति** ; परस्परानन्वितत्तया गृहीतयोर्विशेषणतत्स्वभावयोर्विशिष्टप्रतीतिदशायां व्यत्यासः प्रसज्येत । अतस्तस्यापि धर्मान्तरभानेऽनवस्थेति भावः । **यदि व्यत्यासविशिष्टप्रतीतिप्राथम्यप्रसङ्गपरिहारतयेति** ; जात्यादिस्वरूपस्यैव विशेषणत्वरूपतया वस्तुस्वभावादेव न व्यत्यासप्रसक्तिः । धर्मान्तरस्याभावेन वैशिष्ट्याप्रसक्तेर्न विशिष्टप्रतीतिप्राथम्यप्रसङ्गः, नाप्यनवस्थेति

---

* अनेन 'प्रतीत्यभावात्' इति भावप्रकाशिकाकृतां पाठ इति गम्यते ।

भावः। **विशेषणतया विशेष्यतया च स्यादिति**; न च विशेषणत्वस्य स्वरूपस्य प्राग्गृहीतत्वेऽपि विशेषणतावैशिष्ट्यस्याभानान्न विशेषणतया प्रतीतिप्रसङ्ग इति वाच्यम्, तद्वैशिष्ट्यस्यापि स्वरूपरूपतया तस्यापि भानावश्यंभावादित्यत्र तात्पर्यात्। **भिन्नसामग्रीवेद्यवस्तुगोचरत्वमुपाधिः स्यादिति**; ननु निर्विकल्पकवादिमते विशिष्टज्ञाने विशेषणज्ञानघटिता सामग्री; विशेषणज्ञाने तु न तथेति भिन्नसामग्रीवेद्यत्वस्योपाधेः पक्षनिष्ठत्वात् कथमस्य साधनाव्यापकत्वमिति चेत्—न; विशेषणज्ञानहेतुत्वस्य दूषितत्वादित्यभिमानात्। **पक्षव्यवच्छेद्यत्वासिद्धेरिति**; पक्षव्यवच्छेद्यत्वस्य सिद्धिर्येन स पक्षव्यवच्छेद्यत्वसिद्धिः; पक्षमात्रव्यावर्तकस्येत्यर्थः। यद्वा पक्षे साध्यव्यवच्छेदस्य सिद्धेरित्यर्थः। बाधोन्नीत पक्षेतरत्वस्यैवानुकूलतर्के सत्युपाधित्वसंभवादिति भावः। तर्कबलादुपाधित्वस्वीकारे दृष्टान्तद्वयमाह—**यथा प्रध्वंसाभावेत्यादिना**। अयं भावः—यथा साधनावच्छिन्नसाध्यव्यापके भावरूपत्वे सत्यादिमत्त्वरूपे आर्द्रेन्धनसंयोगरूपोपाधौ च भावत्वार्द्रत्वरूपविशेषणयोः साध्यव्यापकत्वानुपयुक्तयोरप्यनुकूलतर्कवशादुपाधिकोटिप्रवेशः, एवं भिन्नसामग्रीवेद्यत्वमित्यत्र साध्यव्यापकत्वानुपयुक्तस्यापि भिन्नेत्यस्योपाधिविशेषणत्वं संभवतीत्यपि द्रष्टव्यम्। **सर्वत्राग्निमतीति**; आर्द्रेन्धनशून्यस्थलेऽपीत्यर्थः। ननु जन्यविशिष्टज्ञानत्वस्य बाधकं विना कार्यमात्रवृत्तिधर्मत्वेन कार्यतावच्छेदकत्वात् तदवच्छिन्नेऽनुगतकारणत्वस्य वक्तव्यत्वात् जन्यविशेषणज्ञानस्य हेतुत्वसिद्धौ जागराद्यविकल्पकज्ञानहेतुतया कारणभूतं विशेषणज्ञानं सिध्यन्निर्विकल्पकमेव सिध्यतीति चेत्—न; विशिष्टज्ञानत्वं हि विशेषणविशेष्यसंबन्धविषयकज्ञानत्वम्; तच्च विशेषणविशेष्यतत्संबन्धभानसामग्र्यैवोपपन्नम्; न तु कार्यतावच्छेदकं, नीलघटत्ववदर्थवशसंपन्नत्वात्। ननु विशिष्टज्ञाने विशेषणज्ञानहेतुत्वमवश्याश्रयणीयम्; इतरथा जातिव्यक्त्योरिन्द्रियसंनिकर्षेऽविशिष्टेऽपि कदाचिज्जातिविशेषणिका व्यक्तिविशेष्यिका प्रतीतिर्जायते, कदाचिच्च तद्वैपरीत्येनेति सर्वसिद्धव्यवस्था भज्येत। विशेषणज्ञानकारणत्वेऽभ्युपगते तु यस्य प्रागवगतिस्तद्विशेषणकं विशिष्टज्ञानमुत्पद्यत इति व्यवस्था सुवचेति चेत्—न; यत्रोभयविषयकं निर्विकल्पकं तत्र द्वयोरपि प्रागवगतत्वाविशेषाद्विशेषणविशेष्यभावव्यवस्थापकस्य कस्याप्यभावादव्यवस्थाप्रसक्तिस्तदवस्थैव स्यात्। यदि च तत्रादृष्टं व्यवस्थापकं, तदेव सर्वत्र व्यवस्थापकमस्तु; किं विशेषणज्ञानकारणत्वाभ्युपगमेन? ननु गोत्वप्रत्यासत्तिजन्यं ज्ञानं गोत्वप्रकारकमेव, न व्यक्तिप्रकारकमिति सिद्धम्। तत्र यदि

विशेषणज्ञानं विशिष्टज्ञाने कारणं न भवेत् तदा सामान्यप्रत्यासत्तिजन्यं ज्ञानं पूर्वानवगत-व्यक्तिविशेषणकमपि कदाचित् स्यात्, पूर्वावगतमेव विशेषणमिति नियमाभावादिति चेत्—न; सामान्यप्रत्यासत्तिजन्यसकलव्यक्तिविषयकज्ञानस्यैवाभावात्। तस्माद्विशिष्टज्ञानस्य विशेषणविशेष्यतद्वैशिष्ट्यभानसामग्र्यैवोपपन्नत्वान्न विशेषणज्ञानत्वं कारणतावच्छेदकम्। यदि ह्यनुमित्यननुमितिरूपज्ञानद्वयवन्निर्विकल्पकसविकल्पकरूपज्ञानद्वयं प्रामाणिकं स्यात् तदा सामान्यसामग्रीत एव विशिष्टज्ञानोत्पत्तौ सर्वमपि ज्ञानं विशिष्टज्ञानं स्यादिति भयेन विशेषसामग्री कल्प्येत; न च तदस्ति, निर्विकल्पकस्याद्याप्यसिद्धेः; सर्वस्यापि ज्ञानस्य सविकल्पकत्वात्; 'इदमित्थम्' इति हि सर्वापि धीः; अन्यथा निष्प्रकारकधीवन्निर्वि-षयापि धीः स्यात्। इच्छा काचिन्निर्विषयातीन्द्रिया च स्यात्। एवं द्वेषादयोऽपीत्यलम-तिचर्चया। तदेतत्सर्वमभिसंधायोपसंहरति—**अतो यथोक्तस्वरूपे एव निर्विकल्पकसवि-कल्पके इति। द्वितीयादित्वेन पिण्डग्रहणेष्विति;** अयं भावः—अनुवृत्तिग्रहण-रहितेषु प्रथमेतरग्रहणेषु सविकल्पकत्वाभावापादनमिष्टमेव; अनुवृत्तिग्रहणरहितेषु प्रथमे-तरत्वेन ग्रहणेषु सविकल्पकत्वाभावापादनं तु न संभवति, प्रथमेतरत्वेन ग्रहणेऽनुवृत्ति-ग्रहणनैयत्यादिति।

## श्रुतप्रदीपिका

अथ प्रत्यक्षस्यापि तथात्वं प्रतिजानीते—**प्रत्यक्षस्येति**। दृष्टान्ततया वक्ष्यमाण-प्रतिसंबन्ध्युपयोगितया च सविकल्पकोपादानम्। तदर्थं तत्स्वरूपमाह—**सविकल्प-कमिति**। इतरस्यापि तथात्वमाह—**निर्विकल्पकमिति**। **स्वस्मिन्**; निर्विकल्पकेऽनु-भूतजात्यादिविशिष्टविषयस्य सविकल्पकप्रतिसंधानस्य हेतुत्वादित्यर्थः। सकलविशेष-शून्यवस्तुभानं हि निर्विकल्पकम्; अतो हेत्वसिद्धिरित्यत्राह—**निर्विकल्पकं नामेति**। कथमित्यत्राह—**तथेति**। अदर्शनं विवृणोति—**केनचिदिति**। स्वस्माद्गगनाद्वा व्यावृत्तं हि प्रतीयते सर्वम्। पञ्चमीस्थाने हिशब्दः। अनुपपत्तिं विवृणोति—**त्रिको-णेति**। **अयोगः**; दृष्टव्याप्तिविरोधेन क्लृप्त्यनुपपत्तिः। निर्विशेषविषयत्वं चेत्, प्रत्ययत्व-हानिरिति बाधकतर्कः प्रत्ययत्वादिति हेतुश्चाभिप्रेतः। **निर्विकल्पकं नामेति**; प्रतिज्ञात-स्वमतपरमतसिद्ध्यसिद्ध्योः प्रमाणं प्रत्यक्षं योग्यानुपलब्धिश्चेत्युक्तं भवति। एवं कतिपय-

र्विशेषविरहितविषयं निर्विकल्पकमित्युक्तं भवति । तथाच विकल्पशब्दो विकल्पविशेषविषयः । उक्तस्य निर्विकल्पकसविकल्पकविभागस्योदाहरणमाह—**अत इति** । किमिदं संकेतमात्रमिति शङ्कायां ग्राह्यभेदं दर्शयति—**तत्रेति** । अनुवृत्तिप्रतीत्यप्रतीत्योः शब्दप्रवृत्तिनिमित्ततां दर्शयति—**प्रथमेत्यादिवाक्यद्वयेन** । अनुवृत्तिधर्मो हि विकल्पः । गोत्वविवरणाय **वस्तुसंस्थान**शब्दः । तद्विवरणाय **सास्नादि**शब्दः । अनुवृत्त्यग्रहाज्जातिरगृहीता स्यादित्यत्राह—**न पुनरिति** । अग्रहणासंभवमुपपादयति—**संस्थानरूपेति** । यद्वा संस्थानशब्दाभिप्रेतं विवृण्वन् पूर्वं भानतयोक्तविशिष्टप्रतिसंधेरनुग्राहकं च वदन् मानमेयानुपपत्त्यभावाद्विशिष्टग्रहणमाह—**संस्थानरूपेत्यादिना** । हेतुद्वयेन गन्धादेर्दण्डादेश्च व्युदासः । अनुवृत्त्यग्रहेऽपि प्रकारप्रकारिभावेन ग्रहणमित्यभिप्रेतम् । 'इदमित्थमिति' इति हि वक्ष्यते । प्रथमे जातिरगृहीता चेत् द्वितीयादिषु तदनुवृत्तिर्दुर्ग्रहा । अनेकव्यक्त्यन्वयरूपा हि सा । सा च पूर्वव्यक्तिस्थतया परामर्शेनैव द्वितीयादिषु गृह्यते । अत एव जात्यादयो विशेष्यं च निर्विकल्पके संबन्धविरहेण गृह्यन्त इत्यपि निरस्तम्, मानमेयानुपपत्त्यभावात् । संबन्धधियः संबन्धिप्रथमग्रहणपूर्वकत्वं न संबन्धधीत्वात्; किंतु भिन्नसामग्रीवेद्यसंबन्धिनिष्ठसंबन्धविषयत्वप्रयुक्तम्; सामग्रीभेदाश्च यथायथं देशकालस्वभावविप्रकर्षसौक्ष्म्यव्यवहितधीष्वन्यतमेन भवन्ति; यथा दण्डदेवदत्तप्रत्यभिज्ञाविषयभूगन्धादौ । किंच दण्डदेवदत्तयोः पृथक्सिद्धयोः पृथग्ग्रहणं सहावस्थितयोस्तयोर्विशिष्टग्रहणे संनिहितसंबन्धिविषयाभाव इव संनिहितसंबन्धविषयाभावेऽप्यनुपपत्त्यभावाद्युक्तम् । नन्वनुवृत्तिग्रहाग्रहौ हि वैषम्यमुक्तम्; तत्कथं द्वितीयादिग्रहणस्य सविकल्पकत्वनियमः ? । तस्मिन्नप्यनुवृत्त्यग्रहसंभवादित्यत्राह—**अत इति** । **अतः**; प्रथमं ससंस्थानवस्तुग्रहणात् । **द्वितीयादिपिण्डग्रहणेषु**; द्वितीयादित्वेन पिण्डग्रहणेषु । अनेन स्मरणविधुरप्रथमेतरग्रहणव्युदासः । संस्कारयोगविरहो ग्राहकवैषम्यम्, पूर्वोक्तं तु ग्राह्यवैषम्यमिति द्रष्टव्यम् ।

**तत्त्वटीका**

अथ प्रत्यक्षमन्यद्वा स्वेष्टमानं विवक्षितम् ।
भङ्गायाध्यक्षमखिलं विशिष्टार्थं समर्थ्यते ॥ ३७४ ॥

**प्रत्यक्षस्येति**—अपरोक्षबुद्धेरित्यर्थः । ग्रहणं ह्यनन्तरमुदाह्रियते । अविशिष्टप्रत्यक्षसद्भावकल्पनयान्यतरप्रामाण्योक्तिरयुक्तेत्यभिप्रायेण **निर्विकल्पकसविकल्पकभेद-**

भिन्नस्येत्युक्तम्। एवं ह्याहुश्चार्वाकाः—“अज्ञातार्थपरिच्छित्तिः प्रमाणम्। तच्च प्रत्यक्षमेव। तत्रापि निर्विकल्पकमप्रमाणम्, अनवधारणत्वात्” इति। अत्रानवधारणशब्देन संशयरूपत्वमविशिष्टविषयत्वं वा विवक्षितं चेदसिद्धिः, कतिपयविशेषग्रहात्। संशयोत्थापकत्वं चेत् सविकल्पकेऽप्यस्ति; क्वचिदपि केनापि सर्वविशेषवैशिष्ट्यस्यायोगिना दुर्ग्रहत्वात्। बौद्धास्तु “अविसंवादि विज्ञानं प्रमाणम्”। तत्र—

“कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्।
विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः॥”

इत्याहुः।

“तस्यां यद्रूपमाभाति बाह्यमेकमिवान्यतः।
व्यावृत्तमिव निस्तत्त्वं परीक्षानङ्गभावतः॥”

इति च। तदप्यसत्; निर्दोषविकल्पानामपि संवादात्; तद्विषयस्य तद्वदेवैतैः संबन्धानुपपत्त्यादिकुतर्कैर्बाधे तुल्यन्यायतया योगाचारमतेन बाह्यार्थलोपप्रसङ्गात्। ‘विगीता धीर्भ्रान्तिः, विकल्पत्वात्’ इति त्वयोक्ते ‘धीत्वात्’ इति सामान्यतो ब्रूयात्। तथा चानुभाष्यते—

“स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्तथा हि यः।
प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा॥”

इति। वैषम्यं चात्र त्वया दुर्वचम्। किंचास्तु तत्प्रयोगस्थहेत्वादिविकल्पानां पक्षीकारे बहुविधासिद्धिबाधयोः प्रसङ्गः, अन्यथा तु हेतोर्विपक्षवृत्तित्वादिप्रसङ्गात्। शब्दाध्यासात्सविकल्पकं भ्रान्तिरिति चेन्न, तदसिद्धेः; यथाहुः—

“संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते।
संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा॥”

इति। अतः प्रामाणिकं प्रत्यक्षं द्विविधमपि प्रमाणम्; न तु निर्विशेषे। तत्र दृष्टान्तार्थं वक्ष्यमाणविशिष्टप्रतिसंधानव्यक्त्यर्थं च दुरपह्नवांशं तावदाह—**सविकल्पकमिति**। आदिशब्देन गुणादिग्रहः—“यथा मनुष्यः शुक्लो वा दण्डी गच्छति निर्भयः।” इति।

शब्दविकल्पस्तु—

" न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ "

इति व्यापितया शाब्दैरुक्तोऽप्यव्युत्पन्नानां विकल्पेषु तदयोगात्संकोच्यः । **विशिष्टविषयत्वात्सविशेषविषय**मित्यत्र सामान्योक्तस्य जात्याद्युदाहरणैर्व्यञ्जनान्न साध्याविशेषः ।

" अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ "

इति परैरन्यथोक्तं प्रथमज्ञानमपि विशिष्टविषयं प्रतिजानीते—**निर्विकल्पकमिति** । **अपिः** समुच्चयार्थः, परेष्टविरोधद्योतको वा । अवधारणमुपलम्भदार्ढ्यपरम् । धीत्वात् विशिष्टविषयमित्यनुमानं चात्र सूच्यम् । अविशिष्टविषयत्वस्य क्वचिदप्यभावेऽपि विशिष्टविषयत्वाभावस्य घटादौ दृष्टत्वात् व्यतिरेकसिद्धिः । विपक्षे बाधस्तु विशिष्टविषयत्वाभावे सविषयत्वादिकमपि न स्यादिति, अविशेषात् । निर्विषया धीर्न दृष्टेति चेत्, सममेतत् । उपयोगात्कल्प्यत इति चेत्—न, हेत्वसिद्धेः । अनुपयुक्तस्य च कल्पने किं नाम न कल्प्यम्? । प्रतिज्ञाते हेतुमाह—**सविकल्पकेति** ; स्वगोचरजात्यादिविशिष्टप्रतिसंधानरूपविकल्पहेतुत्वादित्यर्थः । संप्रतिपन्नप्रत्यभिज्ञाहेतुभूताभिज्ञावदित्युदाहर्तव्यम् ।

ननु प्रथमं जात्यादिग्रहणाभावादसिद्धो हेतुः—

" ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता " ॥

इति ; अन्यथा निर्विकल्पकसमाख्याविरोधश्च स्यात् ; तत्राह—**निर्विकल्पकं नामेति** । अयं भावः—

अस्ति हीति प्रतिज्ञाने नास्ति हीत्युत्तरं क्षमम् ।
प्रवृत्तिभिर्विशिष्टार्था बालमूकादिधीरपि ॥ ३७५ ॥
शब्दोपस्कारमात्रं तु नात्र व्युत्पत्त्यभावतः ।
व्युत्पत्तिश्च विशिष्टार्थबोधाभावे कथं भवेत् ॥ ३७६ ॥
न चावयवशक्त्यैव नामधेयव्यवस्थितिः ।
अतिप्रसङ्गाद्बाधाच्च महावृक्षादिनीतितः ॥ ३७७ ॥

अतो निरीहादिपदन्यायाद् दृष्टानुवर्त्तिनः ।
निर्विकल्पे निषेधस्य संकोचोऽत्र भवेदिति ॥ ३७८ ॥

तदिहाद्वैतिकल्पितस्य सर्वविशेषशून्यस्य द्वैताद्वैतिकथितस्य विद्यमानसर्वविशेषधीरहितस्य च ग्रहणं निषेधति—**न सर्वेति**। तादृशग्रहणं दृष्टं कल्पितं वेति विकल्पं मत्वा पूर्वं दूषयति—**तथेति** ; प्रथममपि तथाभूतग्रहणं योग्यानुपलम्भनिरस्तमित्यर्थः। अपरं निषेधति—**अनुपपत्तेश्चेति ;** उपपत्त्यभावादित्यर्थः। तत्कल्पकस्यान्यथोपपत्तेरिति भावः। धीत्वप्रयुक्तव्याप्तिविरोधेनोपपत्तिविरुद्धत्वं चात्र बोध्यम्। अदर्शनं विवृण्वन् स्वमते दर्शनं च प्रमाणयति—**केनचिदिति** ; पृथक्सिद्धेन अपृथक्सिद्धेन वेत्यर्थः। गोत्वद्रव्यत्वबहिष्ठत्वादिना गगनादेर्ग्रहीतुश्च व्यावृत्ता हि सर्वत्र सर्वापि धीरिति भावः। उपपत्तिविरोधमुखेनोपपत्त्यभावमपि व्यनक्ति—**त्रिकोणेति**। **अयोगः,** इह विशिष्टोल्लेखित्वाभावेऽधीत्वादिप्रसङ्गात्सिद्धः। **संस्थान**शब्दोऽत्र तत्तदसाधारणाकारपरः। **कस्यचिदपीति** ; निरवयवस्यापीत्यर्थः।

सजातीयविजातीयव्यावृत्तस्वस्वभावतः ।
इत्थमित्येव गृह्यन्ते शब्दगन्धादयोऽपि हि ॥ ३७९ ॥

एवं सविकल्पकनिर्विकल्पकयोर्विशिष्टबाह्यार्थविषयत्वोक्त्या प्रत्यक्षस्य ज्ञानग्राहितां तदाकारवैचित्र्यकारणतया बाह्यार्थस्यानुमेयत्वं च वदन् सौत्रान्तिकोऽपि प्रत्युक्तः। द्वयोरपि विशिष्टविषयत्वे तद्विवेको दुःशक इत्यत्र लक्षणतो विवेक्तुमुदाहरणं तावदाह—**अत इति** ; विशिष्टगोचरत्वतदभावाभ्यां विभागोक्तेर्निरस्तत्वादित्यर्थः। किमियं प्रथमत्वादिना परिभाषा? तथा सति विपरिवर्तोऽपि स्यादित्यत्र व्यवहारव्यवस्थापकं विषयभेदमाह—**तत्रेति**। उक्तवैषम्याच्छब्दव्यवस्थां वाक्यद्वयेनाह—**प्रथमेति**। विकल्पोऽत्र प्रतिसंधानगोचरस्य केनचिदधिकेन विशेषणेन वैशिष्ट्यम्। तद्योगायोगाभ्यामेव व्यवस्थात्र विपश्चित्संमता। जातेः सविकल्पकाभावरूपत्वापोहत्वादिमतव्युदासाय संस्थानत्वं, तद्व्यक्त्यै सास्नादिरूपत्वं चात्रोक्तम्। परेष्टस्य निर्विकल्पकशब्दनिमित्ततां निरस्यति—**न पुनरिति**। अथ स्यात्, अनुवृत्तिरूपजातिस्तदग्रहे कथं गृह्येत? गृह्यतां वा, तथापि तद्विशिष्टतया प्रथमधीर्न युक्ता ; विगीता धीर्विशेषणविशेष्यधीपूर्विका विशिष्टधीत्वात् संप्रतिपन्नवदित्यनुमानात्। अतो विशेषणविशेष्याणां मिथः संबन्धबोधे क्लृप्तव्याप्ति-

विशिष्टधीः सिद्धेति ; तत्राह—**संस्थानेति** । जातिशब्दस्यानुवृत्तिविशिष्टे व्युत्पन्नतया जातित्वेन बुद्धिरेवानुवृत्त्युल्लेखिनी । तत्स्वरूपं तु योग्यतया धर्मिवत्तत्संबन्धितयैव गृह्यते ; तदर्थमिह **संस्थानरूपत्वोक्तिः** । अनुवृत्तिप्रकारस्तु वक्ष्यते । **ऐन्द्रियकत्वाविशेषात्** ; आश्रयग्राहकेन्द्रियवेद्यत्वात् दूरत्वाद्यभावाच्चेत्यर्थः । तेन गन्धादिव्युदासः, पिण्डग्रहणेऽपि गोत्वादेर्ग्रहणदर्शनव्युदासश्च । **संस्थानेन विना** ; अपृथक्सिद्धयत्किंचिद्धर्मेण विनेत्यर्थः । तेन दण्डादिव्यावृत्तिः । दूरादौ द्रव्यत्वादिमात्रेण सिद्धिश्च । विशिष्टधीत्वादिति हेतौ व्यवच्छेद्यस्याविशिष्टविषयज्ञानस्यासिद्धौ व्यर्थं विशेषणम् । अन्यतः सिद्धावनुमेयाभावः । अनेनैव तत्सिद्धावन्योन्याश्रयः—व्यवच्छेद्यसिद्धौ सविशेषणहेतूत्थानम् ; तेनैव च तत्सिद्धिरिति । पृथग्धीपूर्वकत्वं तु विशिष्टबुद्धेर्भिन्नसामग्रीवेद्यविषयत्वोपाधिकम् । तच्च दण्डादीनामसंनिधानव्यवधानादेः । सामग्रीसद्भावे तु प्रथममेव तद्विशिष्टधीश्च स्यादेव । तेषां संस्थानत्वाभावात्पुरुषग्रहणाभावेऽपि तद्ग्रहणम् । दण्डादीनां तु पृथक्सिद्धत्वेऽपि दण्डादेः स्वाश्रयग्राहकेण । घ्राणरसनश्रोत्राणां गुणमात्रग्राहित्वं तदाश्रयग्रहणानर्हत्वात् । सर्वमिदं यथादृष्टि व्यवतिष्ठते ।

भिन्नाक्षग्राह्यगन्धादिविशिष्टप्रत्ययोदये ।
पृथग्गृहीतिनियमो यथादर्शनमिष्यते ॥ ३७९ ॥

एवं संबन्धस्य सामग्र्यन्तरवेद्यत्वेऽपि । ननु संस्कारस्यानुद्बोधे द्वितीयादिपिण्डग्रहणेऽपि गोत्वादेरनुवृत्तिवैशिष्ट्यं दुर्ग्रहम् ; कथं तत्र सविकल्पकत्वनियम इत्यत्र संभवद्विषयतया प्रतिवक्ति—**अत इति** । संस्थानविशिष्टविषयवासनाजनकप्रथमपिण्डग्रहणसामर्थ्यादित्यर्थः । **द्वितीयादिपिण्डग्रहणेषु** ; द्वितीयत्वादिविशिष्टतया तत्तत्पिण्डग्रहणेष्विति यावत् । **सर्वदैवे**त्यनेन संस्कारपटिम्ना यत्किंचिद्धर्मानुवृत्तिग्रहणं नियतमित्युच्यते । यदा तज्जातीयग्रहणं स्यात् तदा सविकल्पकत्वमेवेत्युक्तम् ; तदासौ नियम इत्यभिप्रायः ।

द्वितीयादिषु पिण्डेषु निर्विकल्पकसंभवात् ।
अवधारणमत्र स्यात्प्राचुर्यादिति केचन ॥ ३८० ॥

एतेन प्रत्यक्षज्ञानेषु संस्कारसहकृतेन्द्रियजन्यत्वतद्विरहाभ्यां सविकल्पकनिर्विकल्पकयोर्भेदो लक्षणतः स्थापितो भवति । तेनैव प्रथमपिण्डेऽपि प्रबुद्धसंस्काराणां द्वितीयादिपिण्डग्रहणेषु सविकल्पकत्वं च स्यादेव ।

प्रत्यक्षं त्वीश्वरादीनां विशिष्टाशेषगोचरम् ।
अवसानोद्भवत्वेन निर्विकल्पकमस्तु नः ॥ ३८१ ॥
अनुवृत्तिग्रहात्तत्र सविकल्पकतास्तु वा ।
न भज्येत विशिष्टार्थविषयत्वं द्विधापि नः ॥ ३८२ ॥
अनादाविह संसारे तस्मिन्नपि च जन्मनि ।
भाष्योक्तं प्रथमत्वादि त्वपूर्वत्वादिबुद्धितः ॥ ३८३ ॥

एवं द्विविधस्यापि प्रत्यक्षस्य निर्विशेषविषयत्वाभावं निगमयति—**अत इति । कदाचिदपि** ; प्रथमाक्षसंनिपातेऽपीति यावत् ।

### मूलभावप्रकाशिका

**स्वस्मिन्ननुभूतेति** ; प्रथमपिण्डग्रहणात्मके निर्विकल्पकेऽनुभूतो यो गोत्वादिलक्षणः पदार्थः, तस्यानुवृत्तिरूपधर्मवैशिष्ट्यप्रतिसंधानं द्वितीयादिपिण्डग्रहणे भवति । अतोऽनुवृत्तत्वधर्मावगाहिद्वितीयादिपिण्डग्रहणात्मके ज्ञानेऽनुवृत्तत्वधर्मानवगाहितया निर्विकल्पकशब्दितं पृथक् धर्मपिण्डग्रहणं हेतुः । अनुवृत्तत्वं हि पूर्वज्ञातव्यक्तिवृत्तित्वे सत्येतद्व्यक्तिवृत्तित्वम् । एतच्च प्रथमपिण्डग्रहणे न गृह्यते, पूर्वज्ञातव्यक्त्यन्तराभावात् ; द्वितीयादिग्रहणे गृह्यत इति भावः । ननु जन्यविशिष्टज्ञानत्वस्य बाधकं विना कार्यमात्रव्यक्तिधर्मत्वेन कार्यतावच्छेदकत्वात्तदवच्छिन्नेऽनुगतकारणत्वस्य वक्तव्यत्वाज्जन्यविशेषणज्ञानस्य हेतुत्वसिद्धौ जागराद्यविकल्पकज्ञानहेतुतया कारणीभूतविशेषणज्ञानं सिध्यन्निर्विकल्पकमेव सिध्यतीति चेत्—न ; विशिष्टज्ञानत्वं विशेषणविशेष्यसंबन्धविषयकज्ञानत्वम् ; तच्च विशेषणविशेष्यतत्संबन्धज्ञानसामग्र्यैवोपपन्नम् ; न तु कार्यतावच्छेदकं, नीलघटत्ववदर्थवशसंपन्नत्वात् । ननु विशिष्टज्ञाने विशेषणज्ञानहेतुत्वमवश्याश्रयणीयम्, इतरथा जातिव्यक्त्योरिन्द्रियसंनिकर्षेऽविशिष्टे कदाचिज्जातिविशेषणिका व्यक्तिविशेष्यका प्रतीतिः, क्वचिच्च तद्वैपरीत्येनेति सर्वसिद्धव्यवस्था भज्येत ; विशेषणज्ञानकारणत्वेऽभ्युपगते तु यस्य प्रागवगतिस्तद्विशेषणकं विशिष्टज्ञानमुत्पद्यत इति व्यवस्था सुवचेति चेत्—न ; यत्रोभयविषयकं निर्विकल्पकं तत्र द्वयोरपि प्रागवगतत्वाविशेषात् विशेषणविशेष्यभावव्यवस्थापकस्याप्यभावादव्यवस्थाप्रसक्तिस्तदवस्थैव स्यात् । यदि च तत्रादृष्टं व्यवस्थापकं, तदेव सर्वत्र व्यवस्थापकमस्तु ; किं विशेषणज्ञानकारणत्वाभ्युपगमेन ? । तस्माद्विशिष्टज्ञानस्य विशेषणविशेष्यतद्वैशिष्ट्यभान-

सामग्र्यैवोपपन्नत्वात् न विशेषणज्ञानत्वं कारणतावच्छेदकम् । यदि ह्यनुमित्यननुमितिरूपज्ञानद्वयवन्निर्विकल्पकसविकल्पकरूपं ज्ञानद्वयं प्रामाणिकं स्यात्, तदा सामान्यसामग्रीत एव विशिष्टज्ञानोत्पत्तौ सर्वमपि ज्ञानं विशिष्टं स्यादिति भयेन विशेषसामग्री कल्प्येत; न च तदस्ति, निर्विकल्पकस्य कदाप्यसिद्धेः, सर्वस्य ज्ञानस्य सविकल्पकत्वात् । 'इदमित्थम्' इति हि सर्वस्यापि धीः । अन्यथा नित्यत्वादिना वस्तुमात्रत्वे 'इदं नित्यम्, अनित्यम्' इत्यादिविवादा न स्युः, वस्तुस्वरूपस्य नित्यत्वात् । अन्यथा निष्प्रकारकधीवत् निर्विषयापि धीः स्यात् । इच्छापि निर्विषया अतीन्द्रिया च स्यात् । एवं द्वेषादयोऽपीत्यलमतिचर्चया ।

श्रीभाष्यम्

अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम्; 'इदमित्थम्' इति प्रतीताविदमित्थंभावयोरैक्यं कथमिव प्रत्येतुं शक्यते ? । तत्रेत्थंभावः सास्नादिसंस्थानविशेषः, तद्विशेष्यं द्रव्यमिदमंश इत्यनयोरैक्यं प्रतीतिपराहतमेव । तथाहि—प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते । व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतया 'इत्थम्' इति प्रतीतेः । सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः । तत्र दण्डकुण्डलादयः पृथक्संस्थानसंस्थिताः स्वनिष्ठाश्च कदाचित्क्वचिद् द्रव्यान्तरविशेषणतयावतिष्ठन्ते । गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थभूताः सन्तो द्रव्यविशेषणतयावस्थिताः । उभयत्र विशेषणविशेष्यभावः समानः । तत एव तयोर्भेदप्रतिपत्तिश्च । इयांस्तु विशेषः—पृथक्स्थितिप्रतिपत्तियोग्या दण्डादयः; गोत्वादयस्तु नियमेन तदनर्हा इति । अतो वस्तुविरोधः प्रतीतिपराहत इति प्रतीतिप्रकारनिह्नवादेवोच्यते । प्रतीतिप्रकारो हि 'इदमित्थम्' इत्येव सर्वसंमतः । तदेतत्सूत्रकारेण "नैकस्मिन्न-

संभवात्" इति सुव्यक्तमुपपादितम्। अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसंबन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव। प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः। वस्तुगतस्वभावविशेषैस्तदेव वस्तु 'निर्विशेषम्' इति वदन् जननीवन्ध्यात्वप्रतिज्ञायामिव स्ववाग्विरोधमपि न जानाति।

श्रुतप्रकाशिका

प्रसङ्गात् भेदाभेदं निराकरोति—**अत एवेति**। **अत एव**; प्रथमपिण्डग्रहणस्य विशिष्टविषयत्वसमर्थनादेव। **सर्वत्र**; पिण्डद्रव्यजातिव्यक्तिगुणगुणिक्रियातद्वत्कार्यकारणेष्वित्यर्थः। कथमित्यत्राह—**इदमित्थमिति**। भेदाभेदवादिनापि पिण्डानामन्योन्यभेदाभेदसमर्थने 'इदमिदं न भवति' इति भेदः, 'इदमिदं भवति' इत्यभेद इत्येकस्यैव युगपद् भावाभावरूपव्याहतिपरिहारार्थं जात्यात्मनाऽभेदो व्यक्त्यात्मना भेद इत्याकारद्वयेन भेदाभेद उपपादितः। जातिगतोऽभेदो व्यक्तिगतश्च भेद इति नैकस्य द्व्यात्मकतेति शङ्कापरिहाराय जातिव्यक्त्योश्चान्योन्यभेदाभेद उक्तः। तन्निर्वहणायाकारान्तरान्वयादर्शनात् प्रतीतिरेव शरणमित्याश्रिता। अतस्तन्निरासाय प्रथमं जातिव्यक्त्योर्भेदेनैव प्रतीतेरभेदस्य प्रतीतिविरोधं दर्शयति—**इदमित्थमिति**। इदंभावो विशेष्यम्; इत्थंभावो विशेषणम्। इत्थमंशः कः, इदमंशः क इत्यत्राह—**तत्रेति**। अत्र जातिव्यक्त्योर्भेदाभेदे चत्वारो हेतवः परोक्ताः—प्रथमपिण्डग्रहणेऽभेदेन ग्रहणम्; एकशब्दानुविद्धप्रत्ययः; मत्वर्थीयप्रत्ययनिरपेक्षसमानाधिकरणपदप्रयोगः, सहोपलम्भनियमश्चेति। अत्र सहोपलम्भनियमसमानाधिकरणप्रत्ययौ भेदाभेदसाधकौ; अन्यौ द्वावभेदसाधकौ। इदं हेतुचतुष्टयमाशङ्क्याह—**तथाहीति**। तान् हृदि कृत्वा प्रथमपिण्डग्रहणेऽभेदेन ग्रहणं व्युदस्यति—**प्रथममेवेत्यादिना**। **सकलेतरव्यावृत्तम्**; सकलविजातीयव्यावृत्तमित्यर्थः। ततः किं भेदेन ग्रहणस्येत्यत्राह—**व्यावृत्तिश्चेति**। गोत्वादिसंस्थानविशेषविशिष्टतया 'इत्थम्' इति प्रतीतेर्व्यावृत्तिश्च निश्चीयत इत्यर्थः। अनेनाखण्डवाक्यार्थभङ्गश्चार्थतः कृतो भवति; शौक्ल्यादिवैधर्म्यस्येहाभिप्रेतत्वात्। तच्च पूर्वं दर्शितम्। गोत्वादिविशिष्ट-

तया प्रतीतिरस्तु ; तथाप्यभेदश्च स्वप्रमाणेन प्रसज्यते चेन्न निवार्यत इत्यत्राह--**सर्वत्रेति** । **सर्वत्र** ; गोत्वतदाश्रयादिषु, दण्डकुण्डलादिषु च । दण्डदण्डिनोरिव जातितद्वतोरपि विशेषणविशेष्यभाव एवाभेदविरोधीत्यर्थः । **विशेषणविशेष्यभावेति** ; गोत्वव्यक्त्योरनुवृत्तिव्यावृत्त्यग्रहेऽपि विशेषणविशेष्यभावरूपेणाकारान्तरेण भेदो गृहीतः । न ह्येकेनैवाकारेण भेदग्रह इत्यस्ति नियम इति भावः । उभयत्रात्यन्तभेदोऽस्ति चेत् मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमेकशब्दानुविद्धप्रत्ययः सहोपलम्भनियमश्च कथमेकत्र दृश्यते, नान्यत्रेत्यत आह—**तत्रेति** । **तत्र** ; गोत्वतदाश्रयदण्डदण्ड्यादिवर्गे । पृथक्संस्थानविशिष्टस्वपर्यवसितस्य कादाचित्कविशेषणभावो मत्वर्थीयप्रत्ययसापेक्षसामानाधिकरण्यप्रत्यये प्रयोजकः । द्रव्यसंस्थानतयैव पदार्थत्वेन तत्पर्यन्तत्वात् तद्विशेषणतयैव स्थितिर्मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजिका । सहोपलम्भनियमतदभावयोरप्यपृथक्सिद्धत्वपृथक्सिद्धत्वे एव प्रयोजके, न तु भेदाभेदावित्यर्थः । सहोपलम्भनियमे द्वयोरेव सहभावात् सहोपलम्भो द्वित्वसाधकः । तन्नियमस्तु भिन्नयोरेकस्मिन्नपि नास्तीत्यसाधारणानैकान्तिकत्वादनुभयसाधकः । किंच विरुद्ध एव । द्वित्वसाधकसहोपलम्भनियमो हि द्वित्वस्य नियमं दर्शयति । एकशब्दानुविद्धप्रत्ययस्तु 'एको दण्डी' इत्यादिषु दण्ड्यन्तरव्यावर्तकत्वदर्शनेन धर्म्यन्तरनिषेधपरत्वान्न धर्मधर्मिणोरभेदसाधक इति भावः । यद्येवं जातिकुण्डलादेर्वैषम्यम् ; यदि विशेषणविशेष्यभावसाम्यादुभयत्र भेदः साध्यते, तर्हि सहोपलम्भनियमादिवैषम्येणैकत्वमपि स्यादित्यत आह—**उभयत्रेति** । विशेषणविशेष्यभावाविशेषात्तत्प्रयुक्तभेदप्रतिपत्तिरनिवार्या, विशेषणविशेष्यभावे सति भेदस्योभयसंप्रतिपत्तेः । सहोपलम्भनियमे ऐक्यं हि विमतम् । अतो न संप्रतिपन्नभेदविरुद्धाभेदः कल्प्यः । यथा शीतत्वोष्णत्वाद्यवान्तरवैषम्यं न द्रव्यत्वादिसाधारणाकारविरोध्यद्रव्यत्वकल्पकम्, एवं सहोपलम्भनियमो न भेदविरोध्याकारकल्पक इति भावः । यद्वा पृथक्संस्थानसंस्थितानां दण्डादीनामविशेषणानामेव सतां कदाचित् सहभावमात्राद्विशेषणत्वमध्यस्तमित्यत्यन्तभिन्नेषु विशेषणत्वाभावाद्विशेषणत्वं नात्यन्तभेदसाधनसमर्थमित्यत्राह—**उभयत्रेति** । व्यावृत्तिप्रतीतौ व्यावर्तकतयोपयुज्यमानत्वं विशेषणत्वम् ; तच्च दण्डादिष्वपि मुख्यमिति विशेषणत्वादत्यन्तभेदो युज्यत इति भावः । गोत्वतदाश्रयादिष्वेव सहोपलम्भनियमो नान्यत्रेति व्यवस्थासिद्ध्यर्थमैक्यं कल्पनीयमिति चेत् तत्राह—**इयांस्त्विति** । इयानेव ; न त्वधिकं

कल्पनीयमित्यर्थः। यदि सहोपलम्भनियमव्यवस्थार्थमैक्यं कल्प्यते, तदयुक्तम्, तत्रैवैक्यं नान्यत्रेति व्यवस्थार्थमर्थान्तरकल्पनाप्रसङ्गात्। यद्यैक्यं तत्र स्वाभाविकं तर्हि सहोपलम्भनियमः स्वाभाविक इति न प्रतिपन्नविरुद्धार्थान्तरकल्पनागौरवमाश्रयणीयमिति भावः। यद्वा विशेषणविशेष्यभावप्रसक्तभेदप्रतिपत्तिर्यथोभयत्र तुल्या तथा सहोपलम्भनियमो दण्डदेवदत्तादावपि स्यात्; जातिव्यक्त्योर्वा स न स्यादित्यत्राह—**इयानिति**। न हि साधारणाकारेऽभ्युपगतेऽवान्तरभेदस्त्याज्य इत्यर्थः। घटे पटस्याभावो भेदः, तत्र तस्य सद्भावोऽभेद इति भावाभावविरोधस्य "न हि दृष्टेऽनुपपन्नं नाम" इति न्यायात् प्रतीतिपराहतत्वमाशङ्क्याह—**अत इति**। **अतः**; इत्थं भेदसामानाधिकरण्येनाभेदस्य प्रतीत्यभावात्। कथं प्रतीतिप्रकार इत्यत्राह—**प्रतीतिप्रकारो हीति**। यदि विशेषणविशेष्ययोरैक्यमस्ति तर्ह्यन्यतरदेव प्रतीयेत। अन्यतरप्रतीतिर्वास्तु, तथापि नैक्यम्; यथा पूर्वानुभूतयोः पुरुषयोरेकस्मिन् दृष्टे न हि पुरुषैक्यम्। जातिव्यक्त्योः संबन्धनियम एवैक्यमिति चेत्—न; भेदसाधकसंबन्धनियमस्य भेदनियमसाधकत्वात्। द्वयोर्हि संबन्धः। तन्नियम एवैक्यं चेत्, संबन्धस्वरूपभङ्गप्रसङ्गः। एवं भेदाभेदनिरासस्य सूत्रकाराभिमतत्वमाह—**तदेतदिति**। अथ प्रमाणान्तराणां प्रत्यक्षमूलत्वात् तेषामपि सविशेषविषयत्वमाह—**अत इति**। प्रत्यक्षादिदृष्टधूमादिसंबन्धविशिष्टाग्न्यादिविषयत्वादित्यर्थः। स्वाभिमतमुक्तं प्रमाणत्रयम्। प्रमाणान्तराभ्युपगमेऽपि तेषां सविशेषविषयत्वमाह—**प्रमाणसंख्येत्यादिना**। प्रमाणानि सविशेषविषयाणि स्युः; तानि तर्कपराहतानीति शङ्कायाम्, अस्मिन् सर्वप्रमाणसविशेषविषयत्वविस्तरोक्तिसमयेऽपि पूर्वं तत्संग्रहोक्ताविव बुद्धिस्थस्वसिद्धिवादेऽपि न निर्विशेषत्वसिद्धिरिति ज्ञापनाय सविशेषत्वबाधकतया परोक्तयुक्त्यभ्युपगमेऽपि युक्तिरूपविशेषैः सविशेषत्वमवर्जनीयमिति पूर्वोक्तं स्मारयन् विरोधं च दर्शयति—**वस्तुगतेति**। यद्वा पूर्वं स्वानुभवसिद्धे विशिष्टे निर्विशेषत्वनिष्कर्षो निष्कर्षकैर्धर्मैः सविशेषत्वापादनेन दूषितः; तत्सर्वं प्रमाणनिर्विशेषविषयत्वनिष्कर्षेऽप्यतिदिशति—**वस्तुगतेति**।

### भावप्रकाशिका

**अत्र सहोपलम्भनियमसमानाधिकरणप्रत्ययौ भेदाभेदसाधकाविति**; ननु केवलभेदे केवलाभेदे च सामानाधिकरण्यानुपलम्भादस्तु सामानाधिकरण्यं भेदाभेदसाधकम्;

कथं सहोपलम्भनियमो भेदाभेदसाधकः? न तावत् सहोपलम्भनियम एकज्ञानविषयत्वम्, तस्यैक्येऽपि दृष्टत्वात्। नाप्येककालीनोपलम्भद्वयविषयत्वम्, जातिव्यक्त्योस्तदभावात्। नाप्युपलम्भसामग्रीद्वययौगपद्यनियमः, उपलम्भैक्येन सामग्र्या अप्येकत्वात्। न च घटपटसमूहालम्बने उपलम्भैक्येऽपि सामग्रीद्वित्वं दृष्टमिति वाच्यम्; घटेन्द्रियसंनिकर्षो घटज्ञानसामग्री, पटेन्द्रियसंनिकर्षः पटज्ञानसामग्रीत्यन्यत्र सामग्रीभेदनिर्धारणसंभवात् तत्र तथा; इह तथा अभावात्। न च—जातीन्द्रियसंनिकर्षो जातिज्ञानसामग्री; व्यक्तीन्द्रियसंनिकर्षो व्यक्तिज्ञानसामग्रीति भेदः संभवतीति वाच्यम्, भेदस्य वा अभेदस्य वाद्याप्यसिद्धेः। भेदसिद्धौ च तदधीनस्य सहोपलम्भनियमस्य न भेदसाधकत्वम्, अपित्वभेदमात्रसाधकत्वमित्येव स्यात्। किंच एकशब्दानुविद्धप्रत्ययस्य 'पुरोवर्त्येकः' इत्येवंरूपस्य जातिव्यक्त्यैक्यसाधकत्वेऽपि प्रथमपिण्डे भेदाग्रहणस्य कथमभेदसाधकत्वम्? न हि प्रथमतो गृहीतं सर्वमसदित्यस्ति। न हि विशेषादर्शनदशायां प्रतीतत्वादसत्त्वमिति काचिद्युक्तिरस्तीति चेत्; उच्यते—सहोपलम्भनियमो ह्येकोपलम्भविषयत्वमेव। तच्चैक्यसाधकमेव तद्द्वारा भेदाभेदसाधकम्, उत्तरत्र तदनुगुणवाक्यानां बहूनामुपलम्भात्। नन्वेवमेकशब्दानुविद्धप्रत्ययप्रथमपिण्डग्रहणभेदाग्रहणयोरप्यभेदद्वारा भेदाभेदसाधकत्वसंभवात् पृथक्कृत्य तयोरभेदसाधकत्वमित्युक्तिरयुक्ता स्यात्, त्रयाणामप्येकीकरणस्यैव युक्तत्वादिति चेत्—सत्यम्; अभेदद्वारा भेदाभेदसाधकत्वांशे त्रयाणामप्यैकराश्यम्। अपितु तयोर्युक्त्योरभ्युच्चययुक्तित्वमिति तयोरेकराशीकरणम्। अत एव न तद्विषयदूषणस्याप्यवकाशः, तयोरभ्युच्चयमात्रत्वादिति। **स्वपर्यवसितस्येति**; स्वनिष्ठस्येत्यर्थः; पारतन्त्र्यस्वभावशून्यस्येति यावत्। ननु सहोपलम्भनियमस्य भेदाभेदसाधने नासाधारणत्वम्, भेदाभेदवतः सपक्षस्यैवाभावेन तद्व्यावृत्तिरूपासाधारणत्वाप्रसक्तेः; अत एव पृथिव्यामितरभेदे साध्ये जलादित्रयोदशभेदवतः सपक्षस्याभावान्नासाधारण्यमित्यस्वरसादाह—**किंच विरुद्ध एवेति**। **द्वित्वसाधकसहोपलम्भनियम इति**; द्वित्वसाधकस्य सहोपलम्भस्य नियम इत्यर्थः। 'उभयत्र विशेषणविशेष्यभावः समानः' इति भाष्यमुभयत्र विशेषणविशेष्यभावे विप्रतिपत्त्यभावेन मन्दप्रयोजनमित्याशङ्क्य शङ्काविशेषनिरासपरतया व्याचष्टे—**यद्येवं जातिकुण्डलादेरित्यादिना**। भाष्यस्थं समानपदं व्याचष्टे—**उभयत्र संप्रतिपत्तेरिति**। एवं तात्पर्यवर्णनस्य क्लिष्टत्वादन्यथा व्याचष्टे—**यद्वा पृथक्संस्थानसंस्थितानामिति**।

**सहोपलम्भनियमो नान्यत्रेति व्यवस्थासिध्द्यर्थमिति** ; सहोपलम्भप्रयोजकापृथक्सिद्धत्वनियम इत्यर्थः । ततश्च सहोपलम्भव्यवस्थाया अपृथक्सिद्धत्वेन प्राक् समर्थितत्वात्कथमस्याः शङ्काया उत्थानमिति न चोदनीयम् । **इयांस्त्विति** भाष्ये तुशब्द एवकारार्थ इत्यङ्गीकृत्यान्ययोगव्यवच्छेदपरतया व्याचष्टे—**इयानेवेति** । तुशब्दस्यावधारणार्थत्वमस्वरसमित्यन्यथा व्याचष्टे—**यद्वा विशेषणविशेष्यभावप्रसक्तेति** । **घटे पटस्याभाव इति** ; तादात्म्यसंबन्धेनेति शेषः । यद्वा **पटस्याभावः** ; पटत्वाभाव इत्यर्थः । **भेद इति** ; पटाद्भेद इत्यर्थः । **वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति** भाष्ये सर्वप्रमाणविषयस्य सविशेषस्य वस्तुनः स्वभावविशेषैर्निर्विशेषतया निष्कर्षे निर्विशेषत्वासिद्धिर्विरोधश्चोच्यत इति प्रतीयते ; तच्चायुक्तम्, अनुक्तोपालम्भत्वात् । स्वानुभवविषये हि परैर्निष्कर्ष उक्त इत्याशङ्क्य स्वानुभवविषयनिष्कर्ष एव दूषणमनेनोच्यत इत्याह—**प्रमाणानीत्यादिना** । **तानि तर्कपराहतानीति** ; अतो निरपवादस्वानुभवसिद्धं निर्विशेषमिति शेषः । स्मरणमात्रस्य मन्दप्रयोजनत्वमाशङ्क्यान्यथा व्याचष्टे—**यद्वा पूर्वं स्वानुभवसिद्ध इति** ।

## श्रुतप्रदीपिका

प्रसङ्गाद्भेदाभेदं निराकरोति—**अत एवेति** । अत एव ; प्रथमपिण्डग्रहणस्य विशिष्टविषयत्वसमर्थनादेव । **सर्वत्र** ; पिण्डद्वये जातिव्यक्त्योश्च । अतःशब्दाभिप्रेतमाह—**इदमिति** । पिण्डद्वयभेदाभेदनिर्वाहकजातिव्यक्त्योस्तदङ्गीकारे तत्राविरोधायाकारान्तराभावात्प्रतीतिरेव परस्य शरणमिति तद्व्युदासाय प्रथमं भेदेन प्रतिपत्तिः प्रदर्श्यते—**इदमित्थमितीति** । तदेव विवृणोति—**तत्रेति** । प्रथमपिण्डग्रहणेऽभेदग्रहणम्, एकशब्दानुविद्धप्रत्ययः, मत्वर्थीयानपेक्षसामानाधिकरण्यं, सहधीनियमश्चेति जातिव्यक्त्योर्भेदाभेदधीहेतुचतुष्टयमाशङ्क्याह—**तथाहीति** । तेषु प्रथमं व्युदस्यति—**प्रथममेवेति** । ततः किं भेदेन ग्रहणस्येत्यत्राह—**व्यावृत्तिश्चेति** । अत्राखण्डवाक्यार्थभङ्गश्च फलितः । धर्मिणो व्यावृत्तिर्धर्म एवेत्युक्तेः । धर्मस्यैव हि स्वरूपं व्यावृत्तिः, शुक्तित्वग्रहाग्रहयोर्भ्रमनिवृत्त्यनिवृत्तिदृष्टेरिति । गोत्वादिविशिष्टधीरस्तु ; ततः किं भेदधिय इत्यत्राह—**सर्वत्रेति** । **सर्वत्र** ; दण्डदेवदत्तगोत्वतदाश्रयादिषु । तर्हि सहधीनियमादिवैषम्यत्रयं कथमित्यत्राह—**तत्रेति** ; अपृथक्सिद्धविशेषणत्वादित्यर्थः । एकशब्दानुविद्धधीर्विशेष्यैक्यविषया, 'एको

दण्डी' इतिवत्। अपृथक्सिद्धविशेषणवाचित्वात् मत्वर्थीयप्रत्ययानपेक्षा। सहभावो द्वित्वसाधकः। तन्नियमस्तु सुतराम्। ततो विरुद्धत्वम्। किंच तन्नियमस्त्वसाधारणानैकान्त्यान्नैक्यसाधकः। भेदांशस्तूभयोपगतः। तत्संबन्धस्तु शैत्यौष्ण्यसंबन्धवद्विरोधाद्दुरुपपादः। नियतः संबन्धश्च नैक्यम्, अजसंयोगवत्। एवं वैषम्यं चेत् कथं **सर्वत्रेति** ग्रन्थे तुल्यत्वोक्तिरित्यत्राह—**उभयत्रेति**। विशेषणविशेष्यभावप्रयुक्तभेदः समानः। तन्नियमानियमौ वैषम्यमित्यर्थः। यद्वा इदमित्थंभावसाम्यात् भेदश्चेदुक्तवैषम्यादभेदोऽपि स्यादित्यत्राह—**उभयत्रेति**। इदमित्थंतया भेदोऽनिवार्यः, उभयसंमतेः। ततो न तद्विरुद्धाभेदक्लृप्तिः। न ह्यवान्तराकारभेदः साधारणाकारविरोध्याकारकल्पक इत्यर्थः। जात्यादावेव तन्नियमः, न दण्डादाविति व्यवस्थासिद्ध्यर्थमैक्यं कल्प्यमित्यत्राह—**इयानिति**। **तदनर्हा इति**। कुत इत्यनाश्वासे स्वभावे पर्यवसानात् प्रतिपन्नविरुद्धक्लृप्तिगौरवमयुक्तमित्यर्थः। यद्वा भेदे तुल्ये दण्डादावपि सहधीनियमः स्यात्; जातिव्यक्त्योरपि वा स न स्यादित्यत्राह—**इयानिति**। न हि साधारणाकारे सत्यवान्तरभिदा त्याज्येत्यर्थः। अथ प्रतीतिमेव शरणं श्रयतः परस्यैव प्रतीतिपराहतिमाह—**अत इति**। यदि तयोरैक्यमन्यतरदेव प्रतीयेत। न च तथा प्रतीयते। अथापि नैक्यम्, अन्यतरत्प्रतीतं स्यादिति भावः। एतन्निरासस्य सौत्रत्वमाह—**तदेतदिति**। मानान्तराणामपि सविशेषविषयत्वमाह—**अत इति**। त्रित्वमेवाभ्युपेतम्। आधिक्यपक्षेऽप्याह—**प्रमाणेति**। सर्वमानसविशेषविषयत्वविस्तरोक्तौ प्राक् तत्संग्रहोक्ताविव बुद्धिस्थस्वसिद्धवादेऽपि न निर्विशेषत्वसिद्धिरिति ज्ञापनाय प्रागुक्तसविशेत्वबाधकतया परोक्तयुक्त्यभ्युपगमेऽपि युक्तिरूपविशेषैः सविशेषत्वमवर्जनीयमिति पूर्वोक्तं स्मारयन् स्ववाग्विरोधं च दर्शयति—**वस्त्विति**।

## तत्त्वटीका

अथोक्तार्थबलादेव वक्ति भङ्गं प्रसङ्गतः।
भेदाभेदमतस्यापि शास्त्रारम्भादिबाधिनः॥ ३८४॥

**अत एवेति**; निर्विकल्पकस्यापि विशिष्टार्थग्राहित्वादेवेत्यर्थः। एवकारः प्रच्छन्नजैनदूषणस्य प्रसक्तानुप्रसक्ति हेतोरन्यनैरपेक्ष्यं वा व्यनक्ति। **सर्वत्र**; अयुतसिद्धयोः, तत एव परोक्तप्रक्रियया सजातीयेष्वपीति यावत्।

दृष्टत्वादुपपत्तेर्वा भेदाभेदसमुच्चयः ।
इत्येतदिदमित्यादिग्रन्थाभ्यामथ दूष्यते ॥ ३८५ ॥

प्रथमपिण्डग्रहे परोक्ता जातिव्यक्त्योरभेदेन गृहीतिरसिद्धा । युक्त्या तत्क्लृप्तिस्तु भेदग्रहेण बाधितेति भावः । द्वयमपि क्रमाद्विवृणोति—**तथाहीति** । **सकलेतरव्यावृत्तम्** ; गृह्यमाणाकारानधिकरणात्सर्वस्माद्भिन्नतयेत्यर्थः । **सकल**शब्देन गृह्यमाणोऽप्याकारः संगृहीतः । तेन तदानीं तदनन्यत्वबुद्धिरप्यस्तीति शङ्कानिरासार्थ एवकारः । सौगतमतवत्स्वरूपत एव व्यावृत्तिधीः स्यादित्यत्राह—**व्यावृत्तिरिति** । चः शङ्कानिवृत्तिपरः । स्वत एव व्यावृत्तिबुद्धौ संशयाद्यभावप्रसङ्गः । गोत्वादेर्गोत्वादिविशिष्टत्वाभावात् धर्मधर्मिभेदश्चात्र सिद्धः । अस्तु भेदधीः; अभेदोऽपि युक्त्या तत्र सिध्येदित्यत्राह—**सर्वत्रेति** । पृथक्सिद्धेष्विवापृथक्सिद्धेष्वपीत्यर्थः । यदि जातिव्यक्तिष्वभेदः साध्यते तर्हि दण्डदण्ड्यादिष्वपि साध्यः स्यादित्याशयः । **अत्यन्तभेदः** ; ऐक्यप्रतिभटस्वभावः । **प्रतीत्यैव सुव्यक्तः** ; प्रत्यक्षेणैव स्पष्टावगतः । अतो निर्बाधो दुरपह्नवश्चेति भावः । **तयोरत्यन्तभेद** इत्यनेनैव 'एको गौः' इत्येकशब्दानुविद्धप्रत्ययोऽपि 'एको दण्डी' इतिवत् विशेष्यद्वित्वादिनिवृत्तिविषय इति सूच्यते । **अनयोरैक्य**मित्यादौ पूर्वोक्तेऽप्येवमेव तात्पर्यम् । नन्वत्यन्तभिन्नेषु दण्डादिषु सामानाधिकरण्यं मत्वर्थीयसापेक्षं दृष्टम् ; गोत्वादिषु तदभावादभेदोऽपि स्यादित्यत्राह—**तत्रेति** । अयं भावः—पृथक्सिद्धत्वापृथक्सिद्धत्वाभ्यामेव लाघवान्मत्वर्थीयापेक्षातदभावौ स्याताम् , न त्वत्यन्तभिन्नत्वतदभावाभ्याम् ; अपृथक्सिद्धत्वेऽपि क्वचिन्मत्वर्थीयस्तु निष्कर्षकशब्दत्वादिति । विशेषणत्वमन्तरेणाप्युपलब्धिसिद्ध्यै **पृथक्संस्थानसंस्थित**त्वोक्तिः । **स्वनिष्ठाः** ; देवदत्तादीन्प्रत्यपृथक्सिद्धिरहिता इत्यर्थः । **कदाचित्** ; आगन्तुकसंबन्धकाले । तावतालम् ; तथापि क्वचिच्छब्दो देशभेदमुखेनापि पृथक्सिद्धिर्दर्शयितुं शक्येति ज्ञापनार्थः । व्यावृत्तिव्यक्त्यै **गोत्वादय** इत्याद्युक्तम् । अतन्निष्ठतया तत्सत्तैव नास्तीत्यवधारणाभिप्रायः । **अवस्थिताः** ; यावत्सत्तमिति शेषः । ननु विशेषणत्वे समानेऽपि यद्यपृथक्सिद्ध्यादिवैषम्यं, तर्हि तत एव तादात्म्यतदभावलक्षणमपि तत् स्यादित्यत्राह—**उभयत्रेति** । अभेदप्रतिकूलाकारः सः । ऐक्याभावव्याप्यो हि विशेषणविशेष्यभावः । तस्मादैक्यक्लृप्तिर्न शक्या । न ह्यवान्तरविशेषेण क्वचिदपि सामान्यव्यापकविरुद्धं सिध्येदिति भावः । एवमप्यभेदक्लृप्तौ संप्रतिपन्नैक्यवस्तु-

नीव भेदधीस्तत्र न स्यादेवेत्यभिप्रायेणाह—**तत एवेति** । **तयोः ;** पृथक्सिद्धापृथक्सिद्धयोरित्यर्थः ; विशेषणविशेष्ययोरिति वा । **भेदप्रतिपत्तिश्चेत्यत्र** समानेति विपरिणतानुषङ्गः । ननु दण्डादिष्वदृष्टः सहधीनियमो गोत्वादिषु दृश्यते ; तेनाभेदोऽस्तु ; न चेदुभयत्र धीसाहित्यनियतिस्तदभावो वा स्यादित्यत्राह—**इयानिति** । अयं भावः—यथा भिन्नत्वाविशेषेऽपि क्वचिदेव तादात्म्यमिति ते स्वभावनियमः, तथा तादृशेष्वपि केषुचिदेवापृथक्सिद्धिः । तेष्वपि न गुरुत्वगन्धादीनां धीसाहित्यनियमः ; स तु गोत्वादीनां दुस्त्यजस्वभावनिर्धूतातिप्रसक्तिर्नोभयसंमतभेदविरुद्धं साधयितुं शक्नोति । न चापृथक्सिद्धत्वमेवैक्यम् , अविवादात् ; तदा हि भेद एवाभेद इत्यपि संकेत्येत ।

तस्माद् भेदैकनियतः सहधीनियमस्त्वयम् ।
ऐक्यसिद्धिविरोध्येव भवेच्चातिप्रसङ्गकृत् ॥ ३८६ ॥
इष्टः सिध्यन्नभावादिः प्रतियोग्यादिभिः सह ।
न चैक्यं युज्यते तत्र विशेषश्चात्र दुर्वचः ॥ ३८७ ॥
किंच संप्रतिपन्नैक्ये पृथक्सिद्धेऽप्यसन्नसौ ।
स्यादसाधारणाभासो हेतुः पूर्वश्च तादृशः ॥ ३८८ ॥
व्यक्तव्याहतिदुस्थत्वाद्भिन्नाभिन्नत्वमप्यतः ।
दुःसाधमभ्युपेतेऽपि केवलव्यतिरेकिणि ॥ ३८९ ॥
गर्दभागर्दभाभ्यां च गजत्वं विनिवृत्तिमत् ।
गर्दभागर्दभात्मत्वं गजस्य तव साधयेत् ॥ ३९० ॥
धर्मधर्मिस्वरूपैक्ये स्यान्नान्यतरधीः क्वचित् ।
सहधीश्च क्वचिन्न स्यात्संमतैक्ये यथा घटे ॥ ३९१ ॥
अतः क्वापि द्वयोरैक्यं सहैवावगतौ न वा ।
दुःसाधमथवा भाक्तं रामसुग्रीवयोरिव ॥ ३९२ ॥
तदिहाभिन्नधीर्भिन्ने भ्रान्तिर्ज्वालैक्यबुद्धिवत् ।
अभिन्ने भेदधीश्चैव स्याच्चन्द्रद्वित्वबुद्धिवत् ॥ ३९३ ॥
प्रातिस्विकमनेकेषु यदैक्यं सर्वसंमतम् ।
न ततः प्रस्तुतं सिध्येत्तदुक्तेः सिद्धसाध्यता ॥ ३९४ ॥

सामानाधिकरण्येऽपि यथार्हं प्रतिपाद्यते ।
अनेकान्वित एकोऽर्थो नानेकैरेकतां गतः ॥ ३९५ ॥
यच्च व्यष्टिसमष्ट्यादौ नानात्वैकत्वदर्शनम् ।
न विरुद्धान्वयस्तत्र परिषत्पुरुषादिवत् ॥ ३९६ ॥
भेदाग्रहाद्विकारित्वाद्धर्मत्वाद्देशसाम्यतः ।
परिमाणैक्यतश्चेत्याद्यसारं जैनकल्पितम् ॥ ३९७ ॥
बाधासिद्ध्यन्यथासिद्धिव्यभिचारादिविप्लुताः ।
हेतवस्तद्विदामेते जुगुप्सामात्रहेतवः ॥ ३९८ ॥
यच्चान्यदपि मुह्यद्भिर्भाषितं भास्करादिभिः ।
तत्तदर्थप्रसङ्गेषु तद्भङ्गश्च भवेदिति ॥ ३९९ ॥

एवं धर्मधर्मितादात्म्यस्य दृष्टत्वे कल्प्यत्वे च निरस्ते भेदाभेदवस्तुनोर्विरोधः क्वचिदुपलम्भनिरस्त इति परोक्तं प्रतारणमात्रमित्युपालभते—**अत** इति । अत्र प्रतीतिपराहतिं वदत एव सा स्यादिति भावः । निह्नोतव्यानूक्त्या निह्नवप्रकारं विवृणोति—**प्रतीतिप्रकार इति** । ननु प्रथमाक्षसंनिपातनिर्विकल्पकदशायाम् 'इदमित्थम्' इति प्रतीतिं परे नेच्छन्ति ; तत्कथमिह सर्वसंमतत्वोक्तिः ? इत्थम्—न ह्यत्र निष्कृष्टान्यतरधीसिद्धं प्रातिस्विकमैक्यं भातीति परैः साध्यते ; किं तु धर्मधर्मिणोः । तथा सति इदमित्थंभावधीस्तत्र परैरपि संमन्तव्या । यद्वा सविकल्पकधीप्रकारस्य सर्वसंमतत्वोक्त्या तद्बलेन प्रथममपि तद्वदेव विरुद्धानुल्लेखः स्थाप्यते । ननु "तदनन्यत्वमारम्भणशब्दादिभ्यः" "अंशो नाना व्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" "अविभागेन दृष्टत्वात्" इत्यादिवादिनः सूत्रकृतोऽत्यन्तभेदोऽनिष्ट इत्यत्र तदभिप्रायव्यक्त्यै स्पष्टार्थमनेकान्तवादाक्षेपसूत्रं दर्शयति—**तदेतदिति** ; प्रमाणादिसिद्धविरुद्धसंभेददूषणमित्यर्थः ।

सुव्यक्तार्थेन सूत्रेण निश्चिते सूत्रकृन्मते ।
अव्यक्तार्थैस्तदुन्नेतुरपसिद्धान्तमाह च ॥ ४०० ॥

अथ साक्षात्प्रक्रान्तस्य शेषं सिद्धेन साधयति—**अत इति** ; सर्वविशेषरहितग्रहणासिद्धेरित्यर्थः । आदिशब्देन लौकिकवैदिकागमग्रहः । संभवति हि ततोऽपि व्याप्ति-

सिद्धा क्वचिदनुमा ; यथा 'स्वर्गमसौ यास्यति, तत्कामनया सम्यगनुष्ठितज्योतिष्टोमत्वात्' इति । प्रत्यक्षादिना दृष्टलिङ्गसंबन्धं साध्यं तद्विशिष्टो धर्मिवदुक्तः । अतो न साध्यावि-शिष्टविशेषविषयत्वमिह हेतुः, दुरपह्नवधर्मिसाध्यादिविशेषभूयस्त्वप्रदर्शने तात्पर्यात् ।

"विशेषेऽनुगमाभावात्सामान्ये सिद्धसाधनात् ।
तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः ॥"

इत्यादि वदंश्चार्वाकस्तु स्ववचनप्रवृत्त्यादिभिर्भग्नः । देशान्तरादौ व्यभिचारसंभवेन भ्रान्त्या वानुमानिकी प्रवृत्तिः । यदृच्छया तु संवाद इत्यूहस्तु प्रत्यक्षेऽपि स्यात् । यच्चानुमानस्य प्रामाण्ये सति कथंचित्प्रत्यक्षान्तर्भाव इति, तत्तथान्यथा च विशिष्टविषयत्वं तावद्दुरपह्नवम् । 'व्याप्तिग्राहकप्रमाणानधिकविषयमनुमानम्' इति वदतामपि विशिष्ट-विषयतायामविवाद इत्यवधारणाभिप्रायः । यद्वा प्रागनूदितनिर्विशेषत्वानुमानानामुत्थान-शङ्कापि नास्तीति द्योत्यते । नन्वर्थापत्त्यादि मानान्तरमस्ति ; ततोऽस्मदिष्टं स्यादित्यत्राह—**प्रमाणेति । अयमेव** ; सविशेष एवेत्यर्थः । प्रत्यक्षादित्रिकं प्रदर्श्य **प्रमाणसंख्यावि-वादेऽपी**त्युक्त्या अन्वारुह्य वादोऽयमिति व्यक्तम् । तत्तदुक्तं तूपमानमागमादावन्तर्भवति ; अर्थापत्तिसंशयावनुमाने ; अनुपलब्धिश्च प्रत्यक्षादौ ; ऐतिह्यं तु प्रायिकप्रामाण्यम् । "स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्" इति श्रुतौ तु स्मृत्युपादानं प्रत्यक्षाद्यनुवि-धायितया तदभिन्नार्थत्वपरम् । ऐतिह्यमिहागमः । उपबृंहितं च मनुना—"प्रत्यक्षमनु-मानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यम्" इति । भारते त्वधिकोक्ति-र्गोबलीवर्दनयादुदाहरणभेदव्यक्त्यर्था । न्यायसूत्रे तूपमानबहिर्भावोक्तिरन्यपरतया भूषणेन निरूढा । एवं 'सविशेषवस्तुविषयत्वात्' इति प्रागुक्तं हेतुसामर्थ्यं निर्विशेषप्रमाणस्य दुर्वचत्वं च निगमयति—**न केनापीति** । संग्रहोक्ताविवास्मिन् विस्तरेऽप्यगत्या परः स्वानुभवमेव पुनः शरणयेत् । तस्य विशिष्टविषयत्वे स्थापिते तत्प्रयुक्तैरेव निष्कर्षहेतुभिः सविशेषत्वं प्रागुक्तमिति कृत्वा अनुक्तस्ववाग्विरोधं सिंहावलोकितकेनाह—**वस्त्विति** । सन्तु सविशेषविषयाण्येव प्रमाणानि ; तानि निर्विशेषत्वयुक्त्या बाध्येरन्नित्यत्र दत्तोत्तरत्व-मजानतो जडाकारोऽयम् । **तदेव** ; स्वेष्टहेत्वादिरूपानेकविशेषास्पदमेवेत्यर्थः ।

## मूलभावप्रकाशिका

प्रसङ्गाद् भेदाभेदं निराकरोति—**अत एवेति ; अत एव** ; प्रथमपिण्डग्रहणस्य

विशिष्टविषयत्वसमर्थनादेवेत्यर्थः । **सर्वत्र** ; घटपटादिव्यक्तिषु जातिव्यक्तिगुणगुण्युपादानोपादेयस्थलेष्वित्यर्थः । कथमित्यत्राह—**इदमित्थमिति** । **इदमित्थंभावयोरिति** ; प्रकारप्रकारिणोर्जातिव्यक्त्योरित्यर्थः । खण्डव्यक्त्योरन्योन्यभेदाभेदसमर्थने 'इदमिदं न भवति' इति भेदः, 'इदमिदं भवति' इत्यभेदः ; ततश्च भेदाभेदयोर्विरुद्धत्वात्कथं समावेश इत्याशङ्क्य जात्यात्मनाऽभेदो व्यक्त्यात्मना भेद इति भेदाभेदवादिभिराकारद्वयरूपेण भेदाभेद उपपादितः । तत्राभेदो जातिगतः, भेदश्च व्यक्तिगत इति नैकस्य द्व्यात्मकतेति शङ्कापरिहाराय जातिव्यक्त्योर्भेदाभेदे चत्वारो हेतवः परोक्ताः—प्रथमपिण्डग्रहणेऽभेदेन ग्रहणम्, एकशब्दानुविद्धप्रत्ययः ; मत्वर्थीयप्रत्ययनिरपेक्षसमानाधिकरणपदप्रयोगः, सहोपलम्भनियमश्चेति । तत्र सहोपलम्भनियमसमानाधिकरणप्रत्ययौ भेदाभेदसाधकौ । अन्यौ द्वावभेदसाधकौ । इदं हेतुचतुष्टयं हृदि निधाय प्रथमपिण्डग्रहणेऽभेदेन ग्रहणं निरस्यति—**तथाहि प्रथममेवेत्यादिना** । **सर्वत्रेति** ; प्रथमपिण्डग्रहणे जातिव्यक्त्योरनुवृत्तत्वव्यावृत्तत्वरूपभेदकधर्माग्रहेऽपि प्रकारत्वप्रकारित्वलक्षणभेदकधर्मान्तरस्य ग्रहणेन प्रथमपिण्डग्रहणे जातिव्यक्त्योरभेदेन ग्रहणमिति हेतुरसिद्ध इति भावः । जातिव्यक्त्योर्भेदे दण्डादिवज्जातिगुणादेरपि पृथक् सिद्धिमाशङ्क्याह—**तत्रेति** । **पृथक्संस्थानसंस्थिता इति** ; भिन्नसंस्थाना इत्यर्थः । **स्वनिष्ठा इति** ; परविशेषणतैकस्वभावशून्या इत्यर्थः । **तत एवेति** ; विशेषणविशेष्यभावसाम्यादेव जातिव्यक्त्योर्भेदप्रतिपत्तिरनुभवसिद्धेत्यर्थः । जातिगुणादेर्दण्डकुण्डलादिना विशेषणत्वाकारेण साम्येऽपि न सर्वथा साम्यमित्याह—**इयांस्तु विशेष इति** । **अतो वस्तुविरोध इति** ; भेदाभेदविरोधः । **प्रतीतिपराहत इति** ; एतत्प्रतीतिपराहतमित्यर्थः । न च दण्डकुण्डलादिवत् जात्यादेरपि व्यक्त्याद्यपेक्षया भेदे 'दण्डी, कुण्डली' इतिवज्जात्यादिशब्दैर्व्यक्त्यादिवाचिशब्दानां मत्वर्थप्रत्ययसापेक्षसामानाधिकरण्यमेव स्यात्, न तु 'खण्डो गौः' 'नीलो घटः' इति मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यमिति शङ्क्यम्, अपृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यपर्यन्ततया मत्वर्थप्रत्ययनैरपेक्ष्योपपत्तेः । जातिगुणादिविशिष्टे 'अयमेकः' इति शब्दप्रयोगस्य दण्डकुण्डलविशिष्टे विशेष्यैक्याभिप्रायेण 'अयमेकः' इति शब्दप्रयोगवदुपपत्तेः जातिव्यक्त्योः सहोपलम्भनियमस्योपलम्भकसामग्रीयौगपद्याधीनत्वेनाभेदासाधकत्वात् मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यसहोपलम्भनियमैकशब्दानुविद्धप्रत्यया नाभेदसाधका इति भावः ।

प्रासङ्गिकं भेददूषणं समाप्य प्रकृतनिर्विशेषप्रमाणाभावमुपसंहरति—**अत इति**। **प्रत्यक्षादिदृष्टेति ;** व्याप्तिप्रत्यक्षविषयग्राह्यसामानाधिकरण्यानुप्रविष्टसंबन्धेन साध्यविशिष्टपक्षविषयत्वादित्यर्थः। प्रमाणत्रयातिरिक्तप्रमाणाभ्युपगन्तॄणामपि सविशेषविषयत्वमवर्जनीयमित्याह—**प्रमाणसङ्ख्येति**। ननु तर्कपराहतत्वात् प्रमाणानां न विशेषविषयकत्वमित्याशङ्क्य केनचिद्धर्मेण सविशेषत्वनिरासे तेनैव धर्मेण सविशेषत्वावश्यंभावात् व्याघात इति पूर्वोक्तां युक्तिं स्मारयति—**वस्तुगतेति**।

**श्रीभाष्यम्**

यत्तु—प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम्, भेदश्च विकल्पासहत्वाद् दुर्निरूप इत्युक्तम्; तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वाज्जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम्। संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि संभवत्येव। अत एव च नानवस्थान्योन्याश्रयणं च। एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात् क्षणान्तरग्राह्यं न किंचिदिह तिष्ठति।

**श्रुतप्रकाशिका**

एवं निर्विशेषचिन्मात्रपारमार्थ्यव्यतिरिक्तापारमार्थ्यप्रतिज्ञाबाधः सामान्येन सर्वप्रमाणसविशेषगोचरत्वेन दर्शितः। अथ परोक्तं प्रमाणतर्कजातं विशेषतो दूषयितुमुपक्रमते। शास्त्रबलीयस्त्वमिच्छता परेण प्रथमं शास्त्रमुपन्यस्तम्। तदनिच्छता प्रत्यक्षाविरुद्धेऽर्थे शास्त्रं प्रमाणयता सिद्धान्तिना प्रत्यक्षस्य सन्मात्रविषयत्वं निराक्रियते। तत्र प्रत्यक्षस्य सन्मात्रविषयत्वे भेदस्य दुर्निरूपत्वे च परोक्तं कुतर्कमनूद्य निरस्यति—**यत्त्विति**। **यत्त्वित्यादिना** ग्रन्थद्वयेन प्रमाणानुपपत्तिप्रमेयानुपपत्त्यनुभाषणम्। **तदपीति ;** न केवलं सविशेषविषयत्वोपपादनम्, निर्विशेषविषयत्वोपपादनानुपपत्तिश्चेत्यपिशब्दस्य भावः। यद्वा न केवलं भिन्नविषयत्वं स्थापितं, सन्मात्रविषयत्वमपि दूरोत्सारितमित्यपिशब्दस्यार्थः। **जात्यादेरेवेति ;** स्वपरनिर्वाहकत्वाद्यावृत्तिरूपधर्मान्तरनिरपेक्षस्य प्रतियोगिनिरपेक्षस्यैव चेति भावः। **दूरोत्सारितम् ;**

प्रतियोगिस्मरणकृतविलम्बे सत्यपि ज्ञानस्य यावत्कार्यसिद्धि स्थिरत्वं कल्प्यम्; अथापि प्रतियोगिनिरपेक्षजात्यादेर्भेदत्वेनैकक्षणवर्तित्वेऽपि प्रत्यक्षस्य भेदस्य सुग्रहत्वाद् दूरोत्सारितमिति भावः। **जात्यादेरेवे**त्यभिप्रेतं भेदस्य स्वपरनिर्वाहकत्वं परोक्तयुक्त्यैव दर्शयति—**संवेदनवदित्यादिना**। **संवेदनवद्रूपादिवच्चे**त्यनेन परोक्तपक्षसपक्षौ द्वावपि सपक्षीकृतौ। अनेन परोक्तदूषणस्य परिहृतत्वं दर्शयति—**अत एवेति**। अत्र प्रथमचशब्दस्य स्वपरनिर्वाहकत्वोपपादनेन दूषणपरिहारश्च सिद्ध इति भावः। द्वितीयश्चशब्दो दूषणद्वयसमुच्चये। अनवस्थापरिहारसिद्धौ तदर्थस्वपरनिर्वाहकत्वसिद्धिः; तदर्थस्वपरनिर्वाहकत्वसिद्धावनवस्थापरिहार इत्यन्योन्याश्रय इति चेत्—न; भ्रमनिवृत्त्यन्वयव्यतिरेकाभ्यामेव स्वपरनिर्वाहकत्वसिद्धेरनवस्थापरिहारात्। प्रत्यक्षज्ञानस्य त्रिचतुरक्षणमात्रवृत्तित्वेऽप्येकक्षणवर्तित्वमभ्युपगम्य परिहरति—**एकक्षणवर्तित्वेऽपीत्यादिना**। अत्रेदमनुसंधेयम्—किं प्रतीतिरनभ्युपगता? उताङ्गीकारेऽपि मूलं नास्ति? किं वा मूलं दुर्निरूपमिति? विषयो वा किं नास्ति? उत सन्नपि दुर्निरूप इति? तत्र प्रथमः प्रतीत्यनभ्युपगमो नोपपद्यते, वेदान्तानामनारम्भणीयत्वप्रसङ्गात्, वादिप्रतिवादिरूपेण कथानुपपत्तेश्च। मूलमप्यस्ति, कार्यस्य संप्रतिपन्नत्वेन कारणस्य कल्पनीयत्वात्। कार्यं हि प्रतीतं कारणकल्पनायां प्रमाणम्। न पुनः स्फुटावधारितं कार्यं कारणनिरूपणायापह्नवमर्हतीति हि नीतिविदः। दुर्निरूपत्वमपि नास्ति; कार्योत्पत्त्यनुरूपत्वं हि कारणस्य सुनिरूपत्वम्। कार्योत्पत्त्या कारणस्य तदनुरूपत्वं सिद्धमिति न दुर्निरूपत्वम्। विषयोऽप्यस्त्येव; यदि न विषयः, तर्हि त्वयैव तदनुयुक्तेन वक्तव्यम्—प्रपञ्चस्य बाध्यत्वज्ञानं किं सविषयम्? उताविषयमिति। सविषयत्वे विषयोऽङ्गीकृत एव। नो चेद्बाध्यत्वमपि नेति प्रपञ्चपारमार्थ्यं स्यात्। अतोऽस्त्येव विषयः। न च बाध्यविषयत्वम्, तथा सति भेदबाधकप्रमाणजन्यप्रतीतेरपि मिथ्याविषयत्वेन भेदपारमार्थ्यप्रसङ्गात्। एतान्प्रत्याहुः—

"स्वशास्त्रनिर्णये सत्ये सत्याः स्युर्लोकनिर्णयाः।
स्वशास्त्रनिर्णयेऽसत्ये सत्याः स्युर्लोकनिर्णयाः॥"

इति। उक्तविकल्पेषु पूर्वे चत्वारः पक्षा **अपिचेत्या**दिना भाष्येण वक्ष्यमाणेनाभिप्रेता इति तेषां निरस्तत्वं तत्र ज्ञास्यते। अत्र प्रथमं पञ्चमं बाध्यविषयत्वपक्षं प्राधान्यात्परिजिहीर्षता

भाष्यकारेण प्रत्यक्षबाधस्तावन्न दृष्ट इति यौक्तिकबाधः परिह्रियते। तत्र प्रतियोगिनिरपेक्षजात्यादेरेव भेदत्वेन तद्विशिष्टविषयतया क्षणान्तरग्राह्याभावात् क्रमयौगपद्यविकल्पायोगरूपा प्रमाणानुपपत्तिः परिहृता। एवं प्रमेयानुपपत्तौ स्वरूपपक्षे प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तिश्चेष्टतया परिहृता। हानोपादानादिरूपस्य गोत्वादिशब्दावलम्बिनश्च व्यवहारस्य प्रतीतेश्च प्रतियोगिनिरपेक्षत्वात्। शब्दव्यवहारविशेषे प्रतियोगिसापेक्षत्वस्य 'दाराः, कलत्रम्, आपः' इत्यादिषु स्त्रीत्वनपुंसकत्वबहुत्वादिवत् शब्दस्वभावायत्तत्वान्नार्थदूषणत्वम्। व्यावृत्तादिशब्दप्रयोगेष्वेव प्रतियोगिसापेक्षत्वदर्शनात् गोत्वादिप्रतिपत्तिव्यवहारेषु तदभावात् शब्दव्यवहारविशेषस्य प्रतियोगिसापेक्षत्वं शब्दविशेषस्वभावाधीनमित्यन्वयव्यतिरेकाभ्यां निश्चीयते। शब्दस्वभावश्च प्रवृत्तिनिमित्तसाधारण्यात्तदवच्छेदकोपाधिपुरस्कारेणार्थविशेषप्रतीतिहेतुत्वम्। गोत्वशब्दो ह्यसाधारणो गोत्वं स्वरूपेण दर्शयति। भेदशब्दस्तु व्यावृत्तिबुद्धिहेतुत्वरूपप्रवृत्तिनिमित्तसाधारण्यात्तदवच्छेदकमहिषादिपदार्थान्तररूपोपाधिपुरस्कारेण गोत्वं दर्शयति। पर्यायत्वप्रसक्तिश्च परिहृता। व्यावृत्तिरूपे परे ब्रह्मणि ब्रह्मशब्देन सह स्वरूपशब्दवदधिकार्थाविवक्षायामपि भिन्नशब्दस्य प्रयोगसंभवात्। उपाधिशब्दानां हि वाच्यानतिरेकेऽपि तटस्थोपाधिभेदादपर्यायत्वमुपपद्यते। तत्रेच्छौ प्रयोगाप्रयोगौ संमतौ। भेदस्य व्यावृत्त्यनुवृत्तिविकल्पोऽपि परिहृतः, 'व्यावृत्तः' इत्यभ्युपगमे स्वरूपव्यावृत्तशब्दयोरिव भेदशब्दस्यानुवृत्तप्रयोगसंभवात्। 'भिन्नो हि भेदयोगी' इत्येतच्च स्वरूपस्यैव जात्यादिभेदविशिष्टत्वेन भिन्नशब्दप्रयोगसंभवात्परिहृतम्। धर्मभूतजात्यादिषु 'भिन्नः' इति प्रयोगो भवन्मते व्यावृत्तिरूपे ब्रह्मणि व्यावृत्तशब्दवदौपचारिकः, धर्मान्तरराहित्येऽपि तद्योगकार्यव्यावृत्तिबुद्धिहेतुत्वात्। धर्मपक्षेऽनवस्थान्योन्याश्रयणे च परिहृते, प्रतियोगिनिरपेक्षजात्यादेरेव भेदत्वात् तस्यैव स्वपरनिर्वाहकत्वाभ्युपगमाच्च। अविद्याया ब्रह्मणो भेदोऽस्ति वा, न वा? न चेद् ब्रह्मणो जडत्वादिप्रसङ्गः; अस्ति चेत्, स भेदः स्वरूपं वा धर्मो वेति विकल्पे दूषणपरिहारसाम्यं द्रष्टव्यम्। किंच स्वरूपधर्मविकल्पदूषणपरिहारा अभेदेऽपि तुल्याः। अभेदः स्वरूपं चेत् प्रतियोगिनिरपेक्षाभेदव्यवहारप्रसङ्गः। "परमात्मना भवत्यभेदी" "घटध्वंसे घटाकाशो न भिन्नो नभसा यथा" इत्यादिष्वभेदः सप्रतियोगिको ह्यवसीयते। 'ब्रह्माद्वितीयम्' इत्यादिपदानां पर्यायत्वं स्यात्। धर्मश्चेत् सविशेषत्वम्। ततश्चापसिद्धान्त इति।

भावप्रकाशिका

**न केवलं सविशेषेति**; यद्यपि 'यदुक्तं तदपि निरस्तम्' इत्युक्ते परोक्तेन पूर्वनिरस्तेनार्थान्तरेणैव समुच्चयो वक्तुमुचितः, न तु सविशेषविषयत्वोपपादननिर्विशेषविषयत्वोपपादनानुपपत्त्योः; तथापि 'इष्टं च सिद्धम्, अनिष्टं च निरस्तम्' इत्यादौ तथापि दर्शनादेवमुक्तमिति द्रष्टव्यम्। **निर्विशेषविषयत्वोपपादनानुपपत्तिश्चेति**; सन्मात्रग्राहिप्रत्यक्षस्य दूरोत्सारितत्वान्निर्विशेषविषयत्वोपपादनानुपपत्तिः फलितेति फलितानुपपत्त्या समुच्चयः। एतदस्वरसादाह—**न केवलं भिन्नविषयत्वं स्थापितमिति**। **प्रतियोगिस्मरणकृतविलम्बे सत्यपीति**; एकक्षणमात्रवर्तिनः सन्मात्रग्राहिप्रत्यक्षस्य प्रतियोगिस्मरणसापेक्षभेदव्यवहारसामर्थ्यं नास्तीति पूर्वपक्षे यदुक्तं तत्र भेदस्यातिरिक्तत्वपक्षेऽपि भेदस्य दुर्निरासतया प्रत्यक्षस्य क्षणमात्रस्थायित्वनियमं परित्यज्य भेदव्यवहारार्थमनेकक्षणस्थितिरप्यन्यथानुपपत्त्या कल्प्या। यदि हि तादृशक्लिष्टकल्पनमन्तरेणैव जात्यादेरेव भेदत्वं सुघटं, तदा परोक्तयुक्तेर्दूरोत्सारितत्वं किमु वक्तव्यमित्याशयः। **प्रथमचशब्दस्येति**; ननु—अतःशब्दपरामृष्टस्वपरनिर्वाहकत्वस्यानवस्थादिपरिहारे निरपेक्षहेतुतया अतःशब्दान्वितचशब्दप्रतिपाद्यसमुच्चेतव्यान्तराभावात् 'नच' इत्यादिवच्चशब्दो वाक्यालङ्कार इति चेत्—न; चशब्दं भिन्नक्रममाश्रित्यानवस्था च न, दूषणान्तरं च नास्तीत्यभ्युपगमेनादोषात्। **अनवस्थापरिहारसिद्धाविति**; यद्यपि संवेदनरूपादिवदनवस्थाभीत्या स्वपरनिर्वाहकत्वसिद्धिरिति वदन्तं प्रति नास्याः शङ्काया उत्थानम्, तथापि तदनादरेणेयं प्रवृत्तेति द्रष्टव्यम्। **कारणनिरूपणायापह्नवमर्हतीति**; कारणनिरूपणं प्रसजेदित्येवं भीत्या स्फुटावधारितं कार्यं नापह्नवमर्हतीति भावः। **प्रपञ्चस्य बाध्यत्वज्ञानमिति**; बाध्यत्वरूपभेदविषयज्ञानमित्यर्थः। पञ्चमं पक्षं प्रतिक्षिपति—**न च बाध्याविषयत्वमिति**। **तथा सतीति**; भेदस्य सर्वस्य बाध्यत्वे प्रपञ्चबाध्यत्वरूपभेदस्यापि बाध्यतया प्रपञ्चसत्यत्वमेव स्यादित्यर्थः। **स्वशास्त्रनिर्णये सत्य इति**; बाध्यत्वात्मकभेदलक्षणशास्त्रार्थे सत्ये सति भेदस्य दुर्निरूपत्वयुक्तेरप्रवृत्तेस्तुल्यन्यायतया प्रामाणिकस्य भेदान्तरस्यापि सत्यत्वं स्यादित्यर्थः। स्वशास्त्रार्थस्य भेदमिथ्यात्वस्यासत्यत्वे तद्विरुद्धसत्यत्वोन्मज्जनप्रसङ्ग इत्यर्थः। केचित्तु—स्वशास्त्रार्थनिर्णये सत्ये सत्येव लोके निर्णया असत्याः स्युः। तस्यैवासत्यत्वे लोकनिर्णयसत्यत्वं कुतो न भवेदित्यर्थ इति वदन्ति। **शब्दस्व-**

**भावायत्तत्वान्नार्थदूषणत्वमिति** ; यथैकस्यैवार्थस्य स्वशब्दोल्लेखने निरपेक्षस्यापि कठिनत्वलघुत्वादिशब्दोल्लेखने सापेक्षत्वं, यथा वा ज्ञानानन्दाद्यभेदो ब्रह्मस्वरूपमिति वदतस्तव मते ब्रह्मशब्दोल्लेखने निरपेक्षस्याप्यभेदशब्दोल्लेखने सापेक्षत्वं, तथेहापि घटशब्दोल्लेखने निरपेक्षस्यापि भेदशब्दोल्लेखने सापेक्षत्वमित्यस्तु ; एकस्यैव गमनस्य 'गच्छति चलति' शब्दोल्लेखाभ्यां प्रयत्नस्य च 'करोति प्रयतते' शब्दोल्लेखाभ्यां कर्मसापेक्षनिरपेक्षत्वयोः शब्दस्वभावप्रयुक्तत्वदर्शनादिति भावः । **तदवच्छेदकमहिषादिपदार्थेति** ; व्यावृत्त्यवच्छेदकेत्यर्थः । महिषादिप्रतियोगिकव्यावृत्तिबुद्धिहेतुत्वप्रवृत्तिनिमित्तपुरस्कारेण भेदशब्दो गोत्वं दर्शयतीत्यर्थः । **तटस्थोपाधिभेदादिति** ; घटकोपाधिभेदादित्यर्थः । **तत्रैच्छौ प्रयोगाप्रयोगाविति** ; महिषादिपदार्थान्तरपुरस्कारेण गोत्वे ज्ञातेऽपि प्रयोगाप्रयोगावैच्छावित्यर्थः ; न तु गोत्वज्ञानमात्रेणेति मन्तव्यम्, तावता भेदव्यवहारासंभवादिति द्रष्टव्यम् । **तद्योगकार्यव्यावृत्तीति** ; भेदरूपधर्मान्तरयोगकार्या या व्यावृत्तिधीस्तद्धेतुत्वादित्यर्थः । **अभेदेऽपि तुल्या इति** ; भेदः स्वरूपं धर्मो वेत्यादिभेदविभीषिका अकारमात्रप्रश्लेषेऽपि स्यात्, अभेदविभीषिकेत्युक्तेरिति भावः । **ब्रह्माद्वितीयमित्यादिपदानां पर्यायत्वं च स्यादिति** ; द्वितीयपदस्य भेदपरत्वेनाद्वितीयमित्यस्याभेदार्थकत्वमिति भावः ।

## श्रुतप्रदीपिका

अथ भेदव्युदासककुतर्कान्निरस्यन् परोक्तमानमेयानुपपत्ती अनुवदति—**यत्त्विति** । न तावद्भेदस्य न प्रतीतिः, शास्त्रकथनानारम्भापत्तेः स्ववाग्विरोधाच्च । नापि तस्या निर्मूलत्वम्, तस्याः कार्यत्वेन कल्प्यत्वान्मूलस्य । न चास्या दुर्निरूपत्वम्, कार्योत्पत्त्यनुगुणतया सुनिरूपत्वात् कारणस्य । नापि निर्विषयत्वम्, तत्साधकमानतर्कविशेषविषयधियोऽपि तथात्वे प्रतिज्ञातनिर्विषयत्वासिद्धेः ; अतथात्वे प्रतिज्ञाव्याघाताच्च । बाध्यविषयत्वेऽपि तथा प्रत्यक्षादिभिर्बाधो न दृष्ट इति कृत्वा यौक्तिकबाधं परिहरति—**तदपीति** । **जात्यादेरेव** ; स्वपरनिर्वाहकस्य प्रतियोग्यनपेक्षस्यैव चेति भावः । **दूरोत्सारितम्** ; यावत्कार्यं स्थितेः कल्प्यत्वेऽप्येकक्षण एव सुग्रहत्वोक्त्यातीव निरस्तमिति भावः । स्वान्यनिर्वाहं परोक्त्यैव दर्शयति—**संवेदनवदिति** ; पक्षवत्सपक्षवच्चेत्यर्थः । अनेन परोक्तदोषस्य परिहृतत्वमाह—**अत एवेति** ; **अत एव** ; जात्यादेः स्वपरनिर्वाहकत्वाद्विशिष्टग्रहणस्यैव भेदग्रहणत्वाच्चेत्यर्थः । क्षणिकत्वोपगमेनाह—**एकक्षणेति** । प्रतियोग्यनपेक्षया यौगपद्यक्रमायोगः प्रत्युक्तः । मेयानुपपत्तौ तैः स्वरूप-

पक्षोक्तदोषश्च तथैव परिहृतः । व्यवहारविशेषे तु तदपेक्षा शब्दस्वभावात् अम्बादिशब्दवत् । ज्ञानादौ गवादिशब्दे च तदनपेक्षणात् पर्यायत्वं च परिहृतम् , अर्थानतिरेकेऽपि ब्रह्मस्वरूपादिशब्दवत्सहोक्तिसंभवात् । धर्मपक्षे स्वपरनिर्वाहप्रतियोग्यनपेक्षाभ्यां नानवस्थित्यन्योन्याश्रयौ । धर्मस्य तु स्वरूपमेव भेदः । तत्र भिन्नशब्दस्तु फलसाम्यादौपचारिकः ।

**तत्त्वटीका**

अथानूदितमादौ यत्तद्दूषयितुमुद्यतः ।
आरोहादवरोहाद्वा किं न हन्ति तदुच्यते ॥ ४०१ ॥
निर्विशेषपरं शास्त्रं प्रत्यक्षं तेन बाध्यते ।
न वा बाध्यं तदैकार्थ्यादित्यनूक्ते परोदिते ॥ ४०२ ॥
प्रत्यक्षोदन्तमुद्घाट्य प्राध्वं प्रतिविवक्षता ।
क्षेपः स्कन्धत्रयस्यास्य क्रियते प्रातिलोम्यतः ॥ ४०३ ॥
अतः प्रथममक्षोभ्ये भेदे कुमतिकल्पिताम् ।
मानमेयप्रतिक्षिप्तिमनुवक्त्यत्र यत्त्विति ॥ ४०४ ॥
अनूक्तं द्वितयं चात्र तदपीत्यादिनास्यति ।
उक्तवक्तव्यनिर्धार्यहेतुद्वितयशक्तितः ॥ ४०५ ॥

**जात्यादिविशिष्टस्यैव** ; न तु जात्यादिभिरभिन्नस्यानवगतसंबन्धस्य तच्छून्यस्य चेति यावत् । **जात्यादेरेव** ; प्रतियोग्यप्रतीतावपि स्वरूपतः प्रत्येतुं शक्यस्यैवेत्यर्थः । **वस्तुनः** ; जात्याद्यधिकरणस्य । अत्राश्रयधर्म्यन्तरतद्धर्माः स्वधर्माश्च प्रतियोगिनः ; स्वस्य तु स्वाश्रयधर्मान्तरादीति विभागस्त्विह **प्रतियोग्यपेक्षयेति** संक्षिप्तः । **दूरोत्सारितम्** ; धर्मिग्रहण एव भेदरूपस्य यस्किंचिद्धर्मस्य गृहीततया मानमेयानुपपत्तिशङ्कापि न स्यादिति भावः । **वस्तुनः स्वस्य** चेत्युक्तं स्वपरनिर्वाहकत्वं परोक्तपक्षदृष्टान्तन्यायादङ्गीकारयति—**संवेदनवदिति** । उक्तेनैव परोक्तदूषणनिरासश्च फलित इत्याह—**अत एवेति** । तत्र जात्यादिधर्मस्यैव भेदतया धर्मिस्वरूपस्यास्माभिर्भेदत्वानभ्युपगमात् संशयाद्यनुपपत्तिचोद्यमपास्तम् । स्वपरनिर्वाहकत्वेनानवस्था निरस्ता । विशिष्टग्रहणस्यैव भेदग्रहणत्वादन्योन्याश्रयप्रसङ्ग एव नास्ति । एवमाश्रयप्रतियोगित्वादिग्रहेऽपि । अत्र ग्राहकानुपपत्तौ परिहर्तव्यायां धर्मरूपस्य भेदस्य तद्विशिष्टस्य च विधौ व्यवच्छेदविधानयोरैक्यं दर्शितम् ।

धर्म्यपेक्षया तु तयोर्भेदः स्थापितः । प्रत्यक्षस्य स्वरूपभेदयोरन्यतरग्राहित्वं क्रमेणोभयग्राहित्वं च त्यक्तम् । युगपद् ग्रहणमेव तु प्रतिष्ठितमित्याह—**एकक्षणेति** । ननु यद्यपि धर्मिस्वरूपस्य भेदत्वं नास्ति, तथापि धर्मस्वरूपस्य भेदत्वे तत्र गोत्वादिशब्दानां भेदशब्दस्य च पर्यायत्वं स्यात् ; प्रतियोग्यनपेक्षत्वसापेक्षत्वादिविरोधोऽपि न परिहृतः । मैवम्—

व्यावृत्तेषु स्वरूपेषु खण्डगोशब्दनीतितः ।
स्वरूपशब्दानुगतिर्निमित्तान्तरतो यथा ॥ ४०६ ॥
न व्यावृत्त्यनुवृत्त्यादिविकल्पश्चात्र बाधकः ।
व्यावृत्तेषु स्वरूपेषु स्वरूपत्वानुवृत्तितः ॥ ४०७ ॥
*निर्दिष्टे हि विशिष्टेऽर्थे निष्कृष्टाङ्गविशेष्यता ।
स्वरूपशब्दवृत्तेः स्यान्निमित्तं सर्ववस्तुषु ॥ ४०८ ॥
विभक्तिभेदश्चैवं स्यात्समुदायांशभावतः ।
शिलापुत्रवपुर्न्यायो न चास्मिन्मुख्यसंभवे ॥ ४०९ ॥
एवं गोत्वादिधर्मेषु भेदत्वाख्यनिमित्ततः ।
प्रवृत्तो भेदशब्दः स्यादपर्यायः सहोक्तिमान् ॥ ४१० ॥
प्रतियोग्यनपेक्षत्वप्रसङ्गोऽप्यत एव न ।
भाषिष्यते हि भेदस्य लक्षणं तदपेक्षया ॥ ४११ ॥
यद्बुद्धौ यत्र यद्भ्रान्तिर्न स्यात्सा तस्य तद्भिदा ।
अतः सप्रतियोगित्वं भेदोक्तेरपि सेत्स्यति ॥ ४१२ ॥
भिन्नशब्दः क्वचिद्भेदेष्वाश्रयादिविशेषतः ।
स्वतश्च धर्मभेदश्च फलास्तेरौपचारिकः ॥ ४१३ ॥
अभेदेऽपि स्वरूपादिविकल्पानुपपत्तयः ।
भेदे यथा तथैव स्युः समाधिश्च समोऽत्र नः ॥ ४१४ ॥

तदिह न तावद्भेदधीर्नास्तीति साधयितुं शक्यम् , सर्वलोकप्रसिद्ध्या स्ववागादिभिश्च व्याघातात् । तथा च का कथा शास्त्रारम्भादौ । न च तस्या निर्मूलत्वम् , अत्रत्याभावत-

---

* इतः पूर्वम् 'अस्वरूपत्वमन्येषामपि न स्याद्गोत्ववत् ।' इत्यर्धश्लोकः आन्ध्राक्षरमुद्रितपुस्तके अधिकतया पठ्यते ।

स्तदयोगात् । सिद्धस्य च मूलाभावे स्वरूपानादित्वप्रसक्तौ स्वेष्टभङ्गात् । न च तन्मूलस्य दुर्निरूपत्वम्, विशेषतो निरूपणाशक्यत्वेऽपि परिवेषादेरिव तादृशकार्योत्पादनानुगुणस्वरूपतया सामान्येन तन्निरूपणात्; विशेषतश्चान्वयव्यतिरेकनियतस्येन्द्रियादेरुक्तत्वात्; "न च चक्षुषा" इत्यादिना स्थापयिष्यमाणत्वाच्च । न च निरूपितकारणापि सा निर्विषया, स्वोक्त्यादिविरोधादेव । निर्विषयत्वसाधकधियोऽपि निर्विषयत्वे स्वेष्टासिद्धेः; सविषयत्वे स्वेष्टविरोधात् । निर्विषयख्यातिवादस्तु प्रतिक्षेप्स्यते । नापि द्विचन्द्रभेदधीवद्बाधितविषया, मानमेयानुपपत्तिपरिहारात् । अनुमानादिभिर्बाधस्त्वपाकरिष्यते । 'सत् सत्' इत्यनुवृत्ते हि तद्व्यावृत्तिधीर्दुस्त्यजा । तस्मात्किं मुधात्र चोद्यते ।

## मूलभावप्रकाशिका

ननु वैधर्म्यरूपस्य जात्यादेः स्वाश्रयभेदव्यवहारहेतुत्वेऽपि स्वगतभेदव्यवहारहेतुत्वं कथमित्याशङ्क्य परत्र द्रव्ये चाक्षुषत्वव्यवहारमापादयतो रूपादेः परत्र प्रकाशमानत्वव्यवहारहेतोरनुभूतेश्च स्वस्मिंस्तद्व्यवहारजननेऽन्यानपेक्षत्वस्य दृष्टत्वाद् भेदेऽपि तथा संभवत्येवेत्याह---**संवेदनवदिति** । **नानवस्थेति**; भेदपरंपराश्रयणेऽनवस्थेत्यर्थः । **अन्योन्याश्रयणमिति**; जातेर्व्यक्तिभेदः, व्यक्तेर्जातिभेद इत्याश्रयणे तन्निष्ठधर्मस्यैव तद्भेदरूपत्वस्य वक्तव्यतयान्योन्याश्रयणं स्यादित्यर्थः । **एकक्षणवर्तित्वेऽपीति**; एकक्षणमात्रवर्तिनः सद्ग्राहिप्रत्यक्षस्य प्रतियोगिस्मरणसापेक्षभेदोल्लेखनव्यवहारसामर्थ्यं नास्तीति पूर्वपक्षे यदुक्तं तत्र भेदस्य गोत्वाद् व्यतिरिक्तत्वपक्षेऽपि भेदस्य दुर्निरसतया प्रत्यक्षस्य क्षणमात्रस्थायित्वनियमं परित्यज्य भेदव्यवहारार्थं भेदोल्लेखार्थं चानेकक्षणस्थितिकल्पनायां नानुपपत्तिरिति भावः ।

## वेदान्तन्यायसुदर्शनम्

अनुगतेः सविशेषत्वं च विषयाश्रयघटितत्वैव । **एकक्षणवर्तित्वेऽपीति**; न हि गत्वा ज्ञानं ग्राहि, येन क्रमेण ग्राहि स्यात् । न च जातिगुणयोर्द्रव्यस्य च क्रमेणेन्द्रियसंप्रयोगः, देशव्यवधानाभावात् । तद्विद्यमानं योग्यं सर्वं युगपदेव ज्ञानेन स्वमहिम्ना गृह्यत इति क्षणान्तरग्राह्यं नास्ति । 'नीलो घटोऽत्र' इत्यादिवाचः क्रमवक्तृकत्वात्क्रमाधीनं ज्ञानम् । न त्विन्द्रियज्ञाने क्रम इत्यर्थः । गोत्वादिभेदव्यपदेशो दृश्यद्रव्यभेदविषयः । द्रष्टृदर्शनदृश्यानां तु परस्परं स्वरूपमेव भेदः । 'यद्ग्रहणे वस्तुनि सकलेतरव्यवहारबुद्धि-

निवृत्तिः स भेदः ' इति भेदलक्षणस्य तेषु व्याप्तेः । न हि द्रष्टृस्वरूपभाने दृश्यस्वरूपव्यवहारः प्रसजति ।

श्रीभाष्यम्

अपिच सन्मात्रग्राहित्वे 'घटोऽस्ति, पटोऽस्ति' इति विशिष्टविषया प्रतीतिर्विरुध्यते। यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः, किमित्यश्वार्थी महिषदर्शनेन निवर्तते ? सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्, तत्तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते ? किं च—अश्वे हस्तिनि च संवेदनयोरेकविषयत्वेनोपरितनस्य गृहीतग्राहित्वाद्विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात्। प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति। सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येत। न च चक्षुषा सन्मात्रं गृह्यते, तस्य रूपिरूपैकार्थसमवेतपदार्थग्राहित्वात्। नापि त्वचा, स्पर्शवद्वस्तुविषयत्वात्। श्रोत्रादीन्यपि न सन्मात्रविषयाणि, किं तु शब्दरसगन्धलक्षणविशेषविषयाण्येव। अतः सन्मात्रस्य ग्राहकं न किंचिदिह दृश्यते। निर्विशेषसन्मात्रस्य प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात्; सन्मात्रब्रह्मणः प्रमेयभावश्च; ततो जडत्वनाशित्वादयस्त्वयैवोक्ताः । अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम् ।

श्रुतप्रकाशिका

इत्थं विषयदुर्निरूपत्वपक्षे प्रतिक्षिप्ते भेदप्रतीत्यनभ्युपगम एव परेषां शरणमिति तं निराकरोति—**अपिचेत्यादिना**। प्रथमं प्रतिपत्तिविरोध उच्यते—**सन्मात्रेति**। यदि

**चेत्या**दिना व्यवहारविरोधः । **सर्वास्वि**त्यादिना शब्दविरोधः । नन्वेकत्र स्मर्यन्त **एव** सर्वे शब्दाः, सर्वप्रतीतीनां सन्मात्रविषयत्वाभ्युपगमात् । नैवम् ; घटे प्रतिपन्ने तत्र पट-व्यवहाराप्रतिषेधप्रसङ्गस्याभिप्रेतत्वात् । अत्र प्रतिदूषणं सन्मात्रशब्दानुवृत्तिर्दूष्योऽर्थोऽय-मेवेति स्मारणार्था । **किंचे**त्यादिना प्रतीत्यवान्तरजातिविशेषविरोध उक्तः । अत्र सन्मात्र-शब्दाप्रयोगः **किंच**शब्देन दूष्यार्थप्रतिसंधानात् । धारावाहिकज्ञानेषु कालभेदोऽस्तीति तद्व्यावृत्त्यर्थं **विशेषाभावा**दित्युक्तम् । **स्मृतिवैलक्षण्यं न स्यादिति** ; ज्ञाततयैव पराम-र्शप्रसङ्ग इत्यर्थः । धारावाहिकबुद्धिष्विव ज्ञाततापरामर्शाभावोपपत्तिरिति चेत्—**न ;** तत्राप्रतिसंधानस्य तादात्विकबुभुत्साभावाधीनत्वात् ; अत्र तु सत्यामपि बुभुत्सायां ज्ञात-तापरामर्शाभावो विषयभेदमेव व्यवस्थापयति । **प्रतिसंवेदनमिति** ; विशेषाभ्युपगमशङ्का परस्य गत्यन्तराभावद्योतनार्था । **सर्वेषा**मित्यादिना करणव्यवस्थाभावप्रसङ्ग उक्तः । करणानां व्यवस्थासिद्ध्यर्थं विषयभेदानाह—**न चेत्यादिना** । अत्र पूर्वोक्तविशिष्टविषय-प्रतिपत्तिविरोधविवरणमकारणकत्वदुर्निरूपकारणकत्वनिरसनं च कृतं भवति । **रूपैका-र्थसमवेतेति** ; रूपसमानाश्रयसमवेतेत्यर्थः । समवेतशब्दो विशेषणतैकस्वभावपरः । विशेष्यत इति विशेषः । तेन सन्मात्रविलक्षणपरस्परभिन्नविषयत्वसिद्धिः । ननु सर्वं प्रत्यक्षं सविशेषविषयमित्युक्तम् ; शब्दगन्धरसानां साश्रयतया धर्मान्तरवत्तया वा ग्रहणाभावात् तद्ग्राहिणः प्रत्यक्षस्य कथं सविशेषविषयत्वम् ? नैतदेवम् ; गुणकर्मणोरपि तत्तत्संस्थानव-त्तया कालविशिष्टतया च सविशेषत्वेन गृह्यमाणत्वात् । एतच्च निर्विकल्पकमपेक्ष्योक्तम् । सविकल्पके तु देशादीनां बहूनां विशेषणत्वं संभवत्येव । इन्द्रियाणां लोकसिद्धहेतुभिः सन्मात्रविषयत्वप्रतिक्षेपमुपसंहरति—**अत इति** । प्रत्यक्षस्य सन्मात्रविषयत्वं पराभ्युपगता-र्थान्तरविरुद्धं चेत्याह—**निर्विशेषेति** । शास्त्रस्याप्राप्तविषयतयार्थवत्त्वं लोकसिद्धत्वाद्भे-दस्य शास्त्राविषयत्वं वदद्भिः परैरेवाभ्युपेतम् । श्रुतिप्रामाण्यविरोध उक्तः ; पराभिमता-र्थान्तरविरोधमाह—**सन्मात्रब्रह्मण इति** । ततः फलितमनिष्टमाह—**तत इति** । एवमुपपा-दितं प्रत्यक्षस्य सन्मात्रग्राहित्वप्रतिक्षेपं स्वाभिमतार्थान्तरव्युत्पादनाय प्रत्यक्षस्य विशिष्ट-विषयत्वे पर्यवसाययति—**अत इति** ।

### भावप्रकाशिका

**ज्ञाततयैव परामर्शप्रसङ्ग इत्यर्थ इति** ; न च—प्रत्ययमात्रस्य सन्मात्रग्राहित्वा-

दज्ञाततयापि परामर्शसंभवः ; किंच सन्मात्रांशे ज्ञातत्वापादनमिष्टमेव ; अंशान्तरे तु न ज्ञातत्वमिति कथं तदापादनसंभव इति वाच्यम् ; उक्तदूषणे तात्पर्यात् । **समवेतशब्दो विशेषणतैकस्वभावपर इति** ; सिद्धान्ते समवायानभ्युपगमादिति भावः । **तत्तत्संस्थानवत्तयेति** ; असाधारणधर्मवत्तयेत्यर्थः । **कालविशिष्टतयेति** ; कालस्य सर्वेन्द्रियग्राह्यत्वादिति भावः । **सविकल्पके तु देशादीनां बहूनां विशेषणत्वमिति** ; यद्यपि सिद्धान्ते निर्विकल्पके देशादयोऽपि विशेषणानि भवन्त्येव, तथाप्यनुवृत्तत्वादेर्निर्विकल्पके भानं नास्तीत्यत्र तात्पर्यात् । गन्धस्थले देशग्रहणस्य प्रथमतोऽभावमभिप्रेत्य तथोक्तमित्यपि केचित् ।

## श्रुतप्रदीपिका

एवं विषयदुर्निरूपत्वे निरस्ते प्रतीत्यनभ्युपगमः परस्य गतिरिति तं निराकरोति— **अपिचेत्यादिना** । प्रतिपत्तिव्यवहारशब्दव्यवस्थाविरोधाः **सन्मात्रेत्यादि**ग्रन्थत्रयोक्ताः । प्रतिदूषणं दूष्यैक्यज्ञापनाय सन्मात्रशब्दः । प्रतीतिविशेषविरोधमाह—**किंचेति** । कालभेदवत्प्रत्यभिज्ञाधारावाहिकधीव्युदासाय **विशेषाभावादिति** । तथोपगमं दूषयति—**प्रतिसंवेदनमिति** । प्रतिपत्तृविशेषविरोधमाह—**सर्वेषामिति** । कथमन्धाद्यभावस्यानिष्टतेति शङ्कायां पूर्वोक्तप्रतीतिविरोधं च विवृण्वन् धीकारणस्याभावं दुर्निरूपतां च व्युदस्यति— **न चेत्यादिना** । समवेतशब्द आश्रितपरः । विशेषो ग्राह्यविशेषः । **विशेषविषयाणि** ; व्यावृत्तवस्तुविषयाणि ; नानुवृत्तसन्मात्रविषयाणीत्यर्थः । आगमानर्थक्यमाह—**निर्विशेषेति** । अप्राप्ते हि सोऽर्थवान् । अपसिद्धान्ताद्याह—**सन्मात्रेति** । निगमयति—**अत इति** ।

## तत्त्वटीका

एवं स्थितेऽपि धाष्टर्यान्मिथ्याक्रियापूर्ववादन्यायेनायत्तत्वाच्चादिमं भेदबुद्ध्यपह्नवमेव परः शरणयेदिति कृत्वा तत्रापि दोषान्विवक्षुराह—**अपिचेति** । यद्वा प्रत्यक्षस्य भेदग्राहित्वाभावेऽपि भ्रान्त्या भेदव्यवहार इति यत्परेणोक्तं तत्र प्रत्यक्षवद् भ्रान्तावपि क्रमयौगपद्यादिविकल्पानुपपत्त्यवतारात् तन्निवर्तकस्य वैषम्यस्य दुर्वचत्वाच्च शास्त्रनिवर्त्यत्वाभिमतभेदधीरेव लुप्येतेति मत्वा तत्रानिष्टानि प्रस्तूयन्ते । त्रिभिरिह वाक्यैर्धीप्रवृत्तिव्यवहारविलोपमङ्गः प्रदर्श्यते । **सन्मात्रग्राहित्वे** ; भेदग्राहित्वाभावे सतीत्यर्थः । अयमेव प्रसङ्ग-

कांशो दूष्यश्चेति व्यक्त्यै त्रिष्वपि तदनुवादावृत्तिः। **जात्यादिलक्षणः**; जातिगुणादिस्वरूप इत्यर्थः। **किमिति**; अश्वाद्भेदस्य महिषत्वस्य दर्शनादेव हि ततो निवृत्तिरिति भावः। निवृत्त्युक्तिः प्रवृत्तेरप्युपलक्षिका। **तत्तत्प्रतिपत्तिविषयसहचारिण** इति लोकसमतानुवादः। वाच्यविशेषो हि दृष्टो वाचकविशेषं स्मारयति। तेन च गृहीतसंबन्धः स एव व्यवह्रियते; सेयं व्यवस्था न स्यादित्यभिप्रायेण **सर्वे शब्दा** इत्याद्युक्तिः। अथ पूर्वोक्तेभ्यो विलक्षणं प्रतीतिस्वरूपेऽनिष्टं प्रसज्यत इति सूचयन्नाह— **किंचेति**। **संवेदनयोरेकविषयत्वेन**; सन्मात्रविषयत्वेनेति भावः। गृहीतग्राहित्वं प्रत्यभिज्ञादावप्यस्तीति तद्व्यावृत्त्यर्थमाह—**विशेषाभावाच्चेति**। यद्यपि संस्कारजन्यत्वाभावेन स्मृतित्वं नास्ति, तथापि पूर्वानतिरिक्तव्यवहारहेतुत्वेन स्मृतिवैलक्षण्यं न स्यादित्युक्तम्। दृष्टं व्यवहारवैचित्र्यं हेत्वन्तरस्याप्यसंभवेन लुप्येतेति भावः। अनधिगततया भूतार्थनिश्चायकं प्रमाणमिति मतमनुसरन्तं प्रति च प्रामाण्यभङ्गसंरम्भोऽयम्। विषयतो विशेषाभावेऽपि स्वरूपभेदत इव कालभेदतो वा वैषम्यं स्यादित्यत्राह—**प्रतिसंवेदनमिति**। स्वरूपकालभेदयोर्हि सद्भावमात्रं स्मृताविवाकिंचित्करम्; विषयभूतसत्पदार्थोपरञ्जकत्वे तु स्वारसिकं हस्त्यश्वत्वादिवैशिष्ट्यं दुस्त्यजमित्याशयः। एवं प्रतिपत्तिषु स्मृतिवैषम्याभावः प्रसञ्जितः। अथ प्रतिपत्तृष्वन्धानन्धादिवैषम्यं न स्यादित्याह—**सर्वेषामिति**। **संवेदनानाम्**; प्रत्यक्षधियामित्यर्थः। इन्द्रियविशेषवैकल्यादेव ह्यन्धादित्वम्। इन्द्रियजातिभेदश्च विषयभेदादेव। अतस्तदभावे तत्तन्नियतेन्द्रियभेदासिद्धेरेकैकवैकल्येऽपि काणन्यायादन्धाद्यभावः स्यादित्याकूतम्। **अशेषग्रहणात्**; इन्द्रियान्तराग्राह्यानुपलम्भादित्यर्थः। उक्तसिद्ध्यर्थं विषयभेदेनेन्द्रियव्यवस्थां प्रागुक्तप्रतीतिविरोधं च व्यनक्ति—**न चेति**। **रूपैकार्थसमवेताः** संयोगादयः। समवेतशब्द इह स्वतो विशेषणत्वपरः। रूपस्य पृथगनुक्तिस्तद्विशिष्टग्रहणोक्तेः। **स्पर्शवद्वस्तुविषयत्वादि**त्यत्रापि स्पर्शादयो ग्राह्या इति। निराधारा रूपस्पर्शादय एव इन्द्रियग्राह्या इति वदन् वैभाषिकोऽप्यत्र प्रत्युक्तः। अद्रव्यग्राहिषु कथं विशिष्टविषयत्वमित्यत्र त्वदिष्टं तावन्नेत्याह—**श्रोत्रेति**। **अपिः** विरोधशङ्काद्योतकः समुच्चयार्थो वा। ननु श्रोत्रादेः सद्विषयत्वाभावे शब्दादीनामसत्त्वप्रसङ्गः; तदतिरिक्तविषयत्वाभावनिषेधस्तु कथमित्यत्राह—**किंत्विति**। शब्दत्वरसत्वगन्धत्वादीनि मतभेदाज्जातिरूपाण्युपाधिरूपाणि वा सर्वैर्दुरपह्नवानि लक्षणानि येषां ते शब्दरसगन्धलक्षणाः, त एव

विशेषा अनुवृत्तसच्छब्दनिमित्तातिरिक्ता इत्यर्थः। अन्यथा श्रोत्रादिभेदासिद्धिः पूर्वोक्त-प्रतीत्यादिविरोधश्च दुर्वार इत्यवधारणाभिप्रायः। एवं सर्वेन्द्रियाणां ग्राह्यतया त्वदुक्ते सन्मात्र एव ग्राहकानुपपत्तिरापततीत्यभिप्रायेणाह—**अत इति**। **इह**; संप्रतिपन्नेषु ग्राहकेषु। अन्यत्तु निर्विशेषग्राहकं न कल्पयितुं शक्यमिति भावः। परकल्पितप्रत्यक्ष-वृत्तान्तेन तदभिमतब्रह्मविषयस्य शास्त्रस्यानुत्थानप्रसङ्गमाह—**निर्विशेषेति**। पूर्व एवकारः शास्त्रनैरपेक्ष्यार्थः, उत्तरस्तु विधेयान्तरानभ्युपगमादनुवादनैरर्थक्यपरः; अप्राप्ते हि शास्त्र-मर्थवत्। सिद्धान्तविरोधमाह—**सन्मात्रेति**। न खल्विन्द्रियवेद्यसन्मात्रादन्यत्ते ब्रह्म। तस्यानन्याधीनसिद्धित्वेनाभ्युपगतस्यावृत्तिरूपस्यान्यधीगोचरत्वप्रसङ्ग इत्यर्थः। तावन्मात्रा-भ्युपगमे को दोष इत्यत्राह—**तत इति**। आदिशब्देन मिथ्यात्वादिसंग्रहः। **त्वयैवेति**; अनेन स्वोक्तमपि न जानासीति विरोधः सूच्यते। प्रत्यक्षस्य भेदग्राहित्वं तदुपन्यस्ताभिः कुतर्ककुहनाभिर्दुरपह्नवमित्यभिप्रायेण सावधारणं निगमयति—**अत इति**।

## मूलभावप्रकाशिका

**सन्मात्रग्राहित्व इति**; यद्यपि प्रत्यक्षं सन्मात्रग्राहि, तथापि भ्रान्त्या घटतद्गत-भेदादेर्ग्रहणमिति वदन्तं प्रति नेमानि प्रत्यक्षस्य सन्मात्रग्राहित्वे दूषणानि प्रसरन्ति, तथापि प्रत्यक्षस्य सन्मात्रग्राहित्वे तुल्यन्यायतया प्रमाणान्तराणां तदतिरिक्तग्राहित्वं न संभव-तीति भावः। **संस्थानरूपेति**; अवयवसंयोगविशेषरूपं यत्संस्थानं तद्रूपा जातिरित्यर्थः। आदिपदेन रूपरसादिलक्षणो भेदो गृह्यते। अनेन च वाक्येन संस्थानमेव जातिः जात्यादिरेव भेद इत्यर्थद्वयं प्रतिज्ञातं भवति।

## श्रीभाष्यम्

संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात् तावतैव गोत्वादिजातिव्यवहारोपपत्तेः, अतिरेकवादेऽपि संस्थानस्योभयसंप्रतिपन्न-त्वाच्च संस्थानमेव जातिः। संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तु संस्थानमनुसंधेयम्। जातिग्रहणेनैव 'भिन्नः' इति व्यव-हारसंभवात् पदार्थान्तरादर्शनादर्थान्तरवादिनाप्यभ्युपगतत्वाच्च गोत्वा-दिरेव भेदः।

## श्रुतप्रकाशिका

'अतः' इत्यादिभाष्येऽर्थद्वयमुक्तम्—वस्तुसंस्थानरूपा जातिः, जात्यादिरेव भेद इति च। तत्र प्रथमं संस्थानमेव जातिरित्युपपादयति—**संस्थानेत्यादिना**। किं दर्शनेन, उतानुपपत्त्या वा संस्थानातिरिक्तजात्यभ्युपगम इति विकल्पमभिप्रेत्य दर्शनं नेत्याह—**संस्थानातिरेकिण इति**। 'अयं सास्नादिमान्, अयमपि सास्नादिमान्' 'अयं पृथुबुध्नोदराकारः, अयमपि तदाकारः' इति सास्नादिरनुवृत्तबुद्धिव्यवहारविषयो दृश्यते; तदतिरिक्तोऽनुवृत्तधीव्यवहारविषयो न कश्चिद् दृश्यते; तस्मादित्यर्थः। यद्वा जातितया स्वाभिमतात्संस्थानात्पराभिमतजातेरसाधारणं रूपमुक्तम्--**एकाकारबुद्धिबोध्यस्येति**। कल्पनमप्यनुपपन्नमित्याह—**तावतेति**। व्युत्पत्तिरनुगतप्रयोगश्च व्यक्तिजातिविशेषादिशब्दानामिव गवादिशब्दानामपि सुसदृशोपाधिवशादुपपद्यत इति भावः। नामान्तरेण पराभिमतजातेरभ्युपगतत्वशङ्काव्युदासायाह—**अतिरेकवादेऽपीति**। परैरवयविनोऽसमवायिकारणत्वेन संस्थानं स्वीकृतम्। किमिदं संस्थानं नाम? किमवयवसंयोगविशेषः? उत स्वरूपमात्रम्? उतान्यत्किमपि? प्रथमे निरवयवेष्वात्मसु संस्थानाभावादात्मत्वजातिर्न स्यात्। द्वितीये प्रत्यक्षस्य विशिष्टविषयत्वं न स्यात्; अनुगतव्यवहारश्च न स्यात्; जातिमात्रोच्छेदश्च स्यात्। तृतीये गत्यभावादस्मत्पक्षाङ्गीकार इति शङ्कायां निरवयवेष्वपि जातिव्यवहारसिद्ध्यर्थं जात्यजातिसाधारणं संस्थानमात्रं दर्शयति—**संस्थानं नामेति**। घटस्य द्रव्यत्वं संस्थानं मा भूदित्यसाधारणशब्दः। **रूपम्**; अपृथक्सिद्धविशेषणम्; तेन गर्भदासादिव्यवच्छेदः। ननु **स्वासाधारणमि**त्यत्र स्वशब्दः किं व्यक्तिपरः? उत सजातीयपरः? व्यक्तिपरत्वे च किमेकव्यक्तिपरः? उत सर्वव्यक्तिपरः? प्रथमे एकव्यक्त्यतिरिक्तव्यक्तिषु गोत्वं न स्यात्। स्वशब्दस्य सर्वव्यक्तिपरत्वे महिषव्यक्तावपि गोत्वं स्यात्। असाधारणशब्दश्च निष्फलः। सजातीयपरत्वे जातेः संस्थानविशेषत्वात् समानसंस्थानविशेषाणामसाधारणं रूपं संस्थानमित्युक्तं स्यात्। ततश्चात्माश्रयः, संस्थाननिरूपणस्य तत्प्रतिपत्तिसापेक्षत्वात्। नैवम्, स्वशब्दस्य प्रकृतपरत्वात्। प्रकृतत्वं च तत्तद्व्यवहारगोचरतया बुद्धिस्थत्वम्। एवं तर्हि खण्डे बुद्धिस्थे गोत्वं तदसाधारणमिति मुण्डे गोत्वं न स्यात्; खण्डस्य वा गोगोत्वं संस्थानं न स्यात्, मुण्डेऽपि विद्यमानतया गोत्वस्य खण्डासाधारणत्वाभावादिति चेत्—न; खण्डं प्रति गोत्वस्य संस्थानरूपत्वाभावात्। खण्डत्वमेव हि खण्डस्य संस्था-

नम् । किं तव खण्डो बुद्धिस्थः ? उत गौः ? उत खण्डो गौः ? प्रथमे खण्डत्वमेव खण्डासाधारणमिति न मुण्डे गोत्वाभावप्रसङ्गः । अत एव खण्डं प्रति गोत्वस्य संस्थानरूपत्वाभावश्च नानिष्टः । द्वितीये गोर्गोत्वमसाधारणमिति महिषादौ गोत्वं निवर्तते ; गोषु च वर्तत इति न कश्चिद्दोषः । तृतीये यथा नीलोत्पलस्य नीलत्वविशेषितमुत्पलत्वमसाधारणम् , एवं खण्डस्य गोः खण्डत्वविशेषितगोत्वमसाधारणमिति मुण्डे खण्डत्वविशेषितगोत्वमेव निवर्तते, न गोत्वमात्रमिति न काचिदनुपपत्तिः । नीलत्वविशेषितमुत्पलत्वमिन्दीवरशब्दप्रवृत्तिनिमित्तत्वादेकं संस्थानम् । खण्डत्वगोत्वे तु मिथो विशेषणविशेष्यभावेऽपि नैकं संस्थानम्, एकशब्दप्रवृत्तिनिमित्तत्वाभावादिति भिदा । अतः स्वासाधारणं रूपं संस्थानम् । कस्तर्हि जातिरूपसंस्थानानां शौक्ल्यादिभ्यो भेदः ? स्वभावतारतम्याभावादिति ब्रूमः—शौक्ल्यादिषु हि 'शुक्लं, शुक्लतरम्' इति तारतम्यं विद्यते ; शब्दादिष्वप्युपाधितो वा स्वतो वा तीव्रतीव्रतरत्वादितारतम्यमुपलभ्यते ; खरत्वमृदुत्वादिस्वभावतारतम्यं स्पर्शादिष्वप्यस्ति ; संख्यास्वपि न्यूनाधिकभाव उपलब्धः ; परिमाणे च स्फुटतरः । एवं गोत्वादिषु 'गोतरः , गोतमः' इति तारतम्यं नोपलभ्यते । एवमादि वैषम्यं द्रष्टव्यम् । जातिरूपसंस्थानलक्षणमिह विवक्षितं चेत् प्रकृताकारेण सुसदृशव्यक्तयः समस्ताः स्वशब्देन विवक्षिताः । प्रकृताकारेणेत्यात्माश्रयः परिहृतः, संस्थाननिरूपणस्य संस्थानप्रतिपत्तिनैरपेक्ष्यात् । सुसदृशशब्देन महिषादावतिप्रसङ्गः परिहृतः । समस्तशब्देन मुण्डादिष्वभावप्रसङ्गः परिहृतः, खण्डासाधारणत्वाभावाद्गोत्वस्य । ननु व्यावृत्तं संस्थानमनुवृत्तव्यवहारस्य कथं निष्पादकम् ? उच्यते—यथा व्यक्तित्वजातिविरहेऽपि बहुषु व्यक्तिषु व्यक्तिशब्दप्रयोगः, यथा गोत्वाश्वत्वादिजातिषु जात्यन्तराभावेऽपि जातिशब्दप्रयोगः, भिन्नेषु भिन्नत्वजात्यभावेऽपि भिन्नशब्दप्रयोगः, खण्डादिषु खण्डत्वादिजात्यभावेऽपि खण्डादिशब्दप्रयोगः, यथा च नित्यद्रव्येषु विशेषमिच्छतां विशेषेषु विशेषत्वाभावेऽपि विशेषशब्दप्रयोगः, तद्वद्गवादिशब्दव्यवहार उपपद्यत इति । किंच कोऽयमनुवृत्तव्यवहार इति निरूप्यम् । गकारौकारविसर्जनीयानामानुपूर्वी यावदाकाशभाविनां देशतः कालतश्च नोपपद्यत इति तस्या उच्चारणनिबन्धनत्वात् उच्चारणस्य च विनाशित्वादानुपूर्वी च प्रतिप्रयोगविनाशिनीत्यानुपूर्वीविशेषविशिष्टस्य शब्दस्य कथमनुवृत्तिः ? सुसदृशत्वमेव शब्दानामनुवृत्तिरिति चेत् , अर्थानामपि गोत्वादीनां तथाभूतानुवृत्तिरित्यङ्गीक्रियताम् । ननु किमिदं सौसादृश्यम् ? उच्यते—सदृशव्यवहारासाधारणहेतु-

विषयधर्मः सादृश्यम् । स च भ्रातृत्ववत् प्रतियोगिनिरूप्यपदार्थः प्रतिव्यक्ति व्यावृत्तः । अतो न वृत्तिविकल्पादिदौर्घल्यम् । निर्दिष्टाकारपौष्कल्यतः सादृश्यं सौसादृश्यमिति विशेष्यवाचिशब्दप्रवृत्तिनिमित्तपौष्कल्यं विवक्षितम् । पौष्कल्यशब्देन गवयनिष्ठगोसादृश्यं न सौसादृश्यमिति सिध्यति । नन्वेवं तर्हि प्रथमेतरगोव्यक्तिषु 'गवा सुसदृशः' इत्येव प्रयोगः स्यात्, न तु 'गौः' इतीति चेत्, यदि विवक्षा तदा प्रयुज्यताम्, 'अयं गौः, अयं गवा सुसदृशः' इति प्रयोगेऽर्थभेदाभावात् । किं तर्हि न प्रयुज्यत इति चेत्, व्यवहारगौरवादिति ब्रूमः । 'गौः' इति व्यवहारे हि लाघवात्सौकर्यमस्ति । ननु तर्हि तत्सदृशे तच्छब्दो माणवकेऽग्निशब्दवदौपचारिकः स्यात् । न, सौसादृश्यलक्षणानुवृत्त्यभावनिबन्धनत्वादौपचारिकत्वस्य । न हि माणवकाग्न्योः सौसादृश्यम्; किंतु सादृश्यलेशमात्रम् । पक्षे तु सौसादृश्यलक्षणानुवृत्तिरुपलभ्यते । तस्य च मुख्यताहेतुत्वं व्यवहारसिद्धम्; यथा जात्यादिशब्दानाम् । अतोऽनुवृत्तप्रयोग उपपन्नः । कस्मिंश्चिदर्थे कस्यचिच्छब्दस्य व्युत्पत्तिस्तत्सुसदृशेऽर्थे सुसदृशस्य तस्यैव शब्दस्य प्रयोगहेतुरिति यथादर्शनमभ्युपगन्तव्यम् । अप्रतिपन्नमर्थान्तरं कल्पयित्वा वृत्तिविकल्पादिदोषाणां प्रतीतिशरणतया परिहारादपि परिदृष्ट एव वस्तुनि प्रतीतिबलेन चोद्यपरिहारो हि लाघवन्यायादुपपद्यते । व्याप्तिग्रहणं च सौसादृश्यलक्षणानुवृत्तेरेवोपपद्यत इति तदपि न त्वदभिमतजातिकल्पकम् । अतः संस्थानानतिरिक्ता जातिः । ननु संस्थानस्यासाधारणाकारत्वात्तेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च शुक्त्यादौ रजतादिभ्रमो न स्यात्; न ह्यसाधारणाकारस्फूर्तौ भ्रमः संभवतीति चेत्—न; केनाऽपि संस्थानेन प्रतिपन्ने वस्तुनि प्रतिपन्नसंस्थानाविरोध्याकारविषयभ्रमोपपत्तेः । प्रतिपन्नसंस्थानविरोध्याकारभ्रमस्यैव ह्युत्पत्त्यसंभवः । 'इदं शुक्लम्' इति प्रतीतौ न कार्ष्ण्यादिभ्रमः । शौक्ल्यं हि शुक्लस्यासाधारणं, न शुक्तेः । अतोऽसाधारणाकारप्रतीतिर्भ्रान्तिश्चोपपद्यते । एवमापेक्षिकं चेदसाधारण्यं तर्ह्यसाधारणशब्दवैयर्थ्यं स्यात्; न हि किमपि रूपं कस्यचिदसाधारणं न भवतीति चेत्—न; शुक्त्यपेक्षया शौक्ल्यस्य संस्थानत्वव्युदासार्थत्वादसाधारणशब्दस्य । अतः स्वासाधारणरूपं संस्थानम्; ततोऽनतिरिक्ता जातिरिति सिद्धम् । इत्थं संस्थानमेव जातिरित्युपपाद्य गोत्वादेरेव भेदत्वं पूर्वप्रस्तुतमुपपादयति—**जातिग्रहणेनेति** । प्रतियोगिनिरपेक्षो गोत्वादिः प्रतियोगिसापेक्षभेदो भवितुं नार्हति । अतः प्रतियोगिसापेक्षेतरेतराभावो

गोत्वाद्यतिरिक्तो भेदोऽभ्युपगन्तुमुचित इति शङ्कायामुच्यते—**जातिग्रहणेनैव भिन्न इति व्यवहारसंभवादिति**। अयमर्थः—गोत्वादिव्यतिरिक्तभेदमङ्गीकुर्वताप्यभावाभावे प्रतियोगिनिरपेक्षभावरूपपदार्थस्यैव प्रतियोगिसापेक्षाभावत्वमङ्गीकृतम्, अन्यथानवस्थानात् अनुपलम्भाच्च। तद्वदत्रापि संभवति, प्रतियोगिसापेक्षत्वस्य प्रतियोगिनिरूपितवेषप्रवृत्तिनिमित्तकशब्दस्वभावाधीनत्वेनार्थस्वरूपभेदहेतुत्वाभावादिति। एवमनुपपत्तिर्नास्तीत्युक्तम्। दर्शनं च नेत्याह—**पदार्थान्तरादर्शनादिति**। नामान्तरेणेतरेतराभावाभ्युपगमशङ्कां व्युदस्यति—**अर्थान्तरेति**। **अर्थान्तरवादिना**; इतरेतराभावरूपो भेदोऽप्यस्तीति वदतेत्यर्थः।

## भावप्रकाशिका

**संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्येति** भाष्ये संस्थानातिरिक्तैकाकारबुद्धिबोध्यनिषेधस्य पर्यवसानं द्वेधा—घटसंस्थानस्यैवैकाकारबुद्धिबोध्यत्वाद्वा तदतिरिक्तस्यैकाकारबुद्धिबोध्यस्याप्रामाणिकत्वाद्वेत्यभिप्रेत्य द्वेधापि व्याचष्टे—**अयं सास्नादिमानित्यादिना**। **नामान्तरेणेति; अतिरेकवादेऽपीति** भाष्यस्य मतद्वयसंप्रतिपन्नसंस्थानस्यान्यतरसंप्रतिपन्नजात्यैक्यं न युक्तमिति तात्पर्यमिति भावः। केचित्तु—उभयसंप्रतिपन्नेनोपपत्तौ नातिरिक्तं कल्प्यमित्येव **अतिरेकवादेऽपीति** भाष्ये स्वरसतः प्रतीयत इति वर्णयन्ति। **परैरवयविनोऽसमवायिकारणत्वेन संस्थानं स्वीकृतमिति**; यद्यपि द्रव्यविशेषविषय एवेदं न सर्वत्र, तथापि क्वचिज्जात्यपलापे तयैव रीत्यान्यत्रापि तदपलापः सिध्यतीति भावः। **जातिमात्रोच्छेदश्च स्यादिति**; सिद्धान्तेऽप्याकृतिरूपजातेः क्वचिदभ्युपगमात् स न स्यादित्यर्थः। **ननु स्वासाधारणमित्यत्र स्वशब्दः किमित्यादि**; यद्यपि स्वशब्दस्य प्रकृतवाचित्वात् यो यस्यासाधारणो धर्मः स तस्य संस्थानं, यथा 'असाधारणधर्मो लक्षणम्' इत्यत्र; संस्थानशब्दो हि सिद्धान्ते लक्षणशब्दापरपर्याय एव; अतो न विकल्पावकाशः, अथापि शिष्यबुद्धिविशदीकरणायायं प्रपञ्च इति द्रष्टव्यम्। **एकशब्दप्रवृत्तिनिमित्तत्वाभावादितीति;** न च गृष्टिधेनुवशाबष्कयण्यादिशब्दवत् खण्डगोवाचकमपि किंचित्पदं किं न स्यादिति वाच्यम्, अनुपलब्धेरिति भावः। **कस्तर्हि जातिरूपसंस्थानानामिति;** अवयवसंयोगविशेषरूपसंस्थानानां शौक्ल्यादिभ्यः संस्थानेभ्यः कथं भेदः? उभयोरपि संस्थानत्वस्याविशिष्टत्वात्। जातिवाचिन उत्पलशब्दस्य प्राधान्यं, गुणवाचिनो नीलादिशब्दस्य गुणत्वम्। ततश्च नीलादिशब्दस्य विशे-

षणत्वमेव। अत एव "विशेषणं विशेष्येण बहुलम्" इति समासे 'नीलोत्पलम्' इत्येव न तु 'उत्पलनीलम्' इति व्यवस्था कथं स्यादित्याक्षेपाभिप्रायः। **जातिरूपसंस्थानलक्षणमिह विवक्षितं चेदिति;** ननु 'यो यदसाधारणो धर्मः स तस्य संस्थानम्' इति संस्थानसामान्यलक्षणे स्थिते जातित्वे सत्यसाधारणधर्मत्वं जातिरूपसंस्थानलक्षणं भविष्यतीति कोऽसौ विचारः? किंच शौक्ल्यादिसंस्थानेष्वपि प्रकृताकारेण सुसदृशव्यक्तयः समस्ता इति विवक्षावश्यकी, शौक्ल्यादेरपि प्रकृताकारेण सुसदृशव्यक्त्यसाधारणधर्मत्वस्यावश्यवक्तव्यत्वात्। संस्थानरूपा घटत्वादिजातयः प्रतिव्यक्ति भिन्नाः; संस्थानरूपाः शौक्ल्यादयश्च प्रतिव्यक्ति भिन्नाः; सौसादृश्येनैकीकरणं जात्यजातिसाधारणमेव; को विशेष इति चेत्—भावानवबोधात्। **संस्थानं नाम स्वासाधारणं रूपमिति** भाष्यस्य जात्यजातिसाधारणसंस्थानस्वरूपनिर्वचनपरत्वमिति पूर्वमुक्तं पक्षं परित्यज्य जातिरूपसंस्थानस्यैव लक्षणमुच्यत इति व्याख्यायामित्यर्थः। नन्वेवं व्याख्यायां पूर्वपक्षे किमस्वरसबीजमिति चेत्, उच्यते—**वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टमेव प्रत्यक्षमिति** भाष्ये संस्थानशब्दस्यासाधारणधर्मरूपसंस्थानपरत्वविवक्षायां नैयायिकादीनामपि जातेरसाधारणधर्मत्वं सिद्धमेवेति संस्थानमेव जातिरिति प्रसाधनं व्यर्थं स्यात्। **संस्थानस्योभयसंप्रतिपन्नत्वादिति** भाष्येऽप्यसाधारणधर्मस्योभयसंप्रतिपन्नत्वाच्चेति न युज्यते। अतः प्राक्तनसंस्थानशब्दानामवयवसंयोगविशेषपरत्वं सिद्धम्। अतस्तदैकरूप्यायेदमपि तथैव वक्तुमुचितमित्याकृतिरूपसंस्थानमात्रपरतया **संस्थानं नामेति** भाष्ययोजनायामित्यर्थः। अत आकृतिरूपो धर्मविशेषः संस्थानमिति न काप्यनुपपत्तिरिति द्रष्टव्यम्। **देशतः कालतश्च नोपपद्यत इति;** गकारदेशानन्तरदेशत्वलक्षणं वा गकारोत्तरकालत्वलक्षणं वानुपूर्वीत्वमौकारस्य नोपपद्यते, वर्णानां नित्यत्वाद्विभुत्वाच्चेति भावः। **तस्या उच्चारणनिबन्धनत्वादिति;** गकारोच्चारणानन्तरोच्चारणविषयत्वमेवौकारस्यानुपूर्वीत्यर्थः। **वृत्तिविकल्पादिदौर्घट्यमिति;** सादृश्यमेकदेशे न वर्तते चेत्, सादृश्यपर्याप्त्यधिकरणत्वाभावात् द्वित्वपर्याप्त्यनधिकरण एकस्मिन् 'द्वौ' इति शब्दस्याप्रयोगवत् सादृश्यपर्याप्त्यनधिकरणे 'सदृशः' इति प्रयोगो न स्यात्; सावयवत्वप्रसङ्गश्च। कार्त्स्न्येन वर्तते चेत्, सादृश्यस्य द्विष्ठत्वं न स्यादिति दूषणानामनवकाश इत्यर्थः। **गवा सुसदृश इत्येव प्रयोगः स्यादिति;** एवकारश्चार्थः; इति च

प्रयोगः स्यादित्यर्थः । **गौरिति**; गौरित्येव प्रयोगो न स्यादित्यर्थः । यद्वा गोशब्दस्य व्यक्तिविशेष एव गृहीतसंकेततया 'तत्सदृशः' इत्येव प्रयोगः स्यादित्यर्थः । इदं च व्युत्पत्तिदशायाम् 'एवमाकृतिका या, सा गौः' इति ग्रहणाभावमभिप्रेत्योक्तम् । अनुगतधर्माभावे सामान्यधर्मपुरस्कारेण वह्निधूमयोर्व्याप्तिग्रहो न स्यादित्याशङ्क्याह— **व्याप्तिग्रहणं चेति** । सौसादृश्येनैकीकृतेन संस्थानलक्षणाकारेण सर्वेषां क्रोडीकारसंभवादिति भावः । **प्रतिपन्नसंस्थानविरोध्याकारभ्रमस्यैवेति** ; यद्यपि प्रतिपन्नस्य शुक्तीदंत्वस्य रजतत्वं विरोध्येव, तथापि तस्य विरोधित्वास्फुरणाद्भ्रम इति भावः । **शौक्ल्यं हि शुक्लस्यासाधारणमिति** ; ततश्च शौक्ल्यस्याशुक्लभेदरूपस्य दर्शनादशुक्लत्वाध्यासः परं निवर्तते ; न त्वशुक्त्यध्यासः, अशुक्तिभेदस्य शुक्तित्वस्याग्रहादिति भावः ।

## श्रुतप्रदीपिका

निगमनग्रन्थे प्रसक्तयोरर्थयोः प्रथममुपपादयति—**संस्थानेति** । दृष्टिः क्लृप्तिश्च हेतुद्वयेन निरस्ते । नाममात्रवैषम्यमिति तद्व्युदासायाह—**अतिरेकेति** ; असमवायित्वेनेति भावः । न तावद्दर्शनम् । जातिसामान्यव्यक्तिव्यावृत्त्यादिशब्दवदनुगतव्यवहारोऽन्यथासिद्ध इति न कल्पनम् । शब्दानुगमस्तु सौसादृश्यादित्यर्थः । संस्थानमवयवसंयोगविशेषश्चेदात्मादावव्याप्तिः ; स्वरूपं चेन्न विशिष्टविषयता प्रत्यक्षस्य । अनुभयं चेदस्मन्मतं स्यादित्यत्राह— **संस्थानमिति** । स्वशब्दो धीस्थपरः । अथ जातेः संस्थानरूपाया एव भेदत्वमाह— **जातीति** । **व्यवहारसंभवात्** ; प्रतियोगिनिरपेक्षस्य भावस्य तत्सापेक्षशब्दवाच्यत्वमभावाभावव्यवहारे दृष्टम् । स हि प्रतियोग्यनपेक्षो भावः । तद्वज्जात्यादिरेव भेदशब्दवाच्य इति भावः ।

## तत्त्वटीका

संस्थानस्य जातित्वं जात्यादेर्भेदत्वं च प्रसक्तम् । तत्राद्यं स्थापयति—**संस्थानेति** । नन्विह किमर्थं संस्थानजातिसाधनम्? प्रामाणिकतया ।

"न याति न च तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पुनराधारमहो व्यसनसंततिः ॥"

इति सौगतोक्तवृत्तिविकल्पाद्यनवतारेण कथंचिदुपकारार्थत्वे गुणादिकमपि चिन्त्येत ; नैवम्—व्यावृत्तानामेव निमित्तानां कुतश्चित्स्वभावादेकरूपबुद्ध्यादिहेतुत्वे सिद्धे 'अस्ति

सत्' इत्यनुवृत्तसद्बुद्ध्यादेरपि तथैव निरूढेर्घटादिधर्मतया लोकसिद्धसत्तायाः सर्वाधार-ब्रह्मरूपत्वं हि दूरापास्तं स्यात्, सत्ताश्रयस्य घटादेर्घटत्वादेरिव च। अन्ये चैवमुपालेभिरे—"महासामान्यमन्यैस्तु द्रव्यं सदिति चोच्यते।" इति। सत्ताश्रयस्य घटादेस्त्वनुगतत्वं परेणापि दुर्वचमित्यभिसंधाय सोऽयमुद्यमः। तदिहातिरिक्तजातेर्दृष्टिः क्लृप्तिश्चादर्शनादन्यथैवोपपत्त्या च दूष्यते। अयं भावः——यथा जातिव्यक्तिमुण्डदण्डिमूर्तपाचकादिष्वनुवृत्तबुद्ध्यादेरुपाधिरास्थितस्तथेहापि स्यात्। उपाधिश्चात्रातिरिक्तमवयविनं जातिं च वदद्भिरपि गवाद्यसमवायिकारणत्वेन गोत्वादिव्यञ्जकतया स्वीकृतमवयवसंयोगविशेषात्मकं संस्थानम्। तस्यैव ह्यन्त्यतन्तुसंयोगजन्यावयविनिष्पत्तेः प्रागपि विद्यमानतया तदापि पटधीव्यवहारो दृश्यते। तत्र भ्रान्तिक्लृप्तेर्वरमुभयत्र संस्थानसारूप्येणैवोपलब्धेन निर्वाह इति। अत एव संस्थानसमाख्या जातिरेवोच्यत इति न भ्रमितव्यमित्यभिप्रायेण **तावतैवे**त्यवधारितम्। जात्याश्रयघटादिहेतुतया तस्य ततो भेदेन तत्संमतेः। तस्मादतिरिक्तक्लृप्तौ गौरवं व्यनक्ति—**अतिरेक इति**। तर्हि जातिशब्दो निर्विषयः स्यात्; जातिगुणक्रियायदृच्छाशब्दव्यवस्था च भज्येतेत्यत्रोक्तम्—**संस्थानमेव जातिरि**ति। उभयाभ्युपेतमेव जतिशब्दवाच्यमित्यर्थः।

* अभाषत च संस्थानजातिपक्षं पतञ्जलिः।
जातिनित्यत्वपक्षोक्तिरन्वारुह्येति नीयताम् ॥ ४१५ ॥

ननु——संस्थानमनुवृत्तं व्यावृत्तं वा? नाद्यः, नित्यत्वप्रसक्तावसाध्यत्वापातात्; तथाच आरम्भणनयविरोधः। न द्वितीयः, अनुवृत्तबुद्धिनिर्वाहकत्वायोगात्; अन्यथाऽति-

---

* पस्पशाह्निके "सिद्धे शब्दार्थसंबन्धे लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु" इति वार्तिकव्याख्यानावसरे "द्रव्यं हि नित्यमाकृतिरनित्या। कथं ज्ञायते? एवं हि दृश्यते लोके—मृत्कयाचिदाकृत्या युक्ता पिण्डो भवति। पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते। घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते। तथा सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति। पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते। रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते। कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते। पुनरावृत्तः सुवर्णपिण्डः। पुनरपरयाकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः। आकृतिरन्या चान्या च भवति। द्रव्यं पुनस्तदेव। आकृत्युपमर्देन द्रव्यमेवावशिष्यते।" इति भाष्यम्। "आकृतिरिति; संस्थानम्" इति कैयटः।

**तत्त्वटीका**

प्रसङ्गात्। न च सादृश्यं व्यवस्थापकम्, गोगवयादिषु तदसिद्धेः। सौसादृश्यं तु विरूपेषु खण्डमुण्डादिषु दुर्वचम्। मैवम्, सास्नादिसादृश्यविशेषस्य निमित्ततयातिप्रसङ्गाप्रसङ्गयोरभावात्। ननु च सादृश्यविशेषेऽप्यनुवृत्तादिविकल्पस्तदवस्थः; सामान्यत्यागे च किं नाम सादृश्यम्? 'समानं, सदृशम्' इत्यादेः पर्यायत्वात्। आहुश्च—

"सामान्यान्येव भूयांसि गुणावयवकर्मणाम्।
भिन्नप्रधानसामान्यवर्त्ति सादृश्यमुच्यते॥"

इति। तदपि न, जात्याद्युपलक्षकसंस्थानेऽपि व्यावृत्त्यादिविकल्पोत्थानात्। अतो यादृशं संस्थानं व्यावृत्तमपि साजात्यव्यवस्थापकं मन्यसे तादृशमेव तत् यथादृष्टि नियतप्रतियोगिकं मिथः सादृश्यम्; न तु परेष्टं सामान्यं पदार्थान्तरं वा। सास्नादिसंस्थानेऽपि सदृशव्यवहारस्तदवयवसंस्थानोपाधिकः। एवमनुपलब्धावयवद्रव्यपर्यन्तं गतौ परिमाणादिविशेषाद् व्यवस्था। ननु तथापि संस्थानं न तावद् द्रव्यस्वरूपम्; प्रत्यक्षस्य विशिष्टविषयत्वभङ्गप्रसङ्गात्, सत्कार्यनीत्या च नित्यत्वागन्तुकत्वविरोधात्, द्रव्यात्मनश्च व्यावृत्त्यनुवृत्तिविकल्पदौःस्थ्यात्, गुणादावनुवृत्तिधीनिमित्तत्वायोगाच्च। अत एव नावयवसंनिवेशविशेषः, आत्मादिषु तदयोगाच्च; अतोऽतिरिक्तसिद्धिरित्यत्राह—**संस्थानमिति**। स्वशब्दोऽत्र गवादिशब्दवाच्यतया धीस्थतत्तद्वर्गपरः। तदन्तर्गतसर्वसाधारणत्वेऽपि तदन्यतो व्यावृत्ततयात्र **स्वासाधारण**त्वोक्तिः। **रूपम्**; निरूपकमित्यर्थः। तदिह सावयवेषु निरवयवेषु चानन्तेषु 'इत्थम्' इति प्रकारतया निर्देश्यं तदन्यनिष्ठाभावप्रतियोगि च किंचिद् दृष्टमिष्टं च तदनतिक्रमेण विविच्य बोद्धव्यमित्याह—**इति यथेति**। सावयवेषु हि गवादिषु संनिवेशविशेषा दृष्टा एव। निरवयवेष्वात्मादिषु चेतनत्वादिकमेव संस्थानमित्युच्यते। अद्रव्येष्वपि तत्तल्लक्षणमेव। तदपि तत्तज्जात्युपलक्षणतया परसंमतम्। यदि सावयवेषु संनिवेशविशेषो जातिः, तर्हि ब्रह्मक्षत्रादिषु मनुष्यत्वातिरिक्तसंनिवेशविशेषादृष्टेरागमसिद्धावान्तरजातिव्यवस्था भज्येत। संकेतलिङ्गसंव्यवहारैस्तत्सिद्धिरतिप्रसञ्जिका। ब्राह्मणादिशब्दानां जातिशब्दत्वं च व्याकरणादिस्मृतिसिद्धम्, "ब्राह्मोऽजातौ" इत्यनेन जातौ ब्राह्मणशब्दस्थितेः। अत एव विशिष्टमातापितृजन्यत्वरूपोपाधिमात्रमेव ब्राह्मण्यादिकमिति कैश्चिदुक्तमयुक्तम्, अयोनिजब्राह्मणादिषु तदयोगात्। अर्वाचीनेषु तु जात्यु-

पलक्षणमात्रमेतत् । यत्तु बाह्यैरुक्तम्—'विरुद्धजातीयाभ्यां प्रजोत्पत्त्ययोगान्मनुष्यत्वावान्तरजातिभेदः सांकेतिकः' इति, तदसत्, अश्वगर्दभादिषु विजातीयसंयोगादपि तत्तत्प्रजोत्पत्तिदृष्टेः । तत्र संकीर्णोत्पत्तिरिति चेत्, तथात्रापि । अतः संनिवेशातिरिक्ता जातिर्ग्राह्या । सत्यम्; एतदर्थमपि **स्वासाधारणं** रूपमित्युक्तम् । आगमादिजनितानादिव्यवहारसिद्धेयं व्यवस्था संनिवेशमन्तरेणापि साधीयसी । इदं तु चिन्त्यम्—अधिकजातिवादेऽपि समानसंनिवेशानामवान्तरजात्यादिव्यञ्जकव्यक्तिविशेषनिष्पत्तिः कुत इति । अचिन्त्यविपाकादृष्टविशेषाधीनभूतपरिणतिविशेषादिति चेत्, एवं तर्हि तत् तच्छब्दनिमित्तं स्यात्; एतदेव "शमो दमः" इत्यादिषु क्रियाभेदाद्गुणभेदाद्वा वर्णादीन् व्यवस्थापयतामपि तात्पर्यम्, तावन्मात्रस्यातिप्रसङ्गित्वात् । तदयं संग्रहः—

संनिवेशसमानत्वेऽप्यारणेयादिवह्निषु ।
क्षीरभेदादिकेऽप्यस्ति शक्तिभेदस्तथास्ति नः ॥ ४१६ ॥
उपलक्षणतो यत्र जातिर्व्यङ्ग्या तदेव सा ।
यत्राश्रयस्वभावात्तु तत्राप्यस्तु स एव सा ॥ ४१७ ॥
न चैवं सर्वधर्माणामपि शक्या निराकृतिः ।
आविर्भावतिरोभावप्रभृतेस्तद्विरोधतः ॥ ४१८ ॥
अगृहीतो हि दूरादौ धर्मो भात्यन्तिकेऽधिकः ।
धर्मिग्रहेऽपि भेदस्य ह्यगृहीतौ भ्रमोदयः ॥ ४१९ ॥
दर्शनस्पर्शनाभ्यामप्येकार्थग्रहणं स्फुटम् ।
रूपस्पर्शौ च धर्मी च भिन्नाः सिध्यन्त्यतो मिथः ॥ ४२० ॥
भेदः स्वरूपं धर्मो वेत्येवमादि च जल्पताम्
विकल्पोऽपि कथं सिध्येद्धर्मधर्मिभिदात्यजः ॥ ४२१ ॥
संस्थानेष्वेव सामान्यसादृश्यादिगिरां पुनः ।
अन्यान्वयपुरस्कारात्प्रतिसंबन्ध्यपेक्षता ॥ ४२२ ॥
घटस्यैव घटाभावाभावोऽयमिति भाषणे ।
प्रतियोगी पुरस्कार्यः सर्वेष्टस्तद्वदत्र नः ॥ ४२३ ॥
संस्थानेष्वनुवृत्तत्वव्याहतिश्च पुरोदिता ।
मिथः सादृश्यरूपत्वे तात्पर्यान्न विरुध्यते ॥ ४२४ ॥

साहश्यादिस्वरूपत्वं यथादृष्टयत्र केषुचित् ।
स्वभावतो भवेद्यद्वन्मिथः संबन्धितादयः ॥ ४२५ ॥
कथ्यते यैस्तु सादृश्यं संस्थानादिविलक्षणम् ।
गुरुत्वं जातिगुप्तौ च धृतं तैर्जातिक्लप्तिवत् ॥ ४२६ ॥
संमतादतिरिक्तं वा सादृश्यं परिकल्प्यताम् ।
आश्रयप्रतियोग्यादिव्यवस्थानस्वभावतः ॥ ४२७ ॥

किं च कर्मणां तावन्न स्वरूपतोऽनेकानुवृत्तिः, कालतः परिच्छेदात् । एवं कार्याणां गुणानामपि । संयोगादेरपि कतिपयानुवृत्तिमात्रम् । नित्यानां च ततो वैषम्यक्लृप्तिरयुक्ता । अतस्तेषु कल्प्यमन्यसामान्यम् । तत्र किं गुणकर्मसु ? जातिरुपलक्षणैर्व्यवस्थाप्या व्यावृत्तव्यक्तिस्वभावत एव वा ।

उपलक्षणतो यत्र जातिर्व्यङ्ग्या तदेव सा ।
यत्राश्रयस्वभावात्ते तत्राप्यस्तु स एव सा ॥ ४२८ ॥

अस्तु वोपाध्यनुक्तैव यत्र क्वचित् काश्यपादिगणिता जातिः, तथापि द्रव्यादिषु चतुर्षु वानुवृत्ता सत्ताजातिर्न कल्प्या, सत्तायास्तदभीष्टपदार्थान्तरेष्विव च सच्छब्दार्थे भावत्वप्रामाणिकत्वाद्युपाधितः संभवात् । अतो लोकदृष्टं सद्वा सत्ता वा शास्त्रवेद्यं सर्वाधारभूतं ब्रह्म न भवतीति सिद्धम् । एवं संस्थानजातिपक्षेऽतिरिक्तपक्षेऽप्याद्यप्रत्यक्षस्य तद्विशिष्टविषयतया भेदग्राहित्वं द्रढयितुं प्रसक्तयोः साधितशेषम् 'असद्व्यपदेश'सूत्राभिप्रेतयुक्त्या साधयति—**जातीति** । जातिशब्द इह प्रदर्शनार्थः, प्राक् पश्चाचादिशब्दोपादानात् । अत्र ह्यन्योन्याभावमतिरिक्तं कल्पयतामपि न जात्यदर्शने तद्धीः; अन्यथा कथमगृहीतगोत्वादेरश्वत्वादिभ्रमसंदेहौ । पृथक्त्वमपि न पृथक् कल्प्यम्, गुणादिष्वपि संभवतः पृथग्व्यवहारस्यान्योन्याभावेनैव चरितार्थत्वात् । अत एवात्यन्ताभावोऽपि नान्यः ; गोत्वस्यैव गौरश्वाद्यन्योन्याभावतया अश्वत्वाद्यत्यन्ताभावतया च तदन्यतदभावशब्दविषयत्वोपपत्तेः । तदिह 'भिन्नः' इति व्यवहारोऽन्यथासिद्ध इत्यवधारणाभिप्रायः । मा भूत् क्लृप्तिः ; कथं दृष्टापह्नव इत्यत्राह—**पदार्थान्तरादर्शनादिति** । अन्यथा गौरवमप्याह—**अर्थान्तरेति** । एवं क्वचित्पृथक्त्वसंज्ञान्तरं विशेषाख्यपदार्थान्तरं च न कल्प्यमित्यभिप्रायेणाह—**गोत्वादिरेव भेद इति** । 'गौरवात् पृथग्व्यवहारस्य लक्षणरूपेणापि हेतुना व्यावृत्तिः साध्या' इति वदन्तोऽप्यत्र

लक्षणस्यैव भेदत्वोक्त्या निरस्ताः। कथं हि पक्षस्य व्यतिरेकदृष्टान्ताद्भेदाग्रहे केवलव्यतिरेकिप्रवृत्तिः? कथं चेतरेभ्यो भिद्यत इति साध्यप्रयोगः? व्युत्पत्तिस्तु वृद्धव्यवहारादिसाध्या; तत्र किं लक्षणेन? अन्यथा यथेष्टं यत्किंचिच्छब्दवाच्यत्वानुमित्यादिप्रसङ्गात्। 'इत इदं पृथक्' 'इत इदमन्यत्' इति व्यवहारयोरव्यतिरेकादर्थभेदो न कल्प्यः। अतः पृथक्त्वमपि गोत्वादिरेव। द्विपृथक्त्वादिक्लृप्तिस्तु दूरापास्ता। एवं नित्यद्रव्येषु विशेषोऽपि न कल्प्यः। मुक्तात्मादिषु गुणादिभिर्वैषम्यरहितेषु मिथोव्यावृत्तधीर्भेदकधर्ममन्तरेण कथं स्यादिति चेत्, प्रत्यक्षतोऽस्ति। शास्त्रादिनापि शुकत्वादिप्रसिद्धोपाधिभिरेव स्यात्। सा तावन्नास्मदीयादीनाम्। योगिप्रभृतीनामपि प्राचीनैरुपाधिभिरेव विचित्रैः प्रत्येकनिष्ठतया प्रत्यक्षितैर्भेददृष्टिः स्यादेव। अलं तदन्यक्लृप्त्या। अस्ति चास्मन्मते प्रत्यात्मनियतो मुक्तावस्थायामप्यात्मनां स्वतन्त्रेच्छाहेतुक इच्छादिभेदः श्रुतिसिद्धः। यत्तु "पृथक्त्वैकजात्या समत्वाद्गुणादावपि समत्वाच्च पृथक्त्वं नैतेषु भेदकम्" इत्याहुः, तदप्ययुक्तम्, अन्यत्रापि तस्याभेदकत्वप्रसङ्गात्। विशेषत्वोपाधिना समत्वेन कल्प्यानामप्यकिंचित्करत्वप्रसङ्गात्। वदन्ति हि विशेषलक्षणमनुवृत्तम्—"जातिशून्यत्वे सत्येकवृत्तित्वम्" इति।

### मूलभावप्रकाशिका।

संस्थानातिरिक्ता जातिः किमनुभवबलादङ्गीक्रियते, उत कार्यवशादिति विकल्प्य प्रथमं दूषयति—**संस्थानातिरेकिण इति**। द्वितीयं दूषयति—**तावतैवेति**। संस्थानव्यतिरिक्तजात्यभ्युपगमेऽपि तस्या जातेः सर्वव्यक्तिवृत्तित्वसिद्ध्यर्थं सर्वगतत्वमभ्युपगन्तव्यम्। सर्वगताया अपि गोत्वजातेरनुगतसास्नादिसंस्थानविशेषवत्येव वृत्तिरिति वृत्तिनियामकतयानुगतसंस्थानविशेषोऽभ्युपगन्तव्यः। अतश्च संप्रतिपन्नसंस्थानेन गोत्वादिव्यवहारोपपत्तौ नातिरिक्तजातिकल्पनं युक्तमित्याह—**अतिरेकवादेऽपीति**। **यथावस्त्विति**; घटस्य पृथुबुध्नोदराकारादिमत्वं, पटस्यातानवितानात्मकत्वमित्येवंरूपमित्यर्थः। जात्यादेः प्रतिज्ञातं भेदत्वं समर्थयते—**जातिग्रहणेनैवेति**।

### श्रीभाष्यम्

ननु च जात्यादिरेव भेदश्चेत्तस्मिन् गृहीते तद्व्यवहारवद्भेदव्यवहारोऽपि स्यात्। सत्यम्; भेदश्च व्यवह्रियत एव, गोत्वादिव्यवहारात्; गोत्वादिरेव हि सकलेतरव्यावृत्तिः, गोत्वादौ गृहीते सक-

ऽेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः । भेदग्रहणेनैव ह्यभेदनिवृत्तिः । 'अयमस्माद्भिन्नः' इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वात्प्रतियोग्यपेक्षया भिन्न इति व्यवहार इत्युक्तम् ।

## श्रुतप्रकाशिका

पूर्वं प्रतियोग्यपेक्षया भेदव्यवहार इत्युक्तम्; अत्र तन्निरपेक्षगोत्वादिर्भेद उक्तः; तर्हि भेदव्यवहारोऽपि प्रतियोगिनिरपेक्षः प्रसजेदित्यभिप्रायेण चोदयति—**ननु चेति**। एकार्थविषयानेकचोद्यसमुच्चयपर ईदृशश्चशब्दः । **सत्यमिति**; प्रतियोग्यनपेक्षभेदस्वरूपव्यवहारेऽभ्युपगमः; भेदशब्दादिव्यवहारविशेषे त्वनभ्युपगमः । **भेदश्च व्यवह्रियत एवेति**; न केवलं गृह्यते, प्रतियोगिनिरपेक्षं व्यवह्रियते चेति चार्थः । उपपादयति—**गोत्वादिव्यवहारादिति**। कथं गोत्वादिव्यवहारे सति भेदव्यवहार इत्यत्राह—**गोत्वादिरेव हीति**। गोत्वादिरेव कथं व्यावृत्तिरित्यत्राह—**गोत्वादाविति**। निर्दिष्टसामान्यानन्तरपरसामान्यापेक्षया तद्विशेषाणां सजातीयत्वं विवक्षितम् । अत्र तिर्यक्त्वेन सजातीयो महिषादिर्गोत्वव्यवच्छेद्यः । व्यावृत्तेः सजातीयबुद्धिव्यवहारनिवृत्तिहेतुत्वमस्तु; ततः किं व्यावृत्तेर्भेदत्व इत्यत्राह—**भेदग्रहणेनैव ह्यभेदनिवृत्तिरिति । अभेदनिवृत्तिः**; अभेदधीनिवृत्तिः । एवं गोत्वादेः प्रतीतौ हानोपादानादौ गोत्वादिशब्दव्यवहारे च न प्रतियोग्यपेक्षेत्युक्तम्; तर्हि कथम् 'अयमस्माद्भिन्नः' इत्यत्र प्रतियोग्यपेक्षेति शङ्कायामाह—**अयमस्मादिति**। न हानादिव्यवहारे; नापि शाब्दव्यवहारमात्रे; अपितु शाब्दव्यवहारविशेष एवेति ज्ञापयति तुशब्दः । **भेदश्च व्यवह्रियत एवे**त्यादिना **भेदग्रहणेनैव ह्यभेदनिवृत्तिरि**त्यन्तेन कस्यचिद्वस्तुनो वस्त्वन्तराद्व्यावर्तकधर्मस्यैव स्वयमेव स्वव्यावृत्तिरूपत्वसंभवः, परनिर्वाहकत्वाभावे स्वनिर्वाहकत्वासंभवात्; स्वरूपे प्रकाशमाने भ्रमविरोधिनश्च न व्यावृत्तिरूपधर्मान्तरापेक्षेत्युक्तं भवति । एवं च सति ब्रह्मणः कस्यचिद्वस्तुनो वस्त्वन्तराद्व्यावर्तकधर्मरूपत्वाभावात् स्वरूपे भासमानेऽध्याससहत्वाच्च न स्वरूपमेव व्यावृत्तिरिति सिध्यति । ननु धर्मिणः स्वरूपमेव तद्गतभावाभावरूपसकलधर्मान्तरापेक्षया भेद इत्यन्ततो गत्वाभ्युपगन्तव्यम्, भेदान्तराभ्युपगमे तस्मात्स्वरूपस्य भेदापेक्षायामनवस्थाप्रसङ्गात् । सत्यम्; स तु स्वरूपभेदो नाध्यासविरोधी, तन्निवृत्तौ धर्मान्तरान्वयसापेक्षत्वात् । पट-

द्रव्यस्य रूपाव्यतिरेकभ्रमो हि स्पर्शसामानाधिकरण्यबुद्धिनिवर्त्यः । अतो धर्मिस्वरूपस्य स्वगतधर्मापेक्षया भ्रमविरोधी भेदो धर्मान्तरान्वयः । अतो धर्माणां स्वरूपस्यैव स्वाश्रयस्य स्वविरुद्धधर्मान्तरधर्म्यन्तरापेक्षयाऽध्यासविरोधिभेदत्वसंभवः । विशिष्टस्य तु वस्तुनः स्वरूपमेव विशिष्टं स्वविरुद्धविशेषणविशिष्टवस्त्वन्तराद्व्यावृत्तिरिति च युक्तम्, अर्थान्तरैक्यभ्रमविरोधित्वात् । तत्र विशेषणापेक्षया विशेष्यस्य स्वरूपमेव भेदः । विशेष्यापेक्षया विशेषणस्य स्वरूपमेव भेदः । तदुभयापेक्षया च संबन्धस्य स्वरूपमेव भेदः । विशिष्टस्य विशिष्टान्तरापेक्षया स्वरूपमेव भेदः । 'स्वरूपस्य भेदः' इति निर्देशस्तु 'पदार्थस्य स्वरूपम्' इतिवदनतिरिक्तार्थः । तत्तदसाधारणशब्दवाच्यं स्वरूपम् । स च शब्दो व्युत्पत्तिसिद्धः । प्रतियोगितयाभिमतार्थान्तरैक्यधीविरोधि वा स्वरूपम् । अतः कस्यचिद्धर्मत्वाभावाद्धर्मविशिष्टत्वाभावात्स्वरूपे भासमानेऽपि भ्रमसहत्वाच्च ब्रह्मणः स्वरूपमेव जडत्वाद्यध्यासविरोधिनी व्यावृत्तिर्भवितुं नार्हतीति सिद्धम् ।

## भावप्रकाशिका

**पूर्वं प्रतियोग्यपेक्षयेति** ; 'जात्यादेरेव प्रतियोग्यपेक्षया' इति भाष्यग्रन्थेनेति भावः । यद्यपि 'जात्यादेरेव प्रतियोग्यपेक्षया' इति ग्रन्थे भेदव्यवहारे प्रतियोगिस्मरणसापेक्षत्वमिति नोक्तम्, अपितु जात्यादेरेव स्वपरभेदत्वम्, अथापि सोऽप्यर्थस्तत्र विवक्षित इति भावः । **तर्हि भेदव्यवहार इति** ; यद्यपि प्राक् 'प्रतियोग्यपेक्षया भेदव्यवहारः' इत्युक्तम्, तथापि निष्प्रतियोगिकगोत्वादेरेव भेदत्वे तदयुक्तमेव स्यादिति तदप्याक्षिप्यतेऽनेन भाष्यग्रन्थेनेति वाक्यस्याभिप्रायात् । ननु **सकलेतरसजातीयबुद्धिव्यवहारयो**रिति कथमुक्तिः? इतरेषां महिषादीनां स्वसजातीयत्वासंभवेन 'इतरे च ते सजातीयाश्च' इत्युक्त्यसंभवादित्याशङ्क्याह—**निर्दिष्टसामान्यानन्तरेति** । निर्दिष्टसामान्यं गोत्वसामान्यम्; तदनन्तरपरसामान्यं तत्साक्षाद्व्यापकं पशुत्वादि । भाष्ये सजातीयग्रहणं विजातीयादेरप्युपलक्षणम् । सजातीयभ्रमनिवर्तकत्वे कथिते विजातीयभ्रमनिवर्तकत्वं किंपुनर्न्यायसिद्धमित्यभिप्रेत्य सजातीयग्रहणं कृतमिति द्रष्टव्यम् । **परनिर्वाहकत्वाभाव इति** ; यद्यपि 'गोत्वादिरेव हि सकलेतरव्यावृत्तिः' इति भाष्ये गोत्वादौ घटादिव्यावृत्तिरूपत्वसमर्थनमात्रमभिप्रेतम्; न तु स्वनिर्वाहकत्वात् परनिर्वाहकत्वम्, परनिर्वाहकत्वाभावे स्वनिर्वाहकत्वासंभवादित्येतत्पर्यन्तम्; किंच 'स्वसंबन्धाद-

र्थान्तर—' इत्यनुमानानुरोधेन स्वनिर्वाहकत्वाभावे परनिर्वाहकत्वासंभवादित्येव प्रदर्शनीयं, तथापि तावत्पर्यन्तविवक्षामभिप्रेत्य तथोक्तमिति द्रष्टव्यम्। ननु रूपादिधर्मस्यापि न सर्वथा भ्रमविरोधित्वं, तत्रापि गुण्यभेदभ्रमादिदर्शनात्; तदवलम्ब्य मतभेदप्रवृत्तेरद्यापि दर्शनात् 'पटस्य रूपाव्यतिरेकभ्रमः' इति स्वयमुक्तत्वाच्च धर्मिणोऽपीतरधर्मापेक्षया स्वधर्मव्यावर्तकत्वाच्च घटस्यापि स्वाश्रयभूतलादिव्यावर्तकत्वाच्च ब्रह्मणोऽपि स्वविषयज्ञानव्यावर्तकत्वाच्च कथमियं व्यवस्थेति चेत्—न; रूपादिधर्मेषु व्यावर्तकधर्मान्तरसत्त्वेऽप्यनिष्टाभावात्, प्रामाणिकत्वेऽनन्तवस्त्वभ्युपगमस्याप्यदोषत्वाच्च। अत एव **भेदत्वसंभव** इत्येवोक्तम्, न तु 'तस्यैव भेदत्वसंभवे' इतीति द्रष्टव्यम्। **धर्माणां स्वरूपस्यैवेति**; धर्मस्वरूपमेव स्वाश्रयस्य घटस्य स्वविरुद्धधर्मान्तराश्रयधर्म्यन्तरापेक्षया भेद इत्यर्थः। **विशेषणापेक्षया विशेष्यस्य स्वरूपमेव भेद इति**; न च 'धर्मिस्वरूपस्य स्वगतधर्मापेक्षया भ्रमविरोधी भेदो धर्मान्तरान्वयः' इति पूर्वग्रन्थविरोध इति वाच्यम्, 'विशेष्यस्य स्वरूपम्' इत्यस्य विशेष्यस्य स्वरूपमसाधारणधर्म इत्यर्थात् स्पर्शादिविशेषणान्तरमेव रूपादिविशेषणाद् भेद इत्यर्थपर्यवसानात्। कस्य को वाऽसाधारणशब्द इत्यत आह—**स च शब्दो व्युत्पत्तिसिद्ध इति**। अस्यार्थस्यायमसाधारणशब्द इत्येतल्लोकव्युत्पत्तिसिद्धमित्यर्थः। **प्रतियोगितयाभिमतार्थान्तरैक्यधीविरोधि वा स्वरूपमिति**; अस्मिन् पक्षे ब्रह्मस्वरूपस्याविरोधितया स्वरूपत्वं न स्यादित्यस्वरसो बोध्यः।

## श्रुतप्रदीपिका

चोदयति—**नन्विति**। परिहरति—**सत्यमिति**। **व्यवह्रियते च**; न परं गृह्यत इत्यर्थः। कथमित्यत्राह—**गोत्वेति**। कथं तद्व्यवहारे तद्व्यवहार इत्यत्राह—**गोत्वादिरिति**। तथात्वं कथमित्यत्राह—**गोत्वादाविति**। इतराभेदबुद्ध्यादिनिवृत्तिरस्तु; ततः किं गोत्वादेर्भेदत्व इत्यत्राह—**भेदेति**। भेदो ह्यभेदविरोधीति भावः। धर्मत्वं भ्रमासहत्वं च स्वरूपस्य भेदत्वे प्रयोजकम्। भ्रमसहस्य तु धर्मेतरस्य न स्वरूपं भेद इति कण्ठोक्तम्। प्रतियोगिनिरपेक्षगोत्वादिव्यवहार एव भेदव्यवहारश्चेत् तस्य प्राक्तनापेक्षतोक्तिः कथमित्यत्राह—**अयमस्मादिति**। सा शब्दविशेषस्वभावात्; हानादौ शब्दान्तरे च तदभावादित्यर्थः।

### तत्त्वटीका

अथैवं जात्यादिधर्माणां भेदत्वेऽपि स्वरूपभेदपक्षे प्रागुक्तं चोद्यमवतारयति—**ननु चेति**। अत्र भेदव्यवहारशब्देन वस्तुतो भेदशब्दवाच्यस्य व्यवहारो वा भेदत्वेन व्यवहारो वेति विकल्पं मत्वा पूर्वकोटिमिष्टतयाङ्गीकरोति—**सत्यमिति**। तद्विवृणोति—**भेद इति**। वस्तुतस्तत्तद्भेदरूपश्च जात्यादिर्व्यवह्रियत इत्यर्थः। कथमित्यत्राह—**गोत्वादीति**। ततोऽपि कथं तत्सिद्धिरित्यत्रात्र—**गोत्वादिरेवेति**। अत्र **सकलेतर-**शब्दस्तत्तद्विरुद्धाकारविशिष्टपरः। भेदलक्षणं गोत्वादौ दर्शयति—**गोत्वादाविति**। इतरैः सकलैर्विशेषतः सजातीयत्वबुद्ध्यादिनिवृत्तेरित्यर्थः। यदग्रहाद्यत्र यदध्यासः सर्वेष्टः, यद्ग्रहे चासौ न स्यात्, स हि तस्य तस्माद् भेदः; तदेवाभेदनिवृत्तिः। तद्धीनिवृत्तिं व्यनक्ति—**भेदग्रहणेनेति**। एवकारो विरोधव्यञ्जकः। **हिः** प्रसिद्धौ। ननु भावस्यैवाभावत्वमनेकस्यैकाभावत्वमेकस्यानेकाभावत्वं च कथम्? इत्थमेव—यथादृष्टि सर्वत्र विरोधाद्यभावात्; अभावाभावादौ परैरपि तथाङ्गीकाराच्च। एतेन निर्विशेषेऽप्यतद्व्यावृत्तिरूपधर्मसत्यत्वपक्षेऽपि तैरेवाभावरूपधर्मायमाणैस्तत्प्रतिबन्द्या वा अभावरूपधर्मवत्त्वे सिद्धे द्वितीयकोटौ दत्तोत्तरत्वमाह—**अयमिति**। **प्रतियोगिनिर्देशस्य**; प्रतियोगिना निर्देशस्य; **तदपेक्षत्वात्**; प्रतियोगिधीसापेक्षत्वादित्यर्थः। **तदपेक्ष्यत्वादिति** पाठे तु प्रतियोगिनो निर्देशस्य 'भिन्नः' इति व्यवहारेणापेक्षणीयत्वादिति भाव्यम्। उक्तं भेददूषणनिस्तारोपक्रमे—

> भेदसाधकवर्गस्य भेदसिद्ध्युपजीविनः।
> तत्साधकत्वायुक्तिश्च दूषणा स्वोक्तभङ्गतः॥ ४२९॥
> भेदोऽस्तीति विधानं तु भवेत्स्वपररक्षकम्।
> स नास्तीति निषेधस्तु मूलघ्नः स्वात्मघातकः॥ ४३०॥

### मूलभावप्रकाशिका

**गोत्वादौ गृहीत इति**; ननु गृहीतेऽपि गोत्वादौ तस्य महिष्यादिव्यावृत्तत्वमजानतो महिष्यादिबुद्धिव्यवहारनिवर्तकत्वं न दृष्टमिति चेत्—न; संप्रतिपन्नस्य तत्तदसाधारणधर्मस्यैवेतरभेदत्वेन गृह्यमाणत्वमितरभेदभ्रमनिवर्तकत्वं चेत्युपपत्तावतिरिक्तस्यान्योन्याभावस्य कल्पनायां प्रमाणाभावादित्यत्र तात्पर्यात्। न च भेदस्यैवापह्नवः परेण कर्तुं

सुशकः, तथा सति ब्रह्मणोऽनृतजडपरिच्छिन्नभेदपराणां तत्पदार्थशोधकसत्यादिवाक्यानां प्रत्यगात्मनः स्थूलसूक्ष्मदेहद्वयभेदपराणां त्वंपदार्थशोधकविज्ञानमयादिवाक्यानां निर्विषयतयाप्रामाण्यं स्यात्। न चानृतादिभ्यो भेदो ब्रह्मस्वरूपोऽस्मदिष्ट इति वाच्यम्, तथा सत्यविवादपर्यवसानात्। न ह्यस्माकं भेदस्य स्वरूपात् भेदोऽपि सिषाधयिषितः, गोत्वादौ स्वरूपमेव भेद इत्यस्माभिरप्यङ्गीकृतत्वात्। भेदः स्वरूपं धर्मो वेत्यादिभेदविभीषिका अकारमात्रप्रश्लेषे स्यात्–अभेदविभीषिकेति; उक्तरीत्या भेदः स्वरूपं धर्मो वेत्यादिविकल्पस्यानिष्टपर्यवसायित्वाभावादित्यास्तां तावत्।

### न्यायसुदर्शनम्

**अयमस्माद्भिन्न इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वादित्यत्र** पूर्वमेव प्रतीतजात्यादिलक्षणस्य भेदस्यास्मिन् व्यवहारे प्रतियोगिनिर्देशमात्रं क्रियते। अतः प्रतियोगिनिर्देशस्य प्रतियोगिस्मरणसव्यपेक्षत्वात् प्रतियोग्यपेक्षया 'भिन्नः' इति व्यवहार इत्यर्थः। कः पुनः प्रतियोगी? यद्व्यवहारनिवर्तकं यद्ग्रहणं, स तस्य प्रतियोगी। इतरव्यवहारनिवृत्तिसत्त्वैव भेदस्य भेदत्वे हेतुः। निवृत्तिज्ञानमपि पश्चादुदेति। तदपि परीक्षायाम्। तत्रापि भेदशब्दप्रयोगोपाधिका प्रतियोग्यपेक्षा, न भेदभूतगोत्वाद्यर्थकृता, 'गौरश्वः' इति ग्रहणे गोत्वादिव्यवहारे च तदभावात्। इतरेतराभावविषयो वायं व्यवहारः। तस्य धर्माद्यपेक्षत्वात् तन्निर्देशः। न च शब्दप्रयोगानुगुणमर्थग्रहणम्, आत्मस्वरूपमित्यादिष्वसत्यपि प्रतिसंबन्धिनि तद्ग्रहणेऽपि प्रतिसंबन्धिप्रयोगदर्शनादित्यभिप्रायः।

### श्रीभाष्यम्

यत्पुनर्घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तं, तदनालोचितबाध्यबाधकभावव्यावृत्त्यनुवृत्तिविशेषस्य भ्रान्तिपरिकल्पितम्। द्वयोर्ज्ञानयोर्विरोधे हि बाध्यबाधकभावः, बाधितस्यैव व्यावृत्तिः। अत्र घटपटादिषु देशकालभेदेन विरोध एव नास्ति। यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नः, तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत् तत्र विरोधाद्बलवतो बाधकत्वं बाधितस्य च निवृत्तिः। देशान्तरकालान्तरसंबन्धितयानुभूतस्यान्यदेशकालयोरभाव-

प्रतीतौ न विरोध इति कथमत्र बाध्यबाधकभावः? अन्यत्र निवृत्तस्यान्यत्र निवृत्तिर्वा कथमुच्यते? रज्जुसर्पादिषु तु तद्देशकालादिसंबन्धितयैवाभावप्रतीतेर्विरोधो बाधकत्वं व्यावृत्तिश्चेति देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वं व्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः।

## श्रुतप्रकाशिका

इत्थं प्रमाणप्रमेयानुपपत्ती परिहृते। अथ परोक्तमनुमानमनूद्य दूषयति—**यत्पुनरित्यादिना**। पुनःशब्दः केवलतर्कादनुमानस्य वैषम्यं द्योतयति। दृश्यत्वानुमानस्य सूत्रकारैरेव दूषयिष्यमाणत्वात् वक्ष्यमाणदूषणस्य मिथ्यात्वविषयसर्वानुमानानां दूष्यत्वप्रदर्शनार्थत्वाच्च व्यावर्तमानत्वानुमानमिह दूष्यते। साधारणदूषणानि कालात्ययापदेशसोपाधिकत्वव्याघाताः। तत्राश्रयः प्रतीतो न वा? न चेदाश्रयासिद्धिः। प्रतीतत्वे प्रतीतिश्च प्रत्यक्षादिप्रमाणैः सत्यत्वेनेति तस्य मिथ्यात्वसाधनं धर्मिग्राहकप्रमाणबाधितम्। प्रतिपन्नोपाधौ बाधितत्वस्य मिथ्यात्वेऽप्रयोजकतया सोपाधिकत्वं च वक्ष्यते। तत्र देशकालविषयभ्रमेष्वपि वस्त्वन्तरस्योपाधित्वादनुदितबाधकज्ञानेषु भ्रान्तिष्वपि चोदयितृपुरुषज्ञानेन बाधितत्वाच्च विशेषणविशेष्यांशसिद्धेर्विशिष्टोपाधिसिद्धिरिति विस्तरेण वक्ष्यामः। साध्यधर्मस्य पारमार्थ्यापारमार्थ्यविकल्पे कृते पारमार्थ्ये चेदद्वैतहानिः; दृश्यत्वहेतोरनैकान्त्यं च, परमार्थेऽपि तस्य वृत्तेः। अपारमार्थ्ये प्रपञ्चसत्यता, 'बाधकबाधे बाध्यस्वरूपाबाधः' इति न्यायात्। अत एव हि द्वौ नञौ प्रकृतमर्थं द्रढयत इति शाब्दप्रसिद्धिः। धर्मे धर्मान्तरारोपणेन प्रत्यवस्थानादियं नित्यसमा जातिरिति न वाच्यम्, अप्रामाणिकधर्मपरंपरापादनेन दूषणं हि नित्यसमा। मिथ्यात्वमिथ्यात्वं प्रामाणिकम्, माध्यमिकोक्तस्य ज्ञानबाध्यत्वस्य भवता बाध्यत्वाभ्युपगमात्, परमार्थरज्जौ रज्जुबुद्धेः सर्पबुध्या बाध्यत्वस्य बाध्यत्वदर्शनाच्च। तर्हि सत्यत्वेऽपि सत्यत्वं किमस्ति, उत नास्ति? न चेदसत्यं जगत्स्यात्; अस्ति चेत् तस्यापि सत्यत्वमित्यनवस्थेति चेत्—न; स्वपरनिर्वाहकत्वाभ्युपगमात्। यदि त्वया मिथ्यात्वेऽपि स्वपरनिर्वाहकत्वमङ्गीक्रियते तर्हि मिथ्यात्वस्यैव स्वमिथ्यात्वनिर्वाहकत्वान्मिथ्यात्वं मिथ्यात्वान्तरमनपेक्ष्य स्वयमेव मिथ्येति प्रपञ्चः

सत्यः स्यात्। साधनस्य पारमार्थ्यापारमार्थ्यविकल्पे कृते पारमार्थ्ये अद्वैतहानिः; अपारमार्थ्ये धूमबुध्या गृहीतबाष्पवदसाधकत्वमिति व्याघातः। भेदवादिनापि हि न प्रपञ्चसत्यत्वहेतुसत्यत्वसाधनपूर्वकमनुमानान्युपन्यस्यन्ते; तथापि तदुपपद्यते; तद्वन्ममापीति चेत्—न; सत्यत्वासाधनेऽपि नास्माकं स्वाभ्युपगमव्याहतिः। तव तु मिथ्यात्वाभ्युपगमसाधकत्वाभ्युपगमव्याहतिरिति वैषम्यात्। ननु न साधनधर्मपारमार्थ्यमपेक्षितम्; नाशके मुद्गरे नष्टेऽपि पूर्वनष्टो घटो नष्ट एव दृष्टः, नोत्पन्नः; तद्वद्बाधकज्ञानस्य मिथ्यात्वेऽपि तद्बाधितस्य मिथ्यात्वं तिष्ठत्येवेति चेत्—न, कारकज्ञापकयोर्वैषम्यात्। नाशको हि कारकः। अतस्तन्नाश्यस्य तस्मिन्नष्टेऽपि नाश एव, तथा दर्शनात्। बाधकं च ज्ञापकम्; तस्मिन् बाधिते तद्बाध्यं च सत्यमेव स्यात्, अपवरकस्थघटाभावे केनचिदुक्ते 'अस्ति' इति वचनेन बाधिते घटसत्यत्वदर्शनात्। ननु बाधकबाधे पूर्वबाधितस्य सत्यत्वं वक्तुमयुक्तम्, वृन्तविषयभ्रमरत्वभ्रमबाधेऽपि भ्रमरत्वबुद्धिबाधितस्य पलाशपुष्पविषयाग्निभ्रमस्य बाधितत्वदर्शनादिति चेत्—तत्र किं वस्तुनिवृत्तिर्बुद्धिनिवृत्तिर्वोच्यते; न प्रथमः, दावत्वस्य परमार्थभूतवृन्तबाध्यत्वदर्शनात्। बुद्धिनिवृत्तिश्चेत् सा न बाधकाधीना, ज्ञानानां क्षणिकत्वात् स्वयं निवृत्तेः। भ्रमरबुद्धिस्तूत्तरकालीनदावबुध्युत्पत्तिप्रतिबन्धिका। तत्प्रतिबन्धकत्वं च भ्रमरपारमार्थ्यबुद्धेरेव, अन्यथा पूर्वभ्रमनिवृत्त्यभावदर्शनात्। ततश्च त्वन्मते कदाचिदपि न निःशेषभ्रमनिवृत्तिः सिध्यति। बुद्धिनिवृत्तेर्बाधकज्ञानजन्यत्वपक्षेऽपि निवर्तकज्ञानानां सर्वेषां भ्रान्तिरूपोत्तरोत्तरनिवर्तकज्ञानापेक्षतया भ्रमपरंपरापत्तेः। उत्तरस्य कस्यचिज्ज्ञानस्य स्वयं नाशे काल्पनिकघटादिनाशस्येव तन्नाशस्य काल्पनिकत्वात्तन्नाशप्तिरूपभ्रान्तिः स्थिरेति निःशेषभ्रमनिवृत्तिरूपो मोक्षोऽनुपपन्न इति कृत्स्नमिथ्यात्वनिःशेषाविद्यानिवृत्तिव्याघातः। एवमादिव्याघाता अनुसन्धेयाः। सोपाधिकत्वं चानन्तरमेव वक्ष्यते। दृश्यत्वव्यावर्तमानत्वयोरसाधारणदूषणं ब्रह्मण्यनैकान्त्यम्। अध्यस्तं स्वाधिष्ठानसमानाधिकरणतया वेद्यं, यथा 'इदं रजतम्' इति। एवं 'घटः सन्, पटः सन्' अधिष्ठानस्य सतः प्रपञ्चस्य चैकधीवेद्यत्वात् दृश्यत्वमनैकान्तिकम्। यद्यपि 'नभो मलिनम्' इत्यध्यासे नभसोऽचाक्षुषत्वादेकधीवेद्यत्वमध्यस्ताधिष्ठानयोर्न नियतं, तथापि सन्मात्रस्य प्रत्यक्षग्राह्यत्वं परोपगतमिति सिद्धमनैकान्त्यम्। ननु दृश्यत्वनियमोऽत्र हेतुतया विवक्षितः; दृश्यत्वनियमः सतो नास्ति, सतः स्वयंप्रकाशत्वात्; तदपि कथम्?

सदनुभूत्योर्भेदाभावादिति चेत्—न; अन्योन्याश्रयणात्—सदनुभूत्योर्भेदाभावे सिद्धे सतः स्वयंप्रकाशत्वेन दृश्यत्वनियमासिद्धेर्दृश्यत्वहेतोरनैकान्त्यपरिहृतिः; अनैकान्तिकत्वे परिहृते भेदाभाव इति। यद्यनुमानान्तरेण भेदनिषेधः, तर्ह्यस्मिन् सिद्धसाध्यता। एवं परोपगमेऽनैकान्त्यमुक्तम्। किंच ब्रह्मणो दृश्यत्वं श्रुतिसिद्धम्—"दृश्यते त्वग्र्यया बुद्ध्या" "आत्मा वा अरे द्रष्टव्यः" इति। 'अनुभूतित्वात्' इत्याद्यनुमानेन दृश्यत्वाभावे साध्ये कालात्ययापदेशः। "यत्तदद्रेश्यम्" इति वाक्यात् दृश्यत्वश्रुतिर्बाध्येति चेत्—न; दृश्यत्वसामान्यनिषेधपरत्वात्तस्याः, "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इत्यस्य दृश्यत्वविशेषविधानविषयत्वाच्च। "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः" "मनसा तु विशुद्धेन" इत्यादौ दृश्यत्वविशेषनिषेधदर्शनात् "अद्रेश्यम्" इत्यादि-सामान्यनिषेधस्य तत्पर्यवसायित्वाच्च। "अद्रेश्यम्" इत्यादिसामान्यश्रुत्या दृश्यत्वा-भावसाधकानुमानेन च ब्रह्मणो न दृश्यत्वमिति चेत्—न; तर्हि "न हिंस्यात् सर्वा भूतानि" इति सामान्यनिषेधश्रुत्या 'हिंसात्वात्' इत्यनुमानेन चाग्नीषोमीयहिंसानिवृ-त्तिप्रसङ्गात्। अतो ब्रह्मणि दृश्यत्वमनैकान्तिकम्। अनैकान्त्ये परिजिहीर्षिते ब्रह्मणो मिथ्यात्वमभ्युपगन्तव्यं स्यात्। दृश्यतैकस्वभावत्वं हि हेतुत्वेनाभिमतमिति नानैका-न्त्यम्; ब्रह्म हि स्वयंप्रकाशमिति न दृश्यतैकस्वभावमिति चेत्—न; तदानीं हेतोर्भा-गासिद्धिः स्यात्, चिदचिदात्मके प्रपञ्चे जीवांशस्य स्वयंप्रकाशत्वात्। अचिदंशमात्र-पक्षीकारे हेतोर्जीवगतनित्यत्वादिधर्मेष्वनैकान्तिकत्वम्। ते हि तद्धर्मभूतज्ञानवेद्या एव परमार्थभूताश्च। व्यावर्तमानत्वमपि ब्रह्मण्यनैकान्तिकम्, अनृतादिभ्यो व्यावृत्तत्वेनाभ्यु-पगमात्। तच्च स्वरूपमात्रमिति न शक्यं वक्तुम्, ब्रह्मणः कस्यचिद्धर्मत्वाभावात्, अध्याससहत्वाच्च। व्यावर्तमानत्वस्य स्वरूपत्वेऽपि तत्स्वकार्यकरम्, अनुभूतित्ववद्धेतोः स्वरूपानतिरेकेऽपि साधनदशायां कार्यकरत्वं न तु दूषणदशायामिति नियामकाभावात्। किंच ब्रह्मणि स्वरूपं व्यावृत्तिश्चेत् घटादिष्वपि तथास्तु। यदि ब्रह्मणि स्वरूपातिरिक्ता सा, तर्हि घटादिष्वपि तथा स्यात्। सर्वथानैकान्त्यमवर्जनीयम्। जडादिव्यावृत्तत्वं ब्रह्मणोऽपरमार्थश्चेद्वस्तुतो ब्रह्म जडमेव स्यात्। अपरमार्थशब्दश्च निष्फलः, घटादावपि व्यावर्तमानत्वस्य मिथ्यात्वेन व्यावर्त्याभावात्। ततश्चानैकान्त्यं सुस्थम्, अपरमार्थस्यैव हेतुतया त्वयाङ्गीकृतत्वात्; तस्य च विपक्षेऽपि वर्तमानत्वात्। किंच अनुवर्तमानस्य

सन्मात्रस्य व्यावर्तमानेभ्यो घटादिभ्यो व्यावृत्तिरस्ति वा, न वा? अस्ति चेत् तत एव व्यावर्तमानत्वहेतुर्ब्रह्मण्यनैकान्तिकः। नो चेत् घटादिष्विव व्यावर्तमानत्वं ब्रह्मणि स्यात्, व्यावर्तमानेभ्यो व्यावृत्तत्वाभावात्। यथा रजतादव्यावृत्तं रजतं तथा व्यावर्तमानादव्यावृत्तमपि हि व्यावर्तमानमेव भवति। अत उभयथापि ब्रह्मण्यनैकान्त्यम्। ननु—ब्रह्म जडादिव्यावृत्तमेव; व्यावर्तमानत्वं च सत्यम्; तच्च स्वरूपमिति नाद्वैतहानिः, तस्य च सत्यत्वान्न जडत्वादि ब्रह्मणः; ततश्च नानैकान्त्यम्; अपरमार्थभूतं घटादिगतं व्यावर्तमानत्वं हि हेतुरिति चेत्—यद्यपरमार्थभूतं व्यावर्तमानत्वं हेतुतया विवक्षितं तर्ह्यसिद्धो हेतुः, घटादीनां मिथो व्यावृत्तेरसत्यत्वोपगमात्। **यत्पुनरित्यादिना** सोपाधिकत्वं प्रतिजानीते। पूर्वं परेण बाधस्यापि पक्षाद् व्यावृत्त्युपपादनेनोपाधित्वं प्रत्युक्तम्; तद्व्युदासाय पक्षे बाधाभावं दर्शयितुं बाधं शिक्षयति—**द्वयोरिति**; विरोधे सत्येव बाध्यबाधकभावः; न तु 'अस्ति, नास्ति' इति प्रत्ययमात्रयोरित्यर्थः। **बाधितस्यैव व्यावृत्तिरिति**; प्रतिपन्नोपाधौ बाधितस्यैव मिथ्यात्वसाधिका व्यावृत्तिः, न त्वगृहीतत्वमात्रं मिथ्यात्वसाधकमित्यर्थः। अत्र व्यावृत्तिविशेषो व्यावृत्तिशब्दोक्तः, उत्तरत्र 'व्यावर्तमानत्वमात्रम्' इति मात्रच्प्रत्ययसद्भावात्। ततः किं पक्षे बाधाभावस्येत्यत्राह—**अत्रेति**। देशयोः कालयोश्च भेदे सत्यविरोधं दर्शयितुं तयोरैक्ये विरोधबाधौ दर्शयति—**यस्मिन्निति**; भावाभावविरोधादन्यतरस्य बाध्यत्वे सति बलवतो बाधकत्वमितरस्य बाधितत्वान्निवृत्तिश्चेत्यर्थः। **च** एवार्थे; बाधितस्यैव त्वदभिमतव्यावृत्तिविशेष इत्यर्थः। सामानाधिकरण्यानर्हत्वं विरोधः। अदुष्टकारणजन्या निषेधधीर्बाधः। अदुष्टकारणजन्यत्वे सति निषेधरूपत्वं बाधकत्वम्। पुरोवर्तिन्यभावोऽनवभासो वा सत्यत्वावभासाभावो वा निवृत्तिः। पक्षे घटादौ देशकालभेदेन विरोधबाधाभावावुपपादयति—**देशान्तरेति**। विरोधबाधाभावात्तत्फलभूतनिवृत्तिरपि नेत्याह—**अन्यत्रेति**। **अन्यत्र निवृत्तस्य**; विरोधबाधस्थले निवृत्तस्य। **अन्यत्र**; विरोधबाधरहितस्थले। यद्वा **अन्यत्र निवृत्तस्य**; स्वदेशकालव्यतिरिक्तदेशकालयोर्निवृत्तस्य। **अन्यत्र**; स्वदेशकालयोः। एतद्वैधर्म्यं दृष्टान्तेन विवृणोति—**रज्जुसर्पादिष्विति**। तुशब्दो घटादिवैषम्यपरः। इत्थं दूषणोपयोगिनी व्याप्तिः शिक्षिता; अथानुमानदूषणसिद्धिं दर्शयति—**इति देशकालान्तरेति**। इतिहेतौ। मिथ्यात्वं व्यापकम्। व्यावर्तमानत्वं व्याप्यम्। व्यावर्तमानत्वमात्रमिति मात्र-

शब्देन विरोधबाधहेतुकव्यावृत्तिर्व्यावर्त्यते। यद्वा व्यावर्तमानत्वहेतोरसिद्धिं प्रतिजानीते—**यत्पुनरित्यादिना**। तदर्थं बाधमूलं विरोध इत्याह—**द्वयोरित्यादि**। पक्षे तदभावं दर्शयति—**अत्रेति**। विरोधाभावमुपपादयति—**यस्मिन्निति**। तत्फलनिवृत्तिमाह—**अन्यत्रेति**। दृष्टान्ते तद्वैधर्म्यं दर्शयति—**रज्ज्विति**। एवमसिद्धिं वक्तुं विभागो दर्शितः। अथासिद्धिमाह—**इति देशकालान्तरेति**। सोपाधिकत्वमार्थम्। अयमर्थः—किं 'पटोऽस्ति' इत्यत्र घटाभावः सिषाधयिषितः, उत 'घटोऽस्ति' इत्यत्रापि तदभावः? प्रथमे सिद्धसाध्यता। द्वितीये व्यावर्तमानत्वशब्देन किं व्यावृत्तिबुद्धिबोध्यत्वं मिथ्यात्वहेतुतया विवक्षितम्, उत प्रतिपन्नोपाधौ बाधितस्य व्यावृत्तिः? प्रथमे सोपाधिकत्वम्। द्वितीये हेत्वसिध्या घटादेः सत्यत्वमिति। ननु बाधार्हताया उपाधित्वे साध्याविशिष्टता स्यादिति बाधितत्वमेवोपाधिः स्यात्; तस्य च न साध्यसमव्याप्तिः, असहायेन गच्छता पथि दृष्टस्य रज्जुसर्पस्य केनाप्यबाधितत्वादिति चेत्—नैवम्, ईश्वरादिज्ञानेनापि बाधितत्वनियमात्। अनभ्युपगतेश्वरादीनां पक्षेऽप्ययमुपाधिरेव। किं त्वया तस्य पथि दृष्टस्य रज्जुसर्पस्य मिथ्यात्वं प्रमाणतोऽवगतं, न वा? न चेत्सम्यक् सर्प एवेति तत्रावृत्तिर्न साध्यसमव्याप्त्यभावाय स्यात्। अवगतं चेत् तत एव ज्ञानात्तस्य बाधितत्वं सिद्धमिति साध्यसमव्याप्तिसिद्धिः। ननु किं प्रतिपन्नोपाधौ बाधो मिथ्यात्वे प्रयोजकः, उत केवलबाधः? प्रथमे देशकालयोरुपाधित्वात् देशकालभ्रमस्य देशकालोपाधिकत्वाभावेन सर्वसपक्षाननुयायित्वेन साध्यसमव्याप्त्यभावात् प्रतिपन्नोपाधौ बाधो नोपाधिः स्यात्। द्वितीये कृत्स्नमिथ्यात्वमिति। अत्रोच्यते—न हि देशकालावेवोपाधिरिति नियमः, किंतु वस्त्वन्तरमप्युपाधिः। उपाधिरवच्छेदकः। अत एव हि 'देशकालादिप्रतिपन्नोपाधावबाधितत्वात्' इत्यत्रादिशब्देन वस्त्वन्तरस्याप्युपाधित्वं भाष्यकारैर्वक्ष्यते। तस्माद्देशकालभ्रमे वस्त्वन्तरमुपाधिः। देशकालभ्रमस्य वस्त्वन्तरोपाधिकत्वेऽपि वस्तुभ्रमस्य देशकालोपाधिकत्वे नान्योन्याश्रयः, भ्रमव्यक्तिभेदात्। तस्माद्यदवच्छेदकावच्छिन्नं यत्प्रतिपन्नं तदवच्छेदकावच्छिन्नस्य बाधो मिथ्यात्वे प्रयोजकः। यद्वा आरोपितेन सायंत्वादिना तन्निवर्तकेन दिवात्वादिना च विना क्रियान्तरावच्छिन्नस्य कालस्य भ्रान्त्युपाधित्वम्। एवं देशेऽपीति न कश्चिद्दोषः। एवं विशिष्टोपाधौ विशेषणविशेष्यांशयोः परिहृतानुपपत्तिकत्वेन विशिष्टोपाधिसिद्धिः। अतो न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः। कैश्चिदेवमुक्तम्—

'घटोऽस्ति' इत्यत्र किं घटोऽस्तिशब्दौ पर्यायौ, उत न? पर्यायत्वे सहप्रयोगो न स्यात्। नो चेत्सद्विलक्षणो घट इति। नैवम्; "अस्ति ब्रह्मेति चेद्वेद" इत्यादौ चास्तिब्रह्मशब्दयोः पर्यायत्वे पौनरुक्त्यम्। नो चेद्ब्रह्मणोऽपि सद्विलक्षणत्वमिति। उभयत्रायं परिहारः—स्वशब्दप्राप्तस्य स्वभावस्यैव निषेधार्थानुवादशङ्कापरिहारायास्तिशब्देन नियमः क्रियत इति।

## भावप्रकाशिका

**वस्त्वन्तरस्योपाधित्वादिति**; देशकालान्तराणामुपाधिभूतानां सद्भावात् प्रतिपन्नोपाधौ बाधितत्वं तत्राप्यस्तीति भावः। **अनुदितबाधकज्ञानेषु भ्रान्तिष्विति** व्यधिकरणे सप्तम्यौ; अनुदितबाधकज्ञानेषु पुरुषेषूत्पन्नासु भ्रान्तिष्वित्यर्थः। अतोऽनुदितबाधकज्ञानास्वित्यनुक्तिः। **चोदयितृपुरुषज्ञानेनेति**; यस्तु चोदयिता पुरुषस्तज्ज्ञानेनेत्यर्थः। भ्रमत्वबुद्धेरेव बाधरूपत्वादिति भावः। **विशेषणविशेष्यांशसिद्धेरिति**; प्रतिपन्नोपाधिर्विशेषणम्; बाधितत्वं विशेष्यम्। **अप्रामाणिकधर्मपरंपरापादनेनेति**; यथा उत्पत्तेरुत्पत्तावनवस्था; अनुत्पत्तावुत्पत्तिर्नित्या स्यादित्यत्रोत्पत्त्युत्पत्तेरत्यन्तासंभाविताया आपादनात्; इह तु मिथ्यात्वमिथ्यात्वस्यात्यन्ताप्रामाणिकत्वाभावात्; ब्रह्मणि मिथ्यात्वमिथ्यात्वस्य संप्रतिपन्नत्वादिति भावः। इदमुपलक्षणम्;

> "धर्मस्य तदतद्रूपकल्पनानुपपत्तितः।
> धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत्॥"

इति तल्लक्षणम्। न चात्र मिथ्यात्वस्य सत्यत्वे धर्मिणो मिथ्यात्ववैशिष्ट्यभङ्ग उक्तः, किं त्वद्वैतहानिः। प्रत्युत भेदः किं भिन्ने वर्तते, उताभिन्न इति त्वदुक्तेरेव भिन्नादिविशिष्टमात्रनिरासकत्वेन स्वव्याघाताज्जातित्वम्। उक्तं ह्येतामेव जातिमवष्टभ्य शुष्कतर्कवादिनां बौद्धचार्वाकवेदान्तिनां बालव्यामोहहेतवः कण्ठकोलाहला इति। **मुद्गरे नष्टेऽपीति**; न च नष्टस्यापि मुद्गरस्य घटस्येव पारमार्थ्यमस्तीति वाच्यम्; न हि पारमार्थ्याभावे स दृष्टान्तः; यथा नाशकनाशे नाश्यानुन्मज्जनम्, एवं प्रपञ्चसत्यत्वबाधकस्य मिथ्यात्वसाधकहेतोर्बाधेऽपि बाध्यानुन्मज्जनमित्येतावता साम्येन दृष्टान्तत्वात्। **बाधकज्ञानस्य मिथ्यात्वेऽपीति**; बाधकज्ञानविषयस्य दृश्यत्वादिहेतोर्बाधेऽपीत्यर्थः, साधनापारमार्थ्यापारमार्थ्यविचारस्यैव प्रस्तुतत्वादिति द्रष्टव्यम्। **कारकज्ञापकयोर्वैषम्या-**

दिति ; ननु नाशकस्यापि बाधितत्वे नाशोऽसत्य एव ; न हि मुद्गरस्य मिथ्यात्वे नाशस्य सत्यत्वमस्ति ; अतः साम्यमेवेति चेत्—न ; बाधकबाधे बाध्यसत्यत्वं स्यादिति मयोक्ते नाशकनाशे कार्यस्य नाशस्यानाशो दृष्ट इति त्वद्वचनमत्यन्तासंगतमिति तत्तात्पर्यात् । **वृन्तविषयभ्रमरत्वभ्रमबाधेऽपीति** ; कस्याश्चिद्भ्रमर्याः पालाशपुष्प उत्पन्नो दावभ्रमः पलाशवृन्तविषयभ्रमरबुद्ध्या निवृत्तः, सोऽपि यत्र वृन्तविषयभ्रमरभ्रमो विशेषदर्शनान्तरेण निवृत्तः, तादृशभ्रमस्थल इत्यर्थः । वक्ष्यति—"भ्रमरीभ्रमरभ्रमेण वृन्ते यद्दावभ्रममाश्लिषत्पलाशम्" इति । **परमार्थभूतवृन्तबाध्यत्वादर्शनादिति** ; इदमुपलक्षणम्—पलाशपुष्पबाध्यत्वादित्यपि द्रष्टव्यम् । **ततश्च त्वन्मत इति** ; दावज्ञानान्तरोत्पत्तिप्रतिबन्धकत्वलक्षणं दावबाधकत्वं भ्रमरपारमार्थिकत्वभ्रमस्य । एवं च प्रपञ्चे दृश्यत्वमिथ्यात्वादिरूपसाध्यसाधनपारमार्थ्यभ्रमस्य प्रपञ्चसत्यत्वज्ञानान्तरोत्पत्तिप्रतिबन्धकत्वलक्षणं बाधकत्वं वक्तव्यम् । ततश्च तस्यापि भ्रमस्य निवर्तकान्तरमपि किंचिद्धर्मपारमार्थ्यज्ञानमेवेति भ्रमपरंपरानुवृत्तिरेव स्यात्, निःशेषाविद्यानिवृत्तिर्न स्यादिति भावः । नन्वेवं दावादिभ्रमस्थल इव प्रकृते भ्रमस्य भ्रमनिवर्तकत्वे निःशेषाविद्यानिवृत्तिर्न स्यादित्येव सुवचम् ; किमर्थमेतावान् संरम्भ इति चेत्—सत्यम्, तत्र तत्तत्पदार्थस्वरूपशिक्षार्थत्वेनादोषात् । **भ्रान्तिरूपोत्तरोत्तरेति** ; साधनधर्माणामपारमार्थ्यादिति भावः । **स्वयं नाश इति** ; ननु ज्ञानान्तरेण नाशेऽपि घटादिनाशान्तरवत् काल्पनिकत्वं सिद्धमेवेति निःशेषाविद्यानिवृत्तिर्न स्यादिति दोषः समान इति चेत्—इष्टापत्तिरिति केचित् । अन्ये तु ज्ञानजन्याया अविद्यानिवृत्तेर्ब्रह्मस्वरूपत्वपञ्चमप्रकारत्वपक्षावलम्बनेन* परिहारस्य कथंचित् कृतत्वेन

---

* यदाहुरानन्दबोधाचार्या न्यायमकरन्दे—

"तत्रैतत् विचार्यते—स किं सत्यो मिथ्या वेति । यद्याद्यः कल्पस्तदापि किमात्मैव, ततो वान्यः ? स चेदात्मैव नित्यनिवृत्तिरविद्यायाः । कथं चानादेरात्मनो निवृत्तिता ? निवृत्तिर्हि निवृत्तिमद्भावपूर्विका । तथाच कथमनादिः ? अविद्यानिवृत्तिश्च विद्यासाध्या । तथाच कथमात्माभेदः ? तस्यापि तद्भावापातात् । तदभ्युपगमे वा कथमनादितोऽयमज्ञानस्याश्रयः ? अनादि चाज्ञानमभिप्रेतम् । अथात्मनोऽन्यः, कथं न द्वैतापातः ? अथोत्तरः, क पुनरयं मिथ्यार्थः ? यद्यनिर्वाच्यता, न तर्हि अविद्याकार्यादविद्यातश्चान्यदनिर्वाच्यमिति अविद्याकार्यत्वे तन्मूलाविद्याव्यवस्थितेरनिर्मोक्षः । अविद्यैव त्वविद्याव्यावृत्तिरिति गहनेयं न्यायपदवी । अथा-

ज्ञानातिरिक्तजन्यनाशस्य स्वकारणे प्रविलयरूपतया परैरभ्युपगतत्वेन कारणभूताविद्याया अनुवृत्तिः स्यादेवेति भाव इति वदन्ति । **तथापि सन्मात्रस्येति** ; इदमुपलक्षणम् ; नभसोऽप्यध्यस्तनीलिमपुरस्कारेण चक्षुषा ग्रहणसंभवात् पञ्चीकरणप्रक्रियया रूपवत्त्वसंभवेन चाक्षुषत्वादेकवित्तिवेद्यत्वं सिध्यतीति भावः । **ननु दृश्यत्वनियमोऽत्रेति** ; स्वव्यवहारे स्वातिरेकिसंविदपेक्षानियतदृश्यत्वमित्यर्थः । **सदनुभूत्योर्भेदाभावादिति** ; स्वप्रकाशानुभूत्यभिन्नत्वेन स्वप्रकाशत्वं वक्तव्यमित्यर्थः । स्वप्रकाशत्वेन दृश्यत्वनियमासिद्धिरिति यदि दृश्यत्वहेतुनैव भेदमिथ्यात्वं साध्यते, तदा सदनुभूतिभेदमिथ्यात्वाधीनं दृश्यत्वहेतुसामीचीन्यम्, सद्रूपे ब्रह्मणि व्यभिचाराभावात् ; सामीचीन्ये सति भेदमिथ्यात्वमित्यन्योन्याश्रय इत्यर्थः । **यद्यनुमानान्तरेणेति** ; जडत्वपरिच्छिन्नत्वादिनेत्यर्थः । **तर्ह्यस्मिन् सिद्धसाध्यतेति** ; दृश्यत्वहेतोरित्यर्थः । **दृश्यत्वैकस्वभावत्वमिति** ; स्वप्रकाशताशून्यत्वमि-

---

सत्त्वेव मिथ्यार्थः, सा चेत्तुच्छता कथंकारकव्यापारसाध्यता ? यदि तुच्छातिरिक्ताऽभावरूपता तदापि निर्वाच्यत्वे द्वैतम् । अनिर्वाच्यत्वे त्वनिर्मोक्षः । भावस्यैव चाभावो निवृत्तिरभावस्यैव च भावः । न चाज्ञानं भावोऽभावो वा, तस्यानिर्वाच्यत्वाभ्युपगमात् । न चास्ति भावाभावरूपं वस्तु यदविद्याव्यावृत्तिः । न चान्यो निवृत्तिप्रकारः प्रसिद्धः, उत्प्रेक्षितुं वा शक्यः । मिथ्याभावे चाविद्याव्यावृत्तेरनिवृत्तिरेवं तात्त्विकी प्रसज्येत, आत्मवत् । अतः कथमविद्याव्यावृत्तिर्मोक्ष इति ।

न सन्नासन्न सदसन्नानिर्वाच्योऽपि तत्क्षयः ।
यक्षानुरूपो हि बलिरित्याचार्या व्यचीचरन् ॥

अस्ति तावदविद्याव्यावृत्तिर्लोकप्रसिद्धा । न तस्या विकल्पपांसुभिः स्वरूपमेवावकरितुं युक्तम् । तथाच न चेत् प्रागुक्तप्रकारसंभवः परिशेषतः प्रकारान्तरमेवास्तु । यथा खलु शुक्तिशकलादेः स्वरूपे प्रसिद्धे प्रकारान्तरानिरूपणाच्च परिशेषतोऽनिर्वाच्यता, तथा अविद्याव्यावृत्तिरपि प्रसिद्धिपरिशेषाभ्यां प्रकारान्तरशालिनीति युक्तम् । " इति ।

संगृहीतं चेदमित्थं सिद्धान्तलेशसंग्रहे—" आत्मन्येवाविद्यानिवृत्तिः । सा च न सती, अद्वैतहानेः । नाप्यसती, ज्ञानसाध्यत्वायोगात् । नापि सदसद्रूपा, विरोधात् । नाप्यनिर्वचनीया, अनिर्वाच्यसादेरज्ञानोपादानत्वनियमेन मुक्तावपि तदुपादानाज्ञानानुवृत्तिप्रसङ्गात् ; ज्ञाननिवर्त्यत्वापत्तेश्च । किंतूक्तप्रकारचतुष्टयोत्तीर्णपञ्चमप्रकारा " इति ।

त्यर्थः । **परमार्थभूताश्चेति** ; नित्यत्वादीनामपारमार्थ्येऽनित्यत्वादिकं प्रसज्येतेति भावः । **अनृतादिभ्यो व्यावृत्तत्वाभ्युपगमादिति** ; ननु यद्यप्यनृतव्यावृत्तत्वमनृतविलक्षणत्वमङ्गीकृतम् , तथाप्यनुवर्तमानत्वप्रतिद्वन्द्विव्यावर्तमानत्वं नाङ्गीकृतमिति चेत्—न ; विलक्षणत्वरूपव्यावर्तमानत्वे सत्यननुवृत्तत्वरूपव्यावृत्तत्वमपि सिध्यतीति भावात् । **तत्स्वकार्यकरमिति** ; व्यभिचारज्ञानसंपादनमुखेनानुमितिप्रतिबन्धकमित्यर्थः । **अनुभूतित्ववादिति** ; स्वरूपानतिरिक्तानुभूतित्वस्य स्वप्रकाशत्वरूपसाध्यसाधकत्वादिति भावः । **अपरमार्थशब्दश्चेति** ; अत्र केचित्—अपरमार्थशब्दपदं लक्षणया ब्रह्मशब्दपरम् ; ततश्च 'ब्रह्मणो जडव्यावृत्तत्वमपरमार्थः' इत्यत्र ब्रह्मशब्दो व्यर्थः , व्यावृत्तत्वमात्रस्यापारमार्थ्यात् । अत एव 'घटादावपि' इत्युत्तरग्रन्थस्वारस्यमपीति वदन्ति । अन्ये त्वपरमार्थ इत्युक्त्या न कोऽपि परिहारः कृतः, व्यावर्तमानत्वान्तरस्यापि तादृक्त्वेन परमार्थव्यावर्तमानत्वस्य हेतूकरणासंभवात् वैलक्षण्यासिद्धेरिति भावं वर्णयन्ति । **तर्ह्यसिद्धो हेतुरिति** ; नन्वपरमार्थभूतव्यावर्तमानत्वस्य हेतूकृततया तस्य नासिद्धिः । व्यावर्तमानत्वस्य तत्रासत्त्व एवापरमार्थव्यावर्तमानत्वसिद्धिः । इतरथा परमार्थव्यावर्तमानत्वमेव स्यादिति चेत्—न ; तथा सत्यपरमार्थव्यावर्तमानत्वं व्यावृत्तिशून्यत्वमिति स्यात् ; ततश्च व्यावृत्तिशून्यत्वमेव हेतुः स्यात् , न तु व्यावृत्तिरिति भावः । **प्रतिपन्नोपाधौ बाधितस्यैवेति** ; अत्र प्रतिपन्नोपाधौ बाधितस्यैव व्यावृत्तिर्मिथ्यात्वसाधिकेति योजना, 'न त्वगृहीतत्वमात्रम्' इत्युत्तरग्रन्थानुसारात् । पक्षान्तरमाह—**अत्र व्यावृत्तिविशेषो व्यावृत्तिशब्दोक्त इति** ; बाधितस्यैव मिथ्यात्वसाधकव्यावृत्तिविशेषः संभवतीत्येवं योजनेति भावः । **निषेधधीर्बाध इति** ; निषेधधीजन्या पूर्वज्ञाने भ्रमत्वबुद्धिर्बाधः । **निषेधरूपत्वं बाधकत्वमिति** ; पूर्वज्ञानविषयाभावावगाहि ज्ञानं बाधकमित्यर्थः । **सर्वसपक्षाननुयायित्वेनेति** ; न चैवं प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपमिथ्यात्वस्याभावेन कथं तेषां सपक्षत्वमिति वाच्यम् , ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्य सत्त्वात् सपक्षत्वमस्तीति तदभिप्रायसंभवात् ; इतरथा साध्योपाध्योरैक्यप्रसङ्गात् । **उपाधिरवच्छेदक इति** ; आश्रय इत्यर्थः ; न तु साध्यव्यापकादिलक्षण इति भ्रमितव्यमिति भावः । **देशकालभ्रमे वस्त्वन्तरमुपाधिरिति** ; देशभ्रमे कालादिवस्त्वन्तरस्योपाधित्वं, कालभ्रमे देशादिलक्षणवस्त्वन्तरस्योपाधित्वमिति संभवादित्यभिप्रायः । **नान्योन्याश्रयः, भ्रमव्यक्तिभेदादिति** ; ननु—प्रातिभासिको देशका-

त्वादिर्व्यावहारिके वस्त्वन्तरेऽध्यस्यते, प्रातिभासिकं रजतमिव शुक्तिशकल इत्युक्तौ नान्योन्याश्रयः। न हि रजतस्य शुक्तिशकलेऽध्यासोऽन्यत्र शुक्तिशकलाध्याससापेक्षः। अतो नान्योन्याश्रयशङ्का; नापि 'भ्रमव्यक्तिभेदात्' इति परिहारश्च युज्यते, अनवस्थादिभिरुत्पत्तिप्रतिबन्धप्रसङ्गादिति चेत्—मैवम्; **भ्रमव्यक्तिभेदात्** इत्यस्य प्रातिभासिकव्यावहारिकव्यक्तिभेदात् प्रातिभासिकस्य व्यावहारिकेऽध्यासोपपत्तावन्योन्याश्रयानवस्थाद्यभावादित्येव तदभिप्रायात्। **यदवच्छेदकावच्छिन्नमिति**; न च यत्र यत्प्रतिपन्नं तत्र तस्याभावो मिथ्यात्वप्रयोजक इत्येवास्त्विति वाच्यम्, संयोगाद्यतिप्रसङ्गवारणाय यद्देशकालावच्छिन्नमित्यस्यावश्यकत्वात्। **क्रियान्तरावच्छिन्नस्येति**; अयं भावः—नात्र कालस्याध्यासः, येनोपाध्यन्तरसदसद्भावशङ्का स्यात्; अपि तु काले सायंत्वरूपादित्यक्रियासंबन्धाध्यासः। न च–सायंत्वेन प्रतीतस्य न सायंत्वभ्रमाधिष्ठानत्वम्, आत्माश्रयप्रसङ्गात्; नापि दिवात्वेन प्रतीतस्य, विरोधादिति वाच्यम्, तदुभयविलक्षणगोदोहनादिक्रियासंबन्धित्वेन प्रतीते काले सायंत्वाध्यास उपपद्यत इति। **नियमः क्रियत इति**; अस्तित्वनास्तित्वयोः प्राप्तौ नियमः क्रियत इत्यर्थः। घटशब्दप्रतिपन्नेऽस्तित्वरूपधर्मान्तरसंबन्धो बोध्यते; इतरथा 'नीलो घटः' 'शुक्लः पटः' इत्यादावपि विकल्पावतारप्रसङ्ग इति भावः।

## श्रुतप्रदीपिका

इत्थं मानमेयानुपपत्तिं परिहृत्यानुमानं दूषयितुमनुवदति—**यत्पुनरित्यादिना**। दूषयति—**तदिति**। प्रतिपन्नोपाधौ बाधाबाधयोरेव मृषात्वामृषात्वसाधकत्वं, न व्यावृत्त्यनुवृत्तिमात्रयोरिति विशेषः परेणानालोचित इत्यर्थः। सोपाधिकत्वकालात्ययापदेशव्याघाताः प्रपञ्चमिथ्यात्वविषयसर्वानुमानसाधारणाः। आद्यं त्वत्रैवोपपादितम्। द्वितीयश्च धर्मिग्राहकमानबाधरूपः। तृतीयश्च धर्मिसाध्यसाधकसत्यत्वमिथ्यात्वविकल्पफलरूपः। न च साध्यमिथ्यात्वे नित्यसमः, लोकसिद्धतया संविदि पराभ्युपगमेनैव बाधकबाधस्य प्रामाणिकत्वात्। सत्यत्वसत्यत्वस्यामानकत्वात् त्वदुक्तिर्नित्यसमैव। न च सत्यत्वं सत्यत्वान्तराभावान्मृषा, नित्यत्ववत् स्वपरनिर्वाहकत्वात्; ब्रह्मणि चाधिष्ठानत्वोपगमात्; अधिष्ठानाध्यस्तयोरेकधीवेद्यत्वाच्च। दृश्यत्वनियमो हेतुश्चेत् चक्रकम्; सतो दृश्यत्वनियमाभावेनानुमानसौष्ठवात्, तद्भेदमिथ्यात्वेन सदनुभूत्यैक्यात्सतो दृश्यत्वनियमाभाव इति द्रष्टव्यत्वश्रुत्या च। "तदद्रेश्यम्" इत्यादिनिषेधस्तु सामान्यविषयः, "परिपश्यन्ति

धीराः" इति तत्रैवोक्तेः। विशेषनिषेधश्च "न चक्षुषा" इत्यादेः। व्यावर्तमानत्वं च ब्रह्मणि व्यभिचारि, जडादिभ्यो व्यावृत्तत्वात्। तन्मिथ्यात्वे जडादित्वं व्यावर्त्याभावाश्च; घटादेर्व्यावर्त्यमानत्वस्यापि मिथ्यात्वाभ्युपगमात्। व्यावर्त्यमानजडादिभ्यो व्यावृत्तत्वं मिथ्या, न वा; उभयथापि ब्रह्म व्यावृत्तमिति। अत्र तु सोपाधिकत्वं वक्तुं बाधस्य पक्षान्वयव्युदासाय तं शिक्षयति—**द्वयोरिति**। **बाधितस्यैवेति**; व्यावृत्तिशब्दस्तद्विशेषपरः। **व्यावर्तमानत्वमात्रमिति** वक्ष्यमाणत्वात् मिथ्यात्वसाधिका व्यावृत्तिर्बाधितस्यैवेत्यर्थः। ततः किमित्यत्राह—**अत्रेति**। देशकालभेदे सत्यविरोधादबाधं दर्शयितुं तयोरैक्ये विरोधबाधौ दर्शयति—**यस्मिन्नित्यादिना**। च एवार्थः। निवृत्तिः पूर्वोक्ता। घटादौ तद्विपर्ययमाह—**देशान्तरेति**। विरोधबाधफलाभावमाह—**अन्यत्रेति**। **अन्यत्र**; विरोधबाधस्थले। उक्तं दृष्टान्ते दर्शयति—**रज्ज्वति**। इत्थं व्याप्तिः शिक्षिता। फलितमनुमानदूषणं दर्शयतीति। मात्रचा विरोधबाधहेतुकव्यावृत्तिव्युदासः। पटे घटाभावः साध्यश्चेत् सिद्धसाध्यता। घटेऽपि चेत् विलक्षणधीबोध्यत्वम्। किंच हेतोः सोपाधिकत्वम्। प्रतिपन्नोपाधौ बाधितत्वं चेत्, असिद्धिरित्यर्थः। न साध्याविशिष्टत्वमुपाधेः; स हि बाधितत्वम्। बाधार्हत्वं हि साध्यम्। ननु यावज्जीवं बाधाविषयेषु संप्रतिपन्नासत्येष्ववृत्तेर्न साध्यसमव्याप्तिः; नैवम्; मिथ्याभूतेष्वप्यनयोर्धिया बाधितत्वादीश्वरधीबाधितत्वाच्च तेष्वपि वृत्तेः। देशकालविषयभ्रमेषु क्रियादिरुपाधिः। अतश्च न साध्यसमव्याप्त्यभावः। अत एव हि 'देशकालादिप्रतिपन्नोपाधौ' इति वक्ष्यते।

## तत्त्वटीका

एवं भेदस्य मानाद्यनुपपत्तिर्निरस्ता। तथानुमानबाधं दुदूषयिषुरनुवक्ति—**यत्पुनरिति**। हेतौ सोपाधिकत्वं विवक्षुः प्रयोजकानभिज्ञमुपालभते—**तदिति**। बाध्यबाधकभावः सर्वत्र विरोधगर्भः; व्यावृत्तिविशेष एव मिथ्यात्वसाधकः; अनुवृत्तिविशेष एव सत्यत्वसाधक इत्यनालोचनात्तत्सामान्ये बाधकत्वभ्रान्त्या तदुक्तिरित्यर्थः। कथमत्र बाध्यबाधकभावस्यानालोचितत्वमित्यत्राह—**द्वयोरिति**। ज्ञानयोर्विरोधोऽत्र विषयविरोधायत्तः। अत्र व्यावर्तमानत्वमात्रमप्रयोजकम्; तद्विशेषस्त्वसिद्ध इत्यभिप्रायेणाह—**बाधितस्येति**। व्यावृत्तिशब्देन प्रतिपन्नोपाधौ निषेधप्रतियोगित्वलक्षणव्यावृत्तिर्विवक्षिता, अन्यथावधारणायोगात्। **न व्यावर्तमानत्वमात्रमिति** वक्ष्यमाणत्वाच्च। तदिह प्रयोजक-

स्यासिद्धत्वं सिद्धस्याप्रयोजकत्वं च हार्दम् । ननु सच्छब्दवाच्ये ब्रह्मणि घटादेः प्रतीतत्वात्तत्रैव निषेधाच्च शुक्तिरूप्यस्येव विधिनिषेधयोर्विरोधः सिद्ध इत्यत्राह—**अत्रेति** । घटादिष्वस्तिनास्तिबुद्ध्योरित्यर्थः । एवकारो बाधस्य मूलाभावेन कैमुत्यनिरस्तत्वार्थः । अयं भावः—ब्रह्मरूपं सन्नास्मदादेर्दृश्यम् । दृष्टं तु सन्न घटादेराधारतया भाति, तद्रूपत्वात् । तत्र च निषिद्धे तस्मिन्निति मध्ये तन्मिथ्यात्वायोगात् । घटत्वादिधर्मास्तु शुक्तौ रूप्यत्ववत् स्वाश्रयभूते घटादौ सच्छब्दोक्ते न निषिध्यन्ते । सत्ता च घटादिधर्मतया न तद्देशत्वशङ्कार्हा । संप्रतिपन्नौ घटादिविधिनिषेधदेशकालौ तु भिन्नाविति । बाधरूपस्योपाधेः साधनव्यापकत्वपरिहाराय देशकालैक्यतो विरोधबाधव्यावृत्तीः शिक्षयति—**यस्मिन्निति** । देशकालग्रहणमुपलक्षणम् , **देशकालादीति** वक्ष्यमाणत्वात् । तत्रादिशब्देन कालाद्यवच्छेदकः क्रियादिस्तत्तदधिष्ठानस्वरूपं च गृह्यते ।

देशकालौ विहायापि ह्यन्यत्वं क्वापि कल्प्यते ।
तदेव तत्राधिष्ठानं प्रतीतोपाधिशब्दभाक् ।
देशकालान्तरत्वं च कल्प्यते देशकालयोः ॥ ४३१ ॥

अव्यवस्थितिपरिहाराय **बलवत** इत्युक्तम् । चकारो विरोधबाधाभ्यां सह निवृत्तेः समुच्चयार्थः, बाधितस्यैवेत्यवधारणार्थो वा । पूर्वोक्तव्यावृत्तिविशेष एवात्र निवृत्तिशब्देनाप्युक्तः । पक्षीकृते विरोधादित्रिकं नास्तीत्याह—**देशान्तरेति** । **अन्यत्र**शब्दौ विरोध्यभावतत्सद्भावस्थापनपरौ । स्वदेशादौ निवृत्तिवचनमग्न्यनुष्णत्ववत्स्यात्; ततोऽन्यत्र साधने तु सिद्धसाध्यता साध्याविशेषश्चेत्यभिप्रायेण **कथमुच्यत** इत्युक्तम् । "बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः" इति हि पूर्वपक्षोक्तम् । सपक्षे विरोधादीन् व्यनक्ति—**रज्जुसर्पादिष्विति** । देशकालविशेषसमुदायस्य प्रतिपन्नोपाधित्वात्तद्दृष्टप्रकारेण परोक्तहेतोर्व्याप्त्यभावं तत एवासाधकत्वं चाह—**इतीति** । पूर्व इतिः प्रकारे । उत्तरो हेतौ । मात्रचा बाधफलत्वव्युदासः । अत्रेदमाकूतम्—व्यावर्तमानत्वं नाम किंचिन्निष्ठात्यन्ताभावप्रतियोगित्वं वा, कुतश्चिदन्यत्वं वा, कस्याश्चिद्बुद्धेरविषयत्वं वा, प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा, अन्यद्वाकिंचित्? नाद्यः, उक्तस्य बाधितत्वस्योपाधित्वात् । असत्यस्य खनैल्यादेर्बाधादर्शनान्नसाध्यव्यापकत्वमिति चेत्—न ; ईश्वरादिबुद्ध्या बाधसिद्धेः; त्वया च कुतश्चिदसत्यत्वं तस्य गृहीत्वा चोद्यते । न च तस्योपाधेः साध्याविशिष्टत्वम् , अपरमार्थशब्देन मिथ्या-

त्वस्य बाधार्हत्वसदसदन्यत्वादेर्वा विवक्षितत्वे तदयोगात्। पूर्वपक्षोक्तं मिथ्यात्वलक्षणमपि बाधार्हत्वमेव, बाधितत्वस्यैव साध्यत्वे योग्यानुपलब्ध्या कालात्ययापदेशात्। सर्वदा सर्वेषामबाधितत्वं दुर्ज्ञानमिति चेत्, ब्रह्मणि कः समाश्वासः?

अनिर्वाच्येषु बाधश्च स्वकालासत्त्वमावहन्।
जनिध्वंसाभ्युपगमाद्दुर्वचो जनिबाधतः॥ ४३२॥

पश्चादभावः कार्येषु न साध्यः सिद्धसाधनात्।
नित्येषु तु विरुद्धत्वान्न चेद्ब्रह्मणि का गतिः?॥ ४३३॥

नित्यानित्यश्रुतिप्राप्तं ब्रह्मान्यत्कल्पनास्पदम्।
ब्रह्मण्यपि तथात्वोक्तिरविशेषात्प्रसज्यते॥ ४३४॥

ग्राहकाद्यनुपपत्त्या भेदबाधस्तु प्रागेवापास्तः। ब्रह्मणि चानिर्वाच्यनिष्ठात्यन्ताभावप्रतियोगित्वेनानैकान्त्यम्। यदि तस्मिन्नयं धर्मो मिथ्या, तदा सत्यस्यानिर्वाच्यधर्मत्वप्रसक्तिः। अन्ततः स्वनिष्ठात्यन्ताभावप्रतियोगित्वं च सिद्धम्। अन्यथात्माश्रयापातात्। आत्माधारत्वोक्तिस्त्वन्यपरा। न द्वितीयः; ब्रह्मण्यनृतजडाद्यन्यत्वस्य त्वयैवोक्तेः। तन्मिथ्यात्वे च सत्यपरिशेषे व्यावर्त्यासिद्धेस्तत्प्रतियोगिकव्यावृत्तिविधिविरोधोऽद्वैतमतभङ्गश्च जायते। असत्यपरिशेषे निरधिष्ठानभ्रमः। विरुद्धोभयैक्ये जैनादिप्रस्थितिः। व्यावर्त्तमानतादात्म्याच्च सतोऽपि तथात्वापत्तिः। मिथ्याभूतमेव च व्यावर्तमानत्वं घटादौ मिथ्यात्वसाधकं मन्यसे, ब्रह्मण्यपि स्यात्। न तृतीयः; सतोऽप्यसद्बुद्धेः; अनिर्वाच्यतद्विषयत्वे च तद्व्यावृत्तिसाधनायोगात्; स्वप्रकाशस्य सर्पबुद्ध्यविषयत्वाद्वा। भ्रान्त्या तद्विषयत्वमपि स्यादिति चेत्; तद्वत्पक्षीकृतेऽपि सर्पधीवेद्यत्वभ्रमः स्यादिति हेत्वसिद्धिः। त्रिष्वपि कल्पेषु सत्यानुमानदृष्टान्ततया त्वयैवोक्ते सर्पाद्यधिष्ठानरज्ज्वादौ हेतुवृत्तिर्दुर्वारा। कथं कस्यचित्सत्यत्वसाधनेऽन्वयदृष्टान्तस्य तदन्यासत्यत्वसाधने पक्षीकारः? व्यावहारिकव्यवस्थया दृष्टान्तत्वेऽपि तयैव तत्रासत्यत्वसाधनं बाध्येत। परमार्थसत्यत्वनिषेधे तु तद्दृष्टान्तेन ब्रह्मण्यपि व्यावहारिकसत्यत्वं वा सत्यत्वमात्रं वा निदर्शितं स्यात्। तथाच न विवक्षितसिद्धिः। परमार्थसत्यमिति साधने कथंचिद् दृष्टान्तः सिध्येत्। चतुर्थस्तु देशान्तरेत्यादिना निरस्तः। पञ्चमोऽपि यदि सर्ववर्ति, तदानैकान्त्यं स्थितम्। अथ न, तदा तस्यैव व्यावर्तमानतया मिथ्यात्वेन स्वरूपासिद्धेरसाधकत्वम्। असत्यात् सत्य-

सिद्धिस्तु दूषयिष्यते । साध्येऽपि सर्ववृत्तित्वकतिपयवृत्तित्वविकल्पेन ब्रह्ममिथ्यात्वादि स्यादेव ।

पक्षत्वे चास्य साध्यादेर्व्याघातो दुरतिक्रमः ।
अन्यथा सदसत्त्वादिविकल्पैरप्युपप्लवः ॥ ४३५ ॥

एवं ब्रह्मान्यत्वात्कल्पितत्वाद्भिन्नत्वादित्यादीनां प्रपञ्चमिथ्यात्वसाधकतया परोक्तानां सर्वेषामनुमानादीनां बाधोपाधिव्यभिचारव्याघातादयो दोषा यथायथं द्रष्टव्याः । 'यः प्रत्ययः स निरालम्बनः, यथा स्वप्नादिप्रत्ययः ; विमतं च तथा' इति योगाचारोक्ते तु "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रमुत्तरं भविष्यति । सर्वधियां च स्वेतरालम्बनशून्यत्वं वदतः स्वेष्टं संतत्यन्तरं क्षणान्तरं च न सिध्येत् । माध्यमिकस्तु कार्याणां पूर्वापरकालयोरसत्त्वेन मध्येऽप्यसत्त्वं साधयन् व्यावर्तमानत्वानुमानदूषणनयेन बाधादिभिर्निष्कास्यः । तन्मतं च "सर्वथानुपपत्तेश्च" इति प्रतिक्षेप्स्यति । यत्तु 'विगीतं मिथ्या दृश्यत्वात् शुक्तिरूप्यवत्' इति ब्रूथ, तत्र वेद्यत्वमात्रमेव हि हेतुः स्यात् ; दृष्टिगोचरत्वादेर्भागासिद्धेः । ततश्च ब्रह्मजिज्ञासेत्यादि स्थापयद्भिर्विपक्षे ब्रह्मण्यपि हेतुवृत्तिरेष्टव्या । अत एव 'आत्मा न दृश्यः आत्मत्वात् ; यन्नैवं तन्नैवं यथा घटः' इत्यपि न वाच्यम् ; आत्मादिशब्दैस्तन्निर्देशेन स्ववाग्विरोधात् । "आत्मा वा अरे द्रष्टव्यः" "दृश्यते त्वग्र्यया बुद्ध्या" "तमक्रतुं पश्यति वीतशोकः" इत्यादिभिर्बाधाच्च । "गूढोत्मा न प्रकाशते" "अद्रेश्यमग्राह्यम्" इत्यादिनिषेधस्तु तत्तद्वाक्यशेषैः "न चक्षुषा गृह्यते" इत्यादिविशेषनिषेधकवाक्यान्तरैश्च संकोच्यः । अन्यथा कथमद्वैतम् ? कथं वा द्रष्टृदृश्यसंबन्धानुपपत्तिः ? किं च विश्वाध्याधिष्ठानस्य यथादृष्टि तदेकधीविषयत्वं स्वीकार्यम्, अन्यथा निरधिष्ठानभ्रमापातात् । ब्रह्मणो धीविषयत्वं भ्रान्तिसिद्धमिति चेत्, अब्रह्मणोऽपि तथेति त्वमेव ब्रूषे । ब्रह्मणस्तु दृग्विषयत्वमात्रमिति चेन्न, तस्याभिलप्यमानत्वात् । घटादिवदनित्यस्वप्रकाशस्य प्रकाशरूपं फलं न साध्यमिति चेत्, कथं तर्हि ब्रह्मबुद्धेरध्यासनिवर्तकत्वम् ? स्वरूपत इति चेत्, तद्वद् घटादिष्वपि तदतिरिक्तव्यक्त्यभिव्यक्तिरूपफलक्लृप्तिर्न स्यात् ; प्राकट्यभङ्गन्यायाच्च । अतः साधारणे विषयत्वमात्रे हेतौ स्थितमनैकान्त्यम् । अपिच—

दृश्यत्वाद्यदि मिथ्यात्वं भासमानत्वतो न किम् ।
तत्र दोषांस्त्वदुक्तांश्च तुल्ययेत्तुल्यसौगतः ॥ ४३६ ॥

असिद्ध्युपाधिव्याघातबाधादिरुभयोः समः ।
अनैकान्त्यस्थलं तस्य नास्तीत्यतिशयो भवेत् ॥ ४३७ ॥
असत्यात्सत्यनिष्पत्तिप्रतिपत्ती च दर्शयन् ।
असत्यादप्यधिष्ठानादध्यासं किं न मन्यसे ? ॥ ४३८ ॥
विपक्षे बाधकादत्र वैषम्यमपि दुर्वचम् ।

दृग्दृश्ययोर्हि योगाचारोक्तवद्युक्तौ न हेतुर्दृश्यं भवेत् । साध्यं च तत्र मिथ्यात्वं सत्यं न वा ? आद्येऽपि धीस्वरूपमेव, अन्यद्वा ? पूर्वत्र तत्प्रकाशनित्यतया जगदध्यास एव न स्यात् । स्याच्चेत् सर्वत्र सर्वदाध्यासः स्यात् । अन्यथा बाधेऽपि । बाधितानुवृत्तिश्च त्वन्मते प्रागेव निरस्ता । अन्यत्वे सद्वितीयतापत्तिः । कथं चासत्यस्य सत्यो धर्मः ? खपुष्पे कोमलपरिमलशैत्यादेस्तथानुपलब्धेः । द्वितीये तु प्रपञ्चसत्यत्वापत्तिः । सत्यरजतादेर्ब्रह्मणश्च सर्वत्र सर्वदाध्यासः स्यात्, मिथ्यात्वे मिथ्याभूते तत्सत्यत्ववत् । न चेयं नित्यसमा, युक्ताङ्गहान्यादेः स्वव्याघातस्य चाभावात् । न च सत्यत्वं सत्यमसत्यं वेत्यादिप्रतिबन्दिः, तस्यासत्यत्वानभ्युपगमात्, तत्सत्यत्वे च घटादिसत्यत्वाविरोधात् । मिथ्यात्वमिथ्यात्वे तु वैपरीत्यदृष्टेः । अत एव नेदं स्वपरनिर्वाहस्थानम् । सत्यत्वं तु तथा स्यात्, उदाहृतस्वप्रकाशादिसमानयोगक्षेमत्वात् । अनवस्थापि तद्वन्निवर्त्या । अन्यथा कथं ब्रह्मणोऽपि सत्यत्वम् । स्वतश्चेत् सममेतत् । सत्यासत्यविवेकाभावे च सामान्यतो विशेषतश्च माध्यमिकेतरसर्वराद्धान्तव्यवस्थोच्छेदः ।

महीमिव च मर्यादामनधिष्ठाय शाश्वतीम् ।
पदन्यासो न चोराणां प्रच्छन्नप्रकटात्मनाम् ॥ ४३९ ॥
मर्यादास्थापनार्थं यौ मानतर्कौ समुत्थितौ ।
हिंस्रारण्यवदन्योन्यं गुप्तौ तौ स्वान्यसाधकौ ॥ ४४० ॥
परमर्यादया ब्रूमः परव्याहतिमित्यसत् ।
स्वव्याघातादिभङ्गानां परानङ्गीकृतेरिति ॥ ४४१ ॥

## मूलभावप्रकाशिका

प्रतिपन्नोपाधिगतत्रैकालिकनिषेधप्रतियोगित्वमेव मिथ्यात्वं, नान्यदेशीयनिषेधप्रतियोगित्वमित्याह—**तदनालोचितेति**। साध्यभूतमिथ्यात्वमेव दुर्वचम् । न च प्रतिपन्नोपाधौ

त्रैकालिकनिषेधप्रतियोगित्वं समानाधिकरणात्यन्ताभावप्रतियोगित्वमिति परैर्निरुक्तमिति वाच्यम्, श्रुत्या सिद्धोत्पत्तिकस्यापि 'यत्प्राणापादनीति निर्णीतसृष्टिक्रमवतोऽविद्योपादानकस्य तत्त्वज्ञाननिवर्त्यस्य प्रपञ्चस्य स्वरूपेण निषेधासंभवेन पारमार्थिकत्वाकारेण निषेधोऽभ्युपगन्तव्यः। स च पारमार्थिकत्वनिषेधपर्यवसितः। पारमार्थिकप्रपञ्चत्वं बाध्यत्वम्। बाध्यं च त्रैकालिकनिषेधप्रतियोगित्वम्। तत्रापि स्वरूपेण वा पारमार्थिकत्वाकारेण वेति विकल्पस्तदवस्थः। न च 'रूप्यं नास्ति' इति प्रतीतिबलात्प्रतियोगिस्वरूपसहिष्णुस्तत्पारमार्थिकत्वासहिष्णुरभावोऽङ्गीकर्तव्य इति वाच्यम्, तादृशस्याभावस्य स्वरूपप्रतियोगित्वासंभवेन पारमार्थिकाभावस्वरूपत्वस्यैवाभ्युपगन्तव्यत्वात्। अत एव परैः स्वरूपेण निषेधस्त्वापणस्थरूप्यस्यैव; शुक्तिरूप्यस्य तु पारमार्थिकत्वाकारेण निषेध इति स्वीकृतम्। न च ज्ञाननिवर्त्यत्वं बाध्यत्वं, तदेव मिथ्यात्वमित्यपि सुवचम्; 'एतावन्तं कालमज्ञानमासीत्, भ्रम आसीत्' इति सत्यत्वेन प्रतिपन्नयोरेव भ्रमाज्ञानयोः 'ज्ञानेन भ्रमो नष्टः, ज्ञानेनाज्ञानं नष्टम्' इति ज्ञाननिवर्त्यत्वानुभवेन 'शुक्तिज्ञानेन रूप्यं नष्टम्' इत्यनुभवेन च ज्ञाननिवर्त्यत्वस्य सत्यत्वविरोधिमिथ्यात्वरूपत्वासंभवात्।

" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥"

इति श्रुत्युक्तरीत्यास्माभिरपि प्रपञ्चस्य ज्ञाननिवर्त्यत्वाङ्गीकारात्, सेतुदर्शनादिनिवर्त्यस्य पापादेर्मिथ्यात्वाभावाच्च। न च ज्ञानत्वेन निवर्त्यत्वं मिथ्यात्वम्, तन्मतेपरोक्षज्ञानस्याज्ञानानिवर्तकतया तत्साधारणस्य ज्ञानत्वस्य निवर्तकतावच्छेदकत्वासंभवात। न चापरोक्षज्ञानत्वेन तन्निवर्त्यत्वं तदिति वाच्यम्, अपरोक्षज्ञानत्वस्याज्ञाननिवर्तकसाक्षिगतस्य निवर्तकतावच्छेदकत्वासंभवात्। वंशे त्वचा सर्पत्वाभावसाक्षात्कारस्य चाक्षुषसर्पत्वभ्रमानिवर्तकत्वेनापरोक्षज्ञानत्वस्य निवर्तकतावच्छेदकत्वासंभवेन लक्षणस्यासंभवापत्त्या तदिन्द्रियजन्यत्वघटितापरोक्षज्ञानत्वस्यैव निवर्तकतावच्छेदकत्वस्य वक्तव्यतया "तत्त्वमसि" इत्यादिवाक्यजन्यापरोक्षज्ञानस्येन्द्रियजन्याज्ञाननिवर्तकत्वाभावप्रसङ्गात्। नापि सद्भिन्नत्वं मिथ्यात्वम्, ब्रह्मभिन्नत्वरूपस्य तस्येष्टत्वात् सत्ताजातिमद्भिन्नत्वस्य तवाप्यनिष्टत्वादबाध्यभिन्नत्वमेव सद्भिन्नत्वमिति स्वीकर्तव्यम्। तच्च बाध्यत्वपर्यवसन्नम्; तच्च दूषितमेव। एतेन "प्रपञ्चोपशमः शिवाद्वैतस्वप्र-

काशमानन्दशून्यम्" "यत्र त्वस्य सर्वमात्मैवाभूत्" इत्यादिश्रुतिवशात् सर्वप्रपञ्चाध्यासाधिष्ठानब्रह्मचैतन्यमेव प्रपञ्चस्याभावः। ततश्च स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्। सत्यभूतस्य घटादेः स्वानधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वान्न तत्रातिव्याप्तिः। शुक्तिरूप्यादौ तु स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वं सिद्धम्। निरधिकरणब्रह्मचैतन्याभावप्रतियोगित्वे पर्यवस्यतीति निरस्तम्। "अनर्थोपशमं साक्षाद्भक्तियोगमपेक्षते" इत्यादिवत् प्रपञ्चोपशमशब्देन प्रपञ्चनाशकत्वस्यैव प्रतीतेः; अद्वैतपदेनापि द्वितीयाभावत्वस्यैव प्रतीतेरद्वितीयाभावरूपत्वस्याप्रतीतेः। "सर्वमात्मैवाभूत्" इत्यत्रापि सर्वस्मिन्नात्मव्यतिरिक्तत्वाभावमात्रस्यैव प्रतीत्या ब्रह्मणोऽभावरूपत्वाप्रतीतेर्ब्रह्मणः प्रपञ्चाभावरूपत्वे प्रमाणाभावात्। घटात्यन्ताभावस्य स्वाभावरूपघटवृत्तित्वेऽपि सत्यत्वाविरोधवदत्यन्ताभावत्वस्यात्यन्ताभावत्वाभावरूपस्वाभाववृत्तित्वेऽप्यत्यन्ताभावत्वस्य सत्यत्वप्रतीत्यप्रतिक्षेपवन्निरधिकरणब्रह्मचैतन्यरूपाभाववृत्तिः प्रपञ्च इति ज्ञानस्य प्रपञ्चसत्यत्वप्रतीतिर्प्रतिक्षेपकस्य स्वात्यन्ताभावाधिकरणवृत्तित्वस्यैव मिथ्यात्वरूपत्वस्योचितत्वात्। तस्य च दूषितत्वात्। नन्वधिकरण एवाभाव इति मते स्वाभाववृत्तित्वस्यैव सत्यत्वप्रतिक्षेपकत्वेन स्वसमानाधिकरणस्वप्रतियोगिकात्यन्ताभावबुद्धेः सत्यत्वबुद्ध्यप्रतिक्षेपकत्वमिति चेत्—न; न हि मतभेदमात्रेण बोधकसिद्धप्रतीतिर्भिद्यते। सर्वस्यापि जनस्य वस्तुनि सत्यत्वबुद्धिः प्रतिपन्नोपाधिस्थतत्प्रतियोगिकात्यन्ताभावज्ञानादेव निवर्तते, न तु स्वाभाववृत्तित्वज्ञानात्। अतोऽधिकरणातिरिक्तमभावं प्रतिक्षेप्त्रा प्रमेयत्ववद्वृत्तित्वमकामेनापि स्वीकार्यम्। न मृषावादिभिरधिकरणरूपस्य ब्रह्मणः स्ववृत्तित्वमङ्गीकृतम्, येन स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वेन प्रपञ्चस्यापारमार्थिकत्वं स्यात्। चैतन्यस्य चैतन्याभिन्नतया न विषयत्वं विषयविषयिभावरूपस्वरूपसंबन्धस्य द्विनिष्ठत्वादिति वदता अभेद आधाराधेयभावसंबन्धस्याभ्युपगन्तुमशक्यत्वात्। किंचेदं मिथ्यात्वं सत्यमसत्यं वा? आद्ये अद्वैतहानिः। द्वितीयेऽस्मदिष्टसिद्धिः। ननु प्रपञ्चस्य मिथ्यात्वं प्रपञ्चाभाव एव; स ब्रह्मरूपः सत्य इति चेत्—न; न हि प्रपञ्चप्रतियोगिकाभाव एव प्रपञ्चमिथ्यात्वम्, अपितु तत्समानाधिकरणः। न हि ब्रह्मरूपप्रपञ्चाभावः प्रपञ्चसमानाधिकरणो मृषावादिभिरिष्यते। ननु "अभावरूपा धर्मा नाद्वैतं निघ्नन्ति" इति मण्डनोक्तरीत्या अभावाद्वैतं स्वीक्रियते; ततश्च प्रपञ्चाधिकरणनिष्ठस्य प्रपञ्चात्यन्ताभावरूपस्य मिथ्यात्वस्य सत्यत्वे

न काप्यनुपपत्तिरिति चेत्—न; तथा सति चैतन्यविषयत्वरूपदृश्यत्वहेतोस्तत्र व्यभिचारापत्तेः। न च चैतन्यविषयत्वमभावे नास्तीति शक्यते वक्तुम्; तथा सति ब्रह्मचैतन्यस्य सर्वविषयकत्वाभावेन तत् सर्वज्ञं न स्यात्। अत एवाभावाद्वैतपक्षः परैरेव दूषितः। ननु मिथ्यात्वं मिथ्यैव; नैतावता प्रपञ्चस्य सत्यतापत्तिः, धर्मिसमसत्ताकधर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वात्। अत एव सत्यरजते विद्यमानं रजतत्वं स्वविरोधिरजतत्वप्रतिक्षेपकं शुक्तौ कल्पितम्। रजतत्वं धर्मिसमसत्ताकत्वाभावात् नारजतत्वप्रतिक्षेपकमिति चेत्—न; मिथ्यात्वं धर्मिसमसत्ताकत्वमित्युक्तेः। प्रपञ्चतदभावौ समानसत्ताकौ समानाधिकरणाविति पर्यवसितोऽर्थः। न चैतत्परैरभ्युपगन्तुं शक्यते, समसत्ताकयोर्भावाभावयोर्विरोधस्य परैरभ्युपेतत्वादित्यास्तां तावत्। अत एव दृश्यत्वहेतुरपि दुर्वचः, वृत्तिविषयत्वरूपदृश्यत्वस्य वा चैतन्यविषयत्वरूपदृश्यत्वस्य वा वेदान्तवेद्ये चैतन्याधीनव्यवहारविषये ब्रह्मणि सत्त्वेन व्यभिचारात्; तद्विषयकव्यवहारस्य तद्विषयकप्रकाशसाध्यत्वनियमेन चैतन्यविषयकव्यवहारस्य चैतन्यविषयकप्रकाशसाध्यत्वावश्यंभावेन चैतन्यप्रकाशस्य चैतन्यविषयकत्वावश्यंभावात्। न च—प्रकाशसामान्यं व्यवहारसामान्यहेतुः; आत्मव्यवहारे आत्माभिन्नप्रकाशो हेतुः; अनात्मव्यवहारे तद्विषयकप्रकाशो हेतुरिति वाच्यम्, आत्मानात्मसाधारण्येन तद्विषयकव्यवहारे तद्विषयकप्रकाशो हेतुरित्यैकरूप्योपपत्तौ वैरूप्यकल्पनाया अप्रामाणिकत्वात्। "तस्य भासा सर्वमिदं विभाति" इत्यत्र तस्येति षष्ठ्यर्थसंबन्धस्याभेदेऽप्यभ्युपगमवदभेदे विषयविषयिभावसंबन्धाभ्युपगमे दोषाभावात्। अत एव चैतन्यभिन्नत्वलक्षणं जडत्वं मिथ्यात्वहेतुरित्यपि निरस्तम्, चैतन्यभिन्नत्वस्य सत्यत्वमिथ्यात्वोदासीनत्वात्। अत एव देशपरिच्छिन्नत्वं वा कालपरिच्छिन्नत्वं वा वस्तुपरिच्छिन्नत्वं वा हेतुरित्यपि निरस्तम्। किंचिद्देशनिष्ठात्यन्ताभावप्रतियोगित्वलक्षणदेशपरिच्छिन्नत्वस्य वा, किंचित्कालनिष्ठात्यन्ताभावप्रतियोगित्वलक्षणकालपरिच्छिन्नत्वस्य वा सर्वदेशकालवृत्त्यभावप्रतियोगित्वलक्षणमिथ्यात्वासाधकत्वात्; कालस्य कालापरिच्छिन्नत्वेन देशस्य देशापरिच्छिन्नत्वेन तयोर्भागासिद्धेश्च। वस्तुभिन्नत्वरूपवस्तुपरिच्छिन्नत्वस्यानृतजडपरिच्छिन्ने ब्रह्मणि व्यभिचारात्। न च धर्मिसमसत्ताकवस्तुभिन्नत्वं मिथ्यात्वहेतुः; ब्रह्मगतो भेदश्च न ब्रह्मसमसत्ताक इति वाच्यम्, मिथ्यात्वसिद्ध्यनन्तरसिद्धिकसत्ताभेदस्य मिथ्यात्वसाधन-

दशायामुपन्यासानर्हत्वात् । एषां च हेतूनामसद्विलक्षणत्वादिना सत्प्रतिपक्षितत्वात् प्रत्यक्षबाधितत्वाच्च हेत्वाभासत्वादसाधकत्वमित्यादिदूषणान्यभिप्रेतानि ।

### श्रीभाष्यम्

**यत्त्वनुवर्तमानत्वात् सत् परमार्थ इति, तत् सिद्धमेवेति न साधनमर्हति । अतो न सन्मात्रमेव वस्तु ।**

### श्रुतप्रकाशिका

अथ पारमार्थ्यसाधकत्वेनोक्तमनुवर्तमानत्वं दूषयति—**यत्त्वित्यादिना** । प्रमाणसंबन्धार्हतत्तद्घटादिस्वरूपस्य सच्छब्दवाच्यस्य किं पारमार्थ्यं साध्यते, उताधिष्ठानतयानुवृत्तस्यार्थान्तरस्येति विकल्पे द्वितीयशिरस्याश्रयासिद्धिमभिप्रेत्य प्रथमे शिरसि सिद्धसाधनत्वं दूषणमुक्तम् । ननु सदेव परमार्थ इति हि ग्रन्थकाराभिप्रायः, तत्कथं सिद्धसाधनत्वमिति चेत्, उच्यते—एतदनुमानं किं सतः पारमार्थ्यसाधकम्? उत व्यतिरिक्तापारमार्थ्यस्य? उतोभयस्य? प्रथमे सिद्धसाध्यता; द्वितीये व्यधिकरणासिद्धता; तृतीये अंशे सिद्धसाध्यता, अंशे व्यधिकरणासिद्धिश्चेति । निगमयति—**अत इति** ।

### भावप्रकाशिका

**प्रथमे शिरसि सिद्धसाधनत्वं दूषणमुक्तमिति;** अत्र केचित्—सन्मात्रं सर्वासु प्रतिपत्तिष्वनुवर्तमानं दृश्यत इति 'सत्परमार्थः' इति सन्मात्रशब्दितसत्तासामान्यस्यानुवर्तमानतया पारमार्थ्यमुपक्षिप्तं पूर्वपक्षे । तत्र सत्तासामान्यस्यानुवर्तमानतया पारमार्थ्योपपादनं सिद्धसाधनमेव । विशेषाणां व्यावर्तमानतयाऽपारमार्थ्यापादनं ह्यनिष्टमिति भाष्ये स्पष्टोऽर्थः प्रतीयते । नात्र विकल्पमुखेन ग्रन्थावतरणं युज्यते । तथाहि सति सच्छब्दस्य प्रमाणसंबन्धार्हघटादिपरत्वे "अतो न सन्मात्रमेव वस्तु" इत्युत्तरभाष्यविरोधः, प्रमाणसंबन्धार्हत्वस्यैव वस्तुत्वेन सिद्धान्तिनोऽपि संमतत्वात् । किंच **ननु सदेव परमार्थ इति हि ग्रन्थकाराभिप्रायः** इत्याक्षेपसमाधाने अप्यस्थानविजृम्भिते । अनुवर्तमानत्वं सत्पारमार्थ्यसाधकम्; व्यावर्तमानत्वमितरापारमार्थ्यसाधकम्, द्वाभ्यां च हेतुभ्यां सन्मात्रशब्दितसत्तारूपसामान्यस्यैव पारमार्थ्यं, नेतरेषामित्युक्ततया अनुवर्तमानत्वहेतुसाध्यतया पराभिमतस्य सत्तापारमार्थ्यस्य स्वमतेऽपि सत्त्वेन सिद्धसाधनस्य सिद्धतयाक्षेपस्य वा विकल्पमुखेन समाधानस्य वा अप्रसक्तेरिति मन्यन्ते—तदिदम-

सारम्; अधिष्ठानतयानुवर्तमानस्य पराभिमतस्य सच्छब्दितस्यापि पारमार्थ्यं सिद्धान्तिसंमतमिति शङ्काव्युदासार्थं विकल्पमुखेनैव ग्रन्थस्यावतरणीयत्वात्। न चैवम्—"अतो न सन्मात्रमेव वस्तु" इत्युत्तरभाष्यविरोध इति वाच्यम्, "न सन्मात्रमेव वस्तु" इत्यत्र 'साधनार्हम्' इति शेषः पूरणीयः। प्रमाणसंबन्धार्हवस्तुनः पारमार्थ्यस्य सिद्धत्वेन तस्य साधनानर्हत्वादित्याशयात्। यदुक्तम् "ननु सदेव परमार्थ इति हि ग्रन्थकाराभिप्रायः" इत्याक्षेपसमाधानयोरस्थानविजृम्भितत्वमिति; तन्न; "सदेव परमार्थ इति हि ग्रन्थकाराभिप्रायः" इत्यत्र वर्णित इति शेषः। ततश्च यद्यनुवर्तमानत्वात् सत्परमार्थ इत्युच्येत, तदा हि सिद्धसाधनशङ्का स्यात्। अनुवर्तमानत्वात् सदेव परमार्थ इत्येतावत्साध्यम्; अतो न सिद्धसाधनमित्याक्षेपसंभवात्। **व्यधिकरणासिद्धेति**; अनुभूतिव्यतिरिक्तमपरमार्थः, अनुभूतेरनुवर्तमानत्वादित्युक्ते हेतोः पक्षावृत्तेरसिद्धिः स्यादित्यर्थः। **तृतीयेंऽशे सिद्धसाध्यतेति**; अनुभूतिरूपसत्तद्व्यतिरिक्तौ परमार्थापरमार्थौ, अनुवर्तमानत्वादित्युक्ताविप्यर्थः।

### श्रुतप्रदीपिका

अथानुवर्तमानत्वहेतोः सिद्धसाध्यतामाह—**यत्त्विति**। अत एव सत्यत्वे व्यधिकरणासिद्धिः। विरोधेंऽशे सिद्धसाध्यता चेति भावः।

### तत्त्वटीका

अथ सत्पारमार्थ्यसाधने साध्यस्य सिद्धतया हेत्वंशो दूष्य इत्यभिप्रयंस्तत्पुरः सरमनुवक्ति—**यत्त्विति**। तदेतन्माध्यमिकं प्रति दुर्वचम्, दृष्टान्ताद्यसिद्धेः। अस्मान्प्रति त्वत्परिभाषया व्यावहारिकस्य वा प्रातीतिकस्य वा सतः पक्षीकारे सिद्धसाध्यता, प्रातीतिकसतोऽपि स्वदेशादौ सिद्धत्वात्। तव तु प्रतिज्ञाविरोधः। परमार्थसतः पक्षीकारे तु सत्परमार्थ एवेति वा, सदेव परमार्थ इति वा विवक्षितम्; पूर्वत्र सिद्धसाध्यता धर्मिसाध्यपदयोरैकार्थ्यं चेत्यभिप्रायेणाह—**तदिति**। उत्तरस्योत्तरमाह—**अत इति**। अयं भावः—साध्यस्यायोगव्यवच्छेदे तावत् तदन्यमिथ्यात्वं नोक्तं स्यात्। अन्ययोगव्यवच्छेदे अनुवर्तमानत्वादिति हेतुरपक्षस्थः। अन्यथापि विरुद्धश्च। उभयसाधने त्वंशत उभयदोषापत्तिः। सत् स्वेतरपरमार्थशून्यमिति विवक्षायां रज्ज्वादिदृष्टान्तः साध्यविकलः। तदनारोपितपरमार्थसिद्धेः। अयं तु निगमनग्रन्थ इति केचित्। तदा सच्छब्दवाच्यां-

शवद् घटादिवाच्यांशोऽपि वस्त्वित्याशयः। अनुवर्तमानानुभूतिरेव परमार्थ इति प्रागुक्तमप्येतेन निरस्तं वेदितव्यम्।

सत्सदित्यनुवृत्त्या च सतः सत्यत्वसाधने।
नास्तित्वाद्यनुवृत्त्यापि तत्सत्यत्वं न किं भवेत्॥ ४४२॥
घटो नास्तीति बोधेऽपि तन्नास्तित्वास्तितास्ति चेत्।
घटोऽस्तीति विधानेऽपि किं न नास्तित्वनास्तिता॥ ४४५॥
घटादिसत्ता सत्या चेद् घटादेः सत्यता न किम्।
न त्वदिष्टानुवृत्तिः स्याद्यदि सा व्यावहारिकी॥ ४४४॥
किंचानुमानसिद्धत्वं शास्त्रसिद्ध्यै निरस्यता।
प्रत्यक्षादिप्रसिद्धत्वं शास्त्रेणैव निरस्यते॥ ४४५॥

## मूलभावप्रकाशिका

**तत्सिद्धमेवेति**; यद्यपि प्रमाणसंबन्धार्हघटादिस्वरूपरूपसतो नानुवृत्तत्वं, तथापि प्रमाणसंबन्धार्हत्वरूपस्य सतोऽनुवृत्तत्वात् परमार्थत्वाच्च सिद्धसाधनतोक्तिरिति द्रष्टव्यम्। **न सन्मात्रमेवेति**; सन्मात्रशब्देन प्रमाणसंबन्धार्हत्वलक्षणसत्तोच्यते, प्रमाणसंबन्धार्हमात्रमेव न वस्त्विति वाक्यार्थः; प्रमाणसंबन्धार्हभिन्नस्यावस्तुत्वादिति द्रष्टव्यम्।

## श्रीभाष्यम्

**अनुभूतिसद्विशेषयोश्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वादबाधितत्वाच्चानुभूतिरेव सतीत्येतदपि निरस्तम्।**

## श्रुतप्रकाशिका

परेण प्रमाणप्रमेयानुपपत्तिकृतं भेददूषणमुपजीव्यानुभूतिसतोर्भेदोऽपास्तः। अत्र च भेददूषणहेत्वाभासनिरासमुपजीव्यानुभूतिसतोरभेदश्च निरस्यते—**अनुभूतीत्यादिना**। **अनुभूतिसद्विशेषयो**रित्यत्र विशेषशब्देनानुवर्तमानत्वहेतोराश्रयासिद्धिः सूच्यते, सच्छब्दवाच्यस्य वस्तुनो व्यावृत्तत्वादनुवृत्तार्थान्तराभावाच्च। सच्छब्दः प्रमाणसंबन्धयोग्ये हि वर्तते। 'घटः सन्, पटः सन्' इत्यनुवृत्तव्यवहारो व्यावृत्तशब्दवदुपपन्न इति प्रमाणसंबन्धार्हाः पदार्थाः परस्परव्यावृत्ताः सच्छब्दवाच्याः।

भावप्रकाशिका

आश्रयासिद्धमेवोपपादयति— **सच्छब्दवाच्यस्येति** । **व्यावृत्तशब्दवदुपपन्न इतीति ;** इतरथा 'घटो व्यावृत्तः, पटो व्यावृत्तः' इत्यनुगतव्यवहाराद्व्यावृत्तशब्दितमनुवृत्तपदार्थान्तरं सर्वाध्यासाधिष्ठानभूतमुपेयं स्यात् । तथा 'खपुष्पमसत्, नृशृङ्गमसत्' इत्यनुवृत्तव्यवहारादनुवृत्तेऽसति व्यावृत्तनृशृङ्गादिकं कल्प्यमिति स्यादिति भावः ।

श्रुतप्रदीपिका

मिथ्यात्वनिरासमुपजीव्य धीसदैक्यं निरस्यति— **अनुभूतीति** । अनुवर्तमानत्वस्य स्वरूपासिद्धिं सूचयितुं विशेषशब्दः, मानार्हसद्विशेषातिरिक्तानुवृत्तवस्त्वभानात् ।

तत्त्वटीका

'सैव सती' इत्युक्तमपि भेदसाधकनिस्तारं पूर्वं निरस्यति— **अनुभूतीति** । अनुभूतेरपि सद्रूपतया तत्र सदनुभूत्योर्भेदायोगात् तद्व्यावृत्तघटादिव्यञ्जनाय **विशेषशब्दः** । यदानुभूत्यन्तरेण विषयीक्रियते तदापि घटतद्धीन्यायात् विषयविषयिणोः सतोर्भेदः सिद्धः । परेष्टानुवर्तमानत्वासिद्धिव्यञ्जनार्थो वा **विशेषशब्द** इति केचित् ।

मूलभावप्रकाशिका

अनुभूतिरेव परमार्था, सैव सतीति पूर्वपक्षोक्तं दूषयति— **अनुभूतिसद्विशेषयोरिति ;** अनुभूतयोरपि सद्रूपत्वेनानुभूतिसतो भेदस्याप्रत्यक्षसिद्धत्वादित्युक्तेरसंभवात् । सद्विशेषेत्युक्तसद्विशेषशब्देन घटादयो विवक्षिताः । **अबाधितत्वाच्चेति ;** सद्विशेषणस्येति शेषः ।

श्रीभाष्यम्

**यत्त्वनुभूतेः स्वयंप्रकाशत्वमुक्तं तद्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव ; न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति, परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञानविषयत्वात्, स्वानुभवस्याप्यतीतस्य 'अज्ञासिषम्' इति ज्ञानविषयत्वदर्शनाच्च । अतोऽनुभूतिश्चेत् स्वतःसिद्धेति वक्तुं न शक्यते ।**

### श्रुतप्रकाशिका

अथ परोक्ते स्वयंप्रकाशत्वेऽभिमतेऽपि तत्र शिक्षणीयांशोऽस्तीत्यभिप्रायेणाह— **यत्त्वनुभूतेरिति** । तुः पक्षवैषम्ये । वक्तव्यांशमाह— **तद्विषयप्रकाशनवेलायामिति** । उत्तरत्र "वर्तमानदशायाम्" इति हि वक्ष्यते । तत्र ज्ञानस्य नित्यद्रव्यत्वेन सदा वर्तमानत्वाद्वर्तमानदशायामिति पदं निरर्थकमिति शङ्कापनुत्तये विषयप्रकाशनवेलायामित्युक्तम् । वर्तमानदशाशब्देन विषयसंबन्धप्रसरस्य वर्तमानता विवक्षितेत्यवगम्यते । **न तु सर्वेषाम्** इत्येतदुपपादयति— **परानुभवस्येति** । **सर्वदे**त्येतदुपपादयति— **स्वानुभवस्यापीति** । **अनुभूतिश्चे**दित्यनेन स्वाश्रयं प्रति विषयप्रकाशनवेलायामित्युक्तवैषम्यविरहो गर्भितः ।

### श्रुतप्रदीपिका

अथ स्वप्रकाशत्वे शिक्षणीयांशं वक्तुमनुवदति— **यत्त्विति** । वक्तव्यांशमाह— **तदिति** । न तु सर्वेषां सर्वदेत्येतद्ग्रन्थद्वयेनोपपादयति— **परेत्यादिना** । सर्वदेत्येतदुपपादयति— **स्वानुभवस्यापीति** । अनुभूतेरनुभाव्यत्वादसंभवे परोक्तानुमानं दूषयति— **अनुभूतिश्चेदिति** । उक्तवैषम्यविरहोऽभिप्रेतः ।

### तत्त्वटीका

तुच्छत्वपरिहाराय परोक्तं स्वतःसिद्धत्वं तथात्वग्राहकाभावे स्वाश्रयेण सह तुच्छत्वं स्यादिति वक्तुमनुवक्ति— **यत्त्विति** ; तुशब्दोऽत्र युक्तायुक्तांशविशेषव्यावृत्त्यर्थः । स्वयंप्रकाशत्वोक्त्यान्यनिरपेक्षप्रकाशत्वस्याश्रयतः कालतश्चात्यन्तायोगव्यवच्छेदो वा अन्याधीनप्रकाशत्वात्यन्ताभावो वाभिप्रेत इति विकल्पं मत्वा प्रथमे सिद्धसाध्यतामाह— **तदिति** । **ज्ञातुः** ; स्वाश्रयस्येत्यर्थः । द्वितीयं दूषयति— **न त्विति** । तु शब्दोऽवधारणपरः स्वानभ्युपगतांशविवेके वा । **सर्वेषां सर्वदे**त्यनूदितस्य नियमद्वयस्य बाधं ग्रन्थद्वयेनाह— **परानुभवस्येति** । आदिशब्देन प्रेक्षणपुलकादिसंग्रहः । अतीतोदाहृतिरागाम्युपलक्षणार्था । स्ववचनविरोधं सूचयन्नियमाभावं निगमयति— **अत इति** । **अनुभूतिश्चेदिति** ; अनेनाश्रयकालरूपविशेषणद्वयरहितस्वरूपानुवादः ।

### मूलभावप्रकाशिका

**तथैवेति** ; यद्यप्यवेद्यत्वघटितं पराभिमतं स्वप्रकाशत्वं स्ववृत्तिवर्तमानज्ञानस्य नाभ्युपगमार्हं, तादृशस्य ज्ञानस्य 'त्वं जानासि' इति वाक्यजन्यज्ञानविषयत्वसंभवात्,

तथापि ज्ञानान्तरनिरपेक्षस्वप्रकाशत्वलक्षणस्वप्रकाशत्वमभ्युपेत्य **तथैवेत्युक्तमिति** द्रष्टव्यम्। **अनुभूतिश्चेदिति**; अनुभूतित्वावच्छिन्नं स्वतः सिद्धमिति न शक्यते वक्तुमित्यर्थः।

### श्रीभाष्यम्

**अनुभूतेरनुभाव्यत्वेऽननुभूतित्वमित्यपि दुरुक्तम्; स्वगतातीतानुभवानां परगतानुभवानां चानुभाव्यत्वेनाननुभूतित्वप्रसङ्गात्। परानुभवानुमानानभ्युपगमे च शब्दार्थसंबन्धग्रहणाभावेन समस्तशब्दव्यवहारोच्छेदप्रसङ्गः। आचार्यस्य ज्ञानवत्त्वमनुमाय तदुपसत्तिश्च क्रियते। सा च नोपपद्यते। न चान्यविषयत्वेऽननुभूतित्वम्। अनुभूतित्वं नाम वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वं, स्वसत्तयैव स्वविषयसाधनत्वं वा। ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे नापगच्छत इति नानुभूतित्वमपगच्छति। घटादेस्त्वननुभूतित्वमेतत्स्वभावविरहात्, नानुभाव्यत्वात्। तथानुभूतेरननुभाव्यत्वेऽप्यननुभूतित्वप्रसङ्गो दुर्वारः, गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात्।**

### श्रुतप्रकाशिका

एवमनुभूतेरनुभाव्यत्वसंभवमुपपाद्य तदसंभवे परोक्तमनुमानं दूषयति—**अनुभूतेरिति**। कुत इत्यत्राह—**स्वगतेति**। परानुभवानुमेयत्वानभ्युपगमे लौकिकव्यवहारविरोधमनिष्टमाह—**परेति**। अथ वैदिकव्यवहारविरोधमाह—**आचार्यस्येति**। **परानुभवानुमानानभ्युपगम** इत्यादिना चार्वाकनिरासश्च फलितः, अनुमानानभ्युपगमे शब्दार्थसंबन्धग्रहणायोगात्। एवं बाध उक्तः। अथ व्याप्तिं दूषयति—**न चान्येति**। न ह्यसाधारणाकारो धर्मिग्राहकमानसिद्धः साधारणाकारे सत्यपगच्छतीत्यभिप्रायेणानुभूतिस्वरूपं शिक्षयति—**अनुभूतित्वमिति**। अत्रानुभूतिशब्दो ज्ञानमात्रपरः, न तु स्मृतिविलक्षणपरः। **प्रकाशमानत्व**मित्युक्ते घटादेरप्यनुभूतित्वं स्यादिति तद्व्यावृत्त्यर्थं **स्वाश्रयं प्रतीत्यु**क्तम्। अणुत्वनित्यत्वाद्यात्मधर्माणां ज्ञानान्तरप्रकाश्यत्वात्तद्व्यावृत्त्यर्थं **स्वसत्तयैवे**त्युक्तम्।

अतीतानुभवव्यावृत्त्यर्थं **वर्तमानदशाया**मित्युक्तम् । यद्यप्यतीतानुभवस्य ज्ञानान्तरमन्तरेण प्रकाशानुपपत्तेरर्थाद्व्यवच्छेदः, तथाप्यतीतस्य ज्ञानान्तरेण सिद्धिं परानभिमतां व्युत्पादयितुमिदं विशेषणम् । विषयसंबन्धस्य वर्तमानदशायामित्यर्थः । वर्तमानदशायां स्वसत्तयैव प्रकाशमानत्वमित्युक्ते परानुभवे तदसंभवात् तद्व्यावृत्त्यर्थं **स्वाश्रयं प्रती**त्युक्तम् । एतल्लक्षणं स्वयंप्रकाशत्ववादिनामेवेष्टमिति सर्वसंप्रतिपन्नं लक्षणमाह––**स्वसत्तयैवे**ति । 'स्वाश्रयं प्रति' 'वर्तमानदशायाम्' इति पदद्वयानुकर्षस्योपलक्षणं **स्वसत्तयैवे**ति पदम् । साधनत्वमित्युक्ते दण्डचक्रादेरपि तथात्वात्तद्व्यावृत्त्यर्थं **विषयसाधन**त्वमित्युक्तम् । चाक्षुषज्ञानं श्रावणं विषयं न साधयतीति सर्वविषयसाधनत्वासंभवव्यावृत्त्यर्थं **स्व**शब्दः । इन्द्रियव्यावृत्त्यर्थं **स्वसत्तयैवे**ति पदम् । इन्द्रियादिकं हि न केवलं स्वसत्तया प्रकाशकम्, अपितु ज्ञानोत्पादनद्वारा । **वर्तमानदशाया**मित्यतीतानुभवव्यावृत्तिः । **स्वाश्रयं प्रती**ति परानुभवव्यावृत्तिः । ततः किमित्यत्राह––**ते चे**ति । एवमननुभाव्यत्वलक्षणसाध्यधर्मप्रतिक्षेपेणानुभाव्यत्वेनानुभूतित्वस्य सामानाधिकरण्यदर्शनादननुभाव्यत्वेन व्याप्तिर्निराकृता । तर्हि कथमनुभाव्यत्वेऽननुभूतित्वदर्शनमिति शङ्कायां सोपाधिकत्वमाह––**घटादेस्त्वि**ति । **अननुभूतित्वम्**; अनुभूतिशब्देन व्यवहर्तव्यत्वाभाव इति न साध्याविशिष्टता । यद्वा उक्तयोर्लक्षणयोरन्यतरदनुभूतित्वं, न तु समुच्चितमुभयम्; अन्योन्यनिरपेक्षत्वात्, वाशब्दप्रयोगाच; न हि चशब्दः प्रयुक्तः । तत्रान्यतरलक्षणराहित्यरूपमननुभूतित्वमन्यतराकारविरहप्रयुक्तमिति सोपाधिकत्वमित्यर्थः । अथ प्रतितर्कपराहतिमाह––**तथानुभूतेरि**ति । यद्वा आभाससमानयोगक्षेमत्वमाह––**तथानुभूतेरि**ति ।

## भावप्रकाशिका

**तदसंभवे परोक्तमनुमनामिति**; अनुभाव्यत्वासंभवसाधनं परोक्तमित्यर्थः । **शब्दार्थसंबन्धग्रहणायोगादिति**; प्रयोज्यवृद्धस्य गवानयनप्रवृत्त्या तदीयकार्यताज्ञानमनुमाय तत्र पदशक्तेर्ग्राह्यत्वादिति भावः । **अतीतानुभवव्यावृत्त्यर्थमिति**; अतीतानुभवे तल्लक्षणातिव्याप्तिनिवृत्त्यर्थमित्यर्थः । आतीतदशायां प्रकाशस्यावर्तमानतया शानजभिहितप्रकाशवर्तमानत्वस्याभावात् सत्तयैव प्रकाशमानत्वस्य तत्रासंभवः प्रसज्येतेति तद्व्यावृत्त्यर्थमित्यर्थः । **यद्यप्यतीतानुभवस्येति**; अयमर्थः––अतीतानुभवस्थले स्वसत्ताया एवाभावात् प्रकाशाव्यभिचारिस्वसत्ताकत्वमस्त्येव; अतीतदशायामवस्थाविशेषविशिष्टस्वरूप-

स्यैवाभावाल्लक्षणस्य नाव्याप्तिः ; तथाप्यर्थविशेषव्युत्पादनाय **वर्तमानदशाया**मित्युक्तमिति । अयमत्राशयः—ज्ञानान्तरमन्तरेण प्रकाशानुपपत्तेः प्राप्तस्यातीतानुभवे लक्षणाभावस्य सत्त्वेति पदेनैवार्थाद्व्यवच्छेदसिद्धेर्वर्तमानदशायामिति निरर्थकमिति नेत्युपाधित्वनिरासाय पक्षे तत्प्रसञ्जयतीत्यननुभूतित्वलक्षणसाध्यव्यापकस्याज्ञानाविरोधित्वस्यानुपाधित्वस्फोरणाय साधनव्यापकत्वं पक्षवृत्तित्वप्रसञ्जनेन दर्शयतीति ।

### श्रुतप्रदीपिका

अथ व्यतिरेकिणमनुवदति—**अनुभूतेरिति** । अनिष्टं प्रसञ्जयति—**स्वगतेति** । परधियो वेद्यत्वानुपगमे लौकिकवैदिकव्यवहारविरोधौ ग्रन्थद्वयेनाह—**परेत्यादिना** । अथ कालात्ययापदेशं वक्ति—**न चेत्यादिना** । तदर्थं धीस्वरूपं शिक्षयति—**अनुभूतित्वमिति** । घटदृष्टातीतानुभवा व्यावृत्ताः । पक्षान्तरमाह—**स्वेति** । दण्डचक्रेन्द्रियासंभवा व्यावर्त्याः । इन्द्रियं हि न स्वसत्तयैव, किंतु ज्ञानद्वारा साधनम् । परातीतधीव्यावर्तकपदद्वयानुषङ्गः । ततः किमित्यत्राह—**ते चेति** । न हि साधारणाकारोऽसाधारणाकारविरोधीति भावः । अथ सोपाधिकत्वमाह—**घटादेस्त्विति** । प्रतितर्कपराहतिमाह—**तथेति** । "ख्यातेर्नासत्" इत्यसतोऽपि निषेधाधिकरणत्वस्य परैरुपगमात् दृष्टान्तता ।

### तत्त्वटीका

ननु व्यतिरेकिबलाद्वेद्यत्वमवच्छेदकवृत्तिमात्रस्य, न तु साक्षादनुभूतेरित्यत्र हेतुदूषणाय तदनुग्राहकतर्कं दूषयितुमनुवक्ति—**अनुभूतेरिति** । व्याप्तिरूपाङ्गवैकल्यमाह—**स्वगतेति** । अनुभूतिशब्दार्थो हि लोकतोऽवसेयः । अतो न घटादिज्ञानेष्वनुभूतित्वं त्यक्तुं शक्यम् । तत्र च वेद्यत्वमनुभूतित्वं च सह दृष्टम् । वृत्तिपक्षेऽपि तदुपहितसंवित्स्वरूपग्रहणं सिद्धम् । अतोऽत्र तर्कस्यानुमानस्य च व्याप्तिर्दुर्ग्रहा । अवेद्यत्वसाधनं च कालात्ययापदिष्टं धर्मिसाध्यहेत्वादिपदनैरर्थक्यप्रसङ्गहतं च । धाष्टर्याद् दृष्टापह्नवे लौकिकवैदिकसर्वव्यवहारभङ्गमाह—**परेति** । अयं भावः—'गामानय' इत्यादौ वा, 'पुत्रस्ते जातः' इत्यादौ वा वक्ष्यमाणभाष्यप्रकारेण चेष्टासहचरिताम्बादिशब्दप्रयोगे वा व्युत्पद्यमानानां परबुद्धयनुमानसापेक्षत्वं सिद्धम् । तदभावे सर्वेषामव्युत्पन्नतया न मिथो भाषणं न च दृष्टादृष्टसर्वविद्यास्थानप्रवृत्तिः स्यादिति । अदृष्टार्थप्रवृत्तौ विशेषतश्चोदाहरति—**आचार्यस्येति** । तदनुमानाभावोऽनिष्टं प्रसञ्जयति—**सा चेति** । एवं वादिप्रतिवादि-

शिष्यादिबुद्ध्यनुमानं द्रष्टव्यम् । ननु वेद्यत्वप्रयुक्तमेवाननुभूतित्वं घटादौ दृष्टम्; इहापि तदभ्युपगमे तत्प्रसङ्गो दुर्वार इत्यत्राह—**न चेति** । वेद्यत्वं नाननुभूतित्वव्याप्यमित्यर्थः । अननुभूतित्वप्रसङ्गं परिहर्तुं तत्प्रतियोगिस्वरूपं लक्षणतः शिक्षयति—**अनुभूतित्वमिति** । अहमर्थात्मत्वस्य परेणानभ्युपगमादहमिदमर्थाभ्यामुपहितानुभूतिरत्रावेद्यत्वेन साध्यते । तस्याश्च कस्यचित्प्रकाशरूपत्वमनुभूतित्वम्; स्वगोचरज्ञानमनपेक्ष्य स्वाश्रयाय प्रकाशमानत्वं च तल्लक्षणम् । **वर्तमानदशा**; विषयग्रहणकालः । तदुक्तिः पूर्वोत्तरदशयोर्वेद्यत्वदृष्ट्या **स्वसत्तयैवे**त्यवधारणव्युदासार्था । वर्तमानदशायामप्यहमर्थान्तरेण वेद्यत्वदर्शनात् **स्वाश्रयं प्रतीति** विशेषितम् । तेनैव स्वप्रकाशात्मव्यावृत्तिश्च । स्वाश्रयं प्रति प्रकाशमानेभ्य आत्मधर्मान्तरेभ्यो व्यावृत्त्यर्थं **स्वसत्तयैवे**त्युक्तम् । परस्याप्यत्र काल्पनिक आश्रयाश्रयिभावः सिद्धः । स्वसत्तया चानुभूतिः कल्पितस्वाश्रयाय प्रकाशते । उक्तं लक्षणमस्वयंप्रकाशवादिभिर्नाङ्गीक्रियते । अतस्तैरपि स्मृतमनुभूतेर्लक्षणान्तरमाह—**स्वसत्तयेति**; कस्यचिदर्थस्य साक्षाद्व्यवहारानुगुण्यापादकमित्यर्थः । तेनेन्द्रियादिव्यवच्छेदः । अत्र ह्यवधारणं नैरपेक्ष्यपरम् ।

सापेक्षहेतुभिः सिद्धं कारणं सहकारिभिः ।
एवं सर्वत्र सापेक्षे तदन्यैरनपेक्षता ॥ ४४६ ॥

'**वर्तमानदशायां**' '**स्वाश्रयं प्रति**' इत्युभयमिहापि योज्यम् । सिद्धान्ते त्वहमर्थस्यात्मनो ज्ञानरूपत्वे विषयाश्रयोपधानाभावात्ततो व्यावृत्तिः । उभयसाधारणं लक्षणमनुक्त्वा प्रकृतप्रयुक्तं लक्षणमिहोक्तम् । अनयोर्लक्षणयोरत्र निरर्थकं वचनमिति शङ्कायां तयोर्वेद्यत्वेन सहदृष्ट्या तदाश्रयेऽनुभूतित्वाभावस्य प्रसञ्जयितुमशक्यत्वमाह—**ते चेति** । **स्वानुभवसिद्धे** इति हेतुगर्भं द्विवचनान्तम् । सप्तम्यन्तत्वे त्वनुभवो विशेष्योऽध्याहार्यः । यदि वेद्यत्वेऽप्यनुभूतित्वं स्यात्, अन्यत्रापि किं न स्यादित्यत्राह—**घटादेरिति** । **तुः** स्वभाववैचित्र्यपरः, शङ्काव्युदासार्थो वा । अननुभूतित्वं कस्यचित्प्रकाशात्मत्वाभावः, अनुभूतिशब्दानभिलप्यत्वं वा । **एतत्स्वभावविरहात्**; उक्तलक्षणद्वयासंभवात् । घटादिष्वन्यप्रयुक्तेऽननुभूतित्वे वेद्यत्वस्य तद्व्याप्त्यभावं व्यनक्ति—**नानुभाव्यत्वादिति** । तर्कस्य व्याप्त्यभावस्थापितः । प्रतितर्कप्रतिहतिमप्याह—**तथेति** ।

### मूलभावप्रकाशिका

अनुभूतित्वान्नानुभाव्येति विपर्यये पर्यवसानस्य पक्षैकदेशे बाधदूषितत्वात् यद्यनुभूतिरनुभाव्या स्यादननुभूतिः स्यादिति तर्को दुष्ट इत्याह—**अनुभूतेरनुभाव्यत्व इति**। **शब्दार्थसंबन्धेति**; 'गामानय' इति वाक्यश्रवणानन्तरं गवानयने प्रवृत्तं प्रयोज्यमुपलभ्य गवानयनप्रवृत्तेश्च गवानयनकार्यताज्ञानजन्यत्वं निश्चित्य तत्र च शब्दस्य सामर्थ्यं निश्चित्य पदपदार्थसंबन्धानवधारयन्तीति स्थितिरिति भावः। स्वाश्रयं प्रति स्वसंशयविपर्ययनिवर्तकत्वरूपस्य वा स्वाश्रयं प्रति विषयसंशयविपर्ययनिवर्तकत्वलक्षणस्य वा अभावे अज्ञानाविरोधित्वमेवाननुभूतित्वप्रयोजकं नानुभाव्यत्वं, तस्याननुभाव्यगगनकुसुमादिसाधारण्यादननुभूतित्वे प्रयोजकत्वासंभवात्; अतोऽप्रयोजकत्वदूषितोऽयं तर्क इत्याह—**न चान्यविषयत्व इत्यादिना**। **एतत्स्वभावविरहादिति**; अज्ञानविरोधित्वमेव तदनुकूलस्वभाव इति हृदयम्।

### श्रीभाष्यम्

**गगनकुसुमादेरननुभूतित्वमसत्त्वप्रयुक्तं, नाननुभाव्यत्वप्रयुक्तमिति चेत्—एवं तर्हि घटादेरप्यज्ञानाविरोधित्वमेवाननुभूतित्वनिबन्धनं, नानुभाव्यत्वमित्यास्थीयताम्। अनुभूतेरनुभाव्यत्वेऽज्ञानाविरोधित्वमपि तस्या घटादेरिव प्रसज्यत इति चेत्, अननुभाव्यत्वेऽपि गगनकुसुमादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत एव। अतोऽनुभाव्यत्वेऽननुभूतित्वमित्युपहास्यम्।**

### श्रुतप्रकाशिका

गगनकुसुमादेरननुभूतित्वस्योपाध्यन्तरमसत्त्वं शङ्कते—**गगनेति**। घटादेरननुभूतित्वस्याप्युपाध्यन्तरमज्ञानाविरोधित्वमाह—**एवं तर्हीति**। प्रकाशनियमाभावाविरोधित्वमज्ञानाविरोधित्वम्। न च सुखादावभावात् साध्यसमव्याप्त्यभावः शङ्कनीयः, सुखादेर्ज्ञानविशेषत्वेनाननुभूतित्वाभावात्। अज्ञानाविरोधित्वस्योपाधित्वनिरासाय पक्षे तत्प्रसञ्जयति—**अनुभूतेरिति**। तद्वत्पक्षेऽपि तुल्यमित्याह—**अननुभाव्यत्वेऽपीति**। अनुभूतेरनुभाव्यत्वेऽननुभूतित्वस्योपाधित्वेनोक्तमज्ञानाविरोधित्वमननुभाव्यत्वेऽपि प्रसज्यत इत्यर्थः।

अनुभाव्यत्वेऽननुभूतित्वमज्ञानाविरोधित्वं च यदुक्तं, तदननुभाव्यत्वेऽपि गगनकुसुमादेरिव प्रसज्यत इत्युक्तम् ; गगनकुसुमादावननुभूतित्वमज्ञानाविरोधित्वं चासत्त्वप्रयुक्तम्, नाननुभाव्यत्वप्रयुक्तमिति चेत्, अननुभाव्यत्वे तद्वदसत्त्वमपि प्रसज्यते। गगनकुसुमादेरसत्त्वं नाननुभाव्यत्वमात्रप्रयुक्तम्, अपितु स्वयंप्रकाशत्वे सत्यननुभाव्यत्वप्रयुक्तमित्यनुभूतेरननुभाव्यत्वमात्रान्नासत्त्वप्रसक्तिरिति चेत्, अननुभाव्यत्वे तद्वदस्वयंप्रकाशत्वमपि प्रसजति। अतोऽस्वयंप्रकाशत्वे सत्यननुभाव्यत्वप्रयुक्तमसत्त्वमनुभूतेर्दुर्वारम्। असत्त्वं तु धर्मिग्राहकप्रमाणविरुद्धमिति चेत्, अनुभाव्यत्वेऽननुभूतित्वमपि तथेत्येवमनुसन्धेयमिति भाष्याभिप्रायः। खपुष्पोदाहरणे तु नाश्रयवैकल्यदोषः शङ्कनीयः, "ख्यातेर्नासत्" इति व्यतिरेकदृष्टान्तत्वस्य परैः स्वीकृतत्वात्। "शब्दज्ञानानुपाती वस्तुशून्योऽवभासो विकल्पः। सस्वभावो वस्त्ववभासः प्रतीतिः" इति हि तैरुच्यते। तत्राभासप्रतीतस्यापि निषेधाधिकरणत्वं युक्तमिति भाट्टाङ्गीकृतं च। अतः परमतप्रक्रियया खपुष्पमुदाहृतम्। **उपहास्यम्** ; समीपस्थैरपि हास्यमित्यर्थः।

### भावप्रकाशिका

**अनुभूतेरनुभाव्यत्वेऽननुभूतित्वस्येति** ; अनुभूतेरनुभाव्यत्वे आपाद्यमानस्याननुभूतित्वस्येत्यर्थ.। **समीपस्थैरपीति** ; उपेत्युपसर्गवशात् समीपस्थैरित्यर्थलाभ इति भावः।

### श्रुतप्रदीपिका

उपाधिं शङ्कते—**गगनेति**। घटादावप्युपाधिः सुवच इत्याह—**एवमिति**। तस्य पक्षे प्रसक्तिं शङ्कते—**अनुभूतेरिति**। अननुभाव्यत्वेऽपि तत्प्रसञ्जयति—**अननुभाव्यत्वेऽपीति**। प्रकाशनियमाभावाविरोधित्वमज्ञानाविरोधित्वम्। अत्रेदं व्यतिरेक्यनुमानम्—'धीः वेद्या धीत्वात् ; यदवेद्यं तन्न धीः, यथा खपुष्पम्। अधीत्वमज्ञानाविरोधित्वं च खपुष्पे असत्त्वाच्चेत्, असत्त्वमपीहावेद्यत्वात् प्रसजेत्। तद्धर्मिग्राहकविरुद्धं चेत् अवेद्यत्वपक्षेऽपि तथेति भावः। **उपहास्यम्** ; समीपस्थैरपीति शेषः।

### तत्त्वटीका

घटादौ सर्वत्राननुभाव्यत्वाभावात् कुत्र व्याप्तिधीरित्यत्राह—**गगनकुसुमादेरिति**। तुच्छे कथं व्याप्तिग्रह इति चेत्, तदेतत् "नासत्त्वे ख्यातिबाधने" इति वदन्तो यूयमेव

प्रष्टव्याः । निषेधसाधने च पक्षत्वमप्यसतामिच्छतां " व्यवहारे भट्टनयः " इति वदद्भि-र्युष्माभिरुपजीव्याश्चैवमाहुः—

" यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते ।
तस्मिन्यथा खपुष्पादाविति शक्यं हि भाषितुम् ॥" इति ।
असत्यशुक्तिरजतं दृष्टान्तत्वेन कल्पयन् ।
खपुष्पस्य तथाभावं किं नाङ्गीकर्तुमर्हति ॥ ४४६ ॥
अयोग्यपदसंयोगात्कैश्चिद्दोषान्तरैरपि ।
अध्यासश्च खपुष्पादेर्दुस्त्यजः शुक्तिरूप्यवत् ॥ ४४७ ॥
प्रत्यक्षेण प्रमित्या वा नासत् ख्यायेत किं ततः ।
घटादेः शुक्तिरूप्यस्याप्येवं तत्प्रतिपादनात् ॥ ४४८ ॥
एवं वेद्येऽप्यवेद्यत्वं परोक्तं परवर्त्मनः ।
अवेद्यत्वमधीत्वेन व्याप्तं भगवतोच्यते ॥ ४४९ ॥
सर्वथैवाप्रतीतं चेदसदित्यभिमन्यसे ।
कथं त्वया प्रतीतं तद्यत् त्वमेवं ब्रवीषि नः ॥ ४५० ॥
शून्यं तुच्छमसच्चेति सदेवास्माभिरुच्यते ।
खरे शृङ्गं नरे गोत्वमित्यादेस्तादृशत्वतः ॥ ४५१ ॥
यत्र यन्न मितं मानैस्तत्तत्रासदिति स्थिते ।
अवेद्यमसदित्येषा व्याप्तिर्निस्तत्र सिध्यति ॥ ४५२ ॥
प्रतितर्काच्च तर्कस्य प्राबल्यमिह दुर्वचम् ।
युक्तो विपरिवर्तस्तु प्रत्यक्षाद्यनुसारतः ॥ ४५३ ॥
त्वदुक्तस्य प्रसङ्गस्य सिध्यन्नपि विपर्ययः ।
असाधकं त्वदिष्टस्य व्याप्तिभङ्गसमर्थनात् ॥ ४५४ ॥
प्रातिस्विकस्वभावाच्च सामान्यं यदि बाध्यते ।
सर्वस्यैवं घटत्वाद्यैरवेद्यत्वं न किं भवेत् ॥ ४५५ ॥
घटादेरपि वेद्यत्वे किं न स्यादघटादिता ।
सममेव समाधानं तत्र दोषप्रसञ्जने ॥ ४५६ ॥

एवं 'वेद्यत्वं किंचिन्निष्ठात्यन्ताभावप्रतियोगि, धर्मत्वात्' इत्यत्र बहुधा विकल्प्य स्ववाग्विरोधादि द्रष्टव्यम्। अधिकं तु खपुष्पादिभिरर्थान्तरत्वं मतान्तरेण सिद्धसाधनत्वं वा। यदि खपुष्पादीनां वेद्यत्वाभावो न स्यात्, तदा प्रपञ्चस्य सत्त्वकोट्यां ख्यात्यनुपपत्तिं कथं वक्ष्यसि? अपरोक्षधीविषयत्वाभावादिति चेत्—न, दोषविशेषैस्तत्संभवस्योक्तत्वात्। तेषु वेद्यत्वात्यन्ताभावाधिकरणत्वं निराश्रयत्वात् मिथ्याभूतम्; सत्यं तु साध्यत इति चेत्—न; तादृशस्य ब्रह्मण्यपि त्वया वक्तुमयुक्तत्वात्। किंचिच्छब्दार्थोऽनुभूतिरेव न घटादिरिति नियन्तुं च न शक्यम्। सुलभश्च नियामको घटत्वादिरधीत्वहेतुः। वेद्यत्वस्य घटत्वादिनेवानुभूतित्वेन स्वप्रकाशत्वेन वा विरोधगन्धाभावादिति। ननु वेद्यत्वे स्वगोचरज्ञाननिरपेक्षव्यवहारानुगुण्यरूपं स्वयंप्रकाशत्वं कथं स्यात्? इत्थम्—वर्तमानावर्तमानदशाभेदेन द्वयोर्व्यवस्थापनात्। स्वप्रकाशलक्षणे व्यवहारानुगुण्यं निवेशयता त्वयापि व्यवहारार्हत्वबुद्धेर्व्यवजिहीर्षायास्तन्मूलव्यवहारजन्यधियश्च गोचरत्वमेष्टव्यम्। तथा सति का कथा विरोधस्य? एवं वेद्यत्वे नाशित्वादिप्रसङ्गो व्याप्त्यभावादिभिर्निर्धूतः। अथ प्रतितर्कस्योपाधिबलाद्दौर्बल्यं शङ्कते—**गगनेति**। असत्त्वभावत्वयोर्विरोधाद्भावविशेषरूपानुभूतित्वाभावस्तत्रासत्त्वप्रयुक्त इत्यर्थः।। यद्यप्यननुभूतित्वस्यासत्त्वमव्यापकं, घटादावदृष्टेः; ततश्च न तस्योपाधिः—तथाप्यनुभूतित्वस्य सत्त्वं व्यापकम्; तावता च तस्य तदुपाधित्वं कैश्चित्संमतम्। अतः सत्त्वनिवृत्तिप्रयुक्तमननुभूतित्वमित्युच्यते। यद्वा शाकाद्याहारपरिणतिन्याय इहाभिप्रेतः। न ह्यसौ श्यामत्वव्यापिका। अतो दोषविशेषनिष्ठश्यामत्वविशेषस्तन्निबन्धन इति वाच्यम्। तद्वदिहापि खपुष्पनिष्ठमननुभूतित्वमसत्त्वप्रयुक्तमिति नियम्यते। तदिदं **गगनकुसुमादेरननुभूतित्वम्** इति विशिष्टोक्त्या व्यज्यते। एवं सत्यनुभाव्यत्वनिबन्धनमननुभूतित्वमसत्त्वनिवृत्त्या न निवर्तते। परोक्ततर्केऽप्युपाधिमाह—**एवमिति**। नात्र तन्मतानुज्ञा, प्रतिबन्देर्दुस्तरत्वे तात्पर्यात्। **अज्ञानाविरोधित्वम्**; ज्ञानधर्मस्य स्ववेद्यविषयाज्ञाननिवर्तकत्वस्याभावः। अज्ञानस्य हि भावरूपस्याभावरूपस्य वा ज्ञानमेव निवर्तकम्। उक्तस्योपाधेः प्रसङ्गहेतुव्यापकतया प्रतिबन्दिनिस्तारं शङ्कते—**अनुभूतेरिति**। "यत्रोभयोः समो दोषः" इति न्यायेनात्रापि प्रतिवक्ति—**अननुभाव्यत्वेऽपीति**। अवेद्यखपुष्पादिव्यावृत्तं ज्ञानस्याज्ञानविरोधित्वं वेद्यत्वं साधयेदिति भावः। नन्वस्य घटादिसपक्षसद्भावे पक्षमात्रस्य कथं हेतुत्वम्? कथं वा

खपुष्पादिसपक्षसद्भावे तादृशस्य धीत्वस्येति पश्य । किमत्र प्रतितर्कस्यानुग्राह्यम्? किं वा त्वदुक्तस्य? श्रुत्यादिकमिति चेत्, तुल्यम् । यद्यप्यत्र प्रकृतानुरोधादसत्त्वमतिप्रसज्यत इति प्रतिवक्तव्यं, तथापि शिष्याणामूहशक्त्यर्थं तर्कवैभवात्प्रकारान्तरेण प्रत्युक्तम् । प्रसञ्जनीयमसत्त्वमत्र द्वितीयेनापिशब्देन चा समुच्चीयते । अत एव "खपुष्पादेरज्ञानाविरोधित्वं चासत्त्वप्रयुक्तम्" इत्याद्युक्तम् । असत्त्वस्य चाननुभूतित्वादिप्रयोजकत्वं स्वसद्भावे तत्सद्भावनियमाद्वा, स्वाभावे तदभावनियमाद्वा । आद्ये धूमालोकनयादवेद्यत्वमपि तत्प्रसञ्जकमस्तु, तद्व्याप्यत्वात् । द्वितीये घटादेः कथमधीत्वादि? तथा च तद्वदनुभूतावपि । असत्त्वाभावेऽप्यवेद्यत्वे श्रुत्यादिकमिति चेत्, तुल्यम् । अधीत्वादिप्रसङ्गः सुस्थः ।

खपुष्पादिगताधीत्वाद्यसत्त्वनियतं यदि ।
स्यादन्यत्राप्यधीत्वादिमात्रं श्यामत्वमात्रवत् ॥ ४५७ ॥

तदिह "दुरुक्तम्" इति प्रक्रान्तं दुस्तरोपलब्धिबलान्निगमयन् द्रढयति—**अत इति** ।

यावज्जीवमहं मौनी माता वन्ध्या ममेतिवत् ।
वित्तेरवेद्यतोक्तिः स्यादिति हास्यत्वभाषणम् ॥ ४५८ ॥

## मूलभावप्रकाशिका

**घटादेरपी**त्यनेन शशशृङ्गादिकं समुच्चीयते । सर्वत्रानुगतत्वादज्ञानविरोधित्वमेवाननुभूतित्वप्रयोजकमिति भावः । 'गगनकुसुमादेरननुभूतित्वमज्ञानाविरोधित्वप्रयुक्तम्' इति पाठस्तु समीचीनः ।

## श्रीभाष्यम्

यत्तु संविदः स्वतः सिद्धायाः प्रागभावाद्यभावादुत्पत्तिर्निरस्यते, तदन्धस्य जात्यन्धेन यष्टिः प्रदीयते । प्रागभावस्य ग्राहकाभावादभावो न शक्यते वक्तुम्, अनुभूत्यैव ग्रहणात् । कथमनुभूतिः सतो तदानीमेव स्वाभावं विरुद्धमवगमयतीति चेत्, न ह्यनुभूतिः स्वसमकालवर्तिनमेव विषयीकरोतीत्यस्ति नियमः; अतीतानागतयोरविषयत्वप्रसङ्गात् ।

### श्रुतप्रकाशिका

अथ परोक्तं नित्यत्वं व्युदस्यति—**यत्त्वित्यादिना**। ननु ज्ञाननित्यत्वमभ्युपयद्भिः कथं तन्निरसनं युक्तम्? उच्यते—ज्ञानाश्रयभूत आत्मा तदाश्रितं च संकोचविकासार्हं नित्यं ज्ञानद्रव्यं परस्यानभिमतम्। यत्तु प्रस्तुतमिन्द्रियसंयोगाद्यन्वयव्यतिरेकानुविधायि प्रत्यक्षत्वपरोक्षत्वप्रमाणत्वाप्रमाणत्वाद्यवस्थं लोकसिद्धं ज्ञानं, तस्य यदि नित्यत्वमुपपाद्यते तद् व्युदस्यते। विषयसंबन्धिज्ञानस्य हि स्वयंप्रकाशत्वं परेण समर्थितम्। स्वप्रकाशत्वसमानाधिकरणं च नित्यत्वं परस्येष्टम्, स्वतः सिद्धतया नित्यत्वसमर्थनात्। अतस्तन्निरासो युक्तः। तत्र च मृद्द्रव्यस्य सिद्धत्वेऽपि घटत्वाद्यवस्थमृद्द्रव्यानित्यत्ववत् ज्ञानाख्यद्रव्यस्य नित्यत्वेऽपि स्मृतित्वानुभूतित्वाद्यवस्थज्ञानानित्यत्वं युक्तमिति न स्वपक्षविरोधः। स्वयंप्रकाशत्वे किंचिदुपादेयमप्यस्तीति तद्व्यावृत्त्यर्थस्तुशब्दः। **अन्धस्य जात्यन्धेन यष्टिः प्रदीयत इति;** असिद्धमत्यन्तासिद्धेन हेतुना साध्यत इत्यर्थः। तत्र ग्राहकाभावात् ग्राह्याभावाच्च प्रागभावाभाव उक्तः; तमाशङ्क्य ग्राहकोऽस्तीत्याह—**प्रागभावस्येति**। तत्र विकल्पे पूर्वपक्षिणोक्तं सत्येवावगमयतीति पक्षं स्थापयितुं तत्रोक्तं विरोधं शङ्कते—**कथमिति**। **तदानीमि**त्यभावविशेषणम्; न क्रियाविशेषणम्। परिहरति—**न हीति**। स्वसमकालवर्तित्वनियमः किं ग्राह्यसामान्यप्रयुक्तः, उतैतद्ग्राह्यविशेषप्रयुक्त इति विकल्पाभिप्रायेण प्रथमं ग्राह्यसामान्यप्रयुक्तत्वपक्षं प्रतिवदति—**न ह्यनुभूतिरिति**। यद्वा वर्तमानग्रहणनियमः किं ग्राहकानुभूतिस्वभावात्, उत ग्राह्यानुभूत्यभावस्वभावादिति विकल्पमभिप्रेत्य प्रथमं दूषयति—**न हीति**। हिशब्दो हेतौ। नेति प्रतिज्ञाऽध्याहर्तव्या।

### भावप्रकाशिका

**तदानीमित्यभावविशेषणमिति;** तदानींतनाभावमित्यर्थः। भिन्नकालीनाभावावगाहने विरोधस्याभावात् 'न ह्यनुभूतिः स्वसमकालवर्तिनमेव' इत्युत्तरभाष्यस्याप्रसक्तप्रतिषेधत्वापातादिति भावः। **नेति प्रतिज्ञाऽध्याहर्तव्येति;** उक्तविकल्पपक्षानुगुणा प्रतिज्ञेत्यर्थः। अयं भावः—अनुभूतेः स्वसमकालवर्तिग्रहणनियमो न ग्राह्यसामान्यप्रयुक्त इति वा, न ग्राहकानुभूतिस्वभावप्रयुक्त इति वा प्रतिज्ञेति।

### श्रुतप्रदीपिका

अथ सुगतसाम्यव्युदासकतया परोक्तं धीनित्यत्वमनूद्य व्युदस्यति—**यत्त्विति**। **अन्धस्येति;** असिद्धमत्यन्तासिद्धेन साध्यत इत्यर्थः। ग्राहकाभावमाशङ्क्याह—

**प्रागिति**। विरोधं शङ्कते-- **कथमिति**। परिहरति—**न हीति**। समकालत्वस्य ग्राह्य-मात्रप्रयुक्तता निरस्ता।

### तत्त्वटीका

अवेद्यत्वं ज्ञानस्य निरस्तम्; अथ प्रागुपन्यस्तं बौद्धोक्ताद्वैषम्यं दूषयितुमनुवक्ति-**यच्चेति**। असिद्धमत्यन्तासिद्धेन दुःसाधमित्यभिप्रयन्प्रत्याह—**तदन्धस्येति**। **जात्य-न्धेनेति** निदर्शितं विवृणोति—**प्रागभावस्येति**। ग्राह्यकालमात्रे ग्राहकाभावाद् ग्राह्यासत्त्वं न स्यादिति भावः। स्वतोऽन्यतो वा धियः प्रागभावग्रहणमिति प्रागुक्तविकल्पे स्वत इति पक्षं तावदाह—**अनुभूत्येति**। **एव**कारो विरोधशङ्कानिरासार्थः। सत्यसती वेति विकल्पे सतीति पक्षस्यैवाङ्गीकारात्तत्र पूर्वोक्तं विरोधं शङ्कते—**कथमिति**। अविद्यमानस्वाभावबोधने बुद्धेर्भ्रान्तित्वं स्यादिति भावः। स्वाभावस्य हि स्वकालवर्तित्वे विरोधः, तथाग्रहणेन च भ्रान्तित्वं स्यात्; इह तूभयमपि नास्तीत्यभिप्रायेण प्रत्याह—**न हीति**। समकालत्व-नियमो हि संयोगादिसंबन्धे; अत्र न तथेति ज्ञापयितुं विषयीकारोक्तिः। तदेव स्थाप-यति—**अतीतेति**।

### मूलभावप्रकाशिका

किं ग्राह्यसामान्ये ग्राहकानुभूतिसमकालत्वनियमः, उतानुभूतिप्रागभावमात्र इति विकल्प्य आद्यं निराकरोति—**न ह्यनुभूतिरिति**। ततश्च 'एतावन्तं कालमज्ञातमासीत्' इत्यनुभूतिरेव स्वप्रागभावमपि गोचरयतीति भावः।

### श्रीभाष्यम्

**अथ मन्यसे—अनुभूतिप्रागभावादेः सिध्यतस्तत्समकालभाव-नियमोऽस्तीति। किं त्वया क्वचिदेवं दृष्टं, येन नियमं ब्रवीषि। हन्त तर्हि तत एव दर्शनात्प्रागभावादिःसिद्ध इति न तदपह्नवः। तत्प्राग-भावं च तत्समकालवर्तिनमनुन्मत्तः को ब्रवीति? इन्द्रियजन्मनः प्रत्यक्षस्य ह्येष स्वभावनियमः—यत्स्वसमकालवर्तिनः पदार्थस्य ग्राह-कत्वम्, न सर्वेषां ज्ञानानां प्रमाणानां च; स्मरणानुमानागमयोगि-प्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणदर्शनात्। अत एव च प्रमाणस्य**

**प्रमेयाविनाभावः। न हि प्रमाणस्य स्वसमकालवर्तिनाऽविनाभावोऽर्थ-संबन्धः; अपितु यद्देशकालादिसंबन्धितया योऽर्थोऽवभासते, तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता। अत इदमपि निरस्तम्—स्मृतिर्न बाह्यविषया, नष्टेऽप्यर्थे स्मृतिदर्शनादिति।**

श्रुतप्रकाशिका

ग्राह्यविशेषपक्षं दूषयितुं शङ्कते—**अथ मन्यस इति**। ग्राह्यविशेषस्य समकाल-वर्तित्वनियमोक्तिर्दर्शनपूर्विकैव स्यादित्यभिप्रायेणाह—**किं त्वयेति**। **क्वचित्**; अनुभूतौ। व्याप्तिग्रहणभूमित्वेनाभावस्य दृष्टत्वात् प्रागभावो दुरपह्नव इत्याह—**हन्त तर्हीति**; प्रागभावस्य समकालसिद्धया व्याप्तिरनुभूतिप्रागभावरूपे धर्मिणि गृहीते हि सिध्यतीत्य-र्थः। आदिशब्दः प्रध्वंसपरः। समकालवर्तित्वनियममभ्युपगम्य दूषणमुक्तम्; समकाल-वर्तित्वं चानुपपन्नमित्याह—**तत्प्रागभाव चेति**। यदि स्वसमकालवर्तिग्रहणनियमोऽनु भूतेर्नास्ति, तर्ह्यविद्यमानेऽपि घटे चाक्षुषं तज्ज्ञानमुत्पद्येतेत्यत्राह—**इन्द्रियजन्मन इति**। प्रत्यक्षशब्देन प्रत्यक्षज्ञानमुच्यते। अयमभिप्रायः—स्वसमकालवर्तिग्राहकत्वनियमो न ज्ञानमात्रस्य; न च तदवान्तरभेदप्रमाणज्ञानस्य; न च तदवान्तरभेदप्रत्यक्षज्ञानस्य; अपि तु प्रत्यक्षविशेषरूपस्यैन्द्रियकज्ञानस्येति। **न सर्वेषां ज्ञानानां प्रमाणानां चेति**; चशब्देन प्रत्यक्षस्य चेत्युक्तं भवति, उपपादकग्रन्थानुगुण्यात्। कुत इत्यत्राह—**स्मरणानुमा-नेति**। स्मरणशब्देन सर्वज्ञानानां समकालवर्तिविषयत्वनियमव्युदासः। अनुमानागमशब्देन प्रमाणमात्रस्य तन्नियमव्युदासः। योगिप्रत्यक्षादिशब्देन प्रत्यक्षमात्रस्य तन्नियमव्युदासः। आदिशब्देनेश्वरप्रत्यक्षं गृह्यते। प्रमेयसद्भावो न चेत्, प्रमाणाप्रमाणज्ञानयोः कथं वैषम्य-मित्यत्राह—**अत एवेति**। **अत एव**; ज्ञानमात्रस्य समकालवर्तिग्राहकत्वनियमाभावेन; प्रमेयाविनाभावश्च सिद्ध इत्यर्थः। अन्यथा वर्तमानविषयालाभादसमकालवर्तिग्राहिणां तत्तत्प्रमाणानां प्रमेयाविनाभावो न सिध्येदिति भावः। तत्सिद्धिः कथमित्यपेक्षायां तमेवाविनाभावं विवृणोति—**न हि प्रमाणस्येति**। प्रमाणस्यार्थसंबन्ध इत्यन्वयः। तर्हि प्रमेयाविनाभावः क इत्यत्राह—**अपित्विति**। **यद्देशकालादीत्या**दिशब्देन संस्थान-मुच्यते। **मिथ्यात्वप्रत्यनीकता**; मिथ्यात्वस्य प्रमाणं प्रत्यनीकं भवति; तस्य भाव

इत्यर्थः । यद्वा मिथ्यात्वप्रत्यनीकोऽर्थो भवति ; तस्य भावो मिथ्यात्वप्रत्यनीकता ; सा प्रमाणस्यार्थसंबन्ध इत्यन्वयः । **अत एवे**त्यादिभाष्यस्यैवं वार्थः—**अत एव** ; प्रमाणत्वेन संप्रतिपन्नानां कालान्तरवर्तिग्राहकत्वदर्शनात्तत्रापि प्रमेयाविनाभावः कल्प्यत इत्यर्थः । कथं तत्राविनाभावप्रकार इत्यत्राह—**न हीत्यादि** । अनेनैव प्रमाणप्रमेयाविनाभावरूपविषयविषयिभावशिक्षणेन बौद्धैकदेशिभिरुक्तं स्मृतेर्निर्विषयत्वं निरस्यत इत्यवश्याभ्युपेत्यमिदमित्यभिप्रायेणाह—**अत इदमपीति** ।

## भावप्रकाशिका

**ग्राह्यविशेषपक्षं दूषयितुं शङ्कते—अथ मन्यस इतीति** । इदमुपलक्षणम्—किं ग्राह्यानुभूत्यभावस्वभावादिति द्वितीयपक्षस्यापीति द्रष्टव्यम् । **दर्शनपूर्विकैव स्यादिति** ; अदर्शने त्वादृश इत्थं न वदेत् ; अतो दृष्ट्वैव वदसीति दर्शनं सिद्धवत्कृत्य तच्च **दर्शनं** केत्युपालभ्यत इति भावः । प्रत्यक्षशब्दस्य विषयसाधारण्यादाह—**प्रत्यक्षशब्देन प्रत्यक्षज्ञानमुच्यत इति** । इदं च **इन्द्रियजन्मन** इति पदसमभिव्याहारलभ्यम् । यद्वा कर्मेन्द्रियजन्मनो गमनादिलक्षणस्य प्रत्यक्षविषयस्य व्यावृत्त्यर्थं प्रत्यक्षज्ञानमुच्यत इत्युक्तम् । **प्रमाणाप्रमाणज्ञानयोः कथं वैषम्यमिति** ; अयं भावः—सर्वेषां ज्ञानानां स्वसमकालवर्तिग्राहित्वनियमानभ्युपगमेऽपि प्रमाणज्ञानानां स्वसमकालवर्तिग्राहित्वनियमोऽभ्युपेयः ; इतरथा प्रमाणाप्रमाणव्यवस्था न स्यात् । प्रमेयाविनाभावसदसद्भावाभ्यां हि प्रमाणाप्रमाणव्यवस्थोपपाद्या । यदि प्रमेयमन्तरेणापि प्रमाणमुत्पद्येत तदा कथं तस्य तदविनाभावः ? अतः स्वसमकालवर्तिग्राहित्वमेवाभ्युपेयमिति । **ज्ञानमात्रस्येति** ; प्रमाणज्ञनमात्रस्येत्यर्थः । तत्रैव नियमस्य शङ्कितत्वादिति द्रष्टव्यम् । **वर्तमानविषयालाभादसमकालवर्तिग्राहिणामिति** ; अत्र समकालवर्तिग्राहिशब्देन नञ्समासः । वर्तमानविषयस्यालाभेन समकालवर्तिविषयग्रहणासंभवादसमकालवर्तिनश्च विषयत्वाभावस्य त्वयाभ्युपेतत्वान्निर्विषयाणामेषां प्रमेयस्यैवाभावेन प्रमेयाविनाभावः कथं स्यादित्यर्थः । **तत्सिद्धिः कथमित्यपेक्षायामिति** ; भिन्नकालवर्तिग्रहणेऽपि भिन्नकालवर्तिना प्रमेयेन विना कालान्तरे वर्तमानानामेषां कथं तदविनाभावः सिध्येदित्यर्थः । **प्रमाणस्यार्थसंबन्ध इत्यन्वय इति** ; स्वसमकालवर्तिना अर्थसंबन्धोऽविनाभावो नेत्यन्वयः । **मिथ्यात्वस्य प्रमाणं प्रत्यनीकं भवतीति** ; प्रमाणगतं

प्रमेयमिथ्यात्वप्रत्यनीकत्वमेव प्रमेयेनाविनाभावसंबन्ध इत्यर्थः। व्यवहितस्य समकालवर्तित्वनियमाभावस्यातःशब्देन परामर्शादप्यनन्तरनिर्दिष्टस्य प्रमाणतयाभिमतेषु कालान्तरवर्तिग्रहणदर्शनस्य हेतुतया परामर्शो न्याय्य इत्यस्वरसादाह—**इत्येवं वार्थ इति**।

## श्रुतप्रदीपिका

अथ ग्राह्यविशेषप्रयुक्ततां दूषयितुं शङ्कते—**अथेति**। वचनस्य वक्तव्यदृष्टिरपेक्षितेत्यभिप्रयन्नाह—**किमिति**। दृष्टसिद्धावभावसिद्धिमाह—**हन्तेति**। भावाभावसमकालत्वोपगमेन दूषणमुक्तम्; अथ तदत्यन्तायुक्तमित्याह—**तत्प्रागिति**। समकालत्वं न चेदसत्यपि घटे 'घटोऽयम्' इति धीः स्यादित्यत्राह—**इन्द्रियेति**। **प्रमाणानां चेति**; चशब्दात्प्रत्यक्षस्य चेत्युक्तं भवति। धीत्वं मानत्वं प्रत्यक्षत्वं वा न तत्र प्रयोजकं, किंतु तदवान्तरमैन्द्रियकप्रत्यक्षत्वमित्यर्थः। उपपादयति—**स्मरणेति**। आदिशब्दादीश्वरप्रत्यक्षम्। तर्हि मानमेयाविनाभावः क इत्यत्राह—**अत इति**। **अतः**; समकालनियमाभावाद्धि तत्सिद्धिरित्यर्थः। यद्वा संप्रतिपन्नमानेषु तद्दर्शनात् तदनुगुणं संबन्धो वाच्य इत्यर्थः। कथमित्यत्राह—**न हीति**। तर्हि क इत्यत्राह—**अपित्विति**। स्मृतिनिर्विषयकत्वमर्थान्निरस्तमित्याह—**अत इति**। **अतः**; समकालत्वनियमाभावात्।

## तत्त्वटीका

यथा ग्राहकविशेषे प्रत्यक्षे "सत्संप्रयोगः" इत्यादिना ग्राह्यसमकालत्वमुच्यते, तथा ग्राह्यविशेषधीप्रागभावे ग्राहकसमकालत्वमस्तीति सोपालम्भं शङ्कते—**अथेति**। किमयं नियमस्त्वदन्यैरिव त्वयापि क्वचिदप्यदृष्ट एवोच्यते, उत दृष्ट इति विकल्पं मत्वा आद्यमाक्षिपति—**किमिति**। **दृष्टम्**; प्रमितमित्यर्थः। अदर्शने त्वदुक्तिर्युक्ता न स्यात्; यथादृष्टार्थवादित्वं च न स्यादिति भावः। दृष्टत्वाभ्युपगमे दोषमाह—**हन्तेति**। अनेन हर्षमनुकम्पां वा द्योतयति। धीप्रागभावं निरस्यता तत्रैव प्रमाणमुपन्यस्तमिति परस्य जडीकारश्चायम्। स्वान्यप्रागभावसमकालत्वनयात्स्वप्रागभावसमकालत्वदृष्टिर्भ्रान्तिरेव; अतस्ते यथार्थदर्शित्वमपि न स्यादित्याह—**तत्प्रागभावमिति**। अनादिब्रह्मस्वरूपमेवागामिनी मुक्तिरित्युन्मार्गस्त्वमेवैवं वक्तुमर्हसीति किंशब्दाभिप्रायः। नन्वविद्यमानग्रहे सर्वं सर्वत्र सर्वदा गृह्येत; प्रत्यक्षेऽपि भिन्नकालं ग्राह्यमिति वदद्भिः सौत्रान्तिकैश्च किमपराद्धमित्यत्राह—**इन्द्रियेति**। अस्मदादीति विशेषणे तात्पर्यम्; योगिज्ञानस्यानन्त-

रोक्तेः। क्वचिल्लिङ्गभूतेन्द्रियजन्यज्ञानव्यवच्छेदाय प्रत्यक्षोक्तिः। दीपादीनामपि स्थितिक्षणेऽक्षसंप्रयोगान्नश्यत्क्षणे जायमाना धीस्तद्विषयैवेति समकालत्वं सिद्धम्। नश्यत्क्षणसंबन्धस्तु धियं जनयतीत्यत्र न प्रमाणम्; तत्सद्भावेऽप्यगत्या तावन्मात्रे कालभेदः। तेन च भिन्नकालस्यापि ग्राह्यत्वं वदतामस्माकमभिमतसिद्धिः। यद्वा वर्तमानस्येन्द्रियसंयोगस्यातीतानागतनिष्ठत्वायोगात्कारणभूतस्य संयोगस्य स्वसमकालवर्तिग्राहकत्वं तत्कार्ये प्रत्यक्षज्ञाने लक्षणयोक्तम्; अतोऽत्र नातिप्रसङ्गः। न च भ्रान्तितुल्यत्वम्; यदा विषयः, तदा तथैव ग्रहणात्। नन्वनुमानागमजन्यज्ञानयोरपि क्वचित्स्वसमकालवर्तिविषयत्वं दृष्टम्, यथा नित्यविषयेषु रसाद्रूपानुमानादिषु च; तस्मान्नोक्तनियमः; ज्ञानत्वादिकमेव प्रयोजकं स्यादित्यत्राह—**न सर्वेषामिति**। अयं भावः—नित्यप्रभृतिषु ज्ञानस्य समकालत्वं न धीत्वादिप्रयुक्तम्, व्यभिचारात्; अस्मदादीन्द्रियजन्यप्रत्यक्षस्य तु नियतोऽयं स्वभाव इति। **ज्ञानानामिति**; भ्रान्तिप्रमित्योः प्रत्यक्षपरोक्षयोश्च सामान्योपादानम्। चकारात्प्रत्यक्षाणां च। ज्ञानत्वादित्रिकस्याप्रयोजकत्वं व्यभिचारेण व्यनक्ति—**स्मरणेति**। भ्रान्तिरपि स्मरणेनोपलक्ष्यते। अबाधितस्मृतेः प्रमाणत्वमिच्छतां पक्षेऽपि प्रमाणत्वाप्रयोजकत्वोक्तिरेवोत्तरम्। स्मरणशब्दश्च यथार्थायथार्थसाधारणः। **आदिशब्देन** मुक्तादिप्रत्यक्षसंग्रहः। **ग्रहणदर्शनात्**; ग्रहणस्य प्रमितत्वादित्यर्थः। ननु प्रमेयव्याप्यं हि प्रमाणम्; अन्यथा क्वचिदर्थशून्यत्वेऽप्यविरोधात्; तस्मात्प्रमितेः कथं स्वविषयभिन्नकालत्वम्? तत्राह—**अत इति**। समकालत्वनियमं हित्वा यथादर्शनं व्यवस्थापनादिति यावत्। एवकारः चोद्यनिरासस्यैव परिहारगम्यत्वार्थः। अयं भावः—यदि मानमेययोरविनाभावः समकालत्वेन, तदातीतादिविषयप्रमितीनां प्रमात्वं न स्यात्। व्याप्तिश्च कार्यकारणादिभिः। तथापि कारणाद्यनुमाने भिन्नकालतयापि दृष्टेति। भिन्नकालत्वं तत्र तत्र दृष्टम्। तथानुभूतिप्रागभावप्रमाणस्यापि स्यात्। अन्यथा कथं बुद्धेरर्थसम्बन्धः? न च दीपोऽतीतं प्रकाशयतीति। अत्र **अत एवे**त्यभिप्रेतं विवृणोति—**न हीति**। **प्रमाणस्यार्थसंबन्धो न हि स्वकालवर्तिनाविनाभाव** इत्यन्वयः। किं तर्ह्यत्र विना न भवतीति विवक्षितमित्यत्राह—**अपित्विति**। **तथाविधाकारः**, तद्देशत्वादिसंबन्धित्वप्रकारः। **मिथ्यात्वप्रत्यनीकता**; अनारोपितत्वम्। भ्रान्तिशङ्कोद्धारक्रमसूचनाय व्यतिरेकोक्तिः। अत्र प्रसङ्गापरोक्तमर्थान्तरमपि निरस्यति—**अत इति**। भिन्नकालस्यापि विषयत्वस्थापनादि-

त्यर्थः। **नष्टेऽपीति** ; वर्तमानत्वसंग्रहः। नष्टविषयस्मृतिन्यायाद्वर्तमानविषयस्मृतावपि बाह्यविषयत्वं त्याज्यमिति मन्यते। अत्रैवमुत्तरम्—स्मृतेर्बाह्यविषयत्वाभावे निर्विषयत्वं वा, स्वमात्रविषयत्वं वा, कल्पितस्वाकारविषयत्वं वा, आन्तरवस्त्वन्तरविषयत्वं वा स्यात्। नाद्यः, अयुक्तत्वादनिष्टत्वाच्च। न द्वितीयः, अत एव योगाचारविजयप्रसङ्गात, स्वरूपप्रकाशातिरिक्तस्मृत्यसिद्धिप्रसङ्गाच्च। न तृतीयः, तुल्यन्यायतया। नापि चतुर्थः, तादृग्वस्त्वन्तरे मानाभावात्। अनुभूतिविषयस्वरूपान्तःकरणवृत्तिरेव स्मृतेर्विषय इति चेत्—न, स्मृतिरूपायास्तदतिरिक्ताया वा निष्प्रमाणकतया दत्तोत्तरत्वादिति। एतेन स्मृत्युदाहरणेन प्रत्यक्षेतरमानेषु सर्वेष्वपि बाह्यतुल्यान्तःकरणविकृतिरेव बाह्यवत् भातीति पक्षोऽपि निरस्तः।

बाह्यत्वेन प्रतीतं चेद् यद्बाह्यं क्वापि कल्प्यते।
अविशेषेण सर्वत्र तथा क्लृप्तिः प्रसज्यते ॥ ४५९ ॥

### मूलभावप्रकाशिका

द्वितीयमुत्थापयति—**अथ मन्यस इति**। सोपालम्भं दूषयति—**किं त्वयेति**। प्रागभावस्य प्रतियोगिसमकालत्वोक्तिरेव विरुद्धेत्याह—**तत्प्रागभावं चेति**। यदि स्वसमकालवर्तिग्रहणनियमो नानुभूतेः, तर्ह्यविद्यमानेऽपि घटे चाक्षुषस्तत्साक्षात्कारः प्रसज्येतेत्यत्राह—**इन्द्रियजन्मन इति**। ननु प्रमाणस्य स्वसमकालवर्तिप्रमेयत्वनियमाभावे प्रमाणस्य प्रमेयेनाविनाभावसंबन्धोऽस्तीति वादः कथमुपपद्यतामित्याशङ्क्य तस्मिन्नेव पक्षे प्रमाणस्याबाधितार्थकत्वलक्षणप्रमेयाविनाभाव उपपद्यत इत्याह—**अत एवेति** ; अतीतादेरपि प्रमाणविषयत्वसमर्थनादेव। नष्टार्थविषयस्मृतेर्निर्विषयत्वावश्यंभावात् सर्वापि स्मृतिर्निर्विषयेति बौद्धैकदेश्युक्तमपि निरस्तमित्याह—**अत इदमपीति**।

### श्रीभाष्यम्

अथोच्येत—न तावत् संवित्प्रागभावः प्रत्यक्षावसेयः, अवर्तमानत्वात्। न च प्रमाणान्तरावसेयः; लिङ्गाद्यभावात्। न हि संवित्प्रागभावव्याप्तमिह लिङ्गमुपलभ्यते। नानुपपत्तिरपि कस्यचिद् दृश्यते। न चागमस्तद्विषयो दृष्टचरः। अतस्तत्प्रागभावः प्रमाणाभावादेव न

**सेत्स्यतीति ; यद्येवं स्वतः सिद्धत्वविभवं परित्यज्य प्रमाणाभावेऽवरूढ-श्चेत्, योग्यानुपलब्ध्यैवाभावः समर्थित इत्युपशाम्यतु भवान् ।**

### श्रुतप्रकाशिका

एवमनुभूतिरेव प्रागभावग्रहणक्षमेत्युपपादितम् । अथ तद्ग्राहिणानुभवेन प्रत्यक्षाद्यन्यतमेन भवितव्यमिति तदसंभवेन प्रमाणाभावात् प्रागभावाभाव इति शङ्कते—**अथोच्येतेति** । **लिङ्गाद्यभावादिति** ; आदिशब्देनानुमानशब्दौ विवक्षितौ । तद्विवृणोति—**नहीत्यादिना** । निगमयति—**अत इति** । उपमानस्य प्रतिपन्नवस्तुसादृश्यसंज्ञासंज्ञिसंबन्धयोरन्यतरमात्रगोचरत्वेनाप्रतिपन्नपदार्थप्रतिपादनासामर्थ्यादनुपन्यासः । परिहरति—**यदीति** । यदिशब्दः किमर्थः । चेच्छब्दो यद्यर्थः । स्वपरिपाटीं विहाय शास्त्रमर्यादायां किमवतीर्णोसि ? तथा चेदित्यर्थः । प्रमाणमाह—**योग्यानुपलब्ध्यैवेति** । परेणाभावप्रमाणस्याङ्गीकृतत्वात् **योग्यानुपलब्ध्यैवे**त्युक्तम् । स्वपक्षपर्यालोचनायामपि ज्ञानस्य योग्यानुपलब्धिर्नाम भावरूपावस्थान्तरोपलब्धिः । पिण्डत्वाद्युपलब्धिरेव हि घटस्य योग्यानुपलब्धिः । अतोऽतीतकालावच्छिन्नज्ञानाभावो नाम ज्ञानस्य संकोचोऽर्थान्तरज्ञानं वा । पूर्वकालीनगजज्ञाने बुभुत्सिते तत्कालीनस्वापादिप्रतिसंधानं घटादिज्ञानप्रतिसंधानं वा गजज्ञानस्य योग्यानुपलब्धिः । सा च लिङ्गतया पूर्वकालीनज्ञानाभावनिश्चायिका । यदुक्तं संविदः 'इयम्' इति विषयीकारानर्हत्वेनाभावो दुर्ग्रह इति ; तदयुक्तम्, तथा सति प्रागभावनिरासानुपपत्तेः ; न ह्यन्यस्य घटादेः प्रागभावो निरस्यते, अपि त्वनुभूतेः । तस्मादनुभूतिम् 'इयम्' इति विषयीकृत्य तस्याः प्रागभावो निराकरणीयः । 'इयम्' इति विषयीकाराभावेऽपि तत्प्रागभावो निराकर्तुं शक्यते चेत्, तदभावेऽपि प्रागभावः साधयितुमपि शक्यते । यदि त्वया विषयीकृता, तद्वदस्माभिरपि विषयीकृतेति तदभावः सुसाध इत्यनुसंधेयम् । उत्तरत्र 'नित्यं चेत्' इति ग्रन्थेनायमर्थो ह्यभिप्रेतः ।

### भावप्रकाशिका

पूर्वस्मिन् पक्षे प्रमाणस्य प्रमेयाविनाभावः समकालग्राहित्वसाधकः ; अस्मिन् पक्षे तस्य बाधकत्वनिराकरणमिति भिदा । गवये गोसादृश्यलक्षणादुपमानाद्गवि गवयसादृश्यप्रतीतिरूपोपमितिर्जायत इति केचित् । गोसादृश्यविशिष्टपिण्डज्ञानात् 'अयमसौ गवयशब्दवाच्यः पिण्डः' इति संज्ञासंज्ञिसंबन्धप्रमितिरूपोपमितिर्जायत इत्यन्ये ।

मतद्वयमप्यनुभाषते—**उपमानस्य प्रतिपन्नेत्यादिना**। चेद्यदिशब्दयोरैकार्थ्यात् पौनरुक्त्यमाशङ्क्याह—**यदिशब्द इति। चेच्छब्दो यद्यर्थ इति**; चेच्छब्दश्चेदर्थ एवेत्यर्थः। अत एव 'तथा चेत्' इति वक्ष्यति। तथाशब्दाध्याहारमभिप्रेत्याह—**तथा चेदित्यर्थ इति। भावरूपावस्थान्तरोपलब्धिरिति**; यथा घटस्याभावः पिण्डत्वादिरूपं भावरूपमवस्थान्तरम्, एवं घटज्ञानानुपलब्धिर्नाम घटज्ञानोपलब्धित्वावस्थापरित्यागेन भावरूपपटादिवस्त्वन्तरोपलब्धिरूपमेवेत्यर्थः। ततश्च भावरूपतयावस्थान्तरोपलब्धिर्वस्त्वन्तरोपलब्धिः। सैव घटज्ञानाद्यनुपलब्धिरिति भावः। अत्र केचित्—'ज्ञानस्य योग्यानुपलब्धिर्नाम भावरूपावस्थान्तरोपलब्धिः। पिण्डत्वाद्युपलब्धिरेव हि घटस्य योग्यानुपलब्धिः' इति ग्रन्थपर्यालोचनायां, तथोत्तरत्र 'अतीतकालावच्छिन्नज्ञानाभावो नाम ज्ञानस्य संकोचोऽर्थान्तरज्ञानं वा' इति ग्रन्थस्य, गजज्ञानाभावनिर्वचनानन्तरप्रवृत्तस्य 'तत्कालीनस्वापादिप्रतिसंधानं घटादिज्ञानप्रतिसंधानं वा गजज्ञानस्य योग्यानुपलब्धिः' इति ग्रन्थस्य च पर्यालोचनायां घटाभावोपलब्धिरेव घटानुपलब्धिः, गजज्ञानाभावोपलब्धिरेव गजज्ञानानुपलब्धिरिति प्रतीयते; न च तद्युज्यते, घटाभावोपलम्भस्य घटोपलम्भाभावस्य च भिन्नत्वात्। किंच घटाभावोपलम्भस्यैव घटोपलम्भाभावत्वे घटानुपलब्ध्या लिङ्गेन घटाभावोऽनुमीयत इत्येतद्विरुध्येत; न ह्यभावोपलब्ध्याऽभावोऽनुमीयत इति शक्यते वक्तुमिति चोदयन्ति—तन्न; उक्तरीत्या भावोपलम्भस्य तदनुपलब्धिरूपत्वाभावेन 'ज्ञानसंकोचो वावस्थान्तरं वानुपलब्धिः' इत्यत्रैव तात्पर्यात्।

## श्रुतप्रदीपिका

धीरेवाभावग्राहिकेत्युक्तम्; तस्याः प्रमाणानन्तर्भावात् ग्राहकत्वाभावं शङ्कते—**अथोच्येतेति**। मानान्तरानवसेयत्वं विवृणोति—**नहीति**। निगमयति—**अत इति**। परिहरति—**यदीति**; यदिः किमर्थः, किमवरूढश्चेत् तदेत्यर्थः। षष्ठं मानं पराङ्गीकृतमिति योग्यानुपलब्ध्यैवाभावः समर्थितः।

## तत्त्वटीका

यदि तत्र स्वतः स्वप्रागभावं साधयता प्रत्यक्षविशेषे वर्तमानग्राहित्वनियमो नान्यत्रेति विभक्तं तत्र केन प्रमाणेन जनिता धीः स्वाभावग्राहिणीति विकल्पगर्भां प्रत्युक्तिं शङ्कते—**अथेति**। तत्र संप्रतिपन्नांशाभिप्रायेणाह—**न तावदिति। न प्रत्यक्षावसेयः**;

प्रत्यक्षस्वरूपया स्वप्रतियोगिन्या धिया दुर्ग्रह इत्यर्थः । परोक्षग्राह्यत्वमपि निरस्यति—**न चेति** । लिङ्गाद्यभावं पृथग्व्यनक्ति—**न हीति** । अनुमानार्थापत्त्योरदूरविप्रकर्षादव्यवहितोक्तिः । स्वेष्टस्याप्यत्रोपमानस्यात्यन्तासंभवादनुक्तिः । फलितं स्वाभिमतषष्ठप्रमाणसाध्यत्वमाह— **अत इति** । **प्रमाणाभावात्**; प्रमाणपञ्चकनिवृत्तेरित्यर्थः । तथा च शावरम्—“अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्य” इति । कारिका च—

“प्रमाणपञ्चकं यत्र वस्तुरूपे निवर्तते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥”

इति । परोक्तामनुपपन्नोक्तिं दूषयितुमाह—**यद्येवमिति** । प्रागस्मदुपक्षिप्तयैवेत्येवकाराभिप्रायः । ग्रहणाभावात् संवित्प्रागभावस्याभावं वदतो निषेध्यवत्स्वव्याघातः स्यादित्यभिप्रायेणानूक्तमेव विवृणोति—**स्वत इति** । चेदित्येतत् केषुचित्कोशेषु न दृश्यते; तदा **यदी**त्यादिकम् **अवरुद्ध** इत्यन्तमेकं वाक्यम् । यथा त्वया स्वतः सिद्धत्वबलं त्यक्तं तथाहमपि स्वतः स्वाभावग्रहणमादृत्य त्वदुपक्षिप्तं प्रतियोगिविषयप्रमाणाभावमेव संविदभावे प्रमाणयामीत्याह—**योग्येति** । प्रतिबन्दिमात्रशङ्काव्युदासाय **समर्थित**शब्दः । प्रत्यक्षसामग्रीप्रविष्टेन षष्ठप्रमाणेन ज्ञानस्याभावं साधयन् महाप्राज्ञोऽसीत्युपहासार्थं इह **भव**च्छब्दः ।

स्वज्ञानाभावदृष्ट्या हि ज्ञानिनस्त्वं प्रपद्यसे ।
अज्ञातं पृच्छ्यमानश्च न जानामीति भाषसे ॥ ४६० ॥
परधीजननार्थं च त्वया वाक्यं प्रयुज्यते ।
शृणोषि च स्वधीसिद्ध्यै कथं नित्यां ब्रवीषि ताम् ॥ ४६१ ॥
प्रत्यक्षाद्यैः सुषुप्त्यादौ न हि धीः क्वापि गम्यते ।
ग्राह्यग्राहकधीस................॥ ४६२ ॥
पूर्वोत्तरसुषुप्त्यादिग्राहिणी च स्वयं मतिः ।
स्वाभावमपि गृह्णाति तत्तन्मानसमुद्भवा ॥ ४६३ ॥
अतो यथोचितैर्मानैः स्वस्यान्येषां च संविदः ।
विषयादिविशिष्टायाः प्रागभावः प्रसाध्यते ॥ ४६४ ॥
ज्ञानद्रव्यस्य नित्यत्वं युक्तिभिः स्थाप्यते न तु ।
तत्तत्प्रसृतिभेदानामुत्पत्त्यादीति भाष्यते ॥ ४६५ ॥

तत्र यद्यपि नित्यत्वं ज्ञानद्रव्यस्य वक्ष्यते ।
तथापि प्रसृताकारे प्रागभावादिभाषणम् ॥ ४६६ ॥
मृद्घटादिनयाद्बुद्धेः स्थिरागन्तुकवर्ष्मणः ।
नित्यानित्यत्ववादानां यथाभागं प्रमाणता ॥ ४६७ ॥
परस्तु सविकारत्वं श्रुतं ज्ञानस्य नेच्छति ।
अस्मत्पक्षसमानत्वमतस्तैर्नात्र दुर्वचम् ॥ ४६८ ॥

### मूलभावप्रकाशिका

नन्वनुभूतिप्रागभावस्यानुभूतिग्रहणयोग्यत्वमस्तु ; तथापि तस्या अनुभूतेः प्रत्यक्षाद्यन्यतमत्वं न संभवतीति चोदयति--**अथोच्येतेति** । **योग्यानुपलब्ध्यैवेति** ; परेणाभावप्रमाणस्याभ्युपेतत्वादेवमुक्तम् । स्वमते गजज्ञानानुपलब्धिर्नाम गजज्ञानोपलब्धिविरोधी स्वापो वा तादृशघटादिविषयज्ञानं वा ; तच्च लिङ्गविधया गजज्ञानाभावज्ञानहेतुर्भवतीति भावः ।

### न्यायसुदर्शनम्

**योग्यानुपलब्ध्यैवाभावः समर्थित** इत्यत्रार्थाभावहेतुभूतयोग्यानुपलब्ध्यैव ज्ञानाभावोऽपि सिद्धः । अन्यथा अर्थज्ञाने सत्यर्थस्याप्यभावप्रसङ्गात् । अतोऽर्थप्रकाशाभावात् ज्ञानाभावोऽपि सिद्धः ।

### श्रीभाष्यम्

किंच प्रत्यक्षज्ञान स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत्तस्य न सर्वदा सत्तामवगमयद् दृश्यत इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते । तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः । घटादिविषयमेव संवेदनं स्वयं कालानवच्छिन्नं प्रतीतं चेत्, संवेदनविषयो घटादिरपि कालानवच्छिन्नः प्रतीयेतेति नित्यः स्यात् । नित्यं चेत्संवेदनं स्वतः सिद्धं नित्यमित्येव प्रतीयेत । न च तथा प्रतीयते ।

## श्रुतप्रकाशिका

एवं प्रागभावस्य योग्यानुपलब्धिसिद्धत्वमभिधायार्थापत्तिमप्याह—**किंचेत्यादिना**। ज्ञानस्य स्वावभासाभावलक्षणयोग्यानुपलब्ध्याऽनित्यत्वमुक्तम्। अथ विषयप्रकाशनिरूपणमुखेनाप्यनित्यत्वमुपपाद्यते। अविशेषेण ज्ञानस्याभावग्रहणमुपपन्नमित्युक्तम्। अथ किं भवता नित्यत्वं सविषयज्ञानस्य सिषाधयिषितम्, उत निर्विषयस्येति विकल्पमभिप्रेत्य सविषयपक्षं दूषयति—**प्रत्यक्षेत्यादिना**। **सर्वदा**; घटसत्ताकाले सर्वस्मिन् न प्रतीयत इत्यर्थः। घटादेः पूर्वोत्तरकालसत्ता न प्रतीयताम्; ततः किमित्यत्राह—**तदप्रतीतिश्चेति**। **अप्रतीतिः**; ज्ञानस्य घटव्यवहारानुगुण्याभावः। अतो न साध्याविशिष्टता। नियमेन स्वसमकालवर्तिग्राहिणः प्रत्यक्षज्ञानस्य पूर्वोत्तरकालयोर्विद्यमानेऽपि घटे तदप्रकाशकत्वं तदानीं स्वाभावादेवेत्यर्थः। एवं विषयव्यवहारानुगुण्यकादाचित्कत्वान्यथानुपपत्त्या ज्ञानानित्यत्वमुक्तम्; अर्थापत्त्यन्तरमप्याह—**घटादिविषयमेवेति**। विषयसमकालवर्तिनः प्रत्यक्षसंवेदनस्य नित्यत्वे घटादिरपि नित्यः स्यात्। अतो घटाद्यनित्यत्वान्यथानुपपत्त्या ज्ञानानित्यत्वमित्यर्थः। अथार्थापत्त्यन्तरमाह—**नित्यं चेदिति**। संविदो नित्यत्वसाधनं संविदम् 'इयम्' इति विषयीकृत्यैव कर्तव्यम, स्वतः सिद्धत्वेन 'इयम्' इति विषयीकारानर्हत्वात्स्वयमेव नित्यमिति प्रतीयेत; न च तथा प्रतीयते। तस्मादनित्यमेवेत्यर्थः। एवं नित्यतयानवभासान्यथानुपपत्त्या ज्ञानानित्यत्वमुक्तम्। अनित्यतयानवभासान्नित्यत्वमिति चेत्—न; पूर्वापरावधिद्वयसापेक्षस्यानित्यत्वस्य सद्भावेऽप्यवधिद्वयास्वयंप्रकाशत्वादेवानित्यत्वाप्रकाशत्वोपपत्तेः। यद्वा घटादिनित्यत्वप्रसङ्गो नित्यत्वेनावभासप्रसङ्गश्च विषयव्यवहारानुगुण्यकादाचित्कत्वान्यथानुपपत्तेरनुग्राहकतर्कतयोक्तौ भवतः।

## भावप्रकाशिका

पूर्वग्रन्थस्य प्रागभावसमर्थनपरत्वादुत्तरग्रन्थस्यानित्यत्वसमर्थनपरत्वादेकविषयत्वाभावात् **किंचे**त्ययुक्तमित्याशङ्क्य, उत्तरग्रन्थानुसारेण पूर्वग्रन्थस्याप्यनित्यत्वपरत्वमभिप्रयन्नाह—**ज्ञानस्य स्वावभासेति**। **अथ विषयप्रकाशनिरूपणमुखेनेति**; विषयप्रकाशकादाचित्कत्वनिरूपणमुखेनेत्यर्थः। **अतो न साध्याविशिष्टतेति**; अयं भावः—**तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीते**रिति वाक्ये संवेदनस्याप्रतीतिः साध्यतया प्रतीयते; प्रतीतेः कालपरिच्छिन्नत्वं हेतुतया प्रतीयते; कालपरिच्छिन्नत्वात्

कालान्तरेऽसत्त्वात् अप्रतीतिः प्रतीत्यभाव इत्युक्ते साध्याविशेष इत्यर्थः। इदं चोपलक्षणम्–संवेदनस्य तदप्रतीतिरित्यनन्वयश्च । न च संवेदनस्येत्यस्य कालपरिच्छिन्नतयेत्यनेनान्वय इति वाच्यम्, प्रतीतेरित्यनेनान्वितस्य कालपरिच्छिन्नतयेत्यस्य निराकाङ्क्षत्वात् । तस्मादस्य भाष्यस्य **संवेदनस्य तदप्रतीतिः** घटादिसत्ताव्यवहारानुगुण्याभावः प्रतीतेः कालपरिच्छिन्नत्वादित्यर्थ इति भावः । केचित्तु **कालपरिच्छिन्नतया प्रतीते**रित्यत्र प्रतीतेरित्येतदविवक्षितम्; संवेदनस्य कालरिच्छिन्नत्वादित्येवार्थः । एवं च न तदप्रतीतिरिति साध्याविशेष इति वर्णयन्ति । **अर्थापत्यन्तरमाहेति**; ननु प्रत्यक्षज्ञानं स्वविषयस्य स्वसमकालवर्तितावगमकस्वभावमिति सिद्धम्; घटप्रत्यक्षे 'इदानीं घटोऽस्ति, न वा' इति तत्काले संदेहादर्शनात् । ततश्च प्रत्यक्षं स्वयं सर्वकालवर्तित्वेन भातं चेत्, स्वविषयमपि सर्वकालवर्तितया भासयेत् । स्वविषये घटादौ कालापरिच्छिन्नत्वलक्षणसार्वकालिकत्वावभासाभावात् ज्ञानेऽपि कालानवच्छिन्नत्वलक्षणसार्वकालिकत्वेन प्रतीतिर्नास्ति । अपितु कालावच्छिन्नत्वलक्षणानित्यत्वेनैव ज्ञानस्य प्रतीतिः । न च ज्ञाने नित्यत्वभाने हि विषयेऽपि तथात्वप्रसङ्गः; नित्यानित्यत्वौदासीन्येनैव प्रतीतेर्न दोष इति वाच्यम्, स्वप्रकाशज्ञाने नित्यत्वधर्माभानेऽनित्यत्वरूपधर्मभानावश्यंभावादित्येवं ग्रन्थतया योजयितुं शक्यत्वात् इति चेत्- सत्यं सा योजना प्रतीयते, युक्तिर्न समीचीना। ज्ञाननित्यत्वे विषयस्यापि तथात्वमित्युक्ते ईश्वरप्रत्यक्षेऽतथात्वात् स्वव्यवहारानुगुण्यकादाचित्कत्वमेव वक्तव्यमवशिष्यते । अत एव वक्ष्यति 'अनुग्राहकतयोक्तौ भवतः' इति । पूर्वापरावधिद्वयास्वयंप्रकाशत्वादेवानित्यत्वस्याप्रकाशे अवधिद्वयराहित्यरूपनित्यत्वस्याप्यप्रकाशः सुवच एव। कालापरिच्छिन्नत्वलक्षणनित्यत्वपक्षेऽपि कालपरिच्छेदस्यास्वयंप्रकाशत्वादेव तदभावलक्षणनित्यत्वस्याप्रकाशोपपत्तिरित्यस्वरसादाह—**यद्वा घटादिनित्यत्वप्रसङ्ग इति** ।

## श्रुतप्रदीपिका

अर्थापत्तिमप्याह — **किंचेति** । सविषयस्य निर्विषयस्य वा ज्ञानस्य नित्यत्वमिति विकल्पमभिप्रेत्य प्रथमं दूष्यते—**प्रत्यक्षेत्यादिना** । घटसत्ताकालकार्त्स्न्यपरः **सर्वदा**शब्दः । ततः किमित्यत्राह—**तदप्रतीतिरिति**; अप्रतीतिरप्रकाशः। ज्ञानस्य विषयव्यवहारानुगुण्याभावो विवक्षितः । एवं विषयव्यवहारानुगुणकादाचित्कत्वान्यथानुपपत्त्या धियः कादाचित्कत्वमुक्तम् । अथ घटाद्यनित्यत्वान्यथानुप-

त्तिमाह—**घटादीति**। नित्यतयानवभासान्यथानुपपत्तिमाह—**नित्यं चेति**। यत्पूर्व-पक्षिणा संविदः स्वतःसिद्धत्वेन ज्ञानान्तरविषयत्वाज्ज्ञानान्तरेण तदभावो दुर्ग्रह इत्युक्तं ज्ज्ञानान्तरेण तन्नित्यत्वग्रहेऽपि समानमित्यभिप्रयन्नाह—**स्वतः सिद्धमिति**। यद्वा प्रथमो-र्थापत्तेरेवानुग्राहकतर्कद्वयं घटादीत्यादिग्रन्थद्वयोक्तम्।

## तत्त्वटीका

उक्तसंविदनित्यत्वग्राहकानुग्रहक्षमम्।
प्रसङ्गत्रितयं वक्तुमथ किंचेति भाष्यते ॥ ४६९ ॥

के सर्वलोकविदितं सविषयमेव ज्ञानं नित्यमिति त्वया साध्यते, उत निर्विषयमन्यदिति कल्पं मत्वा प्रथमे बाधका उच्यन्ते। अत्रार्थापत्तिरेका; अस्या अनुग्राहकद्वयमिति चित्। **प्रत्यक्षज्ञानम्**; अस्मदादीन्द्रियजन्यधीरित्यर्थः; योगिप्रत्यक्षं हि त्रैकालिकविष-मिति। स्वशब्दावत्र धीविषयौ। **साधयत्**; व्यवहारानुगुणीकुर्वत्। **सर्वदा**; यावत्स्व-षयकालम्। **पूर्वोत्तरकालसत्ता**; प्रागभावप्रध्वंसकालावच्छिन्नसत्ता। **न प्रतीयते**; व्यवहारानुगुणीभवतीत्यर्थः। तेन ज्ञाननित्यत्वस्य को विरोध इत्यत्राह—**तदिति**। **लपरिच्छिन्नतया**; स्वविषयावच्छिन्नकालमध्येऽल्पतरकालवर्तितयेत्यर्थः। घटादे-वेस्तुत्तं प्रकाशमानत्वं प्रसञ्जितम्; न केवलं तावन्मात्रम्, नित्यत्वमपि प्रसक्तमित्याह—**टादीति**। अस्मदादीनां घटादिप्रत्यक्षमतीतानागतानालम्बनं यावत्स्वकालं स्वविषयसत्तां धयतीति भावः। **प्रत्यक्षज्ञानमित्यादि स्यादित्यन्तमेकतर्कविषयं** वा। एवं वेद्य-काशव्यवस्थया तदनित्यत्वाच्च विरोध उक्तः। वित्तिप्रकाशव्यवस्थयाप्याह—**नित्यमिति**। **तः सिद्धमिति** हेतुगर्भम्; बुद्धेरनित्यत्वं बुद्ध्यन्तरं चानिच्छता त्वयान्यतो धीनित्यत्वस्य नुमयुक्तत्वादित्यर्थः। एवकारः संशयाद्यसंभवप्रसञ्जनार्थः।

वित्त्यन्तरेण तु धियो नित्यत्वं यदि साध्यते।
अभावप्रतियोगित्वमपि तद्वत् प्रसाध्यताम् ॥ ४७० ॥

विषयीकृत्यनर्हत्वात्प्रागभावादि निर्वदन्।
अन्योन्याभावमप्येवं त्यक्त्वा मिथ्यैक्यमिच्छतु ॥ ४७१ ॥

### मूलभावप्रकाशिका

घटादिज्ञानानां नित्यत्वे घटादीनां सर्वदा प्रकाशप्रसङ्गात् घटादिज्ञानानित्यत्वमभ्युपेयमित्याह––**किंचेति**। **तदप्रतीतिश्चेति**; प्रतीतेः कालपरिच्छिन्नतया संवेदनस्य तदप्रतीतिरित्यन्वयः । **तदप्रतीतिः**; घटाद्यप्रतीतिः; घटादिविषयकव्यवहारानुगुण्याभाव इत्यर्थः । यद्वा **प्रतीते**रित्येतत्परिच्छिन्नत्वे प्रमाणोपन्यासपरम् । संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः कालपरिच्छिन्नत्वादित्यर्थः । विषयसमकालवर्तिनः प्रत्यक्षसंवेदनस्य नित्यत्वे घटादिरपि नित्यः स्यात्; अतो घटाद्यनित्यत्वान्यथानुपपत्त्या ज्ञानानित्यत्वमभ्युपगन्तव्यमित्याह—**घटादिविषयमेवेति** । **कालानवच्छिन्नं प्रतीतं चेदिति**; कालानवच्छिन्नं चेदित्यर्थः । एवमुत्तरत्रापि **प्रतीये**तेत्यस्यार्थः । युक्त्यन्तरमाह—**नित्यं चेदिति**। नित्यस्यापि संवेदनस्य नित्यत्वप्रतीतिनियमे किं मानमित्याशङ्क्याह—**स्वतः सिद्धमिति**। स्वप्रकाशत्वादेव तन्नित्यत्वमपि भासेत। ज्ञानान्तरेण 'संवेदनं नित्यम्' इति ग्रहे स्वप्रकाशत्वभङ्गापत्तिरिति भावः । आसां च युक्तीनामभ्युच्चययुक्तित्वादेव क्षोदानर्हत्वेऽपि न दोषः ।

### श्रीभाष्यम्

एवमनुमानादिसंविदोऽपि कालानवच्छिन्नाः प्रतीताश्चेत्, स्वविषयानपि कालानवच्छिन्नान् प्रकाशयन्तीति ते च सर्वे कालानवच्छिन्ना नित्याः स्युः, संविदनुरूपत्वाद्विषयाणाम्। न च निर्विषया काचित्संविदस्ति, अनुपलब्धेः। विषयप्रकाशनतयैवोपलब्धेरेव हि संविदः स्वयंप्रकाशता समर्थिता। संविदो विषयप्रकाशतास्वभावविरहे सति स्वयंप्रकाशत्वासिद्धेरनुभूतेरनुभवान्तराननुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात्। न च स्वापमदमूर्च्छादिषु सर्वविषयशून्या केवलैव संवित् परिस्फुरतीति वाच्यम्, योग्यानुपलब्धिपराहतत्वात्। तास्वपि दशास्वनुभूतिरनुभूता चेत्, तस्याः प्रबोधसमयेऽनुसंधानं स्यात्; न च तदस्ति ।

अथानुमानादिविषयाणामपि नित्यत्वमनिष्टं प्रसञ्जयति--**एवमिति** । **एवम्**; प्रत्यक्षज्ञाननित्यत्वे विषयनित्यत्वप्रसक्तौ सत्यामित्यर्थः । कुतो नित्यतेत्यत्राह---**संविदनुरूपेति** । यथा संवित्स्वविषयं दर्शयति तथा भावादिति तदर्थः । ननु—प्रत्यक्षस्य समकालवर्तिविषयत्वनियमात्तन्नित्यत्वे विषयनित्यत्वप्रसङ्ग उपपन्नः; अनुमानादिसंविदामतीतानागतविषयत्वसंभवात्कथं तन्नित्यत्वे विषयनित्यत्वप्रसङ्गः? उच्यते—अतीततानागतते ह्यापेक्षिके वर्तेते । ततः संविदपेक्षया हि विषयस्यातीतत्वानागतत्वे । संविदो नित्यत्वे तदपेक्षया विषयस्यातीतत्वानागतत्वे संविन्न दर्शयतीति कालानवच्छिन्नतया प्रतीता विषया नित्याः स्युरिति । कालानवच्छिन्नत्वमेवानुगतं नित्यत्वलक्षणमित्यभिप्रायेण **कालानवच्छिन्ना नित्या** इत्युक्तम् । ननु-न संविदपेक्षया विषयस्यातीतत्वागामित्वे, किंतु लिङ्गाद्यर्थान्तरापेक्षया; ततो विषयस्य लिङ्गाद्यपेक्षयातीतत्वमागामित्वं च संभवतीति न नित्यत्वप्रसङ्गः । उच्यते—लिङ्गादेः प्रत्यक्षज्ञानविषयत्वात्तन्नित्यत्वेन तद्विषयभूतलिङ्गादेरपि नित्यत्वापातात्तदपेक्षयानुमानविषयस्यातीतत्वमागामित्वं च संविन्न दर्शयतीति कालानवच्छिन्नो नित्य एव विषयः स्यादिति । एवं पूर्वोक्तदोषमुपजीव्यानुमानविषयनित्यत्वप्रसक्तिरित्यभिप्रायेण **एवमि**त्युक्तम् । एवं पूर्वोक्तविकल्पे सविषयानुभवस्य नित्यत्वं निराकृतम्; अथ निर्विषयानुभवस्य नित्यत्वपक्षं निराकरोति—**न चेति** । कुत इत्यत्राह—**अनुपलब्धेरिति** । न केवलं *निर्विषयसंविदनुपलब्धेरेव, सविषयसंविद एव परेण स्वयंप्रकाशत्वसमर्थनात् तदभ्युपगमप्रकारेणापि निर्विषया संविन्नास्तीत्याह--**विषयेति** । ततः किमित्यत्राह—**संविदो विषयेति** । सविषयज्ञानोत्तीर्णायाः संविदः कदाचिदपि विषयसंबन्धाभावेन स्वयंप्रकाशत्वासिद्धेर्ज्ञानान्तरावेद्यत्वाच्च तुच्छतेत्यर्थः । ननु यदि विषयप्रकाशकतया स्वयंप्रकाशत्वमुपपाद्यते तदायं दोषः स्यात्; विषयसंबन्धाभावेऽप्यनुभूतित्वादित्यनेन साध्यस्वप्रकाशत्वसिद्धिरिति चेत्—किमिदमनुभूतित्वम्? किं स्वतः सिद्धत्वम्? तदा साध्याविशिष्टता स्यात् । यदि विषयप्रकाशत्वमनुभूतित्वं, तदानीमुक्तदोषः स्यादेव । विद्यमानदशायां सर्वदा भासमानत्वमपि न त्वया हेतुत्वेन वाच्यम्, सुखदुःखेच्छादौ जडत्वेन त्वदभिमते व्यभिचारात् । अतो विषयप्रकाशकत्वमनुपजीव्य स्वयंप्रकाशत्वं दुःसाधमित्युक्तदोषानतिवृत्तिः । कथं स्वप्रकाशत्वरूपसाध्यधर्मनिवृत्तौ धर्मि-

---

* पा. निर्विषयासंविदनुपलब्धेरेव

भूतसंविदसिद्धिरित्यत्राह—**अनुभूतेरनुभवान्तराननुभाव्यत्वाच्चेति**। नन्वेकस्या एव संविदोऽन्तःकरणवृत्तिद्वारा विषयसंबन्धः कादाचित्कः, तद्विगमेऽपि स्वापादिदशासु स्वप्रकाशा संविच्चकास्तीति न तुच्छताप्रसक्तिरित्यत्राह—**न चेति**। केवलशब्देन निराश्रयत्वमुच्यते। कुत इत्यत्राह--**योग्येति**। तदेवोपपादयति---**तास्वपीति**। विपर्यये पर्यवसानं दर्शयति—**न च तदस्तीति**।

### भावप्रकाशिका

**अनुगतं नित्यत्वलक्षणमिति**; सर्वकालसंबन्धित्वलक्षणनित्यत्वस्य कालसाधारण्याभावादिति भावः। **लिङ्गादेः प्रत्यक्षज्ञानविषयत्वादिति**; इदमुपलक्षणम्। 'अधुनेदमतीतम्' इति ज्ञानं स्वाधारकालवृत्तिध्वंसप्रतियोगित्वलक्षणमतीतत्वमतीतवस्तुनि विषयीकरोति। 'इदमिदानीमतीतम्' इति शब्दप्रयोगस्थलेऽपि 'इदानीम्' इति शब्दप्रयोगाधारकालवृत्तिध्वंसप्रतियोगित्वलक्षणमतीतत्वमेव भासते। ततश्च ज्ञानस्य नित्यत्वे सर्वस्यापि कालस्य तज्ज्ञानाधारकालतयातीतानागतव्यवस्थानुपपत्तिः। न चैवमीश्वरज्ञानेऽतीतत्वोल्लेखाद्यनुपपत्तिः स्यादिति वाच्यम्, तत्राप्यवस्थाभेदेन ज्ञानभेदमादायैवातीतत्वस्य समर्थनीयत्वादित्यपि द्रष्टव्यम्। वस्तुतस्तु अनुमित्यादीनां नित्यत्वे प्रत्यक्षमेव स्यात्। ततश्च तद्विषयाणामपि नित्यत्वमेव स्यादिति दूषणे तात्पर्यमित्याहुः।

### श्रुतप्रदीपिका

अनुमानादिधियामपि तथात्वे विषयनित्यत्वं प्रसञ्जयति—**एवमिति**। **एवम्**; प्रत्यक्षज्ञानस्य कालानवच्छेदे सतीत्यर्थः। अनुमानादिधियां वेद्यसमकालत्वनियमाभावेऽपि वेद्यातीतत्वागामित्वे धीकालापेक्षयेति स्वनित्यत्वे तदसिद्धिः। न तु लिङ्गाद्यपेक्षया, लिङ्गादिजधियो लिङ्गादितत्कालगोचरत्वाभावात्। लिङ्गादेः प्रत्यक्षधीवेद्यत्वात् उक्तनीत्या प्रत्यक्षस्य च कालानवच्छिन्नविषयत्वादिति भावः। **कालानवच्छिन्ना इति**; अनुगतनित्यत्वलक्षणसूचनम्। कथमित्यत्राह—**संविदिति**; संविदो विषयान् अवच्छिन्नान् अनवच्छिन्नान् वा यथा प्रकाशयन्ति तथैव विषयैर्भवितव्यमित्यर्थः। मृदोऽनुवृत्तावपि घटाद्यवस्थयेव धियोऽपि प्रत्यक्षाद्यवस्थत्वेनानित्यत्वोपपत्तिः। अथ व्योम्न इव धियोऽवच्छेदकघटादिविगमेऽपि नित्यत्वमित्यत्राह-- **न चेति**। विषयोऽवच्छेदकः; विशिंषन् हि विषय इत्युच्यते। अत आश्रयस्यापि ग्रहणम्। उत्तरत्र तु पृथङ् निर्देशाद्विषयशब्दः

कर्ममात्रपरः । इह तदभावादवच्छेदकपरः । हेत्वन्तरमाह—**विषयेति** । धूमपतनयोरभावेऽपि वह्निगुरुत्वयोः सिद्धिवत्स्वप्रकाशत्वसिद्धिः किं न स्यादित्यत्राह—**संविद इति** । सा च समव्याप्त्यभावात् । धूमपतनयोरभावेऽपि मानान्तरेण वह्निगौरवयोरिवात्र न मानान्तरेण धर्मिसाध्ययोः सिद्धिरभ्युपगतेति स्वप्रकाशत्वस्यासिद्धेः संविदस्तुच्छतेत्यर्थः । न तुच्छता, स्वापादौ भानादित्यत्राह—**न चेति** । योग्यानुपलब्धिमुपपादयति—**तास्वपीति** ।

तत्त्वटीका

प्रत्यक्षधियो नित्यत्वं पुरस्कृत्योपलम्भविरोधो विषयनित्यत्वं च प्रसञ्जितम्; परोक्षधियामपि नित्यत्वे तत्प्रसञ्जयति—**एवमिति**; प्रत्यक्षोक्तप्रकारसाम्यादित्यर्थः । **संविद इति**; नन्वनुमानादिधियां न स्वकालवर्त्तिप्रकाशननियमः—सत्यम्; अयं त्विह भावः—यत्रासां वर्तमानप्रकाशकत्वं तत्र संविदवच्छिन्नकालवर्तित्वग्रहाद्विषयनित्यत्वप्रसक्तिः स्यादेव । अनागतादिप्रकाशनेऽपि धीनित्यत्वे तदवच्छिन्नकालप्रतियोगिकस्य विषयातीतत्वादेरसिद्धिः । यत्र लिङ्गस्य प्रत्यक्षत्वं तत्र तन्नित्यत्वं पूर्वोक्तप्रकारेण प्राप्तम् । तथाच तद्व्यापकस्यापि नित्यत्वप्रसक्तिरिति । ननु स्वयं नित्यापि घटादिसंवित् कदाचिदेव घटादीनुल्लिखतु; मैवम्—

अर्थोल्लेखस्वभावा चेन्निमितिस्तस्य विसर्जने ।
निःस्वभावा प्रसज्येत तथा वा परिणामिनी ॥ ४७२ ॥

अथ निर्विषयत्वं तत्स्वभावस्तादृशी कथम् ।
अर्थबोधस्वरूपा स्यादवस्थाद्वयवर्जनात् ॥ ४७३ ॥

**कालानवच्छिन्न**शब्देन कालादिसर्वानुगतनित्यशब्दनिमित्तोक्तिः । अतो न पुनरुक्तिः । यद्वा त्वन्मतेऽपि देहिनां कालावच्छिन्नतया भातानामपि श्रुत्याद्यैस्तद्विपरीतत्वं सिद्धम्; तद्वत्संविदि तद्विषयेषु चापातप्रतीतविपरीतं नित्यत्वमनित्यत्वं च स्यादित्यत्राह—**संविदिति** । **संविदनुरूपत्वम्**; तत्प्रकाशितप्रकारेणावस्थानम् । अयं त्विह भावः—संविदेव हि नीलपीतादिव्यवस्थायां शरणम्; स्वतःप्रमाबाधे त्वन्यथा; तव तु बाधकज्ञानस्याप्युक्तरीत्या स्वरूपतो विषयतश्च नित्यत्वप्रसक्त्याध्यासानुदयप्रसङ्गः । ततश्च बाधकासंभवाद्यथाप्रकाशं विषयनित्यत्वं सिध्येदिति । भवतु सविषयस्यान्तःकरणवृत्तिविशेषस्य तदवच्छिन्नचैतन्यस्य चोत्पत्त्याद्युपलब्धिः; विषयाश्रयशून्या तु संविन्नित्या स्यादिति पूर्वोक्त-

विकल्पयोः कोट्यन्तरं निरस्यति—**न निर्विषयेति**। एतेन निराश्रयत्वमप्युपलक्ष्यते। यद्वा विषिणोतीति विषयः; विशेषेण संबध्नातीत्यर्थः; तेन संविदवच्छेदकं वेद्यं वेदिता च संगृह्यते। किमत्र घटादिविषयसंविदोऽन्या काचिन्निर्विषयेत्युच्यते, उत वस्तुवृत्त्या सैवेति विकल्पे द्वयोरप्ययोगमभिप्रेत्याह—**काचिदिति**। तथैव दृष्टेस्तदभावे तदसिद्धिरित्युक्तम्। उभयत्र बाधकमाह—**अनुपलब्धेरिति**। योग्यत्वे सतीति विशेषणीयम्। पराभ्युपगतिविरोधमप्याह—**विषयेति**। प्रसिद्धायाः संविदो निर्विषयत्वं वा तादृशसंविदन्तरं वा युक्तिशास्त्राभ्यां साधयाम इत्यत्रानिष्टमाह—**संविद इति**। **विषयप्रकाशतास्वभाव**शब्देन प्रागुक्तानुमानं सूच्यते। अयं भावः—विषयप्रकाशत्वं संविदः स्वरूपं धर्मो वा? आद्ये तन्निवृत्तिं वदतः कथं धर्मिसाध्ययोः सिद्धिः? द्वितीये तस्य स्वप्रकाशत्वसमकालतयैव दृष्टेस्तदभावे तदसिद्धिरिति। स्वतः परतो वा अप्रकाशमानं तुच्छं मन्यसे; संविदि तूभयासंभवात् तुच्छाद्व्यावृत्तिर्दुर्लभेत्यवधारणाभिप्रायः। यद्वा सत्त्वकोटिर्दूरनिरस्ता; अनिर्वचनीयकोटिरप्यलभ्येति भावः। अनुभूतित्वात्तत्सिद्धिरिति चेत्—अनुभूतित्वं नाम विषयप्रकाशत्वं चेत्, तद्दूषितमेव; स्वप्रकाशत्वं चेत् साध्याविशेष इति।

स्वावच्छेदकनिर्मुक्तसंविन्नित्यत्वमिच्छता।
संयोगच्छेदनादौ च किं न तादृक्त्वमिष्यते ॥ ४७४ ॥

घटाकाशादिनीतिश्च त्वया संविदि दुर्भणा।
तत्तत्संयोगविश्लेषतुल्यागन्तृगुणोज्झनात् ॥ ४७५ ॥

**अनुपलब्धे**रित्युक्तस्यावस्थान्तरेष्वसिद्धिशङ्कां परिहरति—**न च स्वापेति**। आदिशब्देन समाध्यवस्थासंग्रहः। **केवला**; अहंकारविगमान्निराश्रयेत्यर्थः। दत्तोत्तरत्वमभिप्रेत्याह—**योग्येति**। ननु स्वापादिदशावर्तिनी जागरवर्त्तिनी वा योग्यानुपलब्धिरिहोपलक्ष्यते? नाद्यः, तदानीमिदानीं वा तदित्यसत्, अध्यस्ताश्रययोगादेरद्याप्यनुपपादनात्, तात्त्विकानुपलम्भस्यानुपलम्भात्। न द्वितीयः, कालान्तरसंविदः कालान्तरे प्रत्यक्षयोग्यत्वायोगात्; तत्तदधीनव्यतिरिक्तहेतुसाकल्यं हि योग्यत्वम्। अतो योग्यानुपलब्धिपराहतत्वादिति हेतुरसिद्धः; तत्राह—**तास्विति**। अयं भावः—'स्वापादिषु संविदासीत्' इत्यद्यतनोपलब्धिस्तावत् योग्यानुपलब्ध्या निरस्ता। तदानींतनसंविदस्तदातनोपल-

विधश्च व्यापकानुपलब्ध्या बाधितेति । स्मर्तव्यस्य स्मरणमुपलम्भव्यापकम्; तदभावात् तदभाव इत्यभिप्रायेणाह---**न च तदिति**।

### मूलभावप्रकाशिका

**संविदनुरूपेति**; नन्वनुमानादिसंविदामतीतानागतविषयत्वसंभवात् कथं तन्नित्यत्वे विषयनित्यत्वप्रसङ्गः? प्रत्यक्षस्यैव समकालविषयकत्वनियमाभ्युपगमादिति चेत्—न; अनुमानादीनां नित्यत्वे तेषां प्रत्यक्षत्वस्याप्यापातादित्यत्र तात्पर्यात्। ननु विषयनित्यत्वप्रसङ्गरूपबाधकबलात् सविषयसंविदो मा भून्नित्यत्वम्; निर्विषयायास्तु नित्यत्वं स्यादित्याशङ्क्य निराकरोति---**न च निर्विषयेति**। **स्वयंप्रकाशता समर्थितेति**; स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वादिति हेतुनेत्यर्थः। **अनुभवान्तरेति**; त्वन्मत इति शेषः।

### न्यायसुदर्शनम्

ननु **संविदनुरूपत्वाद्विषयाणामित्युक्तम्**, इदानीमगृह्यमाणातीतानागतार्थानां संविदननुरूपत्वात्। नैवम्; यदि ज्ञानस्यातीतानागतार्थग्राहिताङ्गीकारेणार्थकालात्, तस्य कालान्तरभावितेष्टा; तदास्य कालपरिच्छिन्नत्वेन प्रागभावश्च सिध्येत्; अथ नेष्टा, तदा ज्ञानार्थयोः समानकालतैवेति संविदनुरूपता विषयाणामुक्ता।

### श्रीभाष्यम्

**नन्वनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः। अतः स्मरणाभावः कथमनुभवाभावं साधयेत्? उच्यते—निखिलसंस्कारतिरस्कृतिकरदेहविगमादिप्रबलहेतुविरहेऽप्यस्मरणनियमोऽनुभवाभावमेव साधयति। न केवलमस्मरणनियमादनुभवाभावः, सुप्तोत्थितस्य 'इयन्तं कालं न किंचिदहमज्ञासिषम्' इति प्रत्यवमर्शेनैव सिद्धेः। न च सत्यप्यनुभवे तदस्मरणनियमो विषयावच्छेदविरहादहंकारविगमाद्वेति शक्यते वक्तुम्, अर्थान्तराननुभवस्यार्थान्तराभावस्य चानुभूतार्थान्तरास्मरणहेतुत्वाभावात्। तास्वपि दशास्वहमर्थोऽनुवर्तत इति च वक्ष्यते।**

## श्रुतप्रकाशिका

व्यापकाभावो हि व्याप्याभावसाधकः; स्मरणं च नानुभवव्यापकम्; अतस्तदभावो नानुभवाभावसाधक इत्याह—**नन्विति**; पथि गच्छता स्पृष्टतृणादीनां प्राग्जन्मानुभूतार्थादीनां चास्मरणादिति भावः। परिहरति—**उच्यत इत्यादिना**। विषयान्तरव्यासङ्गादिरस्मरणमात्रहेतुः। विषयवैचित्रीविरहः, निष्प्रयोजनतया तात्पर्याभावः, तादात्विकतीव्रसंवेदनान्तरम्, अनुभवानभ्यासश्चास्मरणमात्रहेतुतया हि प्रसिद्धाः। अतो नियमशब्दः, अस्मरणनियम इत्युक्तेः। जन्मान्तरानुभूतस्याप्यर्थस्यानुभवाभावप्रसङ्गात् तद्व्यावृत्त्यर्थं **निखिलसंस्कारे**त्युक्तम्। **देहविगमादी**त्यादिशब्देन नारकदुःखप्रसूतिव्यसनकालविप्रकर्षा विवक्षिताः। यथा संवित्सिद्धौ—

"प्रायणान्नरकक्लेशात्प्रसूतिव्यसनादपि।
चिरातिवृत्ताः प्राग्जन्मभेदा न स्मृतिगोचराः॥"

इति। देहविगमादीनां निखिलसंस्कारतिरस्कृतिकरत्वं स्वभावः। पुण्यविशेषादपवादात् कस्यचिदेकस्य जातिस्मृतिः। प्रबलशब्दो व्यासङ्गाद्यपेक्षया प्राबल्यपरः। उक्ततिरस्कारकाभावे कदाचित् स्मरणमनुभवव्यापकम्। अतस्तदभावोऽनुभवाभावसाधक एवेत्यर्थः। न केवलमनुभवसाधकाभावः; बाधकप्रमाणान्तरमप्यस्तीत्याह—**न केवलमिति**। **सिद्धेरिति**; अनुभवाभावस्येत्यनुषङ्गः। अथास्मरणनियमस्यान्यथासिद्धिमाशङ्कते—**न चेति**। **अहंकारविगमः**; अहंप्रत्ययविगमः। परिहरति—**अर्थान्तरेति**। घटाननुभवः पटविनाशश्चानुभूतकुड्याद्यस्मरणकारणं न दृष्टमित्यर्थः। ननु कुड्यादिस्मरणं प्रति पटादेरकारणत्वात् तदभावो नास्या स्मरणहेतुः; इह तु स्मरणकारणस्याभावोऽस्मरणहेतुरेव नैवम्; कुड्यादिस्मरणं प्रति घटादेरिव ज्ञातृज्ञेययोरपि स्मरणं प्रत्यकारणत्वमकामेनापि स्वीकार्यमित्यभिप्रायेण ह्यर्थान्तरशब्दः प्रयुक्तः। अयमर्थः—ज्ञातृज्ञेययोः स्मरणं प्रति कारणत्वं दृष्टत्वादङ्गीक्रियते चेत्, दृष्टत्वादेवानुभवेऽपि ज्ञातृज्ञेययोः कारणत्वमङ्गीकार्यम्। यदि ज्ञातृज्ञेययोर्दृष्टत्वेऽप्यनुभवकारणत्वं नाङ्गीक्रियते, स्मृतावपि कारणत्वं न स्यात्। अतस्तदभावान्न स्मरणाभाव इति। एतद् दूषणमहमर्थाभावमभ्युपगम्योक्तम्। अहमर्थाभावोऽपि नास्तीत्युपपादयिष्यन् इत्याह—**तास्वपीति**। **अनुवर्तते**; प्रकाशते। ततो हेतुरसिद्धश्चेत्यर्थः।

## भावप्रकाशिका

**अनुभवानभ्यासश्चास्मरणमात्रहेतुतया हि प्रसिद्धा इति**; अस्मरणनियमहेतुतया प्रसिद्धा इत्यर्थः । **अनुभवानभ्यासश्चेति** चशब्दात् प्रायणनरकक्लेशादिः संगृह्यते । एते **निखिलसंस्कारतिरस्कृतिकरदेहविगमादी**त्यत्रादिपदग्राह्या इत्यर्थः ।

"तदन्यधीरतात्पर्यं पटुत्वविरहो धियः ।
दुःखादितीव्रमुन्मादोऽनभ्यासो दीर्घकालता ॥
एतैश्चादृष्टवैगुण्यं कल्प्यं संस्काररोधिषु ।
एतेष्वसत्स्वस्मरणाज्ज्ञानाभावोऽनुमीयते ॥"

इति सिध्यति । **अतो नियमशब्द इति**; अस्मरणनियमहेतुभूतदेहविगमादेरभाव इत्युक्तेः अस्मरणनियमादित्येव वक्तुमुचितम्, न त्वस्मरणमिति । अस्मरणनियमहेतुभूतव्यासङ्गाद्यभावो यद्युच्येत, तदा अस्मरणमिति वक्तुं युज्यते । अस्मरणनियमहेतुभूतदेहविगमाद्यभावकीर्तनादस्मरणनियमादित्येव वक्तुमुचितमित्यर्थः । यद्वा अनुभवानभ्यासश्चेति चशब्दाद्विषयान्तरव्यासङ्ग उच्यते । ततश्चैते अस्मरणमात्रहेतवः । ततश्चास्मरणनियमहेतुदेहविगमप्रसूतिनारकक्लेशाद्यभावेऽपि विषयान्तरव्यासङ्गाद्यस्मरणमात्रहेतुवशादनुभूतस्याप्यस्मरणसंभवात्तद्व्यावृत्त्यर्थं नियमशब्द इत्यर्थः । **उक्ततिरस्कारकाभावे इति**; उक्ततिरस्कारकरूपप्रतिबन्धकरहितानुभवो यत्र तत्र स्मरणमित्यप्रतिबन्धानुभवस्य स्मरणं व्यापकम् । अतश्च स्मरणरूपव्यापकाभावेनाप्रतिबन्धानुभवाभावे साध्ये देहविगमादिप्रतिबन्धकाभावरूपस्य विशेषणस्य सिद्धतया विशेषणवति विशिष्टाभावः सिध्यन् विशेष्यरूपानुभवाभावमादाय पर्यवस्यतीति भावः । न त्वनुभवस्योक्ततिरस्कारकाभावयुक्तस्मरणं व्यापकमिति भ्रमितव्यम्, तथा व्याप्तेरसंभवात् । **अनुषङ्ग इति; न केवलमस्मरणनियमादनुभवाभाव** इति प्रथमान्तस्यानुभवाभावशब्दस्य षष्ठ्यन्ततया विपरिणामेनानुषङ्ग इत्यर्थः । अहंकारशब्दस्य महत्तत्त्वजन्याहंकारतत्त्वभ्रान्तिं व्युदस्यति—**अहंप्रत्ययेति** । अहमिति प्रत्ययो यस्य सोऽहंप्रत्ययः—अन्तःकरणम् । अत एव वक्ष्यति 'ज्ञातृज्ञेययोरपि स्मरणं प्रत्यकारणत्वमकामेनापि स्वीकार्यम्' इति न तु ज्ञातृविषयकज्ञानज्ञेययोरिति द्रष्टव्यम् । नन्वहमर्थस्यानुवृत्तौ प्रकाशप्रसङ्ग इत्यत्राह—**प्रकाशत इति** । अत्र चशब्दोऽध्याहर्तव्यः; अनुवर्तते प्रकाशते च; ततो हेतुरसिद्ध इत्यर्थः । न त्वनुवर्तत इत्यस्य प्रकाशत इति विवरणम्, यथाश्रुतेऽनुपपत्त्यभावात् ।

## श्रुतप्रदीपिका

अनुभूतेः स्मृतिव्याप्यत्वं नेति चोदयति—**नन्विति** । परिहरति—**उच्यत इति** । भावान्तरानुभूतिव्युदासायाह—**निखिलेति** । जातिस्मृतिहेतुसुकृतव्युदासाय **प्रबल**शब्दः । न परं साधकाभावः; बाधकं चाह—**सुप्तेति** । अन्यथासिद्धिमाशङ्क्याह—**न चेति** । ज्ञातृज्ञेययोः स्मृतिहेतुत्वं व्याप्त्या चेदनुभवहेतुत्वमपि स्यात् । व्याप्त्यनादरे स्मृतिहेतुत्वमपि न स्यादिति भावः । असामर्थ्यविगममभ्युपेत्योक्तम्; अथ स नेत्याह—**तास्वपीति** ।

## तत्त्वटीका

स्मृतेरनुभवव्यापकत्वाभावात्तदभावस्य तदभावलिङ्गत्वं नास्तीति चोदयति—**नन्विति** । विशिष्टरूपेण व्याप्तिं स्थापयति—**उच्यत इति** । **निखिल**शब्दः प्राचुर्याभिप्रायः; अन्यथा जातमात्रस्य स्तन्याभिलाषायोगात् । **तिरस्कृतिः**; इह नाशः, प्रतिबन्धो वा । "प्रायणान्नरकक्लेशात्प्रसूतिव्यसनादपि" इत्यादिषु प्रसिद्धमाह—**देहविगमादीति** । प्रभूतं सुखमप्यादिशब्देन संगृहीतम् । जातिस्मरादीनां तादृशप्रबलप्रतिबन्धकसद्भावेऽपि स्मृतिरदृष्टातिशयाद्भवति; तदभावादन्येषु देहविगमादेः प्रबलत्वम्; दुर्बलव्याक्षेपादेर्विरोधित्वनियमो न स्यादिति भावः । न ह्यन्यदेहविगमादिभिरन्यथासिद्धिरित्यवधारणाभिप्रायः । नात्र साधकस्य स्मरणस्याभावमात्रम्; किं तु साक्षान्निषेधबुद्ध्या बाध एवेत्याह—**न केवलमिति** । ननु सुषुप्तिकालस्तदवच्छिन्नं सर्वविषयज्ञानं च तदानीमननुभूतं कथमिदानीं परामृश्यते? इत्थम्—सुषुप्तिकालस्तावदनुमानादिसिद्धः; तदानीं यदि किंचिन्मयानुभूतं तदद्य स्मर्येत, न च स्मर्यत इत्यस्मरणनियमादेव तदानीमनुभवाभावसिद्धिरिति । 'सुखमहमस्वाप्सम्' इत्यतीतकालावच्छिन्नं स्वापं परोऽप्युदाहरति । अत्रास्मर्यमाणस्यान्यथासिद्धिमनूद्य निरस्यति—**न चेति** । 'सुषुप्तौ बाह्यार्थाः सन्तोऽपि नोपलभ्यन्ते; तच्छरीरस्थोऽहंकारोऽपि लीयते; अज्ञानं सुखरूप आत्मा च साक्षिप्रत्यक्षेण गृह्यते' इति पराभिमतप्रकारेणायमनुवादः । यदि विषयाश्रयविरहेण स्मृत्यसंभवः, तदानुभवस्वरूपमपि तद्विरहे न स्यात्; सर्वत्र तद्वत्तयैव तस्यापि दृष्टेरित्यभिप्रायेणाशक्यत्वोक्तिः । ननु सुषुप्तावाश्रयाभावात् वृत्त्यसिद्धेस्तस्यास्मरणम्; साक्षिस्फुरणं तु न संस्कारजनकम्; अतोऽस्मरणमेव स्यात् । मैवम्; त्वदभिमतपरामर्शस्या-

प्यसिद्धिप्रसङ्गादित्यभिप्रायेण **न शक्यते वक्तुमित्युक्तम्** । अतिप्रसङ्गसूचकं हेतुमाह— **अर्थान्तरेति** । अत्राहंकारशब्देन त्रिगुणकार्यविवक्षायामाप्रलयात्तस्यावस्थानमस्ति ; अहमर्थभूतप्रत्यगात्मविवक्षायां प्रलयेऽपि स्थायिनस्तस्य कथं सुषुप्तौ विच्छेद इत्यभिप्रायेणाह—**तास्वपीति** ।

### मूलभावप्रकाशिका

**देहविगमाद्**ीत्यादिशब्देन नरकक्लेशादयो विवक्षिताः । उक्तं च संवित्सिद्धौ—

"प्रायणान्नरकक्लेशात् प्रसूतिव्यसनादपि ।
चिरातिवृत्ताः प्राग्जन्मभेदा न स्मृतिगोचराः ॥"

इति । न केवलमनुभूतौ साधकाभावः, बाधकमप्यस्तीत्याह—**न केवलमिति** । **अहंकारविगमादिति** ; अन्तःकरणविगमादित्यर्थः ।

### श्रीभाष्यम्

**ननु स्वापादिदशास्वपि सविशेषोऽनुभवोऽस्तीति पूर्वमुक्तम्; सत्यमुक्तम्; स त्वात्मानुभवः; स च सविशेष एवेति स्थापयिष्यते । इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते । केवलैव संविदात्मानुभव इति चेत्—न; सा च साश्रयेति ह्युपपादयिष्यते । अतोऽनुभूतिः सती स्वयं स्वप्रागभावं न साधयतीति प्रागभावासिद्धिर्न शक्यते वक्तुम् । अनुभूतेरनुभाव्यत्वसंभवोपपादनेनान्यतोऽप्यसिद्धिर्निरस्ता । तस्मान्न प्रागभावाद्यसिद्ध्यासंविदोऽनुत्पत्तिरुपपत्तिमती ।**

### श्रुतप्रकाशिका

पूर्वं सविशेषोऽनुभवः स्वापादिदशास्वस्तीत्युक्तमिति तदालम्ब्य व्याघाताभिप्रायेण चोदयति—**नन्विति** । अत्राह—**सत्यमुक्तमिति** । **स त्वात्मानुभवः** ; नानुभूत्यनुभव इत्यर्थः । अनुभूतिविरहे स आत्मा निर्विशेषः स्यादित्यत्राह—**न चेति** । प्रत्यक्त्वानुकूलत्वविशिष्ट इत्यर्थः । इह किं निषिध्यत इत्यत्राह—**इह त्विति** । शब्दान्तरेणास्मन्मतमङ्गीकृतमिति शङ्कते—**केवलैव संविदात्मानुभव इति चेदिति** । **आत्मानुभवे** ; केवलात्मानुभवदशायाम् । स्वापादिदशायां या संवित् त्वया नित्यतयाभ्युपेता सा प्रसर-

णाभावेन विषयावच्छेदविरहात्तदानीं केवला निर्विशेषाऽस्मदुक्तैव स्यादिति भावः। परिहरति—**सा चेति**; सा च धर्मभूता संवित् विषयविरहितापि साश्रयेत्यर्थः। **केवलैवेत्यादेरेवं वार्थः**—आत्मानुभवरूपा आत्मस्फुरणरूपा या संवित् सा केवलैवेति चेत्, अस्मदुक्तसकलविषयादिविशेषशून्यैवेति चेदित्यर्थः। परिहरति—**सा चेति**। धर्मिस्फुरणरूपा या संवित् सा साश्रयेति वक्ष्यते। स्फुरणं हि स्फुरतो धर्मः, यथा प्रभाश्रयस्य दीपस्य धर्मिण औज्ज्वल्यं दीपाख्यधर्मिगतो धर्मस्तद्वदित्यर्थः। धर्मिस्वरूपभूतज्ञानस्य स्फुरणं नित्यम्; तच्च भासमानता व्यवहारानुगुण्यम्; धर्मभूतज्ञानस्य स्फुरणं विषयसंबन्धजन्यं तदानीमेव, न त्वन्यथा; तत एव हि 'विषयप्रकाशवेलायाम्' इति पूर्वमुक्तम्। "पुंस्त्वादिवत्त्वस्य" इत्यत्र च वक्ष्यते। स्वापादौ तु तस्य सर्वविषयसंबन्धार्हता प्रतिबद्धा, वह्नेर्दाहकत्वशक्तिवत्। अतो न तदा स्फुरणम्। अथ प्रासङ्गिकमात्मानुभवं परिसमाप्य प्रस्तुतप्रागभावसिद्धिं निगमयति—**अत इति**। **अतः**; निर्विषयज्ञानस्याप्रामाणिकत्वात्तदवच्छिन्नज्ञाननित्यत्वस्योक्तानुपपत्तिपराहतत्वात् प्रागभावग्राहकसमर्थनाच्चेत्यर्थः। कथमनुभूतिः सती स्वप्रागभावं साधयेत्? इत्थम्—स्मर्तव्यास्मरणलिङ्गेन 'इयन्तं कालं न किंचिदहमज्ञासिषम्' इति सुषुप्त्यवस्थापरामर्शेन ज्ञानसामान्याभावगोचरेण तदन्तर्गतः स्वाभावोऽपि स्वेनैव विषयीकृत इति। स्वतःपक्षे प्रागभावसिद्धिरुक्ता, परतःपक्षेपि सिध्यतीत्याह—**अनुभूतेरिति**। अथ प्रागभावाभावहेतुकानुत्पत्तिदूषणमुपसंहरति—**तस्मादिति**।

## भावप्रकाशिका

**तदालम्ब्य व्याघाताभिप्रायेणेति**; अनुभवशब्दमालम्ब्याक्षिपतीति भावः। **केवलैव संविदात्मानुभव** इति भाष्ये **आत्मानुभव** इति सप्तम्यन्ततया वैयधिकरण्येन व्याख्यानस्य क्लिष्टत्वादन्यथा व्याचष्टे-**केवलैवेत्यादेरेवं वार्थ इति**। **धर्मिस्फुरणरूपा या संविदिति**; ननु स्फुरणस्य संविद्रूपत्वे स्फुरणस्य व्यवहारानुगुण्यरूपसंविद्धर्मत्वप्रतिपादकोत्तरग्रन्थविरोध इति चेत्—न; धर्मधर्मिणोरभेदोपचारेण स्फुरणे संविच्छब्दप्रयोगोपपत्तिरिहेति द्रष्टव्यम्। **व्यवहारानुगुण्यमिति**; ततश्च साश्रयत्वं सिद्धमिति भावः। ननु संविन्निर्विशेषत्ववादिनं प्रति व्यवहारानुगुण्यापरपर्यायभासमानत्वरूपस्य संविद्धर्मस्फुरणस्य सविशेषत्वप्रसाधनमनुचितमिति चेत्—न; आत्मस्फुरणरूपा संविन्निर्विशेषेति वदता आत्मस्वरूपसंविदतिरिक्तस्य स्फुरणस्य निर्विशेषत्वमभ्युपेत्य स्फुरणस्य स्फुरत आत्मनश्चाभेदासंभ-

वादित्यभ्युपेत्य तथोक्त्युपपत्तेः। न हि परेणात्मरूपा संविन्निर्विशेषेत्युक्तम्। अपित्वात्मस्फुरणरूपैवेत्युक्तम्। अत आत्मस्फुरणस्य सविशेषत्वोपपादनं युज्यत इति द्रष्टव्यम्। **स्मर्तव्यास्मरणालिङ्गेनेति**; अनेनादरातिशयविषयत्वमुच्यते। तेन तृणादिव्यावृत्तिः। जायमानेनेति शेषः। ततश्च स्मर्तव्यास्मरणलिङ्गजन्येन तस्मिन् काले 'न किंचिदवेदिषम्' इत्यनुभूतिरूपपरामर्शेन स्वाभावोऽपि गृह्यत इत्यर्थः।

## श्रुतप्रदीपिका

प्रागुक्तार्थविरोधं दर्शयंश्चोदयति—**नन्विति**। परिहरति—**सत्यमिति**। **आत्मानुभवः**; अहमर्थस्य स्फुरणम्। प्रभातिरिक्तस्य दीपस्यौज्ज्वल्यवत्, न त्वनुभूत्यनुभव इत्यर्थः। अनुभूतिविरहे स आत्मा निर्विशेष इत्यत्राह—**स चेति**। इह किं निषिध्यत इत्यत्राह—**इहेति**। शब्दान्तरेणास्मन्मतोक्तिः। पराभिप्रायं शङ्कते—**केवलेति**। **आत्मानुभवे**; आत्मानुभववेलायाम्। अत्राह—**नेति**। विषयरहितापि सा धर्मभूता संवित् साश्रयेत्यर्थः। **आत्मानुभवः**; आत्मस्फुरणम्। आत्मानुभवो नाम केवला संविदिति शङ्का। अत्राह—**नेति**। धर्मिस्फुरणरूपसंवित्साश्रया। स्फुरणं हि स्फुरदाश्रयो धर्म इत्यर्थः। अथ पूर्वप्रकृतं निगमयति—**अत इति**। परतः पक्षेऽपि तत्सिद्धिमाह—**अनुभूतेरिति**।

## तत्त्वटीका

सुषुप्तावनुभवाभावं वदतः प्राक्तनस्ववचनविरोधः स्यादिति चोदयति—**नन्विति**। पूर्वोक्ततात्पर्यं न जानासीति प्रतिवक्ति—**सत्यमिति**। विरोधव्युदासाय विवक्षितं विशेषं व्यनक्ति—**स इति**। तुशब्दोऽनुभूत्यनुभवव्यवच्छेदार्थः। **आत्मानुभवः**; स्वयंप्रकाशस्याहमर्थस्य।

## मूलभावप्रकाशिका

**केवलैवेति**; त्वदभिमत आत्मानुभव एवास्मदभिमता निराश्रया निर्विषया संविदित्यर्थः। **सा च साश्रयैवेति**; ज्ञानरूपस्यैवात्मनो विषयप्रकाशकसंविदाश्रयत्वं समर्थयिष्यत इति भावः।

## श्रीभाष्यम्

**यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनं, तदप्यनुपपन्नम्;**

**प्रागभावे व्यभिचारात् । तस्य हि जन्माभावेऽपि विनाशो दृश्यते । भावेष्विति विशेषणे तर्ककुशलताविष्कृता भवति । तथा च भवदभिमता अविद्या अनुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम् । तद्विकाराः सर्वे मिथ्याभूता इति चेत् , किं भवतः परमार्थभूतोऽप्यस्ति विकारः ? येन तद्विशेषणमर्थवद्भवति । न ह्यसावभ्युपगम्यते ।**

## श्रुतप्रकाशिका

अथानुत्पत्त्या विकारान्तरनिरसनं दूषयति—**यदपीत्यादिना** । अनुत्पत्तिरूपहेत्वसिद्ध्या विकारान्तरनिरासोऽनुपपन्नः । तदभ्युपगमेऽपि हेतोर्व्यभिचारमाह—**प्रागभाव इति** । तद्विवृणोति—**तस्य हीति** । भावशब्दोपादाने तद्विरहेऽपि व्यभिचारसाम्याभिप्रायेण भावशब्दोपादानमुपालभते—**भावेष्वितीति** । नात्र प्रतिज्ञान्तरं दूषणमुच्यते ; तद्धि उक्तिदूषणं, न त्वर्थदूषणम् । भावरूपत्वे व्यभिचारं दर्शयति—**तथा चेति** । तथाशब्देन भावरूपत्वं विवक्षितम् ; तैर्भावरूपाज्ञानस्य समर्थितत्वात् तत्र परिहारं शङ्कते—**तद्विकारा इति** । अस्य विशेषणस्य व्यावर्त्याभावान्नैरर्थक्यमाह—**किं भवत इति** । व्यावर्त्यमस्ति चेदद्वैतहानिः ; न चेद्विशेषणवैयर्थ्यमित्यर्थः । किं विकारमात्राभावः साध्यते, उत परमार्थविकाराभावः ? प्रथमेऽनैकान्त्यम् । द्वितीये—अनुभूतिः परमार्थविकाररहिता, अजत्वादित्युक्तं स्यात् । यत्परमार्थविकारवत् तदुत्पन्नं, यथा घटः इति व्यतिरेकोदाहरणं वाच्यम् । तथा घटस्य परमार्थविकारानभ्युपगमाद् दृष्टान्तः साध्याव्याप्त इति हेतोर्व्याप्यत्वासिद्धिर्भवेदिति भावः ।

## भावप्रकाशिका

**तद्धि उक्तिदूषणमिति** ; अनुभूतावनुत्पन्नत्वेन नित्यत्वं हि परेण प्रतिज्ञातम् ; तद्विहाय भावत्वविशिष्टानुत्पन्नत्वेन साध्यत इति हेत्वन्तरपरिग्रहे प्रतिज्ञान्तरमिति यद् दूषणं तदुक्तिदूषणम् । व्यभिचारस्तु वस्तुदूषणम् । अतस्तदेव तर्ककुशलतेत्युद्भावनार्हमिति भावः । **अस्य विशेषणस्य व्यावर्त्याभावादिति** ; एवं हि वदता पारमार्थिकविकाराभावः साध्य इत्युक्तं भवति । ततश्च पारमार्थिकविकाररूपसाध्याभावस्योत्पत्तिरूपस्य साधनाभावस्य च व्याप्तिग्रहस्थानस्याभावाद्व्याप्यत्वासिद्धिरित्यर्थः । एतच्चोत्तरत्र स्पष्टम् ।

## श्रुतप्रदीपिका

अजत्वमभ्युपेत्यापि विकारान्तराभावं व्युदस्यति—**यदपीति**। भावत्वे सतीति विशेषणेऽपि तद्वैयर्थ्यमभिप्रेत्योपालभते—**भावेष्वितीति**। व्यभिचारमाह—**तथेति**। **तथा**; भावरूपा। चो ह्यर्थः, अप्यर्थो वा। परिहारं शङ्कते—**तद्विकारा इति**। विशेषणवैयर्थ्यमाह—**किमिति**। अर्थवत्त्वेऽपसिद्धान्त इति भावः। उत्पत्तिव्याप्यविकारसत्यत्वे दृष्टान्तसाध्याव्यावृत्ततया हेतोर्व्याप्यत्वासिद्धिः फलितेति।

## तत्त्वटीका

स्वधर्मप्रमाणक्षणवैघट्यमाह—**किमिति**। विशेषणसाफल्यार्थं क्वचित् सत्यविकाराभ्युपगमेऽपसिद्धान्तमभिप्रेत्याह—**न हीति**। यत् सत्यविकारवत् तदुत्पन्नमिति व्यतिरेकव्याप्तिश्च त्वया दुर्वचा; घटादेः सत्यविकाररराहित्ये साध्याभाववद्व्यावृत्ततया न व्यतिरेकदृष्टान्तत्वम्; केवलान्वयिदृष्टान्तत्वविवक्षायां हेतोरस्याभीष्टं व्यावृत्तिसाधकत्वं भज्येत। व्यर्थं च भावत्वविशेषणम्, प्रागभावस्यापि त्वन्मते परमार्थविकाररहितत्वात्।

## मूलभावप्रकाशिका

**भावेष्विति विशेषण इति**; भावत्वे सतीति विशेषण इत्यर्थः। सर्वव्यभिचारवारकविशेषणादानात्तर्काकौशलमाह—**तथा चेति**। **तद्विशेषणमिति**; **तद्विकारा** इत्यत्र तच्छब्दरूपविशेषणमित्यर्थः। विकारान्तराणां परमार्थानां सत्त्वे हि तद्विकारा मिथ्याभूता इत्यत्र तच्छब्दः सार्थको भवेत्। ततश्चानुभूतिः परमार्थविकाररहिता अनुत्पन्नत्वात्; यन्नैवं तन्नैवं यथा घटादीति साधनं न संभवति, दृष्टान्ते साध्यवैकल्यादिति भावः।

## श्रीभाष्यम्

यदप्यनुभूतिरजत्वात् स्वस्मिन् विभागं न सहत इति। तदपि नोपपद्यते, अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभक्तत्वादनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात्। स विभागो मिथ्यारूप इति चेत्, जन्मप्रतिबद्धः परमार्थविभागः किं क्वचित् दृष्टस्त्वया? अविद्याया आत्मनः परमार्थतो विभागाभावे वस्तुतो

**ह्यविद्यैव स्यादात्मा। अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव, छेद्यभेदात् छेदनभेदवत्।**

**श्रुतप्रकाशिका**

अथाजत्वान्नानात्वनिषेधं प्रतिवदति—**यदपीति**। अत्र किं भेदमात्रं दुदूषयिषितम्? उत विजातीयभेदः? उत सजातीयभेदः? उत स्वगतभेद इति पक्षेषु हेत्वसिद्धया निरस्तेष्वपि हेतुत्वाभ्युपगमेन प्रथमं द्वितीयं शिरश्च दूषयंश्चार्वाकव्यतिरिक्तसर्ववादिसंमतस्थले व्यभिचारं दर्शयति—**अजस्यैवेति**। मृषावाद्यभिमतस्थल एव हेतोरनैकान्त्यमाह—**अविद्याया इति**। "तमः प्रकाशयोरिव विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सत्याम्" इति हि तद्ग्रन्थः। तद्विभागस्य मिथ्यात्वमाशङ्क्य तदभ्युपगमेन परिहरति—**सविभाग इत्यादिना**। **जन्मप्रतिबद्धः**; उत्पत्तिव्याप्तः। घटादिषु परमार्थविभागस्यैवोत्पत्तिव्याप्यत्वाभ्युपगमे घटादिविभागस्य पारमार्थ्यप्रसङ्गात् तस्यापारमार्थ्ये विशेषणवैयर्थ्यादुक्तदोषः स्यादेवेत्यर्थः। हेतुदूषणस्य बुभुत्सायां दृष्टान्तस्य साध्यव्यावृत्तत्वमुखेन व्याप्यत्वासिद्धिरभिप्रेतानुसंधेया। यत्परमार्थविभागवत् तदुत्पन्नम्, यथा घट इति हि व्यतिरेकदृष्टान्तः। घटस्य परमार्थविभागवत्त्वानभ्युपगमात्साध्याव्यावृत्तत्वं हि स्पष्टम्। विभागस्य मिथ्यात्वे दूषणान्तरमाह—**अविद्याया इति**। अथ सजातीयभेदाभावं व्युदस्यति—**अबाधितेति**; पूर्वं प्रमाणप्रमेयानुपपत्तिमिथ्यात्वानुमाननिरासमुखेन दृश्यभेदः समर्थितः; तत्तुल्यन्यायतया दर्शनभेदोऽपि सिद्ध इत्यर्थः। अवच्छेदकगतो भेदः, न त्ववच्छेद्यगत इति घटकरकाकाशदृष्टान्तमाशङ्क्याह—**छेद्यभेदादिति**। यथा संवित्सिद्धौ—

"प्रतिप्रमातृविषयं परस्परविलक्षणाः।
अपरोक्षं प्रकाशन्ते सुखदुःखादिवद्धियः॥
संबन्धिव्यङ्ग्यभेदस्य संयोगेच्छादिकस्य तु।
न हि भेदः स्वतो नास्ति नाप्रत्यक्षश्च संमतः॥"

इति। प्रतिप्रमातृविषयं ज्ञानभेदोऽपरोक्षः। परज्ञानं परोक्षतया भासते, स्वज्ञानमपरोक्षतया। घटादिविषयज्ञानानां परस्परवैलक्षण्यं चापरोक्षम्। अतस्तद्भेदापलापः स्वानुभवप्रत्यक्षबाधित इति प्रथमग्रन्थार्थः। सर्वमेकं ज्ञानं ज्ञातृज्ञेयरूपावच्छेदकसंबन्धभेदात् भेदेन प्रतीयत इत्यत्राह—**संबन्धीति**। संबन्धिव्यङ्ग्यभेदस्येति शङ्काबीजानुवादः। न च

ज्ञातृज्ञेयरूपसंबन्धिव्यङ्ग्यत्वमात्रेण ज्ञानस्य भेदः संबन्धिभेदकृत इत्यौपाधिकः स्यात्, संयोगादेरपि संबन्धिव्यङ्ग्यत्वमात्रेण घटकरकावच्छिन्नाकाशवदेकत्वप्रसक्तेः। संबन्धी हि द्वेधा—सत्ताहेतुर्व्यक्तिहेतुश्चेति। यस्य संयोगादेः संबन्धिव्यतिरेकेण स्वरूपे प्रमाणं नास्ति, तस्य संबन्धी सत्ताहेतुः। यस्य तु शब्दाकाशादेरस्ति तस्य तदुपाधिको भेदावभासः, न स्वतः। तस्मात् ज्ञातृज्ञेयव्यतिरेकेणालब्धसद्भावस्य ज्ञानस्य स्वाभाविक एव भेदः। तस्मान्न सजातीयभेदाभाव इत्यर्थः। एतदभिप्रेत्य **छेद्यभेदादित्युक्तम्।**

## भावप्रकाशिका

**तस्यापारमार्थ्ये विशेषणवैयर्थ्यादिति;** 'अनुत्पन्नत्वात् परमार्थविभागशून्या' इत्यत्र परमार्थविशेषणस्य पूर्वोक्तरीत्या व्याप्यत्वासिद्धिसंपादकत्वादित्यर्थः। न तु मिथ्याभूत इति विशेषणस्येति मन्तव्यम्, तस्याविशेषणत्वात्। **तुल्यन्यायतया दर्शनभेदोऽपि सिद्ध इत्यर्थ इति;** ननु—दृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव, छेद्यभेदात् छेदनभेदवदिति कर्मभेदस्य क्रियाभेदहेतुत्वे प्रतीयमाने किमिति तत्परित्यज्य तुल्यन्यायतयेति व्याख्यानमिति चेत्—सत्यम्, एकस्मिन् समूहालम्बने दृश्यभेदसत्वेऽपि दर्शनभेदाभावात् तस्य प्रधानयुक्तित्वासंभवात् छेद्यभेदात् छेदनभेदवदित्यस्य शङ्कान्तरपरिहारार्थत्वरूपयुक्त्यन्तरसद्भावाच्चैवं व्याख्यातमिति द्रष्टव्यम्। **संयोगादेरपि संबन्धिव्यङ्ग्यत्वमात्रेणेति;** संबन्धिव्यङ्ग्यभेदवत्त्वमात्रेणेत्यर्थः। **सबन्धी हि द्वेधेति; भेदव्यञ्जकः;** संबन्धीत्यर्थः, तस्यैव प्रस्तुतत्वात् इतरथा प्रकृतानुपयुक्तत्वप्रसङ्गात्। संबन्धिव्यङ्ग्यभेदमपि वस्तु—द्विविधम्—सम्बन्ध्यधीनसत्ताकमतादृशं चेति। पूर्वस्य तु स्वतो भेद एव, उत्तरस्त्वौपाधिक इति भावः।

## श्रुतप्रदीपिका

अथानुपपत्तिलक्षणहेत्वसिद्ध्या स्वगतनानात्वनिरासासिद्धिमभिप्रेत्य भेदमात्रस्य विजातीयभेदस्य चोत्पत्तिव्याप्यत्वं निरस्यति—**यदपीत्यादिना।** सर्ववाद्यभिमते मृषावादिभिरेवाभिमते च स्थले व्यभिचारं ग्रन्थद्वयेनाह—**अजस्यैवेत्यादिना।** पूर्ववत्परिहारमाशङ्क्य दूषयति—**स इति। प्रतिबद्धः;** व्याप्तः। दूषणान्तरमाह—**अविद्याया इति।** अथ सजातीयभेदाभावं व्युदस्यति—**अबाधितेति।** घटकरकाकाशदृष्टान्तमाशङ्क्याह—**छेद्येति।** संबन्धिसंयोगा-

दीनामिवोत्पादकोऽव्यञ्जकश्च धियः, न तु वियत इव घटादिव्यञ्जकमात्रव्यतिरेकेऽनुपलम्भादिति भावः ।

### तत्त्वटीका

हेतुरयं साध्यान्तरेऽपि दुष्ट इति वक्तुमनुवक्ति—**यदपीति** । इहापि हेतोरसिद्धिर्विपक्षवृत्तिश्च समेत्यभिप्रायेणाह— **तदपीति** । अत्र यतः कुतश्चिद्वा विजातीयाद्वा सजातीयाद्वा भेदो निषिध्यत इति विकल्पे त्रिष्वपि प्रागभावे व्यभिचारः स्पष्टः । प्रथमद्वितीययोः प्रामाणिकमतेन विपक्षवृत्तित्वमाह—**अजस्येति** । "न जायते म्रियते वा विपश्चित्" "पिण्डः पृथग्यतः" इत्यादिकमिह सूच्यम् । यद्वा बाधोऽत्र प्रदर्श्यते ; तव खल्वनुभूतिरेवात्मा ; स चानुत्पन्नो देहादिविलक्षणश्च त्वयापि श्रुत्यापि स्थाप्यत इति । परमतेन विपक्षवृत्तित्वमाह—**अनादित्वेनेति** । आत्मा ह्यविद्याव्यतिरिक्तः ; तस्यास्तस्माद्भेदश्च त्वयैव साध्यत इति भावः । प्राग्वत् साध्यविशेषणं शङ्कते—**स इति** । **विभाग** इह भेदः । तथैव मिथ्यात्वविशेषणवैयर्थ्यव्याप्तिभङ्गादिकं च व्यनक्ति—**जन्मेति** । **प्रतिबद्धः** ; व्याप्य इत्यर्थः । सर्वोपप्लावकमनिष्टान्तरमाह—**अविद्याया इति** । हिः प्रसङ्गस्य दुस्तरत्वप्रसिद्ध्यर्थः । एवकारः स्वपरप्रतिक्षिप्तचार्वाकादिमतोत्थानं व्यनक्ति ।

किं च धीस्ते खपुष्पादेर्भिन्नाभिन्नाथ वा भवेत् ।
भेदेऽसौ बाधितो हेतुरभेदे तुच्छतादयः ॥ ४७६ ॥

तृतीयमपि कल्पं निरस्यति—**अबाधितेति** । ननु दृश्यभेदेऽपि दर्शनैक्यं दृष्टमिष्टं च ; **छेद्यभेदात्** इत्यादि चात्रासाधकमयुक्तं च ; एकेन छेदनव्यापारेणानेकेषु छिन्नत्वदर्शनात् । मैवम् ; दृश्यभेदसमर्थनन्यायेनाबाधितप्रतिपत्तिसिद्धतया दर्शनभेदोऽपि सिध्यत्येवेति तात्पर्यात्, दृष्टान्तोक्तेश्च । घटाद्यवच्छिन्नाकाशैक्यदृष्टान्तवादिनां विरुद्धदृष्टान्तसंभवख्यापनपरत्वादिति केचित् । न्यायसुदर्शनोक्तं तु ब्रूमः—'दृश्यभेदो दृशिकर्मत्वाकारेण भेदः ; यदि सर्वत्रैकैव दृशिः, तर्हि दृष्टादृष्टविभागो न स्यात् ; सन्ति हि सर्वज्ञेतरदृशीनां प्रतिनियता दृश्यभेदाः । एवं छेद्यभेदोऽपि छिदिकर्मत्वाकारेण भेदः । एकेन छेदनेन यन्न छिन्नं तस्य पूर्वच्छिन्नाद्भिन्नत्वेन तद्विषयच्छेदनमपि पूर्वच्छेदनाद्भिन्नम् । तद्वदिहेति निदर्शनं ग्राह्यम् । प्रयोगश्च—विगीता दृशिः एतद्दृशिगोचरानालम्बिदृशेरन्या, तद्गोचरानालम्बित्वात् घटवत् । व्यतिरेकतो वा यथा सैव दृशिरिति ।

" अथवानुमितिर्मा भूत् प्रत्यक्षेणैव सिध्यति ।
दृष्टादृष्टतया सिद्धैर्विषयैर्भिन्नता धियाम् " ॥ इति ।

## मूलभावप्रकाशिका

**स विभाग इति**; परमार्थविकाराभावः साध्यः ; अतो नानुमानस्य बाधितत्वमिति भावः । **जन्मप्रतिबद्ध इति**; जन्मव्याप्त इत्यर्थः । जन्मनः परमार्थविकारव्यापकत्वे दृष्टे हि जन्मव्यतिरेकात् परमार्थविकाराभावः साध्येत ; न च तदस्तीति भावः । **दृश्यभेदसमर्थनेनेति** ; नित्यत्वानुमानादिनिरासमुखेन दृश्यभेदस्य समर्थितत्वात् ।

## न्यायसुदर्शनम्

**दृश्यभेदसमर्थनेनेति**; रूपरसगन्धानां भेदसमर्थनेनेत्यर्थः ; तेषां चक्षुरादिनियतग्राह्यत्वात् । **छेद्यभेदादिति** ; शिलावृक्षादिभेदादित्यर्थः ।

## श्रीभाष्यम्

**यदपि नास्या दृशेर्दशिरूपाया दृश्यः कश्चिदपि धर्मोऽस्ति, दृश्यत्वादेव तेषां न दृशिधर्मत्वमिति च; तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयंप्रकाशत्वादिधर्मैरुभयमनैकान्तिकम्। न च ते संवेदनमात्रम्, स्वरूपभेदात् । स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम् । स्वयंप्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता । प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम् ।**

## श्रुतप्रकाशिका

अथ स्वगतनित्यैकत्वादिभेदनिरासार्थं पूर्वपक्षिणानुभूतिं पक्षीकृत्योक्तम् 'अनुभूतित्वात्' इति व्यतिरेकि, दृश्यं पक्षीकृत्योक्तम् 'दृश्यत्वात्' इत्यन्वयि च दूषयति— **यदपीत्यादिना** । **अनैकान्तिकमिति** ; **अनियतम्**; व्याप्तिशून्यमित्यर्थः । दृश्यत्वादित्यन्वयिनः पक्षत्रयवृत्तित्वलक्षणमनियतत्वम् । दृशित्वादिति व्यतिरेकिणः साध्यव्यावृत्तावपि साधनाव्यावृत्तिलक्षणमनियतत्वमात्रम् । 'अनुभूतिर्न दृश्यधर्मवती, दृशित्वात्; यद् दृश्यधर्मवत् तन्न दृशिः, यथा घटः' इति ह्यनुमानशरीरम् । अत्र दृश्यधर्मवत्त्वस्यादृशित्वव्याप्तिरनुभूतौ भग्ना, तस्या दृशित्वनित्यत्वादिधर्मवत्त्वादिति भावः । नित्यत्वादिमिथ्यात्वे

नित्यत्वादिविपरीताकारानित्यत्वं प्रसजेदिति तत्परिहाराय तेषां स्वरूपमात्रत्वमाशङ्क्य परिहरति—**न चेत्यादिना**। तेषां स्वरूपमात्रत्वं किमन्वयरूपाणाम् ? उत व्यतिरेकरूपाणामिति विकल्पमभिप्रेत्यान्वयमुखेन स्वरूपमात्रत्वं संभावितं शिर इति दूषितम्; न तु पराभ्युपगमात्। हेतुमाह—**स्वरूपभेदादिति**; स्वरूपाद्भिदस्तेषां परस्परं भेदश्च विवक्षितः। अनेन पूर्वं 'विधाभेदविवाददर्शनात्' इत्युक्तं विवृतं भवति। संवेदनत्वस्वयंप्रकाशत्वयोः स्वरूपभेदमाह—**स्वसत्तयेत्यादिवाक्यद्वयेन**। प्रकाश्यतेऽनेनेति प्रकाशनम्; व्यवहारानुगुण्यापादकमित्यर्थः। उभयत्रानुगतप्रकाशशब्दार्थमाह—**प्रकाशश्चेति**। चिदचिदशेषपदार्थास्तदा हि व्यवहारानुगुणाः, यदा तद्व्यवहारहेतुषु ज्ञानं संनिधत्ते। तत्राचिदंशस्य स्वव्यवहारसामग्र्यन्तर्भूतज्ञानवत्त्वं व्यवहारानुगुण्यम्। वेद्यत्वे चिदंशस्याप्येवम्। स्वप्रकाशत्वे तु स्वव्यवहारसामग्र्यां ज्ञानान्तरानपेक्षया स्वस्यान्तर्भावः। यद्वा एवं चाहुः—व्यवहारानुगुण्यं व्यवहारप्रतिसंबन्धित्वम्; प्रकाश इत्यर्थः। तच्च ज्ञप्तिज्ञात्रोः स्वतः। ज्ञेयस्य तु ज्ञानाधीनम्। अतः पुरोवर्तिनो घटादेरपि तदेव प्रकाशः, न प्राकट्यम्। तदतिरिक्ताभ्युपगमेऽपि न ज्ञानस्य स्वयंप्रकाशत्वविरोधः, तस्य तन्निरपेक्षसिद्धितया प्राकट्यस्य ज्ञानानुमापकत्वानभ्युपगमात्। यद्वा ज्ञानगतप्रकाशासाधारणं लक्षणमाह—**चिदचिदिति**। चिदचिदशेषपदार्थापेक्षया साधारणं ज्ञानगतं चिद्व्यवहारानुगुण्यमचिद्व्यवहारानुगुण्यं च प्रकाशः; स्वपरव्यवहारानुगुण्यं प्रकाश इत्यर्थः। नन्वचितो विषयत्वमविगीतम्; तच्च भासमानत्वम्; अचितो व्यवहारानुगुण्यं हि ज्ञानगतं चेत् 'घटः प्रकाशते' इति व्यवहारामुख्यत्वं स्यात्, ज्ञानगतप्रकाशस्य तत्संबन्धिन्युपचरितत्वात्। न च ज्ञानसंबन्ध एव घटादेर्व्यवहारानुगुण्यम्, व्यवहारानुगुण्यापादनस्वभाव इति ज्ञानलक्षणकथनायोगात्। संबन्धस्य द्विनिष्ठतया पुरोवर्तिनो घटादेरपि तद्धेतुत्वेन संबन्धरूपव्यवहारानुगुण्यापादकत्वं हि ज्ञानज्ञेयसाधारणं स्यात्। उच्यते—व्यवहारकर्मत्वरूपं व्यवहारानुगुण्यं साधारणम्। तद्धि व्यवहारप्रतिसंबन्धित्वम्। तदेव भासमानत्वम्। अतः 'घटः प्रकाशते' इति व्यवहारश्च तन्निबन्धनतया मुख्यः। व्यवहारप्रतिसंबन्धित्वं प्रति हेतुत्वरूपव्यवहारानुगुण्यं ज्ञानस्यैव। तत्र प्रत्यक्त्वानुकूलत्वैकत्वलक्षणस्य स्वस्य व्यवहारप्रतिसंबन्धितां प्रति हेतुत्वरूपं व्यवहारानुगुण्यं ज्ञातृस्वरूपभूतज्ञानस्यैव। स्वस्वरूपस्वगतैकत्वपरात्वानुकूलत्वाद्याकारस्वाश्रयतत्संबन्धस्वविषयतत्संबन्धानां व्यवहारप्रतिसंबन्धित्वे हेतुत्वरूपं

व्यवहारानुगुण्यं तु धर्मभूतज्ञानस्यैव। अतः स्वपरव्यवहारानुगुण्यं ज्ञानासाधारणप्रकाशलक्षणमिति युक्तम्।

### भावप्रकाशिका

**साध्यव्यावृत्तावपि साधनाव्यावृत्तत्वलक्षणानियतत्वमात्रमिति**; साध्याभाववद्गामित्वलक्षणानियतत्वमात्रमेव; न तु पक्षत्रयवृत्तित्वलक्षणं, व्यतिरेक्यनुमाने सपक्षस्याभावात् अनैकान्तिकमित्यस्यानियतमिति व्याख्यानं युज्यत इति भावः। **न तु पराभ्युपगमादिति**; ननु "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः; ते चापृथक्त्वेऽपि पृथगिवावभासन्ते" इति परैर्नित्यत्वादीनां भावरूपाणामेव ब्रह्मस्वरूपत्वमभ्युपेतमिति चेत्—न; तत्र नित्यत्वादेः कालानवच्छिन्नत्वादिरूपाभावरूपत्वसंभवादिति भावः। **उभयत्रानुगतप्रकाशशब्दार्थमाहेति**; **उभयत्र**; चिदचितोरित्यर्थः। 'ज्ञानं प्रकाशते, घटः प्रकाशते' इति व्यवहारसाम्यादुभयसाधारण्यमिति भावः। **स्वव्यवहारसामग्र्यन्तर्भूतज्ञानवत्त्वमिति**; स्वव्यवहारानुगुणज्ञानविषयत्वमित्यर्थः। न चास्मिन् पक्षेऽननुगमः, तदन्यान्यत्वेनानुगमसंभवात्। एतदस्वरसादाह—**यद्वा एवं चाहुरिति**; सर्वत्र व्यवहारप्रतिसंबन्धित्वमेवानुगतं प्रकाशशब्दार्थः। तत्तु द्वेधा—कचित् ज्ञानविषयत्वात्, कचित्तदभेदादिति भावः। अत्र **चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यमिति** भाष्यं चिदचिदशेषपदार्थनिष्ठं स्वव्यवहारानुगुण्यमिति व्याख्याय चिदचिदशेषपदार्थविषयकव्यवहारानुगुण्यं चिद्गतमेव प्रकाशशब्दार्थ इति व्याचष्टे—**यद्वा ज्ञानगतप्रकाशेति**। **व्यवहारप्रतिसंबन्धित्वं प्रति हेतुस्वरूपमिति**; व्यवहारहेतुस्वरूपमित्यर्थः। व्यवहर्तव्यत्वमुभयसाधारणम्; व्यवहारहेतुत्वं तु ज्ञानासाधारणमिति भावः। **प्रत्यक्त्वानुकूलत्वेति**; प्रत्यक्त्वानुकूलत्वैकत्वविशिष्टस्वव्यवहारं प्रतीत्यर्थः।

### श्रुतप्रदीपिका

अथ स्वगतभेदनिरासकमनुभूतित्वं व्यतिरेकि दृश्यत्वमन्वयि च दूषयति—**यदपीति**। अन्वयिनः पक्षत्रयवृत्तित्वलक्षणं साधारणानैकान्तिकत्वं, दृश्यधर्मान्तरराहित्यात् सपक्षेषु नित्यत्वादिषु सत्स्वपि तेषु 'अनुभूतित्वात्' इति हेतोरवृत्तेः। **न चेत्यादि**; स्वरूपात् परस्परं च भेदः। तेषां स्वरूपमाह—**स्वसत्तयेत्यादिना**। उभयग्रन्थानुगतप्रकाशशब्दार्थमाह—**प्रकाशश्चेति**।

### तत्त्वटीका

अथ स्वगतभेदनिरासाय पूर्वोक्तं केवलव्यतिरेकिणं केवलान्वयिनं च **यदपी**त्यादिनानूद्य **तदपी**त्यादिना दूषयति । **दृशिरूपाया** इति हेतुपरम् । नित्यत्वादिधर्मपरित्यागेऽपसिद्धान्तो बाध श्चस्यादित्यभिप्रायेण **स्वाभ्युपगतैः प्रमाणसिद्धै**रित्युक्तम् । अत्र व्यतिरेकिणोऽसाधारणानैकान्तिकत्वमन्वयिनः साधारणानैकान्तिकत्वं च विभजनीयम् । नित्यत्वादिधर्माणां च धर्मान्तराभ्युपगमेऽनवस्था स्यात् । परिहारार्थं च क्वचिन्निर्धर्मकत्वे ग्राह्ये वरं नित्यत्वादेरेव तथात्वस्वीकरणम् ।

मूलच्छेदोज्झितेऽप्यत्र सोढा चेदनवस्थितिः ।
सधर्मकत्वे सर्वेषां भातत्वाद्धीस्तथा न किम् ॥ ४७७ ॥
निर्धर्मकत्वधर्मे च नित्यत्वादेर्विशेषणे ।
अनुभूतेः सधर्मत्वमयत्नादेव सेत्स्यति ॥ ४७८ ॥

अतो नित्यत्वादावन्यत्र वा क्वचिदाश्रयविशेषसद्भावेऽपि धर्मानाश्रयतया सपक्षे दृशित्वादिति हेतुरवर्तमानोऽसाधारणोऽनैकान्तिकः । अत्र हेतुसाध्यधर्मसदसद्भावयोः स्ववचनविरोधबाधादिकमपि द्रष्टव्यम् । बाधितस्यापि व्याप्तिभङ्गादनैकान्तिकोक्तिरिति केचित् । दृश्यत्वादित्यत्र तु किं नित्यत्वादयो धर्माः पक्षीकृताः, उत न ? आद्ये स्वाभ्युपगमादिविरोधः ; द्वितीये विपक्षेषु तेषु वृत्तिरिति । ननु संवित्स्वरूपमेव नित्यत्वादिशब्दैरभिलप्यते ; अतो व्यतिरेकिणि सपक्षोऽन्वयिनि विपक्षश्च नास्तीत्यत्राह—**न चेति** । अत्र विरोधगर्भं हेतुमाह—**स्वरूपेति** । धर्मिस्वरूपाद्धर्मान्तरस्वरूपाच्च भेदादित्यर्थः ।

स्वरूपे संमते यत्र विवादी प्रतिवर्तते ।
स्वरूपादधिको धर्मस्तत्र सर्वत्र दुस्त्यजः ॥ ४७९ ॥

'वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात्' इति प्रागुक्तमिह प्रतिसंधेयम् । हेतुव्यावृत्तिसिद्ध्यै धर्मिस्वरूपं तावदाह—**स्वसत्तयेति** ; दीपादिवत्स्वजन्यज्ञानमनपेक्ष्येति **एवकारार्थः** । धर्मेषु धर्मितादात्म्यशङ्कातिरेकात् स्वयंप्रकाशत्वं पूर्वं विविङ्क्ते—**स्वयमिति** । एवकारः स्वगोचरज्ञाननैरपेक्ष्यार्थः । अतिप्रसङ्गनिरासाय **स्वाश्रय**ग्रहणम् । ननु प्राकट्यं पूर्वपक्षिणा निरस्तम्, न वास्माभिः क्वचित्प्रतिसमाहितम् ; तदिह ग्रन्थद्वयोक्ते विषये विषयिणि च कः प्रकाशशब्दार्थ इत्यत्राह—**प्रकाश इति** । अप्रकाशमानस्य

कस्यापि सत्त्वैव न सिध्येदित्यभिप्रायेण **अशेषशब्दः** । **व्यवहारानुगुण्यम्** ; इह व्यवजिहीर्षाव्यतिरिक्तो व्यवहारहेतुविशेषः ; उत्पन्ने हि ज्ञाने विषयस्य विषयिणश्च ज्ञानानुत्पत्तिदशमपि व्यवहारानर्हत्वं निवर्तते । अनेनैव ग्रन्थेन परोक्तं प्राकटयमङ्गीकृतमिति केचित् ; प्रमेयान्तरविरोधाभावात् । ज्ञानस्य तदनुमेयत्वानङ्गीकारस्तु विशेषः ।

## मूलभावप्रकाशिका

**स्वसत्तयैवेति** ; यावत्सत्तमित्यर्थः । **स्वाश्रयायेति** ; अनुभूतिमात्रगतस्वप्रकाशत्वस्यैतन्निर्वचनम् , नात्मसाधारणस्य । अतस्तत्राव्याप्तिर्न दोषायेति द्रष्टव्यम् । **प्रकाशश्चेति** ; ततश्च व्यवहारानुगुण्यापादनहेतुतैव प्रकाशनशब्दार्थः, न प्राकटयादिहेतुत्वमिति भावः ।

## श्रीभाष्यम्

सर्वकालवर्तमानत्वं हि नित्यत्वम् ; एकत्वमेकसंख्यावच्छेद इति तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि चैतन्यधर्मभूतैस्तैरनैकान्त्यमपरिहार्यम् । संविदि तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत्, तत्तन्निषेधोक्त्या किमपि नोक्तं भवेत् ।

## श्रुतप्रकाशिका

अथ नित्यत्वमाह—**सर्वेति** । यद्यपि कालानवच्छिन्नत्वमनुगतं नित्यलक्षणं प्रागुक्तम् ; सदकारणकवं च नित्यत्वं प्रसिद्धम् ; तथापि संविदः कालव्यतिरिक्तत्वात् कालव्यतिरिक्तार्थनित्यत्वं कृत्स्नकालसंबन्धव्याप्तमिति तेनापि सविशेषत्वापादनाय कालव्यतिरिक्तार्थनित्यत्वलक्षणमत्रोक्तम् । धर्माणामभावरूपत्वेऽप्यनैकान्त्यमाह—**तेषामिति** । अभावरूपाणामपि स्वरूपानतिरिक्तत्वे दूषणमाह—**संविदि त्विति** । तुशब्देन प्रागुक्तशौक्ल्यादिदृष्टान्तवैषम्यमिहाभिप्रेतम् । तस्य कस्यचिद्धर्मत्वेन स्वपरनिर्वाहकत्वात् स्वरूपे प्रतिपन्ने भ्रमविरोधित्वाच्च स्वरूपमेव व्यावृत्तिः । ब्रह्मणस्तु कस्यचिद्धर्मत्वेनानभ्युपगमात् स्वरूपे प्रतिपन्नेऽपि भ्रमसहत्वाच्च पुरोऽवस्थितशुक्लभास्वरशकलस्येव न स्वरूपमेव व्यावृत्तिरिति । संविदस्तीतिशब्दो नित्यस्वयंप्रकाशादिशब्दाश्च किमधिकार्थाः, उतानधिकार्थाः ? अधिकार्थत्वे

सविशेषत्वम्; अन्यथा पदान्तरवैयर्थ्यम्, स्वरूपमात्रस्याविगीतत्वात्। नित्यत्वादिसाधकैर्हेतुभिः किं संविन्मात्रं साध्यते, उत तदतिरिक्तं किंचित्? प्रथमे सिद्धसाध्यत्वम्; द्वितीये सविशेषत्वमिति एवं समानाधिकरणपदप्रयोगानुपपत्तिः नित्यत्वादिसाधकहेतूनां सिद्धसाधनत्वं चाभिप्रेतम्। यथा संवित्सिद्धौ—

"न वेद्यं वित्तिधर्मः स्यादिति यत्प्रागुदीरितम्।
तेनापि साधितं किंचित् संविदोऽस्ति न वा त्वया॥
अस्ति चेत्पक्षपातः स्यान्न चेत्ते विफलः श्रमः।"

इति। नित्यत्वादिधर्माणां परस्परभेदानभ्युपगमे एकेनैव धर्मेण साधितेनालम्; न तु धर्मान्तरं साध्यम्, तस्य पूर्वप्रसाधितधर्मानतिरिक्तत्वात्। न हि नित्यत्वे प्रसाधिते कालापरिच्छेदः पुनरपि साध्योऽवतिष्ठते। एवं नित्यत्वादीनां स्वरूपाद्भेदः परस्परभेदश्च सिद्धः।

## भावप्रकाशिका

**सदकारणकत्वं च नित्यत्वं प्रसिद्धमिति;** सत्त्वे सत्यकारणकत्वमित्यर्थः। सत्त्वे सतीति विशेषणमसति प्रागभावे चातिव्याप्तिवारणार्थमिति द्रष्टव्यम्। **अस्ति चेत्पक्षपातः स्यादिति;** अस्मत्पक्षपातः स्यादित्यर्थः।

## श्रुतप्रदीपिका

**सर्वेति;** अनुगतनित्यलक्षणं प्रागुक्तम्; अत्र तु कालादन्यस्य तेन सविशेषत्वज्ञापनायैवमुक्तम्। अतद्व्यावृत्तिरूपतामाशङ्क्याह—**तेषामिति**। शौक्ल्यादिदृष्टान्तवैषम्यमभिप्रेत्याह—**संविदि त्विति**। तुशब्दस्तद्वैषम्ये। तच्च प्रागुक्तं 'किमपि नोक्तं भवेत्' इति सिद्धसाध्यत्वं 'संविन्नित्या' इत्यादिसमानाधिकरणपदप्रयोगवैयर्थ्यं चेति भावः।

## तत्त्वटीका

कालव्यतिरिक्तानुगतं संविदि नित्यत्वमाह—**सर्वेति**। अशेषनित्यानुगतं कालानवच्छिन्नत्वं प्रागुक्तम्। एकं ब्रह्मेति साधयता परेण न हि मुख्यत्वान्यत्वादिकं साध्यते; अपित्वात्मद्वित्वादिव्यावर्तकं किंचित्। तच्च मतभेदेन गुणपदार्थो वा, अतिरिक्तपदार्थो वा, गुणैकत्वं नायनधीविशेषोपस्थाप्य तदितरसमुच्चयराहित्यं वा, अन्यद्वा किमपि स्वरूपातिरिक्तं नानात्वशङ्कानिरासकमेष्टव्यमित्यभिप्रायेणाह—**एकत्वमिति**। **एकसंख्यावच्छेदः;**

एकसंख्यारूपो व्यावर्तकधर्म इत्यर्थः। एकमिति संख्याया द्व्यादिभ्यो व्यावृत्तिर्वा। प्रकारज्ञानत्वादिधर्मान्तरप्रदर्शनार्थ इतिशब्दः। इति स्वरूपभेदादित्यन्वयः। भावाद्वैतपक्षे-णातद्व्यावृत्तिरूपधर्मत्वमाशङ्क्याह—**तेषामिति**। **तथाभूतैरपीति**; अभावरूपैरपीत्यर्थः। एतेन तेषां निर्धर्मकत्वं सूच्यते। ततश्च व्यतिरेकिणः स्ववृत्तिशून्यसपक्षवत्त्वादनैकान्त्यम्। **चैतन्यधर्मभूतैरिति**; अन्वयिनोऽनैकान्त्यार्थम्। सर्वधर्मशून्यत्वपक्षे दोषमाह—**संविदी-ति**। यथा शौक्ल्यादौ स्वरूपे कार्ष्ण्यादिसंशयानर्हतया ततो भेदः, तथा संविदि दुर्वचमि-त्यभिप्रायवान् तुशब्दः। **किमपि नोक्तं भवेत्**; प्रतिवाद्यनभिमतं पदान्तरैरनुक्तं च किंचिन्नोक्तं स्यात्। ततश्च सिद्धसाधनत्वपौनरुक्त्यादिप्रसङ्ग इति भावः।

### मूलभावप्रकाशिका

**किमपि नोक्तं भवेदिति**; उक्तं च संवित्सिद्धौ—

"न वेद्यं वित्तिधर्मः स्यादिति यत्प्रागुदीरितम्।
तेनापि साधितं किंचित् संविदोऽस्ति न वा त्वया।
अस्ति चेत् पक्षपातः स्यान्न चेत्ते विफलः श्रमः॥"

इति। सर्वधर्मप्रतिक्षेप्त्रा कस्यचिद्धर्मस्यादृतत्वात् पक्षपात इत्यर्थः।

### न्यायसुदर्शनम्

**निषेधोक्त्या किमपि नोक्तं भवेदि**त्यत्र व्यावृत्तेर्ब्रह्मस्वरूपत्वे व्यावृत्तेरेव भेदत्वात् स्वरूपभेदवादप्रसङ्गो भेदस्य पारमार्थ्यं च प्रसज्येतेति दोषसमुच्चयो बोद्धव्यः।

### श्रीभाष्यम्

**अपि च संवित् सिध्यति वा न वा? सिध्यति चेत् सधर्मता स्यात्। नो चेत् तुच्छता, गगनकुसुमादिवत्। सिद्धिरेव संविदिति चेत्, कस्य कं प्रतीति वक्तव्यम्। यदि न कस्यचित् कंचित्प्रति, सा तर्हि न सिद्धिः। सिद्धिर्हि पुत्रत्वमिव कस्यचित् कंचित्प्रति भवति। आत्मन इति चेत्, कोऽयमात्मा? ननु संविदेवेत्युक्तम्। सत्यमुक्तम्; दुरुक्तं तु तत्। तथा हि—कस्यचित्पुरुषस्य किंचिदर्थजातं प्रति**

**सिद्धिरूपतया तत्संबन्धिनी सा संवित् स्वयं कथमिवात्मभावमनुभवेत्?**

### श्रुतप्रकाशिका

परेण संविदो निर्भेदत्वापादनमुखेन तस्या आत्मत्वं साधितम्; अत्र निर्भेदत्वनिराकरणमुखेन संविदात्मत्वं निराकर्तुमारभते—**अपि चेत्यादिना**। तत्र सविशेषत्वमापादयितुं विकल्पयति—**संवित् सिध्यति वा न वेति**। किं प्रतीता, उताप्रतीतेत्यर्थः। प्रथमं शिरो दूषयति—**सिध्यति चेदिति**। सर्वप्रमाणानां सविशेषविषयत्वस्य पूर्वमुपपादितत्वादिति भावः। यद्वा सिध्यद्वस्तु सिद्धेराश्रयतया सविशेषं स्यात्। सिद्धिः प्रकाशः व्यवहारानुगुण्यधर्मयोगी स्यादित्यर्थः। शिरोद्वयापादितदोषपरिहाराय परोक्तं शङ्कते—**सिद्धिरेवेति**। सिद्धेः सिद्ध्यन्तरानपेक्ष्यत्वात्प्रमितिविषयत्वप्रयुक्तं सिद्धिसंबन्धित्वरूपं सविशेषत्वं न स्यात्; अथापि तुच्छत्वं च न भवेत्; न हि शशशृङ्गं सिद्धिरूपमिति भावः। तत्रापि सविशेषत्वमाह—**कस्येति**। प्रतीतिश्चेत् कस्यचिदाश्रयस्य कंचिद्विषयं प्रति भवति; तदुभयं वक्तव्यमित्यर्थः। विपक्षे बाधकमाह—**यदीति**। तद्विवृणोति—**सिद्धिर्हीति**। पितृस्थाने विषयः। पुत्रस्थाने आश्रयः। पुत्रत्वस्थाने सिद्धिः। पुत्रत्वस्य हि पुत्र आश्रयः। कस्यचिदित्युक्तं ज्ञात्रपेक्षाप्रतिक्षेपं शङ्कते—**आत्मन इति चेदिति**; आत्मानं प्रतीत्यर्थः। आत्मशब्दः स्ववाची। अनेन प्रत्यक्त्वं फलितम्। सिद्धिप्रतिसंबन्धी स्वात्मा हि प्रत्यक्; स्वस्मै भासमानत्वं प्रत्यक्त्वमिति हि वक्ष्यते। तच्च संविदोऽनुपपन्नमित्यभिप्रायेणाह—**कोऽयमात्मेति**। अयंशब्दः सिद्धिप्रतिसंबन्धित्वपरः। सिद्धिप्रतिसंबन्ध्यात्मा कः? किंशब्दः क्षेपे। संविन्न सिद्धिप्रतिसंबन्ध्यात्मा। संविदः प्रत्यक्त्वमनुपपन्नमित्यर्थः। संविदात्मभावस्योपपादितत्वान्नानुपपन्नमिति चोदयति—**नन्विति**। परिहरति—**सत्यमुक्तमिति**। संविदात्मत्वस्य दुरुक्तत्वं संविदात्मत्वनिराकरणमुखेनोपपादयितुमारभते—**तथा हीति**। कर्मनिर्देशो दृष्टान्तत्वेन। **अर्थजातमिति**; धर्मधर्मिरूपपुञ्ज एव प्रमितिविषय इति भावः। **सिद्धिरूपा**; प्रकाशरूपा। अत एव तदुभयसंबन्धिनी। **कथमिति**; आत्मधर्मभूता संवित्स्वयं कथमात्मेत्यर्थः।

### भावप्रकाशिका

**प्रतीतिश्चेत्कस्यचिदिति**; साश्रया सकर्मिका च वक्तव्येत्यर्थः। ननु भाष्यानुगु-

ध्येन सिद्धिश्चेत् कस्यचित् कंचित् प्रतीति वक्तव्ये प्रतीतिश्चेदिति वदतः कोऽभिप्राय इति चेत्; उच्यते—सिद्धेरकर्मकतया सिद्धिश्चेत् सकर्मिका स्यादित्युक्तेरयोगात्। किंच सिद्धिश्चेत् कस्यचित् कंचित्प्रतीत्युक्ते घटस्य सिद्धिर्देवदत्तं प्रतीति वक्तव्यम्। घटो देवदत्तं प्रति सिध्यतीति हि वक्तुमुचितम्; न तु देवदत्तो घटं प्रति सिध्यतीति। ततश्च 'कस्यचित् पुरुषस्य किंचिदर्थजातं प्रति सिद्धिरूपतया, इत्युत्तरभाष्यविरोधापत्तिः। अतः सिद्धिशब्दः प्रतीतिमात्रपर इति प्रदर्शनार्थं प्रतीतिशब्दो व्यवहृत इति द्रष्टव्यम्' ननु भाष्ये संविच्चेत् कस्यचित् कंचित् प्रत्येव भवतीति वक्तुं सुशकत्वात् सिध्यति चेदित्येवं प्रणाड्या प्रतीतेः सिद्धत्वसमर्थनपुरस्कारेण दूषणे न हेतुं पश्याम इति चेत्—न; तस्योक्तिमात्रभेदरूपत्वेनादोषात्। **शङ्कत इति;** कस्येति निर्दिष्टसिद्धिप्रतिसंबन्ध्यपेक्षाप्रतिक्षेपं शङ्कत इत्यर्थः। आत्मानं प्रतीत्युत्तरग्रन्थानुसारात् **आत्मन** इति चतुर्थीमभिप्रेत्याह—**आत्मानं प्रतीति**। यद्यपि कस्य सिद्धिप्रतिसंबन्धिन इत्यपेक्षायामात्मान इत्युक्ते आत्मासिद्धिप्रतिसंबन्धीत्यर्थलाभात् तदर्थमात्मानं प्रतीति न व्याख्येयम्; किंच कस्येत्यस्योत्तरं षष्ठ्यन्तमेव भवितुमर्हति, न द्वितीयान्तं—तथापि स्पष्टार्थमुक्तमिति द्रष्टव्यम्। **आत्मशब्दः स्ववाचीति;** आत्मशब्दस्य ज्ञातृत्वलक्षणसिद्धिप्रतिसंबन्धिपरत्वे कः सिद्धिप्रतिसंबन्धीति प्रश्नस्य सिद्धिप्रतिसंबन्धीत्युत्तरमसंगतं स्यात्। अतोऽन्यप्रतिसंबन्धिपर इति भावः। न चार्थजातं प्रति सिद्धिरूपस्य कथमात्मानं प्रत्यपि सिद्धिरूपत्वमिति वाच्यम्, एकस्य प्रतिसंबन्धितया प्रतिशब्दार्थीभूतलक्षणत्वम्, अपरस्य विषयतया लक्षणत्वमिति 'आत्मानं प्रति, अर्थजातं प्रति' इति च सुवचमिति द्रष्टव्यम्। **सिद्धिप्रतिसंबन्ध्यात्मा क इति;** आत्मशब्दस्य स्वपरत्वेन व्याख्याततया तदंशस्याक्षेप्तुमशक्यत्वात् सिद्धिप्रतिसंबन्धित्वमात्मशब्दनिर्दिष्टस्य स्वस्य कथमित्यर्थः। स्वस्यैव स्वप्रतिसंबन्धित्वे विरोधादिति भावः। न त्वात्मत्वमप्याक्षेप्यकोटिप्रविष्टमिति द्रष्टव्यम्। **संविदात्मभावस्येति;** अत्रात्मशब्दः सिद्धिप्रतिसंबन्धिपरः, न तु स्वपरः। अन्यत्वप्रतिसंबन्धिस्वत्वस्योपपादननिरपेक्षत्वादिति द्रष्टव्यम्। **धर्मधर्मिभावेति;** अतो निष्प्रकारकज्ञानस्य नावकाश इति भावः।

## श्रुतप्रदीपिका

निर्भेदत्वे निराकृते तन्मुखेन संविदात्मत्वं निराकर्तुमुपक्रमते—**अपिचेत्यादिना**। **सधर्मकता;** मानानां सविशेषविषयत्वोक्तेः सिध्यतः स्वव्यवहारानुगुणत्वलक्षणसिद्धिधर्म-

कत्वाच्चेति भावः। तुच्छत्वसविशेषत्वव्युदासाय परोक्तं शङ्कते—**सिद्धिरिति**; सिद्धेः सिध्यन्तरानपेक्षादिति भावः। सविशेषत्वमापादयन् पृच्छति—**कस्येति**। कस्याश्रयस्य कं विषयं प्रति। अतथात्वे बाधमाह—**यदीति**। तदुपपादयति—**सिद्धिर्हीति**। उत्तरं शङ्कते—**आत्मन इति**। आत्मशब्दः पुरुषवाची। परिहरति—**कोऽयमिति**; किं क्षेपे। सिद्धिप्रतिसंबन्धिप्रत्यक्षत्वम् **अय**मिति पदेन सूच्यते। तद्ध्यात्मलक्षणम्। तादृश आत्मा अहमर्थ एव, न तु धीरिति भावः। इममभिप्रायमजानन् पूर्वपक्षी कोऽयमिति प्रश्नमात्रं मन्वानः पूर्वोक्तं संविदात्मत्वं स्मारयन् प्रतिवक्ति—**नन्विति**। दूषयति—**सत्यमिति**। दुरुक्तत्वमुपपादयति—**तथा हीति**। धर्मधर्मिरूपपुञ्जाभिप्रायो जातशब्दः।

## तत्त्वटीका

तिष्ठन्तु नित्यत्वस्वयंप्रकाशत्वादयः; स्वरूपप्रकाशमात्रेणापि सधर्मकत्वसिद्धिं वक्तुमाह—**अपिचेति**। स्वतः परतो वेति विचारं त्यक्त्वा सिद्धिमात्रं विकल्पयति—**संविदिति**। **सिध्यति**; प्रकाशत इत्यर्थः। पूर्वत्रेदमनुमानद्वयं बाधितविषयमित्यभिप्रायेणाह—**सिध्यति चेदिति**। **सधर्मता**; सिद्धिरूपधर्मेण तत्साधकप्रमाणोपनीतैः प्रत्यक्षत्वादिभिरिति शेषः।

घटो घटत्वान्निर्धर्मा दृश्यत्वात्तच्च तत्र न।
इत्यादिवदिमौ हेतू हास्याविति च सूच्यते ॥ ४८० ॥

उत्तरत्र व्यतिरेकिण आश्रयासिद्धिमन्वयिनः साध्यप्रतियोगिनिरूपणासिद्धिं चाभिप्रेत्याह—**न चेदिति**। स्वतोऽन्यतो वा भानाभावाद्धि खसूनादेस्तुच्छतां ब्रवीषीति निदर्शयति—**गगनेति**। अत्र 'गमनं गच्छति वा, न वा' 'वचनं वक्ति वा, न वा' इत्यादिवज्जात्युत्तरत्वं मन्वानेन सधर्मकत्वं तुच्छत्वं च परिजिहीर्षिता परेणोक्तं शङ्कते—**सिद्धिरिति**। एवकारः सिद्धेः किं सिद्ध्यन्तरेणेति द्योतनार्थः। तथापि सविशेषत्वं दुस्त्यजमित्यभिप्रायेण पृच्छति—**कस्येति**। साश्रयत्वं सविषयत्वं च धर्मिग्राहकसिद्धं नास्तीति वक्तुं न शक्यमिति भावः। उभयपरित्यागेन प्रत्युक्तिं शङ्कते—**यदीति**। तत्र स्वरूपस्यापि त्यागं प्रसञ्जयति—**सेति**। उक्तं निदर्शनेन स्थापयति—**सिद्धिर्हीति**। यथाव्युत्पत्ति सिद्धिशब्दार्थः संग्राह्यः, अन्यथातिप्रसङ्गादित्याशयः। प्रत्यगात्मनः प्रत्यगात्मानं प्रति सिद्धिरियमिति परोक्तमनुवक्ति—**आत्मन इति**। आवृत्त्या षष्ठी चतुर्थी वात्र

योज्या ; षष्ठ्या एव वा सामान्यमुखेन संबन्धद्वयपरत्वम् । परपक्षे ब्रह्मणो बोद्धृत्वाभावात्संविन्मात्रस्य तस्य प्रकाशफलित्वाभावेन स्वस्मै भासमानत्वाभावाच्च **आत्मन** इत्युक्तिरयुक्तेत्याक्षिपति—**क इति** । अयंशब्देन सिद्धिप्रतिसंबन्धितया प्रत्यग्रूपत्वं सूच्यते । ईदृशात्मलक्षणमहमर्थस्यैव ; न तु त्वदिष्टस्य चिन्मात्रस्येति भावः । अज्ञाताभिप्रायः प्रश्नभ्रान्त्या पूर्वपक्षोक्तमुद्गृह्णाति—**नन्विति** । एवकारो भेदमिथ्यात्वाभिमानादाश्रयाश्रयिभावव्युदासार्थः । संविदात्मत्वं निराचिकीर्षुस्तदुक्तिमात्रमभ्युपगच्छति—**सत्यमिति** । तत्प्रतिपाद्यत्वधर्माङ्गीकारोऽपि नेत्याह—**दुरुक्तमिति** । **तुः** वचनदोषमात्रव्युदासार्थः । **कस्य कं प्रतीति** ; प्राक्सूचितेन विरोधेन दुरुक्ततां विवृणोति—**तथा हीति** । निर्विशेषस्यैकस्यैव निर्विकल्पकेऽप्यसिद्धेस्तत्रापि विशिष्टानेकस्फुरणव्यञ्जनाय **जात**शब्दः । **तत्संम्बन्धिनी** ; विषयाश्रयवतीत्यर्थः । अहमर्थस्वरूपसंविद्व्यवच्छेदार्थं **से**त्युक्तम् । स्वस्य स्वाश्रयत्वविरोधव्यक्त्यै **स्वयं**शब्दः ।

## मूलभावप्रकाशिका

**सधर्मता स्यादिति** ; सिद्धिशब्दितप्रकाशाख्यधर्मेण सधर्मता स्यादित्यर्थः । **कस्य कं प्रतीति** ; कस्यचिदाश्रयस्य कंचिद्विषयं प्रति हि सिद्धिरित्यर्थः । यद्यपि संविच्चेत् कस्यचित् कंचित् प्रत्येव प्रभवतीति सुवचत्वात् सिद्धिश्चेदित्येवं प्रणाड्या संविदः सिद्धित्वसमर्थनपुरस्कारेण दूषणं नातीव सप्रयोजनं, तथापि सिद्धिशब्दस्य प्रसक्तत्वात् सोऽपि समाश्रित इति द्रष्टव्यम् । **कस्यचित्कंचिदि**त्युक्तद्वयमपि स्वयमेवेत्याह—**आत्मन इतीति**; **स्वस्मै** स्वयमेव सिध्यतीत्यर्थः । अनात्मत्वात्संविदः स्वस्मै भासमानत्वं न युक्तमित्याह—**कोऽयमिति** ; किंशब्दः प्रतिक्षेपे । संविदात्मा न भवतीत्यर्थः । कुतः स्वयं **स्वस्मै** सिद्ध्येत् ? आत्मन एव तादृक्त्वादित्यर्थः । संविद्वाचित्वेऽप्यात्मशब्दाभिप्रायेण **अय**मिति पुंलिङ्गनिर्देशः । संविद आत्मत्वं समर्थितमित्यभिप्रायेण चोदयति—**ननु संविदेति** । संविदात्मत्वं निराकर्तुमुपक्रमते—**तथा हीति** । **तत्संबन्धिनीति**; पुरुषाश्रितेत्यर्थः ।

## श्रीभाष्यम्

**एतदुक्तं भवति—अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपर-**

नामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषः ‘घटमहं जानामि’ ‘इममर्थमवगच्छामि’ पटमहं संवेद्मि, इति सर्वेषामात्मसाक्षिकः प्रसिद्धः। एतत्स्वभावतया हि तस्याः स्वयंप्रकाशता भवताप्युपपादिता। अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मत्ववत्कर्तृत्वमपि दुर्घटमिति।

### श्रुतप्रकाशिका

सिद्धिशब्द उत्पत्तिज्ञप्तिसाधारणः। इह किमर्थः? प्रकाशश्चेदिह विवक्षितः स कः? तस्य कर्मकर्तृसंबन्धित्वे किं प्रमाणम्? वृत्तिज्ञानं हि सकर्मकर्तृकम्। संवित्तु केवला। इह कर्मनिर्देशे किं फलमिति शङ्कायामाह—**एतदुक्तं भवतीति**। **अनुभूतिरित्यनेन** ज्ञप्तिपरत्वमुक्तम्। **स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभाव** इत्यनेन तत्स्वरूपमुक्तम्। एवं सिद्धिशब्दार्थ उक्तः। **ज्ञानावगति संविदाद्यपरनामेत्यनेन** ज्ञानसंविच्छब्दयोः पर्यायतया वृत्तिज्ञानसंविदोर्विभागस्य निष्प्रमाणकत्वं फलितम्। **घटमहं जानामीत्यादिना आत्मसाक्षिकः प्रसिद्ध** इत्यन्तेन कर्मकर्तृसंबन्धस्य स्वानुभवसिद्धत्वमुक्तम्; ज्ञानसंविच्छब्दयोः पर्यायत्वमुपपादितं च। कर्मकर्तृसंबन्धे पराभ्युपगतिमाह—**एतत्स्वभावतयेति**। आत्मस्वयंप्रकाशत्वं साधयता कर्मकर्तृसंबन्धिज्ञानस्य स्वयंप्रकाशत्वं साधितमिति सकर्मकर्तृकं ज्ञानं जडरूपमात्मभूतज्ञानादन्यद्वृत्तिरूपमित्यभ्युपगमोऽनुपपन्न इति भावः। **अस्येत्यादिना** कर्मनिर्देशस्य फलं दर्शितम्। ननु न वयं संविदः कर्तृत्वमिच्छाम इति कथमयं प्रसङ्गः? उच्यते—संविद आत्मत्वं वदता प्रत्यक्त्वमभ्युपेतव्यम्। प्रत्यक्त्वं च ज्ञानाश्रयस्यैवेति संविदो ज्ञातृत्वमवर्जनीयम्। तच्च दुर्घटमित्यर्थः। कर्तृत्वमाश्रयत्वम्; धात्वर्थाश्रयो हि कर्ता।

### भावप्रकाशिका

**इह किमर्थ इति**; किमुत्पत्तिवाची, उत ज्ञप्तिवाचीत्यर्थः।

### श्रुतप्रदीपिका

किं ज्ञप्तिरुत्पत्तिर्वा सिद्धिः? ज्ञप्तिश्चेत् सा कीदृक्? तस्या उभयसंबन्धित्वे किं मानम्? वृत्तिज्ञानं हि सविषयाश्रयम्, संवित् केवला हि धीरात्मा। इह विषयोपादानं

च क्रिमर्थमित्यादिशङ्कायामाह—**एतदुक्तमिति**। **व्यवहारे**त्यादिना सिद्धिस्वरूपमुक्तम्। **अवगच्छामी**त्यादिना ज्ञानसंविदैक्यम्। **आत्मसाक्षिक** इति तत्संबन्धित्वे मानम्। त्यात्वं तवापीष्टमित्याह—**एतदिति**। कर्मनिर्देशफलं दर्शयति—**अस्येति**।

## तत्त्वटीका

नन्वात्मनः स्वयंप्रकाशत्वमिच्छतां सर्वेषामात्मसंवित्त्वयोर्न विरोधः, 'सिद्धिरूपतया' इत्यत्र चोत्पत्तिरूपत्वविवक्षायामनन्वयः; ज्ञप्तिरूपत्वे विवक्षितेऽपि तस्याः किं विषयाश्रयसंबन्धनियमे प्रमाणम्? वृत्तिज्ञानस्य तन्नियमसद्भावेऽपि ततोऽन्यस्यां संविदि चदुक्तात्मस्वरूपवन्मा भूत्तद्योगः; आत्मधियोरैक्ये प्रतिक्षेप्ये विषयग्रहणं च व्यर्थमित्याह—**एतदिति**। अयं भावः—अस्मन्मते हि प्रसिद्धस्याहंशब्दार्थस्य प्रसिद्धज्ञानादन्यस्यैव स्वधर्मवत्स्वस्वापेक्षया प्रकाशत्वरूपं संवित्त्वं स्वयंज्योतिष्ट्वादिश्रुत्यनुसारात् स्वीकृतमिति न विरोधः। त्वया तु प्रसिद्धायाः संविदः प्रतीतिविरुद्धमात्मत्वं साध्यते।

"परागर्थप्रमेयेषु या फलत्वेन संमता।
संवित्सैव हि नः सिद्धा वेदान्तोक्तिप्रमाणतः॥"

इति निष्कर्षात्। अत एवास्मन्मते धर्मधर्मिज्ञानभेदवत् त्वन्मते वृत्तिज्ञानस्वरूपसंविद्भेदकृतिश्चायुक्ता। लोके च ज्ञानसंविदादिशब्दाः पर्यायाः पठ्यन्ते; उपलम्भश्च तथैव। अतः सांख्यस्य पृथक्पाठोऽनादरणीयः। विषयवत्याः संविद आत्मधर्मत्वं च सर्वलोकप्रत्यक्षसिद्धम्। संविदः स्वयंप्रकाशत्वं च साधयता त्वयापि विषयाश्रयसंबन्धिस्वभावतया हेतुरुक्तः; कर्मोपादानं च कर्त्रैक्यव्याहतेर्दृष्टान्तार्थंत न्मुखेन प्रतिबन्ध्यर्थं संबन्धिशब्दत्वव्यक्त्यै च; सविषयत्वादेव निर्विषयादात्मस्वरूपाद्विवेकार्थं च।

## मूलभावप्रकाशिका

संविदः पुरुषाश्रितत्वे किं प्रमाणमित्याशङ्क्याह—**एतदुक्तं भवतीति**; न्यायाश्रितप्रतिपत्त्या दर्शनभेदोऽपि सिध्यतीत्यर्थः। न तु दृश्यभेदो दर्शनभेदहेतुः, समूहालम्बने व्यभिचारादिति द्रष्टव्यम्। ननु 'घटमहं जानामि' इति प्रतीतेरनावृतिविषयत्वमस्त्विति शङ्कां प्रतिक्षिपति—**एतत्स्वभावतयेति**। वस्त्वन्तरव्यवहारानुगुण्यापादकत्वस्वभावतयेत्यर्थः। 'परत्र व्यवहारहेतुत्वादनुभूतिरनन्याधीनस्वधर्मव्यवहारा' इति त्वया साधितम्। न हि वृत्तेः स्वप्रकाशत्वं तत्साधनभूतं परत्र व्यवहारहेतुत्वं वा त्वदिष्टमिति

भावः । **दुर्घटमिति** ; ननु कर्तृत्वादौ दौर्घट्यं न संविदात्मत्वविरोधि, प्रत्युतानुकूलमिति चेत्—न ; प्रमाणज्ञानं स्वनिवृत्त्यस्वदेशगतवस्त्वन्तरपूर्वकमिति वदता त्वयैव ज्ञानाज्ञानयोः समानाश्रयत्वस्याभ्युपेततया ज्ञानाज्ञानाश्रयत्वे अज्ञानाश्रयत्वं वा आत्मत्वं वा कथं स्यादिति भावः ।

### श्रीभाष्यम्

**तथा हि—अस्य कर्तुः स्थिरत्वं कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिवोत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते । कर्तृस्थैर्यं तावत् 'स एवायमर्थः पूर्वं मयानुभूतः' इति प्रत्यभिज्ञाप्रत्यक्षसिद्धम् । 'अहं जानामि' 'अहमज्ञासिषम्' 'ज्ञातुरेव ममेदानीं ज्ञानं नष्टम्' इति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धा इति कुतस्तदैक्यम् । एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे 'पूर्वेद्युर्दृष्टमपरेद्युरिदमहमदर्शम्' इति प्रत्यभिज्ञा च न घटते । अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसंभवः ।**

### श्रुतप्रकाशिका

एवं धर्मधर्मिभावेन प्रतीत्या संविदात्मत्वं निराकृतम् । अथ स्थिरत्वास्थिरत्ववैधर्म्येण तद् व्युदस्यते—**तथेति** । हिर्हेतौ । तथा शब्देन चार्थेन हेत्वन्तरमुच्यते । कर्तृस्थैर्यमुपपादयति—**कर्तृस्थैर्यं तावदिति** । प्रत्यभिज्ञायमानत्वाद्धि घटादेः स्थैर्यसिद्धिः ; तद्वत्तत्र घटप्रत्यभिज्ञाकाले 'पूर्वं मयानुभूतः' इति कर्तुरपि प्रत्यभिज्ञाविषयत्वात् स्थैर्यसिद्धिरित्यर्थः । अथ ज्ञानस्योत्पत्तिस्थितिनिरोधान् दर्शयति—**अहमित्यादिना** । **जानामी**त्यनेनोत्पत्तिस्थिती सिद्धे । **अज्ञासिषमि**त्यतीतत्वप्रतीतिः । एतद्वेशद्यायानन्तरपूर्वकालसंजातज्ञानविशिष्टत्वपरामर्शद्योतनार्थं **ज्ञातुरेव ममे**त्युक्तिः । **उत्पत्त्यादय** इत्यादिशब्देन स्थितिनिरोधग्रहणम् । संविद उत्पत्तिर्नाम त्रिचतुरक्षणस्थायिन्यास्तस्याः प्रथमक्षणयोगः । क्षणान्तरसंबन्धः स्थितिः । संविदः स्वप्रकाशत्वात्ते प्रत्यक्षे । घटसंविदो निरोधो नाम पटसंवित् । सा च प्रत्यक्षा । इतिर्हेतौ । स्थिरत्वास्थिरत्ववैधर्म्येण न तदैक्यमित्यर्थः । एवं प्रत्यभिज्ञाविषयत्वेनात्मनः स्थैर्यमुक्तम् । अथ प्रत्यभिज्ञाश्रयत्वेन स्थैर्यमुच्यते—

**एवमिति** । पूर्वत्र प्रत्यभिज्ञाप्रत्यक्षसिद्धमित्युक्तम् । अत्र प्रत्यभिज्ञा न घटत इत्युक्तम् । अयमभिप्रायः—प्रत्यभिज्ञाविषये ज्वालादौ यत्र क्वचिदन्यथासिद्धिः संभवेत्; तत्र न स्थैर्यसिद्धिः । अत्र प्रत्यभिज्ञानविषयत्वान्यथासिद्धावपि प्रत्यभिज्ञाश्रयत्वस्यानन्यथासिद्धत्वात् भ्रान्तिरूपप्रत्यभिज्ञायामपि तदाश्रयस्य स्थैर्यमनन्यथासिद्धमिति प्रत्यभिज्ञाश्रयत्वप्रयुक्तं स्थैर्यं दुष्प्रकम्पमिति । प्रत्यभिज्ञाश्रयतया स्थैर्यं विवृणोति- —**अन्येनेति** ।

## भावप्रकाशिका

**कर्तुरपि प्रत्यभिज्ञाविषयत्वादिति**; ननु 'पूर्वं मयानुभूतो यः स एवायम्' इति प्रत्यभिज्ञया पूर्वानुभूतविषयाभेदस्य पुरोवृत्तिनि सिद्धावपि कथमनेनानुभवितृभेदसिद्धिः? तदानीमनुभवितुर्मदर्थस्येदानीमनुभवितुश्च मदर्थस्याभेदाविषयत्वेन भेदेऽप्यस्याः प्रतीतेः संभवात् । न चान्यानुभूतेऽन्यस्मरणासंभवादभेदसिद्धिरिति वाच्यम्, तर्ह्यभेदस्तया युक्त्या सिध्यतु, न तु प्रत्यभिज्ञा प्रत्यक्षेण । यदि च तावन्मात्र एव संरंभस्तर्हि वक्ष्यमाणायाः प्रत्यभिज्ञाश्रयत्वयुक्तेरेव प्रमाणीकरणसंभवात् प्रत्यभिज्ञाविषयत्वस्य प्रमाणीकरणमयुक्तमिति चेत्—न; 'यः पूर्वं मयानुभूतः स एवायमर्थस्तेनैव मयानुभूयते' इति प्रत्यभिज्ञायाः प्रमाणीकरणसंभवादित्यत्र तात्पर्यात् । **उत्पत्तिस्थिती सिद्धे इति**; 'जानामि' इति ज्ञानानुकूलकृतिमत्त्वप्रतीतेरुत्पत्तिप्रतीतिः । लटा धात्वर्थवर्तमानत्वप्रतीतेः स्थितिप्रतीतिरिति भावः । ननु 'जानामि' इत्यादौ धात्वर्थाश्रयत्वमेव प्रतीयते, न तु तदनुकूलकृतिमत्त्वम्; अत एव नित्यज्ञानाश्रयस्यापि परमात्मनः 'वेदाहं समतीतानि' इति ज्ञानाश्रयत्वप्रतीतिरिति यद्यपरितोषः, तर्हि 'मम ज्ञानमुत्पन्नम्' इति प्रतीतिरुत्पत्तौ प्रमाणीकरणीया । **ज्ञातुरेव ममेत्युक्तिरिति**; तृचः कर्तृत्वार्थकत्वेनानन्तरकालोत्पन्नत्वप्रतीतेरिति भावः । **निरोधो नाम पटसंविदिति**; यद्यप्युत्पत्तेः प्रथमक्षणयोगित्वरूपत्ववत् विनाशस्य चरमक्षणयोगित्वमपि सुवचम्, तथाप्युत्तरोत्तरावस्थासंबन्धस्यैव पूर्वपूर्वावस्थाविनाशत्वमिति द्रष्टव्यम् ।

## श्रुतप्रदीपिका

धर्मधर्मिभावो दर्शितः । स्थिरत्वास्थिरत्ववैषम्यमाह— **तथेति** । उभयं क्रमात् ग्रन्थद्वयेनाह—**कर्तृस्थैर्यमित्यादिना** । **अहं जानामी**त्यादिना च प्रत्यभिज्ञाविषयतया

स्थैर्यमुक्तम् । अथ तदाश्रयतया स्थैर्यमाह—**एवमिति** । **न घटत** इति ; ज्वालाप्रत्यभिज्ञावत् नान्यथासिद्धिरिति भावः । उक्तमुपपादयति—**अन्येनेति** ।

**तत्त्वटीका**

धर्मधर्मिभावसिद्ध्या संविदात्मनोरैक्यं दुर्घटमित्युक्तम् ; तदेव धर्मान्तरैरपि व्यनक्ति—**तथा हीति** । आत्मत्वादिनित्यधर्मव्यवच्छेदाय **संवेदनाख्यस्ये**त्युक्तम् ; न ह्यसौ समाख्या पारिभाषिकीति भावः । **सुखदुःखादेरिवेति** ; अत्र स्वमते सुखादेर्धीविशेषतया प्रकाशरूपावस्थाया अस्थिरत्वे सुखाद्यवस्थादृष्टान्तः । परमते चान्तःकरणधर्माः सुखदुःखादयः । उक्तयोः स्थिरत्वास्थिरत्वयोः प्रथमस्य वैनाशिकेतरसर्वसंमन्तव्यत्वमाह—**कर्तृस्थैर्यं तावदिति** । **स एवायमिति** दृष्टान्तार्थम् । **पूर्वमि**त्यनेन सुषुप्तेः पूर्वमित्यपि भाव्यम् । वक्ष्यति च—“स एव तु कर्मानुस्मृतिशब्दविधिभ्यः” इति । **मयानुभूत** इति तु संवित्संततेराधारत्वेन स्वात्मानुवृत्तिप्रत्यक्षोक्तिः । द्वितीयस्य च दुरपह्नवत्वमुदाहरणैर्विवृणोति—**अहमिति** । **जानामी**त्यनेन संविदुत्पत्तिस्थित्योः प्रदर्शनम् ; पूर्वमेतज्ज्ञानरहितोऽहमिदानीमेतज्ज्ञानवानिति तात्पर्यम् । ‘सोऽयम्’ इति बाह्यार्थवत् ‘सोऽहम्’ इत्यान्तरार्थेऽपि प्रत्यभिज्ञायामिह ज्ञानरूपातीताकारविशेषप्रत्यक्षविशेषविषय एवेत्याह—**अहमज्ञासिषमिति** । साक्षादेव धीप्रध्वंसप्रत्यक्षमाह—**ज्ञातुरिति** । ज्ञानस्य पूर्वकाले संप्रतिपत्त्यर्थ एवकारः ; विरुद्धधर्माध्यास इत्यर्थः ।

“आत्मा कर्ता च भोक्ता च स्थिरश्च स्थापयिष्यते ।
सुखादिवदनित्या तदन्या धीः स कथं भवेत् ॥”

इति । कर्तृस्थैर्ये प्रत्यभिज्ञा प्रमाणीकृता ; संविदस्तदैक्यं च दुर्घटमिति स्थापितम् । अथ संविदात्मत्वे नश्वरत्वानश्वरत्वविकल्पेन पूर्वत्र सौगतानामिव प्रत्यभिज्ञाविरोधमाह—**एवमिति** । यद्वा अर्थान्तरवत्प्रत्यभिज्ञाविषयत्वेन स्थैर्यमुक्तम् ; अथ तदाधारतया चोच्यते । धीसंततेरात्मतायां बोध्ये बोद्धरि च भ्रान्तिरूपापि प्रत्यभिज्ञा स्मृतिमात्रं च न स्यादिति वक्ष्यामः । अत एव ज्वालाप्रत्यभिज्ञावदन्यथासिद्धिवचनमिहानर्थकमित्यभिप्रायेणाह—**दृष्टमिति** । अत्र ‘प्रति’ इत्यध्याहार्यम् । पूर्वेद्युर्दृष्टमिदमपरेद्युरदर्शमिति वान्वयः । व्याघातप्रसङ्गेन सह प्रसङ्गान्तरसमुच्चयार्थश्चकारः । अथवा ‘मया पूर्वेद्युर्दृष्टम्’ इत्यत्र स्वप्रत्यभिज्ञार्थमेव पृथग्वाक्यम् । **न घटत** इत्युक्तम् ; तदेव ‘अनुस्मृतेश्च’ इति सूत्रतात्पर्येण स्थापयति—**अन्येनेति** ।

### मूलभावप्रकाशिका

अनुभूतेरस्थिरत्वादनात्मत्वम्, अनुभवितुरेव प्रत्यभिज्ञायमानतया प्रत्यभिज्ञानाश्रयतया च स्थिरत्वादात्मत्वमित्याह—**तथा हीति**। **स एवायमर्थ इति**; ननु 'स एवायमर्थः' इत्यर्थप्रत्यभिज्ञा, नाहमर्थप्रत्यभिज्ञा, तत्तेदंतानुल्लेखित्वात्; अर्थप्रत्यभिज्ञायाश्च प्रकृतानुपयोगित्वादिति चेत्—न; 'अयमर्थः' इत्यत्रार्थशब्दस्याहमर्थपरत्वात्; पूर्वानुभूताहमर्थ एवेदानीमनुभूयमानाहमर्थ इति हि तस्यार्थः। अयमिति शब्दस्त्वयमर्थस्यैतद्देशकालसंबन्धप्रतिपादक इति भावः। 'अहं जानामि' इति वर्तमानज्ञानानुकूलकृतिमत्त्वप्रतीतेर्ज्ञानस्य वर्तमानत्वेन प्रतीत्यनुकूलकृतिमत्त्वांशमादायोत्पत्तिप्रतीतिरिति भावः। यद्यपि नित्यज्ञानाश्रय ईश्वरेऽपि 'सर्वं जानाति' इति प्रयोगवत् भगवतः "वेदाहं समतीतानि" इति प्रयोगवच्च लट्प्रयोगमात्रेणोत्पत्तिर्न निश्चेतुं शक्या, तथाप्यसति बाधके सोऽर्थः प्रतीयत इति भावः। **ज्ञातुरेव ममेति**; ज्ञातुरिति कर्त्रर्थतृच्प्रत्ययेनोत्पत्तिः प्रतीयत इति भावः। **कुतस्तदैक्यमिति**; कुतोऽस्थिरायाः संविद आत्मैक्यमिति भावः।

### श्रीभाष्यम्

**किंच अनुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेऽपि प्रतिसंधानाभावस्तदवस्थः। प्रतिसंधानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति, नानुभूतिमात्रम्; 'अहमेवेदं पूर्वमप्यन्वभूवम्' इति। भवतोऽप्यनुभूतेर्न ह्यनुभवितृत्वमिष्टम्। अनुभूतिरनुभूतिमात्रमेव। संविन्नाम काचिन्निराश्रया निर्विषया वात्यन्तानुपलब्धेर्न संभवतीत्युक्तम्। उभयाभ्युपेता संविदेवात्मेत्युपलब्धिपराहतम्। अनुभूतिमात्रमेव परमार्थ इति निष्कर्षकहेत्वाभासाश्च निराकृताः।**

### श्रुतप्रकाशिका

एवं स्थिरस्य ज्ञातुर्धर्मत्वेनास्थिरत्वेन च प्रतीतत्वादस्थिरत्वनिबन्धनात्प्रतिसंधानासंभवाच्च संविदात्मत्वं निरस्तम्। अथ स्थिरत्वाभ्युपगमेऽपि प्रतिसंधानासंभवादात्मत्वं व्युदस्यति—**किंचेति**। **अनुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेऽपीति**; आत्मत्वा-

भ्युपगमौपयिकतया संविदो नित्यत्वाभ्युपगमेऽपीत्यर्थः। न केवलमनित्यत्वपक्ष एव संविद आत्मत्वानुपपत्तिः, नित्यत्वेऽपीत्यपिशब्दार्थः। आत्मा हि प्रतिसंधत्ते; प्रतिसंधानमत्र न संभवतीत्यर्थः। तदसंभवमुपपादयति—**प्रतिसंधानमिति**। तदुदाहरति—**अहमिति**। ततः किमिति शङ्कायां तस्य परानिष्टत्वमाह—**भवत इति**। न केवलं भवदनभ्युपगमः, अनुभूतेरनुभवितृत्वं गमनक्रियाया गन्तृत्ववदनुपपन्नं चेत्यभिप्रायेणाह—**अनुभूतिरिति**। मात्रचानुभवितृत्वव्यावृत्तिः। ननु धर्मत्वास्थिरत्वाप्रतिसंधातृत्वैः संविदोऽनात्मत्वं यदुक्तं तन्न वक्तव्यम्; अनुभवितृत्वस्यात्माकारत्वेनानभ्युपगमात्, विषयाश्रयशून्यायाः संविदो गुणभावाभावात्, तदुभयसंबन्धप्रयुक्तानित्यत्वप्रसङ्गाभावाच्चेत्यत्राह— **संविन्नामेति**। ननु कथं विषयाश्रयशून्यज्ञानाभावः? स्वरूपभूतं ज्ञानं हि विषयाश्रयशून्यं त्वन्मत उच्यते। स्थविष्ठमिदं चोद्यम्। किं त्वया ज्ञातुरेव ज्ञानशब्दवाच्यस्याजडत्वनित्यत्वादिकं विषयाश्रय-शून्यत्वमात्मत्वं च साध्यते, तत्सिद्धसाधनम्। यदि ज्ञातृव्यतिरिक्तस्य ज्ञानस्य, तर्हि ज्ञातृव्यतिरिक्तं विषयाश्रयविरहितं ज्ञानं शून्यमिति ब्रूमः। ज्ञातृज्ञेयतदवच्छिन्नज्ञानस्वरूप-त्रिकातिरिक्तं ज्ञानमनुपलम्भनिरस्तमित्यर्थः। बौद्धैकदेशिभिर्धर्मिकल्पनातो वरं धर्मकल्पनेति लाघवन्यायात् ज्ञात्रात्मवादिना ज्ञानात्मवादिना च संप्रतिपन्ना संविदेवात्मेत्युक्तम्; तदा-शङ्क्य परिहरति—**उभयेति**। कल्पनायामेव लाघवन्यायः, न तूपलब्धौ। अन्यथात्यन्त-लाघवार्थं माध्यमिकमतानुसारेण ज्ञानं च त्यज्येत। कल्पने तु लाघवन्यायः। संवित्तूप-लभ्यत इति चेत्, ज्ञातापि तथोपलभ्यते। अत उपलब्धिपराहतत्वात् संविदात्मत्वमनुप-पन्नमित्यर्थः। साश्रयैव संविदुपलभ्यते, तथापि युक्तिभिर्निर्विशेषत्वं साधितमित्यत्राह— **अनुभूतिमात्रमिति**। यद्वा संविदः परमार्थत्वेनोभयवादिसंमतत्वात् सैवात्मेत्युक्तमित्याशङ्क्य दूषयति—**उभयेति**। **उपलब्धिपराहतम्**; प्रत्यक्त्वलक्षणस्यात्मत्वस्य 'अहं जानामि' इति ज्ञातृत्वसामानाधिकरण्येनोपलब्ध्या पराहतमित्यर्थः। ज्ञातुरेव प्रत्यगात्मत्वमुपलब्धि-सिद्धमित्युक्तम्; तस्या उपलब्धेर्निर्विशेषसंविदात्मत्वसाधकयुक्तिभिर्बाधितत्वमाशङ्क्याह— **अनुभूतिमात्रमिति**।

### भावप्रकाशिका

**आत्मा हि प्रतिसंधत्त इति**; न त्वन्तःकरणमिति शेषः। अनुभूतेरात्मत्वे अनुभवितृभेदप्रतिसंधानमनुभूतेः कथं स्यादिति भावः। **उभयाभ्युपेता संविदेवेति**

भाष्ये ज्ञातुरुभयानभिमतत्वं प्रतीयते ; मृषावादिभिश्च तदभ्युपगमात्तदीयशङ्कापरिहारपरत्वमयुक्तमिति ज्ञातृस्वरूपानभ्युपगन्तृबौद्धैकदेशिमतं प्रसङ्गान्निराकरोतीत्याह—**बौद्धैकदेशिभिरिति** । **उपलब्धिपराहतत्वात्संविदात्मत्वमनुपपन्नमिति** ; संविद एवात्मत्वं तद्व्यतिरिक्तस्यात्मत्वाभाव इत्येतस्य तद्व्यतिरिक्तोपलब्धिपराहतत्वादित्यर्थः । अत एव–अस्तु ज्ञातुरप्युपलम्भः, नैतावता संविदात्मत्वमनुपलब्धिपराहतम् ; न हि संविदनात्मेति कश्चिदुपलम्भोऽस्तीति चोद्यं पराकृतं वेदितव्यम् । एतादृशक्लिष्टार्थाश्रयणप्रसङ्गपरिहाराय मृषावादिशङ्कापरिहारपरतया व्याचष्टे—**यद्वा संविदः परमार्थत्वेनेति** ।

## श्रुतप्रदीपिका

अथ धिय आत्मत्वव्युदासाय नित्यत्वमुपगम्याह—**किंचेति** ; न केवलमनित्यत्वमित्यर्थः । कथमित्यत्राह—**प्रतिसंधानं हीति** । तदेव दर्शयति—**अहमिति** । तस्यानिष्टतामाह—**भवत इति** । इष्टत्वेऽपि गतेर्गन्तृत्ववदयुक्तमित्याह—**अनुभूतिरिति** । उत्पत्त्यादिकं सविषयायाः, नित्यत्वादिकं च निर्विषयाया इत्यत्राह—**संविदिति** । कल्पनालाघवमाशङ्क्याह—**उभयेति** । संविदपि किं न त्यज्यते, ? उपलब्धिर्ज्ञातुरपि तुल्येति भावः । धियो विषयाश्रयसंबन्धित्वमुपलब्धमपि युक्तिहतमित्यत्राह—**अनुभूतीति** ।

## तत्त्वटीका

मा भूदनित्यस्य घटादिप्रकाशस्य नित्यात्मतादात्म्यम् ; निर्धूतनिखिलावच्छेदा तु संविदात्मा स्यादित्यत्र प्रमाणाभावात् प्रागेव दत्तोत्तरत्वेऽप्यासन्नतरोक्तप्रसङ्गेनापि दोषसाम्यं विवक्षुराह—**किंचेति** । प्रतिसन्धानमिह प्रत्यभिज्ञामात्रम् ; पूर्वापरज्ञानानामेकाश्रयधीर्वा । असंभवं विवृणोति—**प्रतिसंधानमिति** । कालद्वयवृत्तेः प्रकाशस्य प्रतिसंधातृत्वं युक्तमित्यत्राह—**नानुभूतिमात्रमिति** । ज्ञातृत्वाभावे प्रकाशस्यापि कालद्वयवृत्तिर्निष्फलेति भावः । ज्ञातुः स्थिरत्वसाधकं प्रतिसंधानस्वरूपमाह—**अहमिति** । एवकार आश्रयभेदशङ्कानिरासार्थः । अविद्यावैभवाद्भ्रान्त्या प्रतिसंधातृत्वं स्यादित्यत्राह—**भवत इति** । भ्रान्तिरपि ज्ञातुरेव स्यात् । यदि कश्चिदहमर्थं त्यक्त्वानुभूतेरेवानुभवितृत्वमिच्छेत् तत्राप्याह—**अनुभूतिरिति ;** न हि केनचित्स्वीकृतमित्येतावता सर्वलोकप्रत्यक्षविरुद्धं सिध्येदित्याकूतम् । एवं प्रसिद्धसंविदो विषयाश्रयशून्यत्वं तादृशसंविदन्तरं वा न स्वीकृत्य

तत्र नित्ये निर्विशेषे ज्ञातृत्वकल्पनं निरस्तम्। तत्कल्पनाधिष्ठानं च निरस्तमित्याह— **संविदिति**। ननु त्वन्मतेऽहमर्थ आत्मा; स नित्यः स्वप्रकाशः; तद्धर्मभूता धीरपि तथा; ततो नित्यधीद्वयाङ्गीकारगौरवं स्यात्; अस्मदुक्ते हि लाघवमित्यत्राह—**उभयेति**। अयं भावः—क्लृप्तौ हि गौरवं दोषः, न तूपलम्भे; अन्यथा माध्यमिकमतेऽत्यन्तलाघवं स्यात्। संविद उपलब्धत्वादेव हि त्वयापि तन्मतनिरासः। अत्र च स्थिरस्य ज्ञातुरहमर्थस्यात्मत्वमुपलम्भादिसिद्धं दुस्त्यजम्; तद्धर्मभूताया धियश्च नित्यत्वं न क्लृप्तम्; श्रुत्यादिसिद्धं तु न त्यक्तम्। न चात्रोपलम्भविरोधः, स्वरूपतोऽवस्थाभेदैश्च नित्यत्वानित्यत्वव्यवस्थापनात्। तदिहानहमर्थभूतां संविदमात्मतया निष्कृष्याहमर्थत्याग उपलब्धिविरुद्ध इति। अस्त्वेवमस्मन्मतेऽपि शुद्धायामेवानुभूतौ तत्त्वतो भ्रान्त्या च निर्विषयत्वसविषयत्वादिविरोधशान्तिः; उपलब्धमपि नभःस्थलमलिनत्वादिवद्युक्तिविरुद्धं त्याज्यमित्यत्राह—**अनुभूतिमात्रमिति**। मात्रचा विषयाश्रयवर्गस्यावधारणेन स्वगतविशेषाणां च व्युदासः। **निष्कर्षकहेत्वाभासाः**; दृशित्वदृश्यत्वादयः। **निराकृता इति**; अत्र सामान्यतो विशेषतश्चेति भाव्यम्। अत्र परेण विषयेषु घटत्वादिरहितं सन्मात्रं, विषयिणि च कर्मकर्तृक्रियात्वरहितं प्रकाशमात्रमात्मेति यत् प्रलपितं तत् प्रत्युक्तम्।

### मूलभावप्रकाशिका

नन्वनुभूत्यात्मत्ववादिभिः परैः क्षणभङ्गिन्याः संविद आत्मत्वानभ्युपगमात् प्रतिसन्धाने कानुपपत्तिरित्यस्वरसादाह—**किंचेति**। **पूर्वापरेति**; अन्तःकरणस्य सुषुप्तौ नाशस्य त्वयाभ्युपेतत्वेन प्रतिसन्धानस्य तद्विषयत्वासंभवादिति भावः। ननूत्पत्त्यादिप्रतीतिः साश्रयसविषयान्तःकरणवृत्तिविषया, न तु निराश्रयनिर्विषयानुभूतिविषयेत्यत्राह— **संविन्नामेति**। स्वमते आत्मरूपसंविदो निराश्रयत्वेऽपि प्रत्यक्त्वानुकूलत्वादिविषयत्वेन निर्विषयत्वं नास्तीति भावः। परमते चैतन्यस्य सर्वविषयकत्वेऽप्यसङ्गत्वान्निर्विषयत्वोक्तिरिति द्रष्टव्यम्। **उभयेति**; धर्मभूता संविदित्यर्थः। **उपलब्धिपराहतमिति**; ज्ञातृत्वाभावोत्पत्त्यादिप्रतीतिपराहतमित्यर्थः। नन्वनुभूतिव्यतिरिक्तस्यापरमार्थत्वादनुभूतिरेवात्मेत्यत्राह— **अनुभूतिमात्रमेवेति**।

### श्रीभाष्यम्

**ननु च 'अहं जानामि' इत्यस्मत्प्रत्यये[1] योऽनिदमंशः प्रकाशै-**

---

१. इत्यत्रास्मत्प्रत्यये इति तत्त्वटीकासंमतः पाठः।

**करसश्चित्पदार्थः स आत्मा। तस्मिंस्तद्बलनिर्भासिततया युष्मदर्थलक्षणः 'अहं जानामि' इति सिध्यन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थ एव। नैतदेवम्, 'अहं जानामि' इति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव।**

## श्रुतप्रकाशिका

प्रत्यगर्थो ह्यात्मा; प्रत्यक्त्वं चाहमर्थात्मत्वे न सिध्यति, संविदात्मत्वपक्ष एव सेत्स्यतीति चोदयति--**ननु चेति। अहं जानामीत्यस्मत्प्रत्ये**; अस्मत्प्रत्ययत्वेन पराभ्युपगते; यश्चित्पदार्थः स आत्मा। कुत इत्यत्राह—**अनिदमंश इति**; इदमंशव्यतिरिक्तः, परागर्थव्यतिरिक्तः प्रत्यगर्थ इत्यर्थः। हेतुगर्भमिदम्; प्रत्यगर्थत्वादित्यर्थः। प्रत्यक्त्वं च कुत इत्यत्राह—**प्रकाशैकरस इति**; स्वयंप्रकाशत्वादित्यर्थः। हेत्वभिप्रायश्चिच्छब्दः; ज्ञानत्वात्स्वयंप्रकाशत्वमित्यर्थः। प्रत्यक्त्वं स्वस्मै प्रकाशमानत्वम्। स्वयंप्रकाशत्वमनन्याधीनप्रकाशत्वम्। अहमर्थस्तु युष्मदर्थलक्षणः। युष्मदर्थलक्षणत्वात्परागर्थविशेषोऽहमर्थ इत्यर्थः। युष्मदर्थलक्षणत्वं कुत इत्यत्राह--**तद्बलेति। तद्बलनिर्भासितत्वात्**; ज्ञानाधीनप्रकाशत्वात्। तच्च चिन्मात्रातिरेकित्वादित्यर्थः। अस्मिंश्चोद्यग्रन्थे संविदात्मत्वे व्यतिरेकित्रयम्, अहमर्थानात्मत्वेऽन्वयित्रयं चाभिप्रेतम्। तत्र व्यतिरेकिणां व्यतिरेकिदृष्टान्तोऽन्वयिनां सपक्षश्च युष्मदर्थशब्देन सूचितः। अनुभूतिरात्मा प्रत्यक्त्वात्; यदनात्मा तन्न प्रत्यक्, यथा घटः। अनुभूतिः प्रत्यग्भूता स्वयंप्रकाशत्वात्; यन्न प्रत्यक् तन्न स्वयंप्रकाशम्, यथा घटः। अनुभूतिः स्वयंप्रकाशा अनुभूतित्वात्; यन्न स्वयंप्रकाशं न तदनुभूतिः, यथा घट इति व्यतिरेकित्रयम्। अहमर्थो ज्ञानाधीनप्रकाशः, चिद्व्यतिरिक्तत्वात् घटवत्। अहमर्थः पराक्, ज्ञानाधीनप्रकाशत्वात् घटवत्। अहमर्थो नात्मा, परात्त्वात् घटवदित्यन्वयित्रयम्। स्वयंप्रकाशत्वमेव संविदात्मत्वे साक्षाद्धेतुतया पूर्वमुक्तं पूर्वपक्षोपन्यासे, अत्र तु तेन प्रत्यक्त्वं साधयित्वा तेनात्मत्वं साधितम्। एतत्परिहरति—**नैतदेवमिति**। संवित्स्वयंप्रकाशत्वमिष्टम्। शिक्षणीयांशश्च शिक्षितः। अतोऽनुभूतेः स्वतःसिद्धत्वसाधकहेतोः सिद्धसाध्यता। ज्ञातुरस्वतःसिद्धत्वसाधकहेतोश्चिदन्यत्वस्यासिद्धिर्वक्ष्यते। इतरानुमानचतुष्टयमिह निरस्यते। संविदात्मत्वादि किं प्रतीत्याभ्युपगतम्? उत प्रत्यक्त्वसिद्ध्यनुपपत्त्या,? उत श्रुत्यर्थापत्त्या,? उत श्रुतिस्मृतिसूत्रस्वारस्यादिति विकल्पमभिप्रेत्य प्रथमपक्षे प्रत्यक्षप्रतीतिविरोधमाह—**अहं जानामीति**। एतेन परोक्तानां ज्ञानप्रत्यक्त्वात्मत्वज्ञा-

तृपराक्त्वानात्मत्वसाधकानामन्वयव्यतिरेक्यनुमानानां कालात्ययापदेश उक्तः। 'अहं जानामि' इत्यत्राहमर्थः स्वावभासेऽपि घटावभास इव प्रतिसंबन्धितया 'अहम्' इति प्रतीयते। धर्मितयावभासादेव न ज्ञानशेषतावभासः। अतः स प्रत्यक्; आत्मा च ज्ञानं च धर्मतया प्रतीयमानं सुखादिवदन्यस्मै भासत इति न प्रत्यक्, नाप्यात्मा; अपितु परागनात्मा च। अतश्चतुर्णां हेतूनां प्रत्यक्षबाध उक्तो भवति।

## भावप्रकाशिका

**अस्मत्प्रत्ययत्वेन पराभ्युपगत इति**; मृषावादिमते 'अहम्' इति प्रत्ययरूपेऽस्मत्प्रत्यये चिदचिदंशद्वयभानाभ्युपगमाद्यथाश्रुतेऽपि न दोष इति द्रष्टव्यम्। **अन्वयित्रयमिति**; यद्यपि 'अनुभूतिरात्मा प्रत्यक्त्वात्' 'अनुभूतिः प्रतीची स्वयंप्रकाशत्वात्' 'अनुभूतिः स्वप्रकाशा, अनुभूतित्वात्' इति व्यतिरेकिक्रमवत् 'अहमर्थो नात्मा, पराक्त्वात्' 'अहमर्थः पराक्, ज्ञानाधीनप्रकाशत्वात्' 'अहमर्थो ज्ञानाधीनप्रकाशः, चिद्व्यतिरिक्तत्वात्' इत्येवमुत्तरोत्तरस्य पूर्वपूर्वसाधकतयोपन्यास एव सुश्लिष्टः; तथापि साधनक्रमवैचित्रीप्रदर्शनार्थमेवमुक्तमिति द्रष्टव्यम्। भाष्ये—**चिन्मात्रातिरेकी युष्मदर्थ एवेति; युष्मदर्थ एव**; अनात्मैवेत्यर्थः, 'स आत्मा' इत्यस्य प्रतिनिर्देशरूपत्वादिति द्रष्टव्यम्। **इतरानुमानचतुष्टयमिति**; 'अनुभूतेश्चित्त्वात् स्वप्रकाशत्वम्' 'अहमर्थस्याचित्त्वादस्वप्रकाशत्वम्' इत्यनुमानद्वयं विहाय 'अनुभूतेः स्वप्रकाशत्वात् प्रत्यक्त्वम्' 'प्रत्यक्त्वाच्चात्मत्वम्' इत्यनुमानद्वयस्य 'अहमर्थस्यास्वप्रकाशत्वात् पराक्त्वम्' 'ततश्चानात्मत्वम्' इत्यनुमानद्वयस्य च दूषणमाहेत्यर्थः। ननु 'अहं जानामि' इत्यत्र ज्ञानशेषित्वलक्षणप्रत्यक्त्वस्य कथं भानमित्याशङ्क्याह—**धर्मितयावभासादेवेति**। ननु 'अहम्' इत्यत्र चिदंशोऽपि भासत इति वदन्तं प्रति नेदमुत्तरम्, अंशद्वयेऽपि वृत्तिज्ञानाश्रयत्वप्रतीतेरिति चेत्—न; 'अहम्' इत्यत्रांशद्वयानुपलम्भात्। उपलम्भे च चितोऽप्यहमर्थतया अहमर्थानात्मत्वोक्तिर्विरुध्येतेति भावः।

## श्रुतप्रदीपिका

प्रत्यक्त्वलक्षणमात्मत्वमहमर्थात्मत्वे न सिध्यति, संविदात्मपक्ष एव सेत्स्यतीति चोदयति—**ननु चेत्यादिना। अनिदमंशः**; परागर्थेतरः प्रत्यगर्थ इत्यर्थः। तत्र हेतुः प्रकाशैकरसत्वम्। तत्र हेतुः चित्पदार्थत्वम्। युष्मदर्थत्वे हेतुः युष्मदर्थलक्षणोपेतत्वम्।

तच्च धीबलनिर्भासनम्। तत्र हेतुश्चिन्मात्रातिरेकित्वधीः। चित्त्वात् स्वसिद्धिः; स्वसिद्धित्वात्प्रत्यक्; तत आत्मा; यन्नैवं तन्नैवम्, यथा घट इति। संविदात्मत्वाय व्यतिरेकित्रयम्; ज्ञाता चिदन्यत्वादस्वसिद्धिः; ततः पराक्; ततो नात्मा, यथा घट इत्यहमर्थानात्मत्वायान्वयित्रयं चाभिप्रेतम्। परिहरति—**नैतदिति**। प्रतीतिविरोधमाह—**अहं जानामीति**। धियः स्वसिद्धित्वमिष्टम्। ज्ञातुर्जडत्वं प्रति वक्ष्यते। ज्ञातुः प्रत्यक्तया धीधर्मतया धियश्च तद्धर्मत्वेन पराक्त्वेन च सुखादिवत्प्रतीत्या चतुर्णां हेतूनां कालात्ययापदेश इति भावः। ज्ञप्त्यात्मत्वज्ञातृपराक्त्वानात्मत्वसाधकानामसिद्धिश्च।

## तत्त्वटीका

अथ तु ज्ञातरि प्रत्यगर्थेऽहंत्वादिकं त्यक्त्वा तत्रत्यं प्रकाशमात्रमात्मेति प्रत्यवतिष्ठते—**ननु चेति**। **अस्मत्प्रत्यये**; अस्मदर्थस्वरूपस्फुरणे। **अनिदमंशः**; प्रत्यग्रूप इत्यर्थः। तत्र स्वयंप्रकाशत्वं हेतुमाह—**प्रकाशैकरस इति**। तत्रापि धीत्वं हेतुरुच्यते—**चित्पदार्थ इति**। **स आत्मा**; प्रत्यक्त्वादात्मेत्यर्थः। एवं प्रकाशांशस्यात्मत्वे परमसाध्ये क्रमाद्व्यतिरेकित्रयं प्रयुक्तम्। ज्ञातुरनात्मत्वे तथान्वयित्रयमाह—**तस्मिन्निति**। चिन्मात्रातिरेकित्वाद्धीबलनिर्भासितत्वम्; तदेव युष्मदर्थलक्षणोपेतत्वम्; तत एव युष्मदर्थः प्रत्यक्त्वरहित इत्यर्थः। ततः सोऽनात्मेति वा वाक्यशेषः; अहंतया प्रत्यक्त्वं न शङ्कनीयमित्यवधारणाभिप्रायः। एवं वा—**अहं जानामीत्यत्रास्मत्प्रत्यये**; उत्तमपुरुषोपात्तज्ञातृविषयायां धातूपात्तायां ज्ञप्तावित्यर्थः। शेषं प्राग्वत्। उभयमपि निरस्यति—**नैतदिति**। अहमर्थस्यैव प्रत्यक्त्वमात्मत्वं च; तद्धर्मतया सिध्यतः प्रकाशस्य तु परस्मा एव भासमानत्वान्नोभयमिति विपरीतप्रकारव्यवच्छेदार्थ एवंशब्दः। वैपरीत्यं विवृणोति—**जानामीति**। अहमर्थस्वरूपप्रकाशश्चेदात्मेत्युच्यते, स तर्हि तद्धर्मः; धातूपात्तश्चेत्, इच्छाद्वेषादिधात्वन्तरार्थवदात्मस्वरूपादन्यः प्रसिद्धः। एवकारो दत्तोत्तरत्वद्योतकः। 'उपलब्धिपराहतम्' इति ह्युक्तम्। अत्र धीत्वात्स्वप्रकाशत्वसाधने सिद्धसाध्यम्। आश्रयनियमादिविशेषस्तु प्रागेवोक्तः। स्वप्रकाशतया प्रत्युक्तं साधनं बाधितम्। तत आत्मत्वं किं पुनः? अहमर्थे चित्पदार्थान्यत्वं सामान्यतश्चेदसिद्धमिति वक्ष्यते। विशेषतश्चेदप्रयोजकम्, चिदन्तरे चिद्धिवान्यत्वात्। अतो जडत्वपराक्त्वे चासिद्धे। साध्यरूपं च त्रयं बाधितम्। संविद

आत्मत्वं च प्रत्यक्त्वज्ञातृत्वप्रकाशत्वादिना विकल्प्य यथायथं बाधापसिद्धान्तसिद्धसाधनत्वादीनि वाच्यानि। एवमहमर्थस्यानात्मत्वेऽपि विकल्पानुपपत्तिरिति भावः।

### मूलभावप्रकाशिका

नन्वनिदमंशभिन्नेदमंशगोचराहंप्रतीतौ प्रत्यभिज्ञाश्रयतया च प्रतीयमानस्यान्तःकरणरूपस्याहमर्थस्य चित्प्रकाश्यत्वेनास्वप्रकाशितया नात्मत्वम्, अपित्वहमिति प्रतीतौ यश्चिदंशोऽन्तःकरणाधिष्ठानतया भासते, स एवानिदमंशः प्रत्यगात्मा। अन्यस्तु तदध्यस्तप्रकाश्यतया इदमर्थः पराग्रूप इति चोदयति—**ननु चेति**। **अस्मत्प्रत्यये**; अहमिति प्रत्यय इत्यर्थः। **युष्मदर्थलक्षण इति**; इदमर्थलक्षण इत्यर्थः। **युष्मदर्थ एवेति**; परागर्थ एवेत्यर्थः। **धर्मधर्मितयेति**; धर्मस्यात्मत्वानुपपत्तेरिति भावः। अन्तःकरणवृत्तेर्जडाया ज्ञानत्वेन प्रतीत्यसंभवादिति भावः।

### श्रीभाष्यम्

**किंच—**

अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत्।
अहंबुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते॥
निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट्।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते॥
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः॥
मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति॥
स्वसंबन्धितया ह्यस्याः सत्ता विज्ञप्तितादि च।
स्वसंबन्धवियोगे तु ज्ञप्तिरेव न सिध्यति॥
छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत्।
अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम्।

विज्ञातारमरे केन जानात्येवेति च श्रुतिः ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः ॥
नात्मा श्रुतेरित्यारभ्य सूत्रकारोऽपि वक्ष्यति ।
ज्ञोऽत एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥

## श्रुतप्रकाशिका

अथ प्रत्यक्त्वं विपरीतसाधकं चेत्याह—**किंचेति** । स्वस्मै प्रकाशमानत्वरूपं प्रत्यक्त्वं परस्मै प्रकाशमानत्वं पराक्त्वं च अहमिदं बुद्धिभ्यां हि विभज्यते । तस्मादहंबुद्धिविगमे प्रत्यक्त्वमेव न सेत्स्यतीति प्रत्यक्त्वमेवाहमर्थस्यात्मत्वसाधकमित्यर्थः । संविदि प्रत्यक्त्वाभावादात्मत्वसाधकहेतोरसिद्धिश्च फलिता । अहमर्थस्य पराक्त्वाभावादनात्मत्वसाधकहेतोरसिद्धिश्च सिद्धा । **अहंबुद्ध्येत्यनेन** "युष्मदस्मत्प्रत्ययगोचरयोः" इति स्वोक्तिविरोधः "कोऽहमित्येव निपुणः, शब्दोऽहमिति दोषाय, नात्मन्येषः" इत्याद्यागमविरोधश्च गर्भितः, हिशब्दस्य प्रसिद्धिपरत्वात् । हेतौ वा—अनुभूतिः पराची, अहमर्थव्यतिरिक्तत्वात् घटवदिति । प्रत्यक्त्वहेतोरसिद्धिदार्ढ्यं तत्प्रत्यक्त्वसाधकस्य स्वयंप्रकाशत्वहेतोः सत्प्रतिपक्षत्वं च 'अनुभूतिरनात्मा, अहमर्थव्यतिरिक्तत्वात् घटवत्' इति संविदात्मत्वसाधकस्य प्रत्यक्त्वहेतोश्च सत्प्रतिपक्षत्वं चाभिप्रेतमित्यवगम्यते । अहंबुद्ध्या परागर्थात्प्रत्यगर्थस्य भेदसमर्थनात् हिशब्दाच्चात्र संवित्प्रत्यक्त्वहेतोरसिद्धिश्च साधिता । श्रुत्यर्थापत्तिं वक्तुं मुमुक्षोरभिसन्धिमाह—**निरस्तेति** । ततः किमित्यत्राह—**अहमर्थविनाश इति** । यत्संबन्धित्वेन दुःखज्ञानं यत्संबन्धिनी दुःखनिवृत्तिः यत्संबन्धिनी सुखप्राप्तिश्चेष्यते तद्विनाशो मोक्षश्चेदधिकारिविरहादप्रामाण्यं भवेत् । प्रमितिजनकत्वं हि शास्त्रस्य प्रामाण्यम् । बुभुत्सितग्राह्यस्य शास्त्रस्य पुरुषार्थपर्यवसायित्वाभावे श्रवणमननाद्यधिकारी न सिध्येत् । न हि शास्त्रं श्रवणादिनिरपेक्षं कस्यचित्प्रमितिं जनयति । अतोऽधिकारिविरहात्प्रामाण्यं न भवेदिति शास्त्रप्रामाण्यान्यथानुपपत्तिरूपश्रुत्यर्थापत्तिरुक्ता । अहमर्थे नष्टेऽपि ज्ञप्तिर्नित्या तिष्ठतीत्यत्राह—**मयि नष्टेऽपीति** । न हि मयि नष्टेऽपि स्तम्भस्तिष्ठतीति स्वशिरश्छेदः पुरुषार्थः स्यादिति भावः । न हि केवलसंविदः श्रवणादौ प्रवृत्तिः । अपि त्वहमर्थस्यैव । अतः प्रवर्तमानोऽयं स्वनाशाय न प्रवर्तते ।

अहमर्थविगमे ज्ञप्त्यवस्थानमभ्युपगम्य दूषणमुक्तम्; अथ तदवस्थानमेव नास्तीत्याह— **स्वसंबन्धितयेति**। सामान्याकारः सत्ता; विज्ञप्तिता विषयप्रकाशत्वरूपविशेषाकारः। आदिशब्देन स्वयंप्रकाशत्वं विवक्षितम्। सत्ताया आश्रयसंबन्धाधीनत्वात् स्वरूपलाभे सति ज्ञप्तित्वादिसंभवाच्च सर्वं तदधीनमित्यर्थः। अतो यत्संबन्धायत्ता सत्ता तत्संबन्धवियोगे ज्ञप्तिसत्तैव नेत्याह—**स्वसंबन्धेति**। घटकरकाकाशदृष्टान्तव्यावृत्त्यर्थं विषयाश्रयसंबन्धस्य सत्ताहेतुत्वे दृष्टान्तमाह—**छेत्तुरिति**। **छेदनादे**रित्यादिना सत्ता तत्फलं द्वैधीभाव इत्यादि विवक्षितम्। एवं प्रत्यक्षविरोधात् असिद्धत्वात् विपरीतसाधकत्वात् सत्प्रतिपक्षत्वाच्च संविदात्मत्वानुपपत्तेः श्रुत्यर्थापत्त्या चाहमर्थात्मत्वमाह—**अत इति**। पूर्वोत्तरहेतूनामियं प्रतिज्ञा। श्रुतिस्मृतिसूत्राणि दर्शयति—**विज्ञातारमिति**। ज्ञातव्यस्यात्मनो ज्ञातृत्वमुक्तम्—"विज्ञातारमरे केन विजानीयात्" इति। ज्ञातृत्वस्य स्वाभाविकतया मुक्तावपि विज्ञातृत्वमस्तीति दर्शयति—**जानात्येवेति**। "ज्ञोऽत एव" इत्यत्र ज्ञशब्दनिर्दिष्ट आत्मेति ज्ञापनार्थं "नात्मा श्रुतेः" इति सूत्रमुपात्तम्। त्वयाऽनित्यतयाभ्युपेतस्याहमर्थस्य नित्यत्वकथनमपि तस्यैवात्मत्वसाधकमिति च ज्ञापनार्थम्। अतो नात्मेति संविदात्मत्वप्रतिक्षेपनिगमनात् पूर्वोक्ताहमर्थात्मत्वप्रतिज्ञायां संविदात्मत्वप्रतिक्षेपे च यथायथमुक्तहेतवोऽनुसंधेयाः।

## भावप्रकाशिका

**प्रत्यक्त्वं विपरीतसाधकं चेत्याहेति**; अहमर्थात्मत्वसाधकमित्यर्थः। **स्वयंप्रकाशत्वहेतोः सत्प्रतिपक्षत्वं चेति**; तुल्यबलत्वाभावात् बाधितार्थमित्यत्र तात्पर्यम्; इतरथा प्रत्यक्त्वहेतोरसिद्धिदार्ढ्यमिति पूर्वग्रन्थविरोधात्। यद्वा विशेषदर्शनाभिप्रायेण सत्प्रतिपक्षतोक्तिरिति द्रष्टव्यम्। **संवित्प्रत्यक्त्वहेतोरसिद्धिश्च साधितेति**; पूर्वमहमर्थव्यतिरिक्तहेतुना असिद्धिरुक्ता; अधुना अहंप्रत्ययाविषयत्वहेतुनेति भेदः। यद्वा संवित्प्रत्यक्त्वसाधकस्वप्रकाशत्वहेतोर्व्याप्यत्वासिद्धिश्च सिद्धेत्यर्थः। अतो न पौनरुक्त्यप्रसङ्ग इति द्रष्टव्यम्। **यत्संबन्धित्वेन दुःखज्ञानमिति**; उद्वेगहेतुर्भवतीति शेषः। **न हि शास्त्रं श्रवणादिनिरपेक्षमिति**; यद्यपि कृतसाङ्गाध्ययनस्य शब्दार्थप्रत्ययो भवत्येव, तथाप्यनुष्ठानपर्यवसायिप्रमितिजनकत्वं शास्त्रस्य श्रवणादिसापेक्षम्; श्रवणं च बुभुत्साधीनम्। सा च पुरुषार्थपर्यवसायित्वाधीनेति भावः। **ज्ञातव्यस्येति**; मुमुक्षुज्ञातव्यस्येत्यर्थः। **अहमर्थ-**

स्य **नित्यत्वकथनमपीति** ; यद्यपि "नात्मा श्रुतेः" इत्यत्राहमर्थस्य नित्यत्वं न साधितम्, अपि त्वात्मनः, तथापि तस्यात्मत्वं सिद्धमित्यभिमानेन तथोक्तमिति द्रष्टव्यम्।

### श्रुतप्रदीपिका

प्रत्यक्त्वं विपरीतसाधकं चेत्याह—**किंचेति**। स्वस्मै भासनात् प्रत्यक्; परस्मै तु पराक्; अहं स्वस्मै भाति; धीश्च सुखवत् परस्मा इति विपरीतसिद्धिरित्यर्थः। "कोऽहमिति, शब्दोऽहम्" इत्याद्यागमविरोधश्चेहाभिप्रेतः। हिर्हेतौ। ज्ञानं परागनात्मा च, अनहंत्वादिति चार्थसिद्धम्। अहंधिया पराचो भेदोक्तिः। श्रुत्यर्थापत्तिमाह—**निरस्तेति**। यत्संबन्धिदुःखध्वंससुखप्राप्ती इष्टे, तन्नाशे मुक्तावधिकारिविरहादप्रामाण्यमित्यर्थः। धीस्थितिमुपगम्याह—**मयीति**। स्तम्भे स्थिते स्ववधोऽपुमर्थ इति भावः। न च तत्स्थितिरित्याह—**स्वेति**। घटाकाशवदित्यत्राह—**छेत्तुरिति**। अस्य भावः पूर्वोक्तः। सत्ता सामान्याकारः; ज्ञपिता विषयप्रकाशनरूपविशेषाकारः। ज्ञात्रात्मत्वं निगमयति—**अत इति**। अथ श्रुतिस्मृतिसूत्रस्वारस्यं दर्शयन् संविदनात्मत्वं निगमयति—**विज्ञातारमित्यादिना स्थितमित्यन्तेन**। मुक्तौ ज्ञातृत्वसिद्ध्यै **जानात्येवेति**। सौत्रं ज्ञातृत्वमात्मन एवेति ज्ञापयितुमुपात्तम्—**नात्मेति**।

### तत्त्वटीका

आत्मनोऽहमर्थादन्यत्वेऽहमर्थादन्यस्यात्मत्वे च साध्येऽनिष्टान्तराणि विवक्षुराह—**किंचेति**। **अहमर्थः**; अहंशब्दवाच्यः, अहंत्वविशिष्टो वा। प्रतीपमञ्चन् प्रत्यङ्, तस्य भावः प्रत्यक्त्वम्; स्वतोऽन्यतो वा स्वस्मै भासमानत्वमित्यर्थः। योऽसौ 'अहम्' इति व्यवह्रियते तस्य सामान्यतः स्वपरात्मसाधारणतया परस्मै भासमानेऽप्यहंशब्दानुवृत्तिः; योऽसौ 'अहम्' इति व्यवह्रियते स एव हि स्वस्मै भाति। तदन्यस्तु बोधोऽपि स्वयंप्रभोऽपि परस्मा एव भायादिति पराङेव; अतोऽहमर्थे परात्त्वं तदन्यस्मिन् प्रत्यक्त्वं चासिद्धम्। यत्र तु ते स्तः तत्रैव ताभ्यां तत्साध्यं सिध्येदिति त्वदिष्टविरुद्धमापन्नमिति भावः। रक्तारक्तादिवदप्रत्यक्त्वपरात्त्वयोर्विरोधं धीभेदेन व्यनक्ति—**अहंबुद्ध्येति**। **परागर्थात्**; परस्मा एव भासमानादित्यर्थः। आत्मभेदमते तु प्रत्यगर्थान्तरादपि प्रातिस्विकाहंबुद्ध्या भेदसिद्धिः। बद्धमुक्तावस्थयोरात्मनोरहंशब्देनाम्नानादागमबाधश्चात्र सिद्ध इति भावः। मुमुक्षुप्रवृत्त्यन्यथानुपपत्त्या स्वेष्टबाधं चाह—**निरस्तेति**। विशेषणत्रयेण तत्तच्छास्त्रार्थस्मारणम्। दुःख-

निवृत्तिः आनन्दावाप्तिः अकर्मवश्यावस्था च स्वार्थाः स्वीक्रियन्ते। मुक्तौ तु स्वनाशं विदुषः तदुद्देशप्रवृत्त्ययोगान्मोक्षशास्त्रस्याधिकारिविरहेणाप्रामाण्यं स्यादित्यभिप्रायेणाह— **अहमर्थेति**। अन्यथापि प्रवृत्त्युपपत्तिमाशङ्क्याह—**मयीति**। खादेरिव स्वान्यस्य स्थितिर्हि स्वनाशार्थप्रवृत्तिहेतुर्न स्यात्। स्ववधः कथम्? इत्थम्—स हि धर्मबुद्ध्या चेत्, अनश्वराहमर्थभोगार्थः। अविवेकिनां तु संसारमोचकानामहमर्थस्यैवासह्यदुःखनिवृत्तिमात्रार्थः। न चेह तथा, अहम आत्मत्वानभ्युपगमात्; आत्मानमधिकृत्यैव मोक्षोपदेशादिप्रवृत्तेः। यत्तु प्रागुक्तं कर्तुर्देहाद्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमिति; तदयुक्तम्, देहस्य क्रियावत्त्वेऽपि स्वधीपूर्वं प्रवृत्तिलक्षणमिति कर्तृत्वायोगात्। तदपेक्षया "शास्त्रफलं प्रयोक्तरि" इति स्थापनात्। इह त्वहंकारस्य कर्तृत्वे संसारोऽपि तस्यैव स्यात्; भोक्तृत्वं चात्मनस्त्वमेव प्रतिक्षिपसीत्यात्मनो बन्धमोक्षौ न स्याताम्। तथा च वृथा मुक्तिशास्त्रारम्भः। मुक्तावहमर्थनाशे धीस्थितिमन्वारुह्योक्तम्; सैव न स्यादित्याह—**स्वसंबन्धीति**। ननु धर्मो धीश्चेतनैकान्तत्वमेकायुष्कत्वं वा; अतः परमते जातिवत् घटादिसंयोगरूपधर्मनाशे खादिवच्च स्वाश्रयाहमर्थनाशे तिष्ठेदित्यत्राह—**छेत्तुरिति**। आस्तामन्यत्; सकर्मकस्य धात्वर्थस्य कर्मकर्तृविरहे कथं सत्तेति भावः। छेत्तुरित्यादि प्रदर्शनार्थम्। आदिशब्देन हि सकर्मकक्रियान्तरे व्याप्तिः प्रदर्श्यते। न ह्यत्र धर्म्यभावे धर्मसत्तायां किंचित्प्रमाणम्; ज्ञातुरभावे च कस्मै स्वात्मानमन्यद्वा प्रकाशयेत्? तदिहोक्तैः प्रमाणतर्कैः सिद्धं निगमनेन द्रढयति—**अतोऽहमिति**। एतदेव मिथोऽनुगुणश्रुतिस्मृतिसूत्रस्वारस्येन संवादयति—**विज्ञातारमि**त्यादिना श्लोकद्वयेन। **जानात्येवे**त्यवधारणेन मुक्तावपि ज्ञातृत्वं सूच्यते; अयोगव्यवच्छेदो ह्यत्र स्वरसः। अन्यप्रकरणत्वशङ्कानिरासार्थमात्मस्वरूपानुबन्धित्वेन मुक्तावप्यनुवृत्तिसंभवार्थं च **नात्मे**त्यादिकमुपात्तम्। **अपिः** सूत्रोक्तातिक्रमेऽपसिद्धान्तं सूचयति। अहमर्थस्यात्मत्वं निगमितम्। ज्ञप्तेरनात्मत्वं तु निगम्यते—**अत इति**; प्रत्यक्षागमयुक्तिबलादित्यर्थः। ज्ञप्तिर्नात्मा; परस्मा एव भातत्वात् अनहंत्वात् घटादिवदित्यादिप्रयोगाः प्रसङ्गाश्च द्रष्टव्याः।

## मूलभावप्रकाशिका

**अहंबुद्ध्येति**; अहंत्वस्यैवानात्मत्वव्यावर्तकत्वात् अहमुपरागादेव भेदप्रतीतिरिति त्वयोक्तत्वादिति भावः। स्वसंबन्धि स्वयंप्रकाशलक्षणं ज्ञानत्वमिष्टमेव; घटादिविषयप्रकाश-

ज्ञानस्यान्यधर्मतयानुभूयमानस्यात्मत्वं हि प्रतिक्षेप्यमिति भावः । **विज्ञातारमरे केन विजानीयादिति** परमात्मनो ज्ञानत्वमुच्यते । **ज्ञानात्येवायं पुरुष इति** जीवस्य ज्ञातृत्वमुच्यत इति द्रष्टव्यम् । **नात्मा श्रुतेरित्यारभ्येति** ; "नात्मा श्रुतेः" इत्यात्मानं प्रस्तुत्येत्यर्थः । "ज्ञोऽत एव" इत्यात्मा ज्ञाता भवति । **अत एव** ; "एष हि द्रष्टा श्रोता" इत्यादिश्रुतेरेवेत्यर्थः ।

## श्रीभाष्यम्

अहंप्रत्ययसिद्धो ह्यस्मदर्थः । युष्मत्प्रत्ययविषयो युष्मदर्थः । तत्र 'अहं जानामि' इति सिद्धो ज्ञाता युष्मदर्थ इति वचनं 'जननी मे वन्ध्या' इतिवत् व्याहतार्थं च । न चासौ ज्ञाताऽहमर्थोऽन्याधीनप्रकाशः, स्वयंप्रकाशत्वात् । चैतन्यस्वभावता हि स्वयंप्रकाशता । यः प्रकाशस्वभावः सोऽनन्याधीनस्वप्रकाशः, दीपवत् । न हि दीपादेः स्वप्रभान्तरनिर्भासितत्वेनाप्रकाशत्वमन्याधीनप्रकाशत्वं च । किं तर्हि? दीपः प्रकाशस्वभावः स्वयमेव प्रकाशते, अन्यानपि प्रकाशयति प्रभया ।

## श्रुतप्रकाशिका

दूषणान्तरं व्याहतिरप्यस्तीत्याह—**अहंप्रत्ययेत्यादिना** । **अहंप्रत्ययसिद्ध इति** ; सिद्धशब्देन स्वतःसिद्धिः सूचिता । अत एव ह्यन्यत्र "युष्मत्प्रत्ययविषयः" इत्युक्तम् । **अहंप्रत्ययसिद्धो हीति** ; हिशब्देन अस्मदर्थयुष्मदर्थशब्दतश्च "युष्मदस्मत्प्रत्ययगोचरयोः" इति तद्ग्रन्थप्रसिद्धिं दर्शयति । ज्ञानमेव स्वयंप्रकाशम् ; तद्व्यतिरिक्तत्वादहमर्थोऽन्याधीनप्रकाशः ; अतो नात्मेति शङ्कायां हेतोरसिद्धिमभिप्रयन्नहमर्थस्य प्रकाशान्तरनैरपेक्ष्यं प्रतिजानीते—**न चासाविति** । कुत इत्यत्राह—**स्वयंप्रकाशत्वादिति** । प्रकाशः व्यवहारानुगुण्यम् ; स्वत एव व्यवहारानुगुण्यशक्तियुक्तत्वादहमर्थः प्रकाशान्तरनिरपेक्ष इत्यर्थः । तच्च कथमित्यत्राह—**चैतन्यस्वभावता हि स्वयंप्रकाशतेति** । चेतना ज्ञानम् ; तद्भावश्चैतन्यं, ज्ञानत्वम् ; तत्स्वभावत्वं ज्ञानत्वगुणकतेत्यर्थः । ज्ञानत्वमेव हि ज्ञानस्य स्वयंप्रकाशत्वम् । तद्वदत्रापि ज्ञानत्वं प्रामाणिकं चेत्तदेव स्वयंप्रका-

शत्वं भवतीत्युक्तं भवति। अहमर्थस्य चैतन्यस्वभावत्वे श्रुतिं प्रमाणं वक्ष्यंस्तदनुग्राहकतर्कमुपन्यस्यति—**यः प्रकाशस्वभाव इत्यादिना** । आत्मदीपधर्मभूतज्ञानप्रभयोः साक्षाद्वा प्रणाड्या वा यादृशं स्वव्यवहारानुगुण्यं तादृशं व्यवहारानुगुण्यमिह प्रकाशशब्देन विवक्षितम्। दीपस्य तमोविरोधिरूपमौज्ज्वल्यं प्रकाशः। ज्ञानस्य तु स्फुरणम्। **यस्तत्स्वभावः**; तद्धर्मकः स्वव्यवहारानुगुण्यापादनशक्तियुक्तः, **सोऽनन्याधीनस्वप्रकाशः** स्वधर्मनिरपेक्षप्रकाश इत्यर्थः। प्रकाशस्वभावत्वासिद्धिर्न शङ्कनीया, यथा—प्रभाश्रयस्य दीपस्यौज्ज्वल्यं प्रत्यक्षसिद्धं, तथा ज्ञातुरपि स्वत एव स्वव्यवहारानुगुण्यस्य वक्ष्यमाणश्रुतिस्वारस्यावगतत्वात्। प्रकाशस्वभावस्य स्वधर्मभूतप्रकाशानपेक्षप्रकाशत्वमुपपन्नमित्येतावदेव ह्युच्यतेऽनेन ग्रन्थेन। अथ चक्षुर्ग्राह्यत्वे सति प्रभाव्यतिरिक्तत्वाद् दीपो घटादिवत् प्रभाबलनिर्भास्य इति दृष्टान्तस्य साध्यवैकल्यमाशङ्क्याह—**न हीति**। न च चक्षुर्ग्राह्यत्वे सति प्रभान्यत्वात् घटादिरिव दीपः प्रभावभास्यः, अन्धकारे व्यभिचारात्। अतो न दीपस्य प्रभापेक्षेत्यभिप्रायः। **अप्रकाशत्वमन्याधीनप्रकाशत्वं चेति**; स्वयमौज्ज्वल्यधर्मकत्वाभावस्तत्कृतप्रकाशान्तरसापेक्षत्वं च नास्तीत्यर्थः। अर्थस्थितिं वक्तुमाकाङ्क्षां दर्शयति—**किं तर्हीति**। उत्तरमाह—**दीप इति**। दीपो न केवलं स्वात्मानमेव प्रकाशयति, अपि तु स्वपरिकरेणान्यानपि प्रकाशयतीत्यतिशयमाह—**अन्यानपीति**। एवं वार्थः—दीपः प्रभानिरपेक्षप्रकाशश्चेत् प्रभावद्विषयानपि प्रकाशयेदित्यत्राह—**अन्यानपीति**; विषयप्रकाशनक्षमोऽपि स्वरूपस्य काचित्कतया विषयसंबन्धाभावात्स्वरूपेण न प्रकाशयति, किंतु विषयसंबन्धिन्या स्वपरिकरभूतया प्रभयेत्यर्थः। "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः" इत्यादिनिर्देशोऽभिप्रेतः। यद्वा अनुमानविवक्षयाह—**चैतन्यस्वभावता हीति**। **चैतन्यस्वभावता**; ज्ञानधर्मकत्वम्। एतदेव हि स्वयंप्रकाशत्वम्। ज्ञानधर्मत्वात्स्वयंप्रकाशत्वमित्युक्तं भवति। यथा धूमवत्त्वं ह्यग्निमत्त्वमित्युक्ते धूमवत्त्वादग्निमत्त्वमित्युक्तं स्यात्, तद्वत्। अयं चान्वयी हेतुः। व्याप्तिं दर्शयति—**य इति**। **प्रकाशस्वभावः**; प्रकाशधर्मकः। योऽयं धर्म्यन्तरापरोक्षावभासे साक्षाद्वा परंपरया वा भासमानतयैव हेतुः, स इह प्रकाशशब्दविवक्षितः। रूपितत्समवेतार्थचाक्षुषत्वनिमित्तस्य रूपस्य स्वाश्रयेतरद्रव्यानुमापकधूमादेश्च प्रकाशत्वव्युदासाय धर्म्यन्तरापरोक्षशब्दौ। इन्द्रियव्यवच्छेदार्थो भासमानशब्दः। पक्षसपक्षयोरनुगतत्वाय साक्षाद्वा परंपरया वेत्युक्तम्। ज्ञाता

स्वधर्मभूतप्रकाशनिरपेक्षसिद्धिः, प्रकाशधर्मकत्वात् दीपवदित्यनुमानशरीरम्। भासमानतया साक्षाद्वा परंपरया वा धर्म्यन्तरापरोक्षावभासहेतुधर्मकत्वादिति हेतुवाचिशब्दार्थः। दीपस्य स्वधर्मभूतप्रभानपेक्षप्रकाशत्ववत् ज्ञातुरपि स्वधर्मभूतज्ञाननिरपेक्षप्रकाशत्वं सिद्धमिति पक्षधर्मताबलात्स्वयंप्रकाशत्वसिद्धिः। दृष्टान्ते साध्यान्वयं दर्शयति—**न हीति**। साधनान्वयं दर्शयति—**अन्यानपीति**। अनुमानपरत्वादपि ग्रन्थस्य श्रुत्यनुग्राहकतर्कपरत्वं युक्तम्, उत्तरत्र **तथा हि श्रुतय** इति वक्ष्यमाणत्वात्। पूर्वमनुमानं विवक्षितं चेत् तथा चेति हि वक्तव्यम्। उपक्रमे **चैतन्यस्वभावता हि स्वयंप्रकाशतेति** समानाधिकरणनिर्देशस्वारस्याच्च; पञ्चम्यर्थत्वे हि स्वारस्यं भज्यते। निगमने च **चिद्रूपता हि स्वयंप्रकाशते**त्युक्तम्। तत्र चिद्रूपशब्दो ज्ञानस्वरूपत्वपरः, न तु ज्ञानधर्मकत्वपरः, अनन्तरपूर्वग्रन्थे चिद्रूप एव चैतन्यगुण इति ज्ञानधर्मकत्वस्य पृथगुक्तत्वात्। एवं निगमनग्रन्थे स्वयंप्रकाशतापदसमानाधिकरणस्य चिद्रूपताशब्दस्य ज्ञानस्वरूपतापरत्वदर्शनात् पूर्वमपि स्वयंप्रकाशतापदसमानाधिकरणस्य चैतन्यस्वभावता चेति पदस्य ज्ञानस्वरूपतापरत्वस्य समुचितत्वाच्च **चैतन्यस्वभावते**त्यादि भाष्यं श्रुत्यनुग्राहकतर्कपरम्। एवमनुग्राहकतर्कस्य श्रौतत्वे सत्यनुमानस्यार्थसिद्धम्; ज्ञानधर्मकत्वज्ञानस्वरूपतोक्तेः, एकजातीयद्रव्ययोर्नियतधर्मधर्मिभावे प्रभाप्रभावद्दृष्टान्तोक्तेश्च।

## भावप्रकाशिका

**तद्व्यतिरिक्तत्वादहमर्थ इति**; भाष्ये **न चासौ ज्ञाताहमर्थः** इत्यत्र ज्ञातेति हेतुगर्भं विशेषणम्। वक्ष्यति च—**न हि दीपादेः स्वप्रभाबलनिर्भासितत्वेनाप्रकाशत्वमिति**। तथा च स्वधर्मभूतज्ञानप्रभाबलनिर्भास्यतया कथं ज्ञातुरनन्यप्रकाशत्वमित्याक्षिप्याप्रकाशत्वसाधकहेतोरन्याधीनप्रकाशत्वस्यासिद्धिमभिप्रयन्नाहेत्यर्थः। **तच्च कथमित्यत्राहेति**; प्रकाशाश्रयस्य तस्यानुभूत्यादिशब्दितसकर्मकसकर्तृकज्ञानरूपप्रकाशत्वं कथमित्याक्षेपाभिप्रायः। **चैतन्यं ज्ञानत्वमिति**; व्यवहारागुणत्वमित्यर्थः। आत्मनि ज्ञानशब्दस्य स्वप्रकाशत्वाभिप्रायत्वात् आत्मनि प्रयुज्यमानो ज्ञानशब्दः स्वप्रकाशे रूढ इत्युक्तत्वाच्च व्यवहारानुगुणत्वलक्षणस्वप्रकाशत्वमेव ज्ञानशब्देनेह विवक्षितम्। तच्चानुभूतिसंविदादिशब्दाभिलपनीयस्याप्यकर्मकस्याकर्तृकस्य युज्यत इति भावः। **अहमर्थस्य चैतन्यस्वभावत्व इति**; "अत्रायं पुरुषः स्वयं ज्योतिः" इत्यादिवाक्यैरनन्याधीनप्रकाशत्वलक्षणचैतन्यस्वभावत्वे प्रमाणं दर्श-

यिष्यन् प्रकाशगुणकस्य कथमनन्याधीनप्रकाशत्वं सजातीयान्वयदर्शनरूपयोग्यताया अभावादित्याशङ्क्य प्रकाशस्वभावस्य प्रकाशगुणकत्वं दीपादौ दृष्टमिति योग्यतां प्रदर्शयतीत्यर्थः, न तु स्वप्रकाशत्वलक्षणचैतन्यस्वभावत्वमिति मन्तव्यम् । एतेन—'अहमर्थस्य चैतन्यस्वभावत्वे श्रुतिप्रमाणं वक्ष्यन्' इति ग्रन्थपर्यालोचनायां चैतन्यस्वभावत्वमेवानन्याधीनप्रकाशत्वमिति प्रतीयते ; 'यः प्रकाशस्वभावः सोऽनन्याधीनप्रकाशः' इति तर्कस्यानन्याधीनप्रकाशत्वप्रतिपादकश्रुत्यनुग्राहकत्वस्यैव युक्ततया चैतन्यस्वभावत्वानन्याधीनप्रकाशत्वयोरैक्यावश्यंभावात् ; ततश्चाहमर्थोऽनन्याधीनप्रकाशः स्वप्रकाशत्वादिति साध्यसाधनयोरविशेषः, द्वयोरपि चैतन्यस्वभावत्वरूपत्वात्—इति शङ्का परास्ता, चैतन्यस्वभावत्वस्यैकरूपत्वाभावात् । केचित्तु—अहमर्थोऽनन्याधीनप्रकाशः स्वयंप्रकाशत्वादिति पूर्वोक्तानुमाने व्याप्तिं दर्शयतीत्यपि व्याचक्षते । न च—तत्र स्वयंप्रकाशत्वं हेतुः, इह तु प्रकाशस्वभाव इत्युच्यत इति वैरूप्यं शङ्क्यम्, द्वयोरप्येकत्वात् । **स्वयंप्रकाशत्वादि**त्यस्यापि प्रकाशस्वभावत्वादित्येवार्थ इति तस्मिन्नपि व्याख्याने न दोषः । **आत्मदीपेति** ; अत्र समाहारगर्भो द्वन्द्वः ; अतश्चतुर्ष्वपि न द्विवचननिर्देशानुपपत्तिरिति द्रष्टव्यम् । **यादृशमिति**; साक्षात्परंपरौदासीन्येन व्यवहारानुगुणत्वमित्यर्थः । यद्वा आत्मभूतयोर्धर्मभूतज्ञानप्रभयोरित्यर्थः । **तादृशमिति**; दीपतत्प्रभयोरौज्ज्वल्यमात्मधर्मभूतज्ञानयोः स्फुरणमित्यर्थः । **साध्यवैकल्यमाशङ्क्येति** ; इदमुपलक्षणम्—साधनवैकल्यमित्यपि द्रष्टव्यम् । **रूपितत्समवेतार्थेति** ; न च रूपितत्समवेतार्थयोः रूपापेक्षया धर्म्यन्तरत्वात्तेन कथं तद्वारणमिति वाच्यम्, धर्म्यन्तरशब्दस्य स्वाश्रयेतरद्रव्यार्थकत्वस्योत्तरग्रन्थे स्पष्टत्वात् । **चैतन्यस्वभावतेत्यादि भाष्यमिति** ; यद्यपि 'यः प्रकाशस्वभाव.' इत्यारभ्य तर्करूपत्वं प्रागुपन्यस्तम्, तथापि **चैतन्यस्वभावते**त्यारभ्य तर्करूपत्वेऽपि विरोधाभावादेवमुक्तमिति द्रष्टव्यम् । **ज्ञानधर्मकत्वज्ञानस्वरूपतोक्तेरिति** ; हेतुसाध्ययोः प्रदर्शनादिति भावः ।

## श्रुतप्रदीपिका

अथ स्ववाग्विरोधमाह—**अहंप्रत्ययेति** । अस्मदर्थो न युष्मदर्थ इति व्याहतिः । अथ चिदन्यत्वास्वसिद्धत्वादिव्याप्तिः कथमिति शङ्कायां हेत्वसिद्धिं चाभिप्रयन्नाह—**न चासाविति** । **स्वयंप्रकाशत्वात्** ; स्वव्यवहारानुगुणशक्तियुक्तत्वात् । तच्च कथमित्यत्राह—**चैतन्येति** । चेतना ज्ञानं, तस्य भावश्चैतन्यम् ; ज्ञानत्वगुणकता ज्ञानस्वरूपतेत्यर्थः ।

अस्मिन्नर्थे उदाहरिष्यमाणश्रुतेरनुग्राहकतर्कमाह—**य इति**। आत्मदीपयोर्धर्मभूतज्ञानप्रभयोर्घटादिविषयं प्रति साक्षाद्वा प्रणाड्या वा यादृग्व्यवहारानुगुण्यं भवति तादृग्व्यवहारानुगुण्यमिह प्रकाशशब्दार्थः। आत्मनः स्फुरणम्; दीपस्य तु तमोविरोधिरूपमौज्ज्वल्यं प्रकाशः; तद्धर्मक इत्यर्थः। अनन्याधीनप्रकाशः; स्वधर्मनिरपेक्षप्रकाशः। न हेत्वसिद्धिः, सपक्षे प्रत्यक्षेणेव वक्ष्यमाणश्रुत्या ज्ञातुः प्रकाशत्वसिद्धेः। यद्वा अनुमितिविवक्षयाह—**चैतन्येति**। धूमवत्त्वमेव ह्यग्निमत्त्वमितिवदुक्तिरियम्। धीधर्मकत्वात्स्वप्रकाशत्वमित्यर्थः। व्याप्तिमाह—**य इति**। यः साक्षाद्वा प्रणाड्या वा स्वव्यवहारेऽत्यन्तसजातीयानपेक्षवस्तुधर्मकः स स्वधर्मानपेक्षप्रकाश इत्यर्थः। ज्ञाता स्वधर्मभूतप्रकाशनिरपेक्षप्रकाशः। यो यादृक्प्रकाशधर्मकत्वात् प्रकाशधर्मकः, स स्वयमपि तादृक्प्रकाशः; यथा दीप इति प्रयोगः। अनुमितिपरत्वादपि श्रुत्यनुग्राहकपरत्वं युक्तम्, **चैतन्यस्वभावते**ति प्रथमायाः स्वारस्यात्। उपरि तथा हीत्युक्तेश्च। न हि तथा चेत्युक्तम्। चक्षुर्ग्राह्यत्वे सति प्रभान्यत्वात् घटवद्दीपो भानिर्भास्य इति साध्यविकलो दृष्टान्त इत्यत्राह—**न हीति**। **अप्रकाशत्वम्**; प्रकाशरूपत्वाभावः। अतोऽन्याधीनप्रकाशत्वम्। आकाङ्क्षापूर्वकमर्थसिद्धिमाह—**किं तर्हीति**। तेजःस्वभावात् भानैरपेक्ष्यं दीपस्य। व्यभिचारादर्शनेऽपि न तद्व्याप्तिभङ्गो न्याय्यः, अतिप्रसङ्गात्। भान्यत्वसाध्यव्याप्तं तमसो भानैरपेक्ष्यात् भान्यत्वं तमस्यनैकान्तिकमिति भावः। दीपः प्रभानपेक्षश्चेत् प्रभावद्विषयमपि भासयेदित्यत्राह—**अन्यानिति**; परिच्छिन्नस्वरूपत्वादिति भावः।

## तत्त्वटीका

यद्यपि स्वमते अस्मदर्थस्यैव युष्मदर्थत्वमात्मव्यक्तिभेदात्स्यात्; परमते चाहंकारभेदादहमर्थ एव त्वमर्थोऽपि; तथापि घटादिवत्प्रत्यक्त्वसामान्याभावलक्षणं युष्मदर्थत्वमिह व्याहतमित्यभिप्रायेण स्ववचनविरोधमाह—**अहंप्रत्यये**त्यादिना वाक्यत्रयेण। अस्याप्रयोजकत्वं प्रत्येतुः प्रत्येतव्याद्व्यतिरेकेण प्रत्यक्त्वं च नैयायिकादयः प्राहुः। बाधितत्वं चात्र दर्शितम्।

किंच युष्मत्त्वमस्मत्त्वमप्यनात्मादिगोचरम्।
परो बभाषे भग्नं तन्मानतः स्वमतादपि ॥ ४८२ ॥

प्रतियोगिविशेषाद्धि युष्मदस्मत्पदार्थता ।
चेतनस्यैव विख्याता न जन्यज्ञप्तिमात्रयोः ॥ ४८३ ॥

उन्मादादिव यद्युक्ता युष्मदुक्तिरचेतने ।
क्वचित्तत्तदधिष्ठातृपुंविशेषविवक्षया ॥ ४८४ ॥

ब्रह्मोपलक्षणत्वं च युष्मदर्थेऽपि मेनिरे ।
नातो विषयनिर्देशेऽप्यस्मदर्थविशेषवान् ॥ ४८५ ॥

अथाहमर्थपराक्त्वसाधकतयोक्तस्यान्यत एव भातत्वस्यासिद्धिरप्यस्तीति साधयति— **न चेति** । न हि वेद्यत्वमात्रादनात्मत्वं सुवचम्, वित्तावपि प्रसङ्गात् । धर्मभूतज्ञाने दृष्टव्याप्तिकं हेतुमाह—**स्वयमिति** ; स्वधर्मवत्स्वयमपि प्रकाशरूपत्वादित्यर्थः । यद्वा स्वयंज्योतिष्ट्वेन श्रुतत्वादिति यावत् । ज्ञानत्वे सिद्धेऽनन्याधीनस्वप्रकाशत्वं नियतमित्याह— **चैतन्येति** । अत्र धूमवत्त्वमेव ह्यग्निमत्त्वमितिवत् संबन्धदार्ढ्यादुपचारः । यद्वा अनन्याधीनस्वप्रकाशत्वे स्वयंप्रकाशत्वहेतुः साध्याविशिष्ट इति शङ्कायां स्वयंप्रकाशत्वशब्देन ज्ञानत्वं विवक्षितमित्युच्यते । ज्ञानत्वस्वप्रकाशत्वयोर्व्याप्तिं व्यनक्ति—**य इति** । धर्मभूतज्ञानवदिति दृष्टान्तोऽभिप्रेतः । अत्र दीपाद्युदाहरणं लोकबुद्ध्यनुसारेण संभावनामात्रस्थापनार्थम् । यद्वा **स्वयंप्रकाशत्वात्** ; स्वतःसिद्धप्रकाशधर्मत्वात् । अत्र विशेष्यमेव हेतुः । हेत्वंशं पक्षस्थविशेषणं विवृणोति—**चैतन्येति** । नन्वेवं ज्ञातृत्वादित्येव हेतुरुक्तः स्यात् ; तथा सत्यसाधारणानैकान्त्यम् ; मैवम्, व्यतिरेकिणोऽनभिसंहितत्वात् । अन्वयी त्वेवं भाव्यः— आत्मा स्वधर्मभूतज्ञाननिरपेक्षप्रकाशः, स्वप्रकाशे स्वात्यन्तसजातीयनिरपेक्षवस्तुधर्मत्वादिति । अत्र व्याप्तिदृष्टान्तावाह—**य इति** । दीपोऽपि घटवत्प्रभातमोऽन्यत्वे सति प्रभानुग्राह्यचक्षुर्ग्राह्यत्वात् प्रभाधीनप्रकाशः स्यादित्यत्राह—**न हीति** । घटवद्दीपस्य यद्यभास्वररूपत्वं स्यात्, ततो भास्वरद्रव्यसंबन्धाधीनप्रकाशः स्यात् ; न तदस्ति ; अतो नोक्तशङ्केति भावः । ननु प्रभाश्रयस्यापि मण्यादेः प्रभाधीनप्रकाशत्ववद्दीपादेरप्यस्त्वित्यभिप्रायेण कथं प्रकाशत इत्याकाङ्क्षां दर्शयति—**किं तर्हीति** । घटादेर्मण्यादिपार्थिवांशस्य च स्वयमभास्वरतया प्रभासापेक्षप्रकाशत्वम् ; उद्भूतानभिभूतभास्वररूपस्य तु स्वभावात्तन्नैरपेक्ष्यं युक्तमित्याह—**दीप इति** । ननु भास्वरत्वं प्रभानैरपेक्ष्ये न प्रयोजकम् ; किं तु प्रभात्वमेव ; मैवम् ; व्यभिचारादर्शनेऽप्यत्र व्याप्तिसंकोचेऽतिप्रसङ्गात् । प्रभात्वाभावेऽपि

तमसि प्रभानैरपेक्ष्यदृष्टेश्च । ज्योतिष्ट्वाभावेऽपि तत्र तद्दृष्टिरस्तीति चेत्; सत्यम्; न हि वयं ज्योतिष्ट्वं व्यापकं ब्रूमः । प्रभात्वमप्येवमिति चेत् तर्हि लिङ्गं भवतु । न तु स्वनिवृत्त्या प्रभानैरपेक्ष्यं निवर्तते । न च दीपादेः प्रभाधीनप्रकाशत्वं दृष्टं, येन प्रभातमोऽन्यतरनिष्ठतया व्याप्तिः संकोच्येत । तर्हि स्वप्रभावद्दीपोऽपि घटादीन् स्वयमेव प्रकाशयेदित्यत्राह—**अन्यानिति** । असंबद्धं कथं प्रकाशयेत्? यथादर्शनं व्यवस्थायां धर्मद्वारा संबन्धः प्रकाशनं चेति भावः ।

## मूलभावप्रकाशिका

**चैतन्यस्वभावता हीति**; चैतन्यस्वभावत्वं ज्ञानत्वम् । तच्च "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इति श्रुतिसिद्धम् । अतो नासिद्धिशङ्केति भावः । साध्यहेत्वोर्व्याप्तिं दर्शयति—**यः प्रकाशस्वभाव इति** । यद्यपि स्वयंप्रकाशत्वमेव हेतूकृतं, तथापि तत्र स्वयमित्येतदविवक्षितमिति भावः । दृष्टान्ते साध्यसाधनयोरसिद्धिमाशङ्क्य निरस्यति—**न हि दीपादेरिति । स्वयमेव प्रकाशत इति**; ततश्च स्वप्रभाबलनिर्भासितत्वमसिद्धमिति भावः । दीपः प्रभानिरपेक्षप्रकाशश्चेत् प्रभावद्विषयानपि प्रकाशयेदित्यत्राह—**अन्यानपीति** । विषयप्रकाशनक्षमोऽपि स्वरूपस्य काचित्कतया विषयसंबन्धाभावात् स्वरूपत्वेन न प्रकाशयति, किंतु स्वसंबन्धिन्या स्वपरिकरभूतया प्रभयेत्यर्थः । "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः" इत्यादिनिर्देशोऽत्राभिप्रेतः । अत एव दीपस्थानीयस्य धर्मभूतज्ञानेन विषयान्प्रकाशयतो ज्ञातुरहमर्थस्य धर्मभूतज्ञानबलनिर्भासितत्वेनाप्रकाशत्वस्य वान्याधीनप्रकाशत्वस्य वा प्रतिपादनमसंगतमिति भावः ।

## श्रीभाष्यम्

**एतदुक्तं भवति—यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते; यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता, तथापि तेजोद्रव्यमेव; न शौक्ल्यादिवद्गुणः, स्वाश्रयादन्यत्रापि वर्तमानत्वाद्रूपवत्त्वाच्च शौक्ल्यादिवैधर्म्यात्; प्रकाशवत्त्वाच्च तेजोद्रव्यमेव नार्थान्तरम्; प्रकाशवत्त्वं च स्वस्वरूपस्यान्येषां च प्रकाशकत्वात्; अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रय-**

त्वतच्छेषत्वनिबन्धनः; न चाश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते, मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गात्; दीपेऽप्यवयविप्रतीतिः कदाचिदपि न स्यात्; न हि विशरणस्वभावावयवा दीपाश्चतुरङ्गुलमात्रं नियमेन पिण्डीभूता ऊर्ध्वमुद्गम्य ततः पश्चाद्युगपदेव तिर्यगूर्ध्वमधश्चैकरूपा विशीर्णाः प्रचरन्तीति शक्यं वक्तुम्; अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्तीति पुष्कलकारणक्रमापनिपातात् तद्विनाशे विनाशाच्चावगम्यन्ते; प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्याधिक्यमित्यादि उपलब्धिव्यवस्थाप्यम्, अग्न्यादीनामौष्ण्यादिवत्; एवमात्मा चिद्रूप एव चैतन्यगुणक इति। चिद्रूपता हि स्वयंप्रकाशता।

### श्रुतप्रकाशिका

ज्ञानस्य द्रव्यत्वे द्वयोर्ज्ञानयोर्नियमेन धर्मधर्मिभावो नोपपद्यते, अन्यत्रादर्शनात्। गुणत्वे तु न ज्ञानाश्रयत्वसंभवः, गुणानामगुणत्वात्। न च द्रव्यत्वेऽपि नियताश्रयाश्रयिभावः प्रभाप्रभावतोर्दृश्यत इति वाच्यम्, प्रभाया विशीर्णदीपावयवत्वादित्याशङ्क्याह—**एतदुक्तमिति**। यथैकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते, एवमात्मा चिद्रूप एव चैतन्यगुणक इति यथाशब्दस्योत्तरत्रान्वयः। प्रथमं प्रभाया विशीर्णावयवान्यत्वं प्रतिजानीते—**एकमेवेति**। **एकम्**; सजातीयम्। नियतधर्मस्य कथं द्रव्यत्वमित्यत्राह—**यद्यपीति**। **गुणभूता**; परतन्त्रभूता; अयुतसिद्धविशेषणभूतेत्यर्थः। तेजोद्रव्यमेवेति प्रतिज्ञातद्रव्यविशेषत्वसिद्ध्यर्थं प्रथमं द्रव्यत्वमुपपादयति—**स्वाश्रयादिति**। द्रव्यत्वमस्तु; तत्रापि तेजस्त्वे किं प्रमाणमित्यत्राह—**प्रकाशवत्त्वादिति**। **प्रकाशः**; तमोविरोध्याकारविशेष औज्ज्वल्यम्। प्रकाशवत्त्वमुपपादयति—**प्रकाशवत्त्वं चेति**; स्वविषयपरविषयज्ञानविरोधितमोनिरसनरूपकार्यदर्शनादित्यर्थः। तर्हि कथमस्या गुणत्वव्यवहार इत्यत्राह—**अस्यास्त्विति**। तुशब्दः शौक्ल्यादिवैषम्यपरः। अथ विशीर्णावयवानां प्रभात्वं प्रतिक्षिपति—**न चेति**। कुत इत्यत्राह—**मणीति**;

प्रतिक्षणविनाशप्रसङ्गादित्यर्थः । तदभ्युपगमे मण्याद्यनुपलम्भप्रसङ्गपरिहाराय प्रतिक्षणोत्पत्तिरभ्युपेत्या । प्रतिक्षणोत्पत्तिविनाशाभ्युपगमश्चानुपपन्नः, दीपस्येवोत्पत्तिविनाशसामग्र्यनुवृत्त्यभावात् । तदभावेऽपि तेजस्त्वसामान्याद्दीप इव प्रत्यभिज्ञाबाधेन प्रतिक्षणविनाशादिकल्पने सत्त्वद्रव्यत्वादिभिर्घटादावपि क्षणिकत्वप्रसङ्ग इति भावः । रत्नेषु क्षणिकत्वं रत्नशास्त्रविरुद्धम्, कालविशेषे तदुत्पत्त्याद्यवगतेः । आदित्यादिषु च क्षणिकत्वं श्रुतिविरुद्धम्, "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" "नाग्नीषोमौ न सूर्यः" इति कालविशेषे तदुत्पत्तिविनाशावगतेः । न च सूर्यादिसृष्टिप्रलयपरवाक्यानां सन्तत्युपक्रमोच्छेदपरत्वं वाच्यम्, रत्नसूर्यादिमात्रक्षणिकत्वे प्रमाणाभावात् । तेजस्त्वं तु तेजःपरमाणूनिच्छद्भिर्न हेतुतया वाच्यम्, तेजःपरमाणुषु व्यभिचारात् । सत्त्वादिभिः क्षणिकत्वे जगत् क्षणिकं स्यादित्युक्तम् । ननु कर्पूरादीनां दूरोपलब्धगन्धानां गन्धाश्रयभूतावयवविशरणस्यावर्जनीयत्वादुत्तरकालोपलम्भाच्च प्रतिक्षणोत्पत्तिविनाशावभ्युपगन्तव्यौ; तद्वन्मण्यादिष्वपीति । नैवम्, समुद्गसंपुटादिनिवातदेशनिहितदृढपिहितघनसारादेर्दूरे गन्धोपलम्भाभावादाश्रयावयवविशरणाभावेन यथापूर्वं स्थित्युपलम्भोपपत्तेर्न प्रतिक्षणोत्पत्तिविनाशौ कल्प्यौ । सवातदेशस्थघनसारादीनां दूरोपलभ्यमानगन्धानामल्पाल्पावयवविशरणमस्त्येव । अवयविनि च सूक्ष्मः परिक्षयो विद्यत एव, तुलया परीक्षणेऽल्पाल्पपरिमाणापकर्षदर्शनात् । अतः प्रतिक्षणमवयवान्तरोपनिपातविश्लेषहेतुकोत्पत्तिविनाशौ न कल्प्यौ । कल्पनेऽपि परितः केषांचिदवयवानामुपलभ्यमानगन्धाश्रयत्वेनोभयवादिसंप्रतिपन्नानामेव स्थितिमात्रं कल्प्यम्; तावता गन्धोपलब्ध्युपपत्तेः, अनेकधर्मितदुत्पत्तिविनाशापरिदृष्टतदुभयसामग्रीकल्पने गौरवाच्च । यद्वा घ्राणस्यापि चक्षुष इव रश्मिद्वारा संबन्धाद् दूरस्थपदार्थगतगन्धग्राहित्वं कल्प्यम्, गौरवाभावात् । न केवलं कल्प्यं रश्मिवत्त्वम्; उक्तं च भारते—

"न ह्यात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः ।
प्रवर्तमानैरनयैर्दुर्धर्षैरकृतात्मभिः ॥
तेषां तु मनसा रश्मीन्यदा सम्यङ् नियच्छति ।
तदा प्रकाशते ह्यात्मा दीपो दीप्यन्निवाकृतिः ॥"

इति । इन्द्रियाणां पञ्चीकृतभूताप्यायनैर्वायुतेजःप्रभृतिभिः संबन्धाद्रश्मिवत्त्वं चोपपद्यते । नन्वग्न्यातपतप्तसलिलशिलादेरौष्ण्यतारतम्योपलम्भोऽग्न्यातपाद्यवयवसंक्रान्तिं विना

नोपपद्यते, सलिलादेः स्वत औष्ण्याभावात् । निराश्रयधर्मसंक्रमणायोगाच्चौष्ण्याश्रयभूताग्न्यातपावयवस्य संक्रान्तिरभ्युपेत्या । अवयवसंक्रान्तिश्च विशरणेन विना नोपपद्यते । गत्वराणां रश्मीनां चरणतलानामिव कथं विशरणेन विना क्वचित्संक्रमः? अवयवतारतम्याच्चौष्ण्यतारतम्यमिति । उच्यते—अग्नितप्तेष्वग्न्यवयवसंक्रान्त्यैवौष्ण्योपलम्भः । सलिलादौ संक्रामन्तोऽग्न्यवयवा एव प्रभेति न वाच्यम्, प्रदीपप्रभयाहोरात्रसंपृक्तेऽपि सलिलभूतलादावौष्ण्यानुपलम्भात् । आतपतप्तेष्वपि न किरणविशरणादवयवसंक्रमः, तुहिनकणानामिव रविकिरणोपात्तमुक्तानामग्न्यवयवानां संक्रमणादुष्णोपलम्भोपपत्तेः । न चात्र कल्पकमन्वेष्टव्यं, नापि कल्पनागौरवं प्रसजति; आगमसिद्धत्वादस्यार्थस्य । तथा हि मात्स्ये पुराणे कथ्यते—

"वसन्ते ग्रीष्मके रश्मिशतैः संतपति त्रिभिः ।
शरद्यपि च वर्षासु चतुर्भिः संप्रवर्षति ॥
हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः ।"

इति । यथा वर्षासु हेमन्ते च रविकिरणमुक्ताः सलिलकणास्तुहिनकणाश्च न विशीर्णकिरणावयवाः, किंतु किरणोपात्तविमुक्ता आप्यावयवा एव, एवं ग्रीष्मे च रविकिरणजन्यं संतापनं न तद्विशीर्णावयवकार्यं, किंतु तदुपात्तमुक्ताग्न्यवयवकार्यमिति प्रतीयते । तथा—"अग्निं वावादित्यः सायं प्रविशति । उद्यन्तं वावादित्यमग्निरनु समारोहति" इति श्रूयते । अत्र चादित्यतिरोधानदर्शनावच्छिन्नकालविशेषपरौ सायंप्रातःशब्दौ । कालस्य सायंभावप्रातर्भावौ रविविप्रकृष्टसंनिकृष्टतत्तद्देशवर्तिपुरुषापेक्षया सर्वदोपपद्येते इति । अयमर्थो भुवनकोशे स्फुटतरः । ततश्च प्रविशतीत्यनेनाग्नावादित्यस्य व्याप्तिरुच्यमाना दूरस्थितस्य स्वरूपेण नोपपन्नेति किरणद्वारा भवति । "अग्निरनुसमारोहति" इत्यनेनाग्न्यवयवानामादित्येनोपादीयमानत्वमुच्यते । न चाग्न्यधिष्ठातृदेवतारोहणपरमिदं वाक्यम्, "तस्माद्धूम एवाग्नेर्दिवा ददृशे" इत्यनन्तरवाक्येनाग्नेरादित्योपसर्पणनिमित्ततेजोमान्द्यकथनात् । अन्यथा सायंप्रातःसमययोः सर्वदा संभवेनाग्नेरादित्ये सर्वदारोहणमग्नावादित्यस्य सर्वदावरोहणं च प्रसजेत् । ततश्चाग्न्यादित्ययोः स्थानविनियमेन सर्वदा स्थितिरुक्ता स्यात् । सा च प्रमाणान्तरविरुद्धा । अत आदित्यस्याग्नौ किरणद्वारा व्याप्तिः किरणैरग्न्यवयवोपादानं च वाक्यद्वयोक्तम् । अतश्चोपात्ताग्न्यवयववर्षेण

तापनं मात्स्योक्तम्, उत्सर्जनप्रकरणस्वारस्यात्। अतस्तुहिनकणानामिव रविकिरणमुक्तानामाग्नेयावयवानां विशीर्णकिरणावयवत्वाभावाद्रविकिरणेषु तन्मण्डले प्रतिक्षणविनाशोत्पत्तिक्लृप्तिरनुपपन्ना। अतो न विशीर्णावयवाः प्रभा। दूषणान्तरमाह—**दीपेऽपीति**। अवयविप्रतिपत्त्यनुपपत्तिमुपपादयति—**न हीति**। दीपः किं विशरणस्वभावः? उत स्थिरस्वभावः? विशरणस्वभावत्वे पिण्डीभावो मूर्तद्रव्यप्रतिबन्धनिबन्धनः स्यात्। स्थिरस्वभावत्वे विशरणं मूर्तद्रव्यप्रतिहतिहेतुकं स्यात्। अत्रोभयमनुपलम्भपराहतम्। विशरणस्वभावत्वे पिण्डीभावो वायुनोपपद्यत इति चेत्, तर्हि निवाते पिण्डीभावो न स्यात्। स्तिमितसूक्ष्मवायुना पिण्डीभावश्चेद्विशरणं न स्यात्। तच्च सूक्ष्मवायुना चेदेकस्य विरुद्धस्वभावद्वयायोगात् पिण्डीभावविशरणहेतुभूतवायुद्वयमभ्युपेत्यम्। तयोर्मिथःप्रतिघातुकत्वादन्यतरविगमे पिण्डीभाव एव वा विशरणमेव वा स्यात्। तत्परिहाराय परस्परान्तरितविरुद्धस्वभाववायुद्वयपरंपरासंनिधिविगमपरिकल्पने गौरवं स्यात्। तत्परिकल्पनेऽपि तिर्यग्गत्वराणां वाय्ववयवानां नोदनमात्रहेतूनां परितः प्रतिबन्धकत्वायोगात् पिण्डीभावो न स्यात्। ननु प्लोषणद्रवीभूतपार्थिवावयवसंदंशात्पिण्डीभावः; ततस्तदवयवगतस्निग्धत्वापगमेन संदंशकत्वाभावादग्न्यवयवविशरणमित्यत्राह—**न हि विशरणेति**। यद्यग्न्यवयवा उद्गमनस्वभावाः, तर्हि विशरणे तिर्यग्गतिर्न स्यात्। यदि ते तिर्यग्गतिस्वभावाः, तर्हि प्रथममूर्ध्वगतिर्न स्यात्, एकजातीयद्रव्यस्योपाधिना विना विरुद्धस्वभावत्वायोगात्। उपाधिश्च न दृश्यते। दीपप्रभयोर्भिन्नावयवित्वे तु विरुद्धस्वभावत्वमुपपद्यते। किंच चतुरङ्गुलादिपरिमाणतारतम्यनियामकोऽपि नास्ति। विशरणे च पार्श्वेऽपि विशरणं संभवति, समन्ततो युगपद्विशरणे नियामकाभावादित्यभिप्रायः। किंच विशीर्णानां चावयवानां पांसूनामिव ऋजुप्रसरणनियमे च न हेतुः। प्रसरणस्यार्जवनियमश्च तिरोधायकं परार्थं प्रति ऋजुदेश एव छायायोगादवगम्यते। छायावैपुल्यं तु निवार्यमाणरश्मीनां पृथ्वग्रत्वकृतं; नानार्जवकृतम्। छायाकौटिल्यं तु तिरोधायककौटिल्यकृतं, न तु प्रसरानार्जवकृतम्। तच्च ऋजुप्रसारित्वसाधकम्। विशीर्णावयवत्वे पांसूनामिव पवनानुत्सार्यमाणत्वं च न घटते। प्राचीनजालकनिष्क्रान्ता हि प्रभा दक्षिणानिलेन नोत्सार्यते; अन्यथा रजसामपि तत्रानोदनं प्रसजेत्। जालकनिष्क्रान्तप्रभायाश्च पवनानुत्सारितत्वं ततः परस्मिन् भित्त्यादौ प्रभासंसर्गादवगम्यते। अतो धनुष्याततता-

या मौर्व्या इव प्रभाया न विशीर्णावयवत्वमिति। ततः किमित्यत्राह— **अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना इति ;** तेजस्त्वेन मण्यादिविनाशाभ्युपगमेऽतिप्रसङ्गात् विशरणस्वीकारे पिण्डीभावयुगपद्दिक्ष्वविशरणऋजुप्रसरणाद्यनेकनियमव्यवस्थापकाभावात् यथादृष्टाभ्युपगमे विरोधाभावाच्च सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना इत्यर्थः। तर्हि कथं प्रतिक्षणोत्पत्तिविनाशावित्यपेक्षायां यथा मण्यादीनां प्रतिक्षणविनाशो न प्रसजति, तथा दीपक्षणिकत्वे हेतुद्वयमाह—**पुष्कलकारणक्रमोपनिपातात्तद्विनाशे विनाशाच्चेति ;** पृथक्स्थितदण्डचक्रादिव्यावृत्त्यर्थं पुष्कलशब्दः। वर्त्यवयवाग्निसंयोगस्य दीपसामग्रीत्वं प्रथमवर्त्यवयवाग्निसंयोगे दृष्टम्। न च प्रथमावयवाग्निसंयोगस्यैव कारणत्वं शङ्कनीयम्, चरममध्यमावयवयोरप्यग्निसंयोगे सति दीपोत्पत्तिदर्शनात्। अतः प्रत्यवयवमग्निसंयोगात् पुष्कलकारणपरंपरा दृष्टेति प्रत्यवयवमग्निसंयोगात् दीप उत्पद्यत एव। तत्र प्रतिक्षणमुत्पत्तौ सत्यां युगपदनेकदीपानुपलम्भाद्विनाशोऽपि सिद्धः। प्रतिक्षणविनाशस्य पृथगनुमापकमुच्यते— **तद्विनाशे विनाशाच्चेति।** वर्त्यवयवविनाशस्य दीपविनाशसामग्रीत्वं चरमवर्त्यवयवविनाशे दृष्टम्। एवं विनाशकारणानुवृत्तिदर्शनात् प्रत्यवयवविनाशं दीपोऽपि विनश्यत्येव। एवमुत्पत्तिविनाशसामग्र्यनुवृत्तिभ्यां प्रतिक्षणं तावनुमीयेते इत्यर्थः। प्रभा विशीर्णावयवा चेत् दीपसमीपे तस्या औष्ण्याधिक्यादिकं कथम्? विशरणपक्षे ह्यवयवबाहुल्यवैरल्याभ्यामौष्ण्याधिक्यमान्द्यादिकमुपपद्यत इत्यत्राह --**प्रभाया इति। प्रकाशाधिक्यमौष्ण्याधिक्यमित्यादी**त्यादिशब्देनाश्रयविप्रकृष्टदेशे प्रकाशमान्द्यमौष्ण्यमान्द्यं च विवक्षितम्। उपलब्धिव्यवस्थाप्यत्वे दृष्टान्तमाह--**अग्न्यादीनामिति।** उक्तं दार्ष्टान्तिकेऽतिदिशति— **एवमिति। चिद्रूप एवेति।** रूपशब्दो धर्मिस्वरूपपरः। ततः किं स्वप्रकाशत्वस्येत्यपेक्षायां चिद्रूपत्वं विवृणोति—**चिद्रूपता हीति।** अनेन वक्ष्यमाणश्रुतिवाक्ये ज्ञानादिशब्दो व्याख्यातो भवति।

### भावप्रकाशिका

**ननु कर्पूरादीनां दूरोपलब्धगन्धानामिति ;** दूरोपलब्धगन्धानामिति हेतुगर्भविशेषणम् ; कर्पूरादीनां दूरोपलब्धगन्धत्वादित्यर्थः। अतश्च यत् कैश्चिदुक्तं "दूरोपलब्धगन्धानामित्येतत् प्रक्षिप्तम् ; तथाहि सति समुद्गसंपुटादीति ग्रन्थस्याप्रसक्तप्रतिषेधताप्रसङ्गात्" इति, तन्निरस्तम्। अत्र समुद्गसंपुटयोः सामान्यविशेषरूपेणार्थभेदसत्त्वान्न

पौनरुक्त्यशङ्का । **उभयवादिसंप्रतिपन्नानामेवेति**; उपलभ्यमानगन्धाश्रयाणामेषामेवाव-यवानां निश्चलतयावस्थितिमात्रमेव लघु; न तु तेषामवयवानां संयोगविशेषरूप उपनिपातः, तद्धेतुकधर्म्यन्तरोत्पत्तिः; तदुत्तरक्षणे विशरणम्; तदधीनधर्मिनाशः; पुनरपि तदुत्तरक्षणे पुञ्जीभावेन धर्म्यन्तरोत्पत्तिरित्यादिकल्पनम्। अतो न गौरवमिति भावः। **अकृतिरिति**; निर्व्यापारः, निश्चल इत्यर्थः। **वायुतेजःप्रभृतिभिः संबन्धादिति**; रश्मिवत्त्वे तेजःसंबन्ध एव प्रयोजक इति द्रष्टव्यम्। **गत्वराणां रश्मीनामिति**; कपालं निर्भिद्य सलिले प्रविष्टानामपि ततोऽचिरादूर्ध्वनिर्गमनमेव स्यात्, न तु तत्र विश्रम इति भावः। **अग्न्यवयवसंक्रान्त्यैवौष्ण्योपलम्भ इति**; विशरणमन्तरेणैवाग्निसहचरिताग्न्यवयवसंक्रान्त्यैवौष्ण्योपलम्भ इत्यर्थः, आतपतप्तेष्वपि न किरणविशरणादवयवसंक्रम इत्युत्तरग्रन्थानुसारात्। केचित्तु—अग्नितप्ते विशीर्णावयवसंक्रमणमभ्युपेतम्। अत एव हि सिद्धं नः समीहितम्, तेषामेव विशीर्णावयवानां प्रभात्वादित्याशङ्क्य निषिध्यते 'सलिलादौ सङ्क्रामन्तः' इत्युत्तरग्रन्थेनेति वर्णयन्ति। **तदुपात्तमुक्ताग्न्यवयवकार्यत्वमिति प्रतीयत इति**; अत्र केचित्—सौर्यरश्मीनां संतापहेतुत्वस्याग्न्यवयवद्वारकत्वेऽग्नीनां तपनहेतुत्वमादित्यरश्म्यवयवानुप्रवेशकृतमिति किं न स्यात्? उभयोरपि परस्परानुप्रवेशस्य प्रामाणिकत्वात्। तस्मादप्युभयोरप्युष्णत्वाविशेषात् संतापहेतुत्वमेव वक्तव्यम्; न त्वन्यतरस्यान्यतरद्वारकत्वम्। न हि 'वायुर्धूलिं वर्षति शोषयति' इत्युक्ते शोषणस्यापि किंचिद् द्वारतयापेक्षितम्। न चाग्नीनां दिवापि तापहेतुत्वदर्शनात् तदा सूर्यरश्म्यवयवानुप्रवेशाभावात् स्वत एवाग्नेस्तापहेतुत्वमिति वक्तुं शक्यम्, "रश्म्यनुसारी" इति सूत्रोक्तन्यायेन रात्रौ सूर्यरश्मीनां संतापहेतुत्वस्य सिद्धतया तदानीमग्न्यनुप्रवेशाभावात् संतापहेतुत्वं न स्यादिति साम्यात्; अग्न्यवयवादीनामनुप्रवेशवत् सौरकिरणानामनुप्रवेशे दोषाभावाच्चेत्यपि द्रष्टव्यम्। **ननु प्लोषणद्रवीभूतेति**; अत्र केचित्—अयं ग्रन्थः ऊर्ध्वमुद्भ्रम्येति ऊर्ध्वगमनतिर्यग्गमनस्वभावविरोधप्रदर्शकभाष्यस्यावतारिका; न तु विशरणपिण्डीभावस्वभावविरोधप्रदर्शकस्य, **न हि विशरणस्वभावेति** भाष्यस्य तत्पूर्वमेवावतारितत्वात्। अतश्च ऊर्ध्वमुद्भ्रम्येतीति प्रतीकग्रहणं युक्तमिति वदन्ति। **ऋजुदेश एव छायायोगादवगम्यत इति**; यदि प्रभाया ऋजुप्रसरणनियमो न स्यात् तदा दीपप्रभाव्यवधायकस्तम्भान्तरितान्धकारस्थले प्रभाया वक्रमार्गेण

वायुनीतपांसूनामिव गमनप्रसङ्गेन तत्रत्यान्धकारेऽप्यार्जवं न स्यादित्यर्थः। ननु तिरोधायकपदार्थं प्रति ऋजुप्रदेश एव छायायोगे नियमो नास्ति, तथा हि सति व्यवधायकस्य पदार्थस्य दीपसंनिकृष्टत्वे पृथ्वग्रा सूक्ष्ममूला छाया नोपलभ्येतेत्यत्राह—**छायावैपुल्यमिति**; छायापृथ्वग्रत्वं निरुध्यमानरश्मीनां पृथ्वग्रसूक्ष्ममूलत्वनिबन्धनमित्यर्थः। अयं भावः—यावद्देशप्रसरणशीलाग्रवन्तो रश्मयो निरुध्यन्ते तावद्देशप्रसृता छाया भवतीति। **उत्पत्तिविनाशसामग्रीभ्यामिति**; अयमिहानुमानक्रमः—द्वितीयादिवर्त्यवयवाग्निसंयोगो दीपोत्पादकः वर्त्यवयवाग्निसंयोगत्वात्, प्रथमवर्त्यवयवाग्निसंयोगवत्। प्रथमवर्तिकावयवनाशो दीपनाशहेतुः, वर्तिकावयवनाशत्वात् चरमवर्तिकावयवनाशवदिति। भाष्ये **औष्ण्याधिक्यमित्याद्युपलब्धिव्यवस्थाप्यमिति**; इदमुपलक्षणम्—औष्ण्याधिक्यं न प्रभाधर्मः, अपितूद्भूतस्पर्शानां तत्सहचरितानां तेजोऽवयवानां धर्म इत्यपि सुवचमिति द्रष्टव्यम्। **अनेन वक्ष्यमाणश्रुतिवाक्य इति**; ननु ज्ञानादिव्यपदेशस्य स्वप्रकाशत्वमादाय निर्वाहः; स्वप्रकाशत्वस्य तु चैतन्यस्वभावत्वमादाय निर्वाहः चैतन्यस्वभावता हि स्वप्रकाशतेत्युपपादनात्; अतोऽन्योन्याश्रय इति चेत्—न; चैतन्यस्वभावत्वमित्यत्र चैतन्यलक्षणज्ञानत्वं व्यवहारानुगुणत्वमात्रमेव, न तु संविदनुभूत्यवगत्यादिशब्दप्रवृत्तिनिमित्तत्वमभिप्रेत्येति पूर्वोक्तत्वाददोषात्।

## श्रुतप्रदीपिका

ज्ञानस्य गुणत्वे ज्ञानरूपस्यात्मनो न ज्ञानाश्रयत्वम्। द्रव्यत्वे तु नायुतधर्मिधर्मता। दीपतत्प्रभादिवच्चेत्—न, विशीर्णदीपावयवानामेव प्रभात्वादित्याशङ्कायामाह—**एतदुक्तमिति**। यथा शब्दस्योत्तरत्र एवमित्यत्रान्वयः। **एकम्**; एकजातीयम्। प्रभाया अयुतसिद्धत्वाच्छौक्ल्यादिवद् गुणत्वमेव स्यादित्यत्राह—**यद्यपीति**। **गुणभूता**; नित्यपरतन्त्रभूता। द्रव्यत्वे हेतुमाह—**स्वेति**। तत्रापि तेजस्त्वे हेतुमाह—**प्रकाशेति**। **प्रकाशः**; औज्ज्वल्यं तमोविरोधिरूपम्। गुणोक्तिः कथमित्यत्राह—**अस्यास्त्विति**। दीपविशरणमाशङ्क्याह—**न चेति**। तत्र हेतुमाह—**मणीति**। सामग्र्यनुगमाभावेऽपि प्रतिक्षणं मण्यादिनाशोत्पादक्लृप्तावतिप्रसङ्ग इति भावः। अवयविप्रतीत्यभावं प्रसञ्जयति—**दीपेऽपीति**। कथमित्यत्राह—**न हीति**। विशरणस्वभावत्वे मूर्तेन प्रहरप्रतिबन्धौ स्याताम्; न च ताविति नावयविधीः; युगपद्दिक्ष्वविशरणे च न नियामकम्। अतो यथादृष्टमभ्युपेय-

मित्यर्थः। कथं प्रतिक्षणनाशोत्पादावित्यत्राह—**पुष्कलेति**। केवलदण्डादिव्युदासाय पुष्कलशब्दः। अतिप्रसङ्गश्च नेति भावः। दूरान्तिकयोर्वैषम्यं कथमित्यत्राह—**प्रभाया इति**। आदिशब्दाद्दूरे प्रकाशौष्ण्यमान्द्यम्। दृष्टान्ते दर्शितमर्थं पक्षेऽतिदिशति—**एवमिति**। ततः किं स्वसिद्धित्व इत्यत्राह—**चिद्रूपतेति**। वक्ष्यमाणश्रुतिव्याचिख्यासयेयमुक्तिः।

## तत्त्वटीका

नन्वात्मनस्तद्धर्मस्य च सत्तावान्तरजात्या सजातीयत्वे कथं धर्मधर्मित्वम्? न च दीपप्रभा निदर्शनम्, विशीर्णपूर्वदीपावयवरूपायाः प्रभाया उत्तरदीपधर्मत्वप्रसङ्गाभावात्। अवयवविशरणाभावे च दीपादेराशुतरविनाशित्वं न सिध्येत्। रजःपटलादिन्यायेन मूलमध्याग्रवैषम्यं च विशीर्णावयवत्वलिङ्गमित्यत्राह—**एतदिति**। यथेत्यस्योत्तरत्र **एवमिति** प्रतिनिर्देशः। अवान्तरवैषम्येऽपि तेजस्त्वेन सजातीयत्वं स्थितमित्यभिप्रायेण **एकमेवे**त्युक्तम्। ननु प्रभाप्रभावतोर्धर्मधर्मिभावो भ्रान्तः; यदि प्रभाया दीपादिगुणत्वं तर्हि द्रव्यत्वं जात्यं च न स्यादित्यत्राह—**यद्यपीति**। द्रव्यत्वे कथं गुणत्वमित्यत्राह—**शौक्ल्यादिवदिति**। अद्रव्यत्वलक्षणं गुणत्वं मा भूत्, आश्रितस्वभावत्वं तदस्तीति भावः। तद्द्रव्यत्वे किं प्रमाणमित्यत्राह—**स्वेति**। द्रव्याणां दण्डादीनां केशनखादीनां च संयोगत आश्रितानां तावत् स्वाश्रयरहितप्रदेशेऽपि वृत्तिर्दृष्टा। प्रभायास्त्वयुतसिद्धाया अपि धर्मिदेशातिवृत्तिर्दृश्यते। अद्रव्याणां तु न तथा। तदत्रायुतसिद्ध्या दण्डादिभ्यो धर्मिदेशातिवृत्त्या शौक्ल्यादिभ्यश्च विशेष इति भावः। तथाप्यौष्ण्यवत्तेजोधर्मस्य द्रव्यत्वतेजस्त्वे न स्यातामित्यत्राह—**प्रकाशवत्त्वादिति**; तिमिरनिरासकस्वभावादित्यर्थः। प्रकाशोपाधिकभास्वररूपत्वादिति च हार्दो हेतुः। भ्रान्तिशङ्काव्युदासार्थमवधारणं विवृणोति—**नार्थान्तरमिति**। न हि प्रभाया मण्यादेरिवौपाधिकी भास्वरत्वधीरिति भावः। दीपधर्मस्य गुणान्तरस्येव प्रकाशवत्त्वं न स्यादित्यत्राह—**प्रकाशवत्त्वमिति**। प्रकाशवत्त्वमिह तमोनिरासद्वारा मनुष्यादिचक्षुःसहकारित्वम्। न चैतल्लिङ्गम्। दृश्यमानस्तु स्वभावविशेषः प्रदर्श्यते। उक्तं च प्रञ्चपादिकाविवरणकृता—"ज्ञानप्रकाश्यत्वादज्ञानविरोधिनोऽन्यदेवालोकप्रकाश्यत्वं तमोविरोधित्वसिद्धम्" इति। अद्रव्यनियतो गुणव्यपदेशः कथमिह स्यादित्यत्राह— **स्या इति**। चोदितनिमित्तव्यावृत्त्यर्थस्तुशब्दः। अयं

भावः—गुणशब्दो हि दासादिष्वपि प्रयुज्यते ; कर्मणि क्रियान्तरशेषभूते ; सन्धिविग्रहादिष्वपि विवक्षान्तरेण ; तद्वदिहापि द्रव्यत्वाविरुद्धनिमित्तविवक्षया गुणोक्तिरविरुद्धेति । विशरणपक्षं प्रतिक्षिपति—**न चेति** ; तथानुपलम्भादिति भावः । कल्पने निर्बाधलोकदृष्ट्यानिष्टप्रसङ्गमाह—**मणीति** ; दीपादिवत् प्रतिक्षणविनाशप्रसङ्गादित्यर्थः । स्थिरत्वेन सर्वलोकविदितानां पुष्कलकारणक्रमाद्यनुपलम्भेऽपि क्षणिकत्वक्लृप्तावतिप्रसङ्ग इति भावः । मण्यादौ प्रत्यभिज्ञाविरोध उक्तः ; दीपे त्वभिज्ञापि न स्यादित्याह-**दीप इति** । **अपिः** पूर्वत्रात्र च प्रत्यक्षविरोधसाम्यद्योतकः । **अवयविशब्दः** परमतेन ; स्वमते तु संघातविशेषपरः । **कदाचिदपि** ; पूर्वोत्तरकालयोरिव मध्येऽपीत्यर्थः । योग्यस्य सत्यां सामग्र्यां कथमप्रतिपत्तिरित्यत्राह—**न ह्याति** । संहतस्वभावत्वे विशरणस्य विशेषकारणमभिघातादिकं दृष्टम् ; तदन्यक्लृप्तिश्च गुर्वी । विशरणस्य स्वभावत्वे तु पिण्डीभावादिहेतुरदृष्टः कल्प्यः । "अग्नेरूर्ध्वज्वलनम्" इत्यादिभिरूर्ध्वगमनशीलतया प्रसिद्धानामेवाविशेषेण विष्वग्विशरणादिक्लृप्तिश्च गुरुतरेति भावः । तर्हि दीपस्य क्षणिकत्वे प्रमाणं न स्यादित्यत आह—**अत इति**; पक्षान्तरस्य गौरवहतत्वादित्यर्थः । पद्मकेसरादिविशिष्टवर्त्यादिसृष्टिप्रकारसाम्याभिप्रायेण **सप्रभाका एवे**त्युक्तम् । प्रतिक्षणमुत्पन्नाश्चेद्युगपदनेकदीपोपलम्भः स्यादित्यत्राह—**विनश्यन्तीति** । अत्रापि प्रतिक्षणमिति योज्यम् । प्रतिक्षणोत्पत्तौ हेतुमाह—**पुष्कलेति** ; उत्तरोत्तरक्षणेष्वपि दीपसामग्रीसंपत्तेरित्यर्थः । विगीतः समुदायो दीपजनकः, विशिष्टवह्विवर्त्यादिसमुदायत्वात् आद्यवदिति प्रयोगः । प्रतिक्षणविनाशे लिङ्गमाह—**तद्विनाशे विनाशादिति** । नात्र साध्याविशेषः ; अयं ह्यत्र प्रयोगः—आद्यादिस्नेहवर्तिध्वंसः तज्जन्यदीपध्वंसशिरस्कः, विशिष्टस्नेहवर्तिध्वंसत्वात् ; अन्तिमवदिति । एवं दीपभेदानभ्युपगमे स्नेहनाशसंधुक्षणादिभिः परिमाणभेदोऽपि दुःशकनिर्वाहः । धारावाहिकधीभेदश्च । ध्वंसश्चात्र दीपतत्प्रभयोरनभिव्यक्तावस्थाविशेषः, सत्कार्यस्य द्रव्यस्य नित्यानुवृत्तेः । सा चावस्थान्तिमदीपसामग्रीनाशपूर्विका दृष्टा । अतोऽभिघातादिव्यतिरिक्तविशरणहेतुक्लृप्ताविव नात्र गौरवम् । तत्समीकारं परिहरति—**प्रभाया इति** । आदिशब्देन बहुलत्वादिकं दूरे प्रकाशादिमत्त्वं च गृह्यते । उपलब्धानादरेऽतिप्रसङ्गः । अथादृष्टासंकुचितप्रभोत्पत्तिः, एतदपि चोद्यमादिशब्दसंगृहीतम् **उपलब्धिव्यवस्थाप्य**मित्यनेनैव प्रत्युक्तम् । अथ वा **स्वयंप्रकाशत्वा**दित्यादेर्भाष्यस्य प्रयासबहुलानुमानपरत्वादपि वरं श्रुत्यर्थोपक्षेपपरत्वम् । दृष्टा-

न्तादिभिर्लोकदृष्ट्या तत्संभावनाप्रदर्शनं च। तथा च प्रदीपिकानुमितिपरत्वादपि श्रुत्यनुग्राहकपरत्वं युक्तमिति। न ह्युत्तरत्रानुमानवत् श्रुतिरपि 'तथा च' इत्युदाह्रियते; किं तु 'तथा हि' इति। अतः पूर्वोपक्षिप्तं श्रौतमेवार्थं लोकदृष्टिप्रदर्शितसंभावनयोपसंहरति—**एवमिति**। ननु संविदात्मनोर्भेदः पूर्वमुक्तः; तत्कथमिहात्मनश्चिद्रूपत्वोक्तिरित्यत्राह—**चिद्रूपतेति**; न स्वधर्मतादात्म्यमिहोच्यते, किं तु तत्सजातीयत्वमिति।

## मूलभावप्रकाशिका

आत्मनि दीपसमाधिं दर्शयितुं दीपस्थले शिक्षणीयार्थम् **एतदुक्त**मित्यादिना शिक्षयति। ननु प्रभावतो द्रव्यत्वेऽपि कथं प्रभायास्तेजोद्रव्यत्वम्? प्रभायाः शौक्ल्यादिवन्नित्योपसर्जनत्वादित्याशङ्क्याह—**यद्यपीति**। **गुणभूतेति**; उपसर्जनत्वलक्षणं गुणत्वमस्तीति भावः। नन्वस्तु शौक्ल्यादिवैधर्म्यात् द्रव्यत्वम्; तेजोद्रव्यत्वे किमायातमित्यत्राह—**प्रकाशवत्त्वाच्चेति**। लोके प्रभाया गुणत्ववादोऽपि शेषत्वनिबन्धन एव; नाद्रव्यत्वनिबन्धन इत्याह—**अस्यास्त्विति**। विशीर्णदीपावयवानामेव प्रभात्वमिति पक्षं प्रतिक्षिपति—**न चेति**। **विनाशप्रसङ्गाच्चेति**; न चेष्टापत्तिः, दीपवन्मण्यन्तरोत्पादकसामग्र्यभावेन मण्यादिप्रतिपत्तिविलोपप्रसङ्गादिति भावः। **न हि विशरणेति**; ननु विशरणस्वभावत्वेऽपि मूर्तद्रव्यप्रतिबन्धवशात् क्षणं पिण्डीभावः स्यात्; अस्तु वा स्थिरस्वभावत्वम्; मूर्तद्रव्यान्तरप्रतिघातात् क्षणादूर्ध्वं विशरणं स्यादिति चेत्—न; तादृशहेत्वनुपलम्भात्। प्रभाया विशीर्णावयवत्वे वीथ्यां जालकनिष्क्रान्तप्रभा रेणुवद्वायुनोत्साद्येत। न चेष्टापत्तिः, जालकाभिमुखभित्तिप्रदेशे प्रभासंक्रान्त्यभावप्रसङ्गात्। **पुष्कलकारणेति**; द्वितीयादिवर्त्यवयवसंयोगानामपि प्राथमिकवर्त्यवयवाग्निसंयोगवत् दीपोत्पादकसामग्रीत्वात् चरमवर्तिकावयवनाशवत् तदितरवर्तिकावयवनाशानामपि नाशसामग्रीत्वात् प्रतिक्षणदीपोत्पत्तिनाशयोरभ्युपगन्तव्यादुत्पद्यमाना दीपाः सप्रभाका एवोत्पद्यन्ते। दीपोत्पत्तिविनाशसामग्र्यैव सौधोदरव्यापिभामण्डलोत्पत्तिविनाशसामग्रीत्यपि कल्पनीयमिति भावः। ननु दीपसमीपे प्रभायाः प्रकाशौष्ण्याधिक्यदर्शनं विशरणपक्षानुगुणमित्याशङ्क्य विशरणपक्षस्यासंगतत्वादुपलम्भानुसारेण संनिहितप्रभाप्रकाशौष्ण्याधिक्यं नास्येति कल्प्यते। अथ वौष्ण्याधिक्यं न प्रभाधर्मः, अपितूद्भूतस्पर्शानां तत्सहचरितानां तेजोऽवयवानां धर्म इति वा कल्प्यत इति भावः। ननु कर्तृकर्मरहितज्ञनां प्रतिषेधयता भवतात्मनां चिद्रूपत्वं कथमुच्यत इत्यत्राह—**चिद्रूपता हीति**।

न्यायसुदर्शनम्

**चिद्रूपता हि स्वयंप्रकाशतेति ;** प्रकाशस्वभावतेत्यर्थः । 'ब्रह्म मिथ्या, अविद्यावत उत्पन्नज्ञानविषयत्वात्' इत्याद्यनुमानानि प्रसङ्गानुमानानि वेदितव्यानि । अविद्यावत उत्पन्नज्ञानविषयत्वे प्रपञ्चवत् ब्रह्मणो मिथ्यात्वं प्रसज्यत इति । एवमुत्तराण्यपि । ब्रह्मणो ज्ञानविषयत्वानङ्गीकारादसिद्धो हेतुरिति चेत्, तर्हि तद्विषयस्याज्ञानस्यानुच्छेद्यत्वं स्यात् । ज्ञानं हि स्वविषय एव ज्ञानं निवर्तयतीति प्रागेवोक्तमिति भावः ।

श्रीभाष्यम्

तथाहि श्रुतयः—"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः" "विज्ञानघन एव" "अत्रायं पुरुषः स्वयंज्योतिर्भवति" "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" "अथ यो वेदेदं जिघ्राणीति स आत्मा" "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" "एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" विज्ञातारमरे केन विजानीयात्" "जानात्येवायं पुरुषः" "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्" "स उत्तमः पुरुषः, नोपजनं स्मरन्निदं शरीरम्" "एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" "तस्माद्वा एतस्मान्मनोमयात्, अन्योऽन्तर आत्मा विज्ञानमयः" इत्याद्याः । वक्ष्यति च "ज्ञोऽत एव" इति । अतः स्वयंप्रकाशोऽयमात्मा ज्ञातैव । न प्रकाशमात्रम् ।

श्रुतप्रकाशिका

एवमनुग्राहकतर्कमुपन्यस्य प्रमाणमाह—**तथा हि श्रुतय इति । स यथा सैन्धवघन इति ; अनन्तरः ;** अन्तरङ्गव्यतिरिक्तः । **अबाह्यः ;** बहिरङ्गव्यतिरिक्तः । एवं व्यतिरेकनिर्देशेन निःशेषग्रहणं कृतम् । तदेवाह—**कृत्स्न इति ।** दार्ष्टान्तिकविषयो बाह्य-

शब्दो धर्मिपरः। अनन्तरशब्दो धर्मपरः। कृत्स्नशब्दस्तयोरेकदेशजडत्वशङ्काव्युदासार्थः। अत्र सर्वत्रैकरूप्यमेव दृष्टान्तोपजीव्यं न त्वन्यत्। दृष्टान्तदार्ष्टान्तिकविषयवाक्यद्वयेऽप्यनन्तरोऽवाह्य इति ह्युक्तम्। शरीरत्वावस्थायामपि ज्ञानात्मकत्वपरं वाक्यमुपादत्ते—**विज्ञानघन एवेति**। घनशब्दोक्तनैरन्तर्यस्य जडांशमिश्रत्वं व्यावर्तयत्येवकारः। ज्ञानत्वं नाम स्वयंप्रकाशत्वमिति ज्ञापनार्थम**त्रायमिति** वाक्योपादानम्। धर्मधर्मिभावं ज्ञापयति—**न विज्ञातुरिति**। ज्ञातृसंबन्धिज्ञानस्य नित्यत्वे कथिते ज्ञानमात्रस्य नित्यत्वशङ्काव्युदासार्थं ज्ञातुरेवात्मत्वं दर्शयति—**अथ य इति**। एकवाक्येन ज्ञानगुणकत्वस्वयंप्रकाशत्वयोः सह प्रतिपादकं वाक्यमाह—**कतम इति**। ज्ञानगुणकत्वज्ञानस्वरूपत्वप्रतिपादकवाक्यमाह—**एष हीति**। ज्ञातव्यस्य निष्कृष्टात्मस्वरूपस्य ज्ञातृत्वमाह—**विज्ञातारमिति**। अनेन ज्ञातृत्वं स्वाभाविकमिति फलितम्। न केवलं संसृतिदशायां, मुक्तावपि ज्ञातृत्वं ज्ञापयति—**ज्ञानात्येवायमिति**। अवधारणासंकोचान्मुक्तावपि ज्ञातृत्वं सिद्धम्। मुक्तौ ज्ञाननिषेधश्रुतीनां विषयविभागं दर्शयति—**न पश्य इति; स उत्तम इति च**। पुरुषं प्राप्तस्य मुक्तस्य ज्ञातृत्वेऽनुवर्तमान एव देहेन्द्रियविलयं दर्शयति—**एवमिति**। अन्तःकरणोत्तीर्णस्य ज्ञातृत्वमाह—**तस्माद्व इति**। अस्याऽर्थस्य सूत्रकाराभिप्रेतत्वमाह—**वक्ष्यति चेति**। पूर्वं सूत्रोपादानमहमर्थात्मत्वं सूत्रकाराभिमतमिति ज्ञापनार्थम्। अत्रोपादानं ज्ञानगुणकत्वज्ञानस्वरूपत्ववादिनीनां श्रुतीनामविरोधः सूत्रकाराभिमत इति ज्ञापनार्थम्। ज्ञानत्वात् ज्ञानं न ज्ञानान्तराश्रय इति चेत्, यदि व्याप्त्यनुरोधेनैवमुच्यते तर्हि धर्मत्वेन स्वीकार्यम्; यदि श्रुतिबलात्स्वातन्त्र्येण स्वीक्रियते तर्हि श्रुतिबलादेव ज्ञानाश्रयत्वमप्यङ्गीक्रियताम्। न च व्याप्तिविरोधः, धर्मभूतज्ञानत्वप्रयुक्तत्वात् ज्ञानानाश्रयत्वस्य श्रुत्या ज्ञातृत्वस्वयंप्रकाशत्वसिद्धिं निगमयति—**अत इति**। ननु—'घटमहं जानामि' इत्यत्र ज्ञानस्य ज्ञातृसंबन्धः प्रतीयत इत्यभ्युपेत्यम्, अन्यथा स्वज्ञानपरज्ञानविभागस्य दुर्ग्रहत्वप्रसङ्गात्। स्वसंबन्धितया प्रतीतं ज्ञानं संबन्धाप्रतीतौ कथं स्वज्ञानमिति व्यवह्रियते? अतः स्वसंबन्धः प्रतीयत एव। तत्प्रतीतिर्न तावदहमर्थाद्भवति। अहमर्थः प्रत्यक्त्वेनानुकूलत्वेनैकत्वेन च स्वतो भाति। न ह्यर्थान्तरमहमर्थो विषयीकर्तुमलमिति भवतां प्रक्रिया। अतो धर्मभूतज्ञानेनैव संबन्धप्रतीतिः। संबन्धश्च संबन्धिभ्यां विना न प्रतीयत इति ज्ञातृज्ञानयोरपि संबन्धप्रकाशकज्ञानान्तरवेद्यत्वं स्यात्। ततः स्वतोऽवभासो

ज्ञानान्तरेणावभासश्चेत्यवभासद्वयाभावात् ज्ञानान्तरेणैव प्रकाश्यतया स्वप्रकाश्यत्वासिद्धेर्ज्ञातुश्च ज्ञानस्य च जडत्वं स्यात्। किंच ज्ञानान्तरेण संबन्धप्रतीतिरवश्यंभाविनी चेत् संबन्धविषयज्ञानेन सह ज्ञातृसंबन्धस्यापि ज्ञानान्तरेण प्रतीत्यवश्यंभावात् संबन्धज्ञानपरंपराप्रसङ्गः। अवश्यंभावाभावे सर्वज्ञानेषु 'अहं जानामि' इति ज्ञानज्ञातृसंबन्धप्रतीतिर्न स्यात्। नैवम्; स्वयंप्रकाशप्रत्यक्षेणैव संबन्धप्रतीतेः। नियतविशेषणविशेष्यभावो हि संबन्धः। अहमर्थो विशेष्यतैकस्वभावं स्वात्मानं प्रकाशयति। धर्मभूतज्ञानं च विशेषणतैकस्वभावं स्वात्मानं प्रकाशयति। विशेषणविशेष्यभावस्य परस्परप्रतियोगिकत्वं च ज्ञातृज्ञानयोः सहावभासादेव प्रतीयते। ननु संबन्धप्रतीतौ संबन्धिनोः सहावभासश्चैकज्ञानगम्यतया विना नोपपद्यत इति ज्ञातृज्ञानयोर्ज्ञानान्तरवेद्यत्वं स्यात्। 'सुरभि पुष्पम्' इत्यादौ भिन्नसामग्रीवेद्ययोरपि गन्धपुष्पयोः संबन्धप्रतीतिवेलायामेकज्ञानगम्यत्वं हि दृश्यत इति चेत्—न; तत्र संबन्धिनोः संबन्धेन सहैकज्ञानगम्यत्वस्य सहावभासप्रयुक्तत्वाभावात्। संबन्धिनोर्जडत्वप्रयुक्तं हि तत्रैकज्ञानगम्यत्वम्। अत्र स्वप्रकाशत्वात् स्वयमेव सहावभासमानयोर्ज्ञातृज्ञानयोर्विशेषणविशेष्यतैकस्वभावत्वरूपसंबन्धग्रहो ज्ञानान्तरानपेक्ष उपपद्यते। अतः संबन्धाग्रहस्वपरज्ञानविभागाभावसंबन्धज्ञानपरंपराप्रसङ्गा दूरोत्सारिताः। एवं ज्ञातृत्वस्वयंप्रकाशत्वोपपादनेन चिन्मात्रव्यतिरिक्तत्वादिति जडत्वसाधकहेतुर्निरस्तो भवति। ज्ञानव्यतिरिक्तत्वाज्जडत्वं वदता किं स्वयंप्रकाशवस्तुव्यतिरिक्तत्वं हेतुरुक्तः? उत विषयप्रकाशकान्यत्वम्? प्रथमे साध्याविशिष्टत्वम्। द्वितीये ब्रह्मण्यनैकान्तिकम्; श्रुत्यादिबाधश्च।

### भावप्रकाशिका

**व्यतिरेकशब्देन निःशेषग्रहणं कृतमिति**; अन्तरङ्गः व्यतिरिक्तः कृत्स्नः सैन्धवघनः बहिरङ्गव्यतिरिक्तः, कृत्स्नः सैन्धवघन इत्युक्ते, असंकुचितसर्वाङ्गप्रतीतिरनुभवसिद्धेति भावः। **स्वसंबन्धितया प्रतीतमिति**; स्वसंबन्धाप्रतीतौ स्वसंबन्धितया अप्रतीतमित्यन्वयः। **ज्ञानान्तरवेद्यत्वं स्यादिति**; ज्ञातृज्ञानसंबन्धविषयकज्ञानस्य संबन्धिभूतज्ञातृज्ञानविषयकत्वावश्यंभावादिति भावः। नन्वेवं ज्ञानत्ववैशिष्ट्यमात्मनि च प्रत्यक्त्वानुकूलत्वैकत्ववैशिष्ट्यं कथं भायात्? वैशिष्ट्यानुयोगिनः स्वस्य स्वविषयत्वासंभवादित्यपि वक्तुं शक्यमिति चेत्, तस्याप्याक्षेपस्येष्टत्वात्। **संबन्धविषयकज्ञानेन सह ज्ञातृसंबन्धस्या-**

पीति; ज्ञातृव्यवसायसंबन्धविषयकानुव्यवसायेन सह ज्ञातुः संबन्धस्यापि वेद्यत्वायानुव्यवसायानुव्यवसायः स्वीकर्तव्य इत्यर्थः । **अहमर्थो हि विशेष्यतैकस्वभावः स्वात्मानमुपस्थापयतीति** ; न च प्रत्यक्त्वानुकूलत्वैकत्वभिन्नात्मधर्मग्रह आत्मनः सामर्थ्याभावात् कथं विशेष्यत्वस्य ग्रहणमिति वाच्यम्, विशेष्यत्वस्य स्वभावानतिरिक्तत्वेन ग्रहणसंभवात् । न च विशेषणविशेष्यत्वस्वभावग्रहणेऽपि परस्परनिरूपितत्वाग्रहात् कथं विशिष्टव्यवहार इति वाच्यम्, परस्परनिरूपितत्वासंसर्गाग्रहस्यैव संसर्गग्रहकार्यजनकत्वात्, तस्यापि तदुभयस्वरूपत्वाद्वा ग्रहणोपपत्तेः । ननु प्रत्यक्पदजन्योपस्थितेरात्मविषयत्वं वक्तव्यम्, तत्र प्रकाशद्वयस्याभ्युपगन्तव्यत्वात् । तत्रावेद्यत्वलक्षणस्य स्वप्रकाशत्वस्यास्मदिष्टत्वाभावात् प्रकाशद्वयसत्त्वे न दोष इत्येव परिहर्तव्यमिति चेत्—सत्यम्, 'घटमहं जानामि' इति ज्ञानं चक्षुरिन्द्रियजन्यम्, न तु नैयायिकमत इवानुव्यवसायरूपं मनोजन्यम् । न हि चक्षुर्जन्यज्ञान आत्मनो विषयत्वं संभवति । अतोऽहमित्येव धर्मी स्फुरति । घटज्ञानांशः स्वप्रकाशतया भासत इत्येव वक्तुमुचित इति भावः । **जडत्वप्रयुक्तं हि तत्रेति** ; जडस्थलीयसहावभास एवैकज्ञानगम्यत्वप्रयोजक इत्यर्थः ।

## श्रुतप्रदीपिका

अनुग्राह्यमानं दर्शयति—**तथा हीति** । प्रदेशभेदेन जडत्वव्युदासाय सैन्धवदृष्टान्तः । **अत्रायमिति** ; ज्ञानत्वं स्वसिद्धित्वमित्यर्थः । ज्ञानधर्मकत्वं दर्शयति—**न हि विज्ञातुरिति** । धर्मभूतज्ञाननित्यतामात्रं "न हि विज्ञातुः" इत्यत्र श्रुतम् ; न ज्ञातुरात्मत्वमित्यत आह—**अथ यो वेदेदमिति** । आत्मनो ज्ञातृत्वं स्वप्रकाशत्वं चैकस्मिन् वाक्ये श्रूयत इत्याह—**योऽयमिति** । ज्ञातृत्वं ज्ञानस्वरूपं चैकस्मिन् वाक्यान्तरे प्रतीयत इत्याह—**एष हीति** । ज्ञातुर्मुमुक्षुज्ञातव्यत्वज्ञापनायाह—**विज्ञातारमिति** । मुक्तौ तथात्वायाह—**ज्ञानात्येवेति** । मुक्तौ "न प्रेत्य संज्ञास्ति" इत्यादिधीनिषेधस्य विषयं दर्शयति—**न पश्य इत्यादिभिः** । ज्ञानस्वरूपत्वतद्धर्मकत्वतदविरोधानां सौत्रतामाह—**ज्ञोऽत इति** । निगमयति—**अत इति** । ज्ञानस्य ज्ञानानाश्रयत्वं व्याप्त्या चेत् ज्ञानं कस्यचिद्धर्मः स्यात् । श्रुत्या चेत् स्वतन्त्रतयैव ज्ञानवत्त्वमप्यास्थेयम् । एवं च न व्याप्तिविरोधः । गुणभूतस्यैव हि ज्ञानस्य ज्ञानानाश्रयत्वं दृष्टमिति भावः ।

**तत्त्वटीका**

चिच्छब्दस्यात्मनि स्वप्रकाशत्वनिबन्धनत्वमात्मनो ज्ञानत्वं ज्ञातृत्वं च जडत्वनिर्गुणवादनिरासाय श्रुतिभिराह—**तथेति**। शब्दप्रमाणकोऽर्थो यथाशब्दं व्यवस्थाप्य इत्यभिप्रायेण श्रुतिशब्दः। ततश्च विमतं न ज्ञानाश्रयः, ज्ञानत्वात् धर्मभूतज्ञानवदित्यत्र व्याप्तिसिद्धौ तद्ग्राहकश्रुत्यादिबाधः; अन्यथा त्वनुमितेरुत्थानम्। **प्रज्ञानघनः**, शास्त्रसिद्धेन सुखत्वप्रकर्षेण स्वरूपज्ञानस्य प्रकृष्टत्वम्; अतः प्रकृष्टसुखात्मकज्ञानैकरूप इत्यर्थः। सामान्योक्तेर्मानोपनीतविशेषविश्रमादपेक्षितसंभवेऽनपेक्षितविधिदौर्बल्याच्च।

अत्र सैन्धवदृष्टान्तः सर्वांशेष्वैकरस्यतः।
जडांशरहितत्वं तु बोध्यमात्मनि निष्कले॥ ४८६॥
अस्तु वा सैन्धवन्यायाद् गुणवत्त्वोक्तिरात्मनः।
वाक्यान्तरेण लभ्येत ज्ञानत्वमपि तादृशम्॥ ४८७॥

देहादिविशिष्टावस्थायामपि तद्विलक्षणत्वव्यक्त्यै विज्ञानघनवाक्योपादानम्; विविधज्ञानवैशिष्ट्यार्थं वा। स्वयंप्रकाशत्वस्फोटायाह—**अत्रेति**। न हि पुरुषशब्दोऽत्रान्तःकरणदेहादिपरः; न च ज्योतिःशब्दो भूततृतीयविषय इति भावः। आत्मनो ज्ञातृत्वं धर्मभूतज्ञानस्य नित्यत्वं च वदन्तीं श्रुतिमाह—**न विज्ञातुरिति**। ज्ञातुरनात्मत्वशङ्काव्युदासायाह—**अथ य इति**। आत्मन एव विज्ञानत्वस्वयंप्रकाशत्वे सहोक्ते इत्याह—**कतम इति**; शङ्कास्पदेषु क इत्यर्थः। **प्राणेष्विति** सप्तमी निर्धारणार्था; कयाचिद् वृत्त्या प्राणशब्दगोचरसमुदायाद्विज्ञानमयत्वेन कथंचित्पृथक्कृत्य तस्यात्मत्वमुच्यते। अथ वा **प्राणेषु हृदि** इत्युभयमपि स्थानविशेषव्यक्त्यर्थम्। **अन्तर्ज्योतिः**; स्वप्रकाशः; "आत्मज्योतिः" इत्यपि हि श्रूयते। ज्ञातृत्वकर्तृत्वज्ञानत्वादेरात्मनि सहोक्तिं दर्शयति—**एष हीति**। ज्ञातुरेव प्रत्यगात्मनोऽपि मुमुक्षुवेद्यत्वं सूचयति—**विज्ञातारमिति**। मुक्तावपि ज्ञातृत्वसिद्ध्यै ज्ञातृत्वायोगव्यवच्छेदपरां श्रुतिमाह—**जानात्येवेति**। विनाशश्रुतेः संज्ञानिषेधाद्युक्तेश्चान्यविषयत्वं स्थापयितुमाह—**न पश्य इति**। "सर्वं ह पश्यः पश्यति" इति तत्रैवोक्तम्। "स उत्तमः पुरुषः" इत्यत्र वाक्यशेषान्मुक्तस्य जक्षणादिबुद्धिपूर्वव्यापारवत्त्वसिद्धिः। मुक्तस्य संस्कारजन्यधीनिषेधात् स्वतःसिद्धसाक्षात्कारवत्त्वं व्यञ्जयति—**नोपजनमिति**। संस्कारो ह्यौपाधिकत्वात्तदानीं निवर्तते। तत एव न स्मृतिः स्वर्गनरकादिगतस्तु प्रतिकूल

मनुकूलं च प्राग्भुक्तं स्मरेत्; न तथा मुक्त इति भावः। तथापि द्रष्टुरवस्थानं कारणादिमात्रनिवृत्तिं च श्रुत्यैव स्थापयति—**एवमिति**। **षोडशकलाः**; भूतेन्द्रियाणि; औपाधिकसमुदायैकदेशत्वात् कलात्वोक्तिः। पुरुषोऽत्र परमात्मा; तत्प्राप्तिदशायामिन्द्रियादयो न जीवमनुबध्नन्तीत्यर्थः। देहादेरीश्वराच्च व्यावृत्तस्य जीवस्य ज्ञातृत्वे श्रुतिमाह—**तस्माद्वा इति**। यथाश्रुति सूत्रकृता निर्णीतत्वमाह—**वक्ष्यति चेति**। पूर्वं श्लोकतः संक्षिप्तमिह प्रपञ्चितमित्यपुनरुक्तिः। स्वपदवर्णनं च भाष्यकृत्यं पठन्ति। एवं श्रुत्यादिभिर्ज्ञातुरनात्मत्वं निरस्तमिति निगमयति—**अत इति**। अन्याधीनप्रकाशत्वस्याभावादित्यर्थः।

आत्मनोऽहंत्वकर्तृत्वज्ञातृत्वादिविधूनने।
वैफल्यं सर्वशास्त्राणां व्यञ्जयत्येवकारतः॥ ४८८॥

ननु "प्रज्ञानघन एव" इत्यवधारणादन्ययोगव्यवच्छेदेन प्रकाशमात्रत्वं स्यादित्यत्राह—**नेति**। अयं भावः—यथा "रसघन एव" इत्यत्र रूपादेरनिषेधः, तथात्रापि मानसिद्धस्य ज्ञातृत्वादेः। अतो जडत्वगन्धाभाव एवात्रावधारणस्थाप्य इति।

### मूलभावप्रकाशिका

**तथाहि श्रुतय इति**; ज्ञानरूपत्वे ज्ञानगुणकत्वे च श्रुतयः सन्तीत्यर्थः। **स यथेति**; यथा लवणखण्डो बाह्याभ्यन्तरविवेकमन्तरेण सर्वश्चापि लवणरसपूर्णो भवति, एवमात्मापि सर्वतो ज्ञानैकरस इत्यर्थः। **विज्ञानमय इति**; ज्ञानधर्मत्वमुच्यते। **ज्योतिः पुरुष इति**; ज्योतिःशब्देनात्मनः स्वप्रकाशत्वलक्षणं ज्ञानत्वमुच्यते। "स उत्तमः पुरुषः" "स तत्र पर्येति" "जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्" इति हि श्रुतिवाक्यम्। अत्र जुगुप्सितं परित्यक्तं शरीरं स्मरन्नेव जक्षणादिकं कुर्वन् पर्येति परितो ब्रह्मानुभवतीति ज्ञातृत्वमुक्तमिति भावः। **न प्रकाशमात्रमिति**; ज्ञातृत्वशून्यविषयाभासकज्ञानमात्रं न भवतीत्यर्थः।

### श्रीभाष्यम्

प्रकाशत्वादेव कस्यचिदेव भवेत्प्रकाशः, प्रदीपादिप्रकाशवत्। तस्मान्नात्मा भवितुमर्हति संवित्। संविदनुभूतिज्ञानादिशब्दाः संबन्धिशब्दा इति च शब्दार्थविदः। न हि लोकवेदयोर्जानात्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः।

### श्रुतप्रकाशिका

अथ साश्रयत्वे तर्कमाह—**प्रकाशत्वादेवेति**। **प्रकाशत्वात्**; विषयेण साक्षात्संबध्य साक्षात् परंपरया वा ज्ञायमानत्वेनापरोक्षव्यवहारानुगुण्यहेतुत्वादित्यर्थः। अनेन स्वरूपभूतज्ञानेन्द्रियलिङ्गादिव्यावृत्तिः। हेत्वन्तरमप्याह—**संविदनुभूतीति**। संबन्धिशब्दत्वं। शब्दस्वभावायत्तमित्याशङ्क्याह—**न हि लोकवेदयोरिति**, यत्रार्थस्वरूपस्यान्यथात्वं दृश्यते तत्र शब्दस्वभावायत्तत्वमाश्रयणीयम्; यथा दारा इत्यादिषु बहुत्वादेः। यत्र नान्यथात्वं तत्रार्थस्वभावायत्तत्वमेव; यथा भार्येत्यादावेकत्वादेः। तथा लोकवेदयोः सकर्मकर्तृत्वदर्शनादर्थस्वभावायत्तमेव संबन्धिशब्दत्वमित्यभिप्रायः। यद्वा कर्मकर्तृसंबन्धित्वं व्युत्पत्तिनिमित्तमस्तु, न प्रवृत्तिनिमित्तम्; तत्तु ज्ञप्तिमात्रमित्यत्राह—**न हि लोकेति**। प्रयोगाधीनं हि प्रवृत्तिनिमित्तान्तरकल्पनम्। प्रयोगश्च संबन्धिन्येवार्थ इति नार्थान्तरकल्पना स्यात्। स्वरूपभूतज्ञानवाचिशब्दानां संबन्धिशब्दत्वं त्वन्मतेऽप्यनुपपन्नमिति चेत्, न; स्वरूपगोचराणां स्वयंप्रकाशत्वे रूढानां ज्ञानादिशब्दानामनुभूत्यादिशब्देभ्यः शब्दान्तरत्वात्। अतः संबन्धिशब्दतोपदेशस्तु धर्मभूतज्ञाने सावकाशोऽस्मन्मते, विषयाश्रयसंबन्धिज्ञानस्यैव विषयाश्रयसंबन्धबाधेन निराश्रयत्वनिर्विषयत्वाभ्युपगमात्। त्वन्मते संबन्धिशब्दत्वोपदेशो निरर्थक इति भावः।

### भावप्रकाशिका

**व्युत्पत्तिनिमित्तमस्त्विति**; यथा 'वासस्वी देवदत्तपदवाच्यः' इत्यत्र वासो देवदत्तपदव्युत्पत्तिदशायां निमित्तमेव, न तु शक्यकोटिप्रविष्टं तथेत्यर्थः। **धर्मभूतज्ञाने सावकाशोऽस्मन्मत इति**; ननु परमतेऽपि 'ज्ञायतेऽनेन' इति व्युत्पत्त्या अन्तःकरणवृत्तिर्ज्ञानमिति वृत्तिज्ञाने संबन्धिशब्दः सावकाश इति चेत्—न; जडायामन्तःकरणवृत्तौ ज्ञानत्वोक्तेरसंगतत्वात्, भावप्रत्ययान्तज्ञानपदवाच्य एव संबन्धित्वव्यवहाराच्चेति भावः।

### श्रुतप्रदीपिका

अनुग्राहकान्तरमाह—**प्रकाशत्वादिति**। विषयेण साक्षात् संबन्धितया साक्षाद्वा प्रणाड्या वा विषयव्यवहारहेतुत्वं प्रकाशत्वम्। हेत्वन्तरमाह—**संविदिति**। दारादिशब्दवत् शब्दस्वभावात् तथात्वम्; न त्वर्थस्वभावादित्यत्राह—**न हीति**। अर्थानुपपत्त्य-

भावान्न तथेति भावः । त्वन्मतेऽपि स्वरूपविषयस्य कथं संबन्धिशब्दत्वम् ? उच्यते—स्वमते स्वसिद्धौ रूढः संबन्धिशब्दतयोपदेशसाफल्यं धर्मभूतज्ञाने । परमते तु तदपि न, संबन्धितया भातस्यैव विषयाश्रयशून्यत्वसमर्थनात् ।

### तत्त्वटीका

ज्ञातृत्वनिषेधे तदपेक्षं प्रकाशत्वमपि न स्यादित्यभिप्रायेणाह—**प्रकाशत्वादिति** । व्यवहारानुगुण्यप्रयोजकत्वादित्यर्थः । उक्तमर्थं परंपरया व्यवहारानुगुण्यापादके निदर्शयति—**दीपादीति** । न हि पुरुषमनपेक्ष्य दीपस्यार्थप्रकाशकत्वमिति भावः । संविद आत्मधर्मत्वं वदन्त्या श्रुत्यैव तस्या आत्मत्वं निषिद्धमित्यभिप्रायेणाह—**तस्मादिति** । तस्या विषयाश्रयवत्त्वे निरूपकसंमतिमाह—**संविदिति** । व्युत्पत्तेस्तथात्वेऽपि प्रयोगतोऽन्यथा व्यवस्था स्यादित्यत्राह—**न हीति** । न चात्र दारादिशब्देष्विव शब्दप्रतिपन्नमपि बाध्यम्, बाधकाभावस्योक्तत्वात् । आत्मस्वरूपविषयस्य ज्ञानशब्दस्य युष्मन्मते कथं संबन्धिशब्दत्वमिति चेत्, तन्न ; धर्मभूतज्ञाने संबन्धिशब्दस्य सार्थत्वात् ; स्वप्रकाशत्वेन निमित्तेन धर्मधर्मिणोः शब्दानुवृत्तेः । तव तु दृश्यमानविषयाश्रयसंबन्धापह्नवात् संबन्धिशब्दोपदेशवैफल्यमेव । ननु यथा 'गच्छति' इति व्युत्पत्तावपि गोशब्दो जातिविशेषार्थः, तद्वदत्रापि भ्रान्तिसिद्धकर्मकर्तृविशिष्टव्युत्पत्तावपि तद्रहितस्वरूपे शक्तिरिति चेत्—न ; गतेरव्याप्त्यतिव्याप्तिभ्यां गोशब्दे गोत्वं निमित्तीकृतम् ; इह तु न तथा । यद्यप्यव्याप्तिरात्मनि त्वयोक्ता, तथापि ज्ञातारमात्मानमन्यमवस्थाद्वयं च सत्यमनादर्तुस्ते दृष्टातिक्रमनिमित्तं नास्ति ; निर्विषयनिराश्रयसंवित्साधनं चाद्याप्याशामोदकमात्रमिति भावः ।

### मूलभावप्रकाशिका

तत्र हेतुमाह—**प्रकाशत्वादेवेति** । न च 'प्रयोगो दृष्टचरः' इत्यन्तेयमुक्तिः, 'स्वयंप्रकाशोऽयमात्मा' इति पूर्वोक्तविरुद्धेति वाच्यम्, उत्पादविनाशशालिनो विषयावभासकज्ञानस्यात्मत्वं न संभवतीत्येतत्तात्पर्यात् ।

### श्रीभाष्यम्

**यच्चोक्तमजडत्वात् संविदेवात्मेति ; तत्रेदं प्रष्टव्यम्—अजडत्वमिति किमभिप्रेतम् ? स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत्, तथा सति**

**दीपादिष्वनैकान्त्यम्, संविदतिरिक्तप्रकाशधर्मानभ्युपगमेनासिद्धिर्विरोधश्च । अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारान्निरस्तम् ।**

### श्रुतप्रकाशिका

अथाजडत्वात् संविदात्मत्वसमर्थनं दूषयितुमनुवदति—**यच्चोक्तमिति** । अजडत्वं नाम किं स्वसत्ताप्रयुक्तप्रकाशत्वम्? उत अव्यभिचरितप्रकाशसत्ताकत्वम्? उत स्वस्मै प्रकाशमानत्वम्? उत स्वस्मै स्वयंप्रकाशमानत्वम्? उत स्वयंप्रकाशत्वम्? इति पञ्चधा विकल्पमभिप्रेत्याह—**अजडत्वमिति** । **किमभिप्रेतमिति**; 'अहं जानामि' इति प्रत्यक्षबाधः सर्वसाधारणं दूषणम् । प्रथमं स्वसत्ताप्रयुक्तप्रकाशत्वपक्षं दूषयितुमाह—**स्वसत्तेति**; स्वसत्ताप्रयुक्तः प्रकाशो यस्येति बहुव्रीहिः । वक्ष्यमाणासिद्धिदूषणोपयोगिभेदज्ञापनार्थं स्वसत्ताप्रयुक्तशब्दः । अनैकान्त्यमाह—**तथा सतीति** । स्वपक्षे ज्ञातुरात्मत्वात्सपक्षभूते तस्मिन् विपक्षेऽनात्मनि दीपे च वृत्त्यानैकान्त्यं पक्षत्रयवृत्तित्वलक्षणमुक्तम् । परपक्षे त्वनियतत्वमेवानैकान्त्यम्, सपक्षाभावात् । दूषणान्तरद्वयमाह—**संविदतिरिक्तेति** । संवित् प्रयोजिका, प्रकाशः प्रयोज्य इति तदतिरेकेणानभ्युपगमादसिद्धिः । अभ्युपगमे निर्विशेषत्वविरोधः । इमावसिद्धिविरोधौ विकल्पितसर्वशिरःसाधारणावनुसन्धेयौ । यद्वा विरोधः पक्षविपक्षयोरेव वर्तमानत्वं, पक्षभूतसंविदि विपक्षे दीपादौ च वृत्तेः । परमतमात्रपर्यालोचनया विरोध उक्तः । अत्र स्वसत्ताप्रयुक्तप्रकाशत्वमित्यत्र प्रकाशशब्देन किं साक्षाद्वा परंपरया वा व्यवहारानुगुण्यं विवक्षितम्? उत परंपरयैव? उत साक्षादेव? इति विकल्पोऽभिप्रेतः । प्रथमं शिरः स्वपरदर्शनपर्यालोचनयाभिहितयोरनैकान्त्यविरोधयोरन्यतरेण निरस्तं भवति । द्वितीये त्वसिद्धिः, परंपरयैव व्यवहारानुगुण्यस्य ज्ञप्तावुभयवाद्यनभिमतत्वात् । तृतीये सत्तातिरिक्तप्रकाशानभ्युपगमनिबन्धनासिद्धिर्निर्विशेषत्वविरोधश्च स्यातामित्यभिप्रायः । द्वितीयं पक्षं प्रतिक्षिपति—**अव्यभिचरितेति** । न व्यभिचरति प्रकाशो यस्य सत्तां सोऽव्यभिचरितप्रकाशसत्ताकः । प्रयोज्यप्रयोजकत्वाभावेऽपि विद्यमानदशायां सर्वदा प्रकाशमानत्वमित्यर्थः ।

### भावप्रकाशिका

**उत स्वस्मै स्वयंप्रकाशमानत्वमिति**; अत्र केचित्—स्वस्मै भासमानत्वमिति तृतीये

विकल्पे संविदसिद्ध्या दूषिते सति स्वस्मै स्वयंभासमानत्वमिति चतुर्थविकल्पस्योत्थानासंभवेन 'तस्मात् स्वात्मानं प्रति स्वसत्तयैव सिध्यन्नजडोऽहमर्थ एवात्मा' इति भाष्यस्य चतुर्थविकल्पदूषणत्वं न युक्तम्। तस्मादित्यादिभाष्यस्य पूर्वप्रस्तुतविकल्पदूषणोपसंहारे स्वरसस्य पक्षान्तरप्रतिक्षेपकपरतया व्याख्यानमपि क्लिष्टम्। तथा तस्यैव भाष्यस्य ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वं ज्ञानान्तरनिरपेक्षप्रकाशत्वमित्येवंविधपञ्चमपक्षविकल्पद्वयनिरसनपरत्ववर्णनमपि क्लिष्टम्। न हि 'तस्मात् स्वात्मानं प्रति स्वसत्तयैव सिध्यन्नजडोऽहमर्थ एवात्मा' इति भाष्यं ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वरूपपञ्चमपक्षविकल्पस्य दूषणीभवितुमर्हति। तस्मिन् हि पक्षेऽहमर्थ एव व्यभिचार उद्भाव्यः, न त्वहमर्थ एवात्मेति, ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वस्याहमर्थ इव संविद्यपि सत्त्वेनाहमर्थोऽप्यात्मेत्येव वक्तुमुचिततया 'अहमर्थ एवात्मा' इति वक्तुमुचितत्वात्। ततश्च स्वसत्ताप्रयुक्तप्रकाशत्वं वा अव्यभिचरितप्रकाशसत्ताकत्वं वा तत्त्वे सति स्वस्मै भासमानत्वं वा अन्यसंबन्धानपेक्षप्रकाशत्वं वेति चतुर्धा विकल्पोऽभिमतः। भाष्येऽपि तथैव प्रतीयत इति वदन्ति। **प्रत्यक्षबाधः सर्वसाधारणं दूषणमिति**; 'अहम्' इति भासमानस्यैवात्मत्वेन तस्य ज्ञानाश्रयतया ज्ञानभेदेनैव प्रतीतेरिति भावः। यद्वा 'अहं जानामि' इति तस्याहमर्थधर्मत्वग्राहिप्रमाणबाध इत्यर्थः। **अनैकान्त्यविरोधयोरन्यतरेणेति**; स्वदर्शने पक्षत्रयवृत्तित्वरूपमनैकान्त्यम्; परदर्शने पक्षविपक्षमात्रवृत्तित्वरूपविरोध इत्यर्थः। **न व्यभिचरति प्रकाशो यस्य सत्तामिति**; अत्र केचित्—न व्यभिचरति प्रकाशं यस्य सत्तेति पाठः समीचीनः, तस्यैवार्थस्योचितत्वात्। सत्ताया एव प्रकाशव्याप्यत्वस्य विवक्षितत्वात्, भाष्यस्थाव्यभिचरितशब्दस्य कर्मणि क्तप्रत्ययान्तत्वेन कर्तरि क्तप्रत्ययान्तत्वाभावादिति वदन्ति।

### श्रुतप्रदीपिका

अजडत्वहेतुं दूषयितुमाह—**यच्चोक्तमिति**। चतुर्धा विकल्पमभिप्रेत्याह—**तत्रेदमिति**। प्रथमं शङ्कते—**स्वसत्तेति**। तत्रापि साक्षाद्वा प्रणाड्या वा व्यवहारानुगुण्यस्य स्वसत्ताप्रयुक्तत्वं विवक्षितमित्यभिप्रेत्य प्रथमेऽनैकान्त्यमाह—**तथेति**। ज्ञातृत्वसिद्धिमुपजीव्य दूषणमुच्यते। पक्षे संविद्यस्मदभिमतात्मनि ज्ञातर्यनात्मनि दीपे च वृत्त्यानैकान्त्यमित्यमिप्रायः। दूषणान्तरद्वयमाह—**संविदिति**। **विरोधः**; निर्विशेषत्वविरोधः। विशेषाभ्युपगमेऽपसिद्धान्तः। यद्वा ज्ञात्रात्मत्वसिद्धिमनुपजीव्याह—**संविदिति**। पक्षे संविदि विपक्षेऽनात्मनि

दीपादौ च वृत्त्या विरोधः। साक्षादिति पक्षे प्रणाड्या वेति पक्षे चासिद्धिस्वमतविरोधौ तुल्यौ। इदं दूषणद्वयमुत्तरत्राप्यनुसन्धेयम्। प्रथमाभिप्रेते चतुर्धा विकल्पे द्वितीयं शिरो दूषयति—**अव्यभिचरितेति**। परमतेन सुखादौ व्यभिचारः।

तत्त्वटीका

अथ संविदात्मत्वानुमानं दूषयितुमनुवक्ति--**यच्चेति**। एवकारो विरोधं परमते लाघवाभावं च व्यनक्ति। उक्तहेतौ विकल्पमुपक्षिपति---**तत्रेति**। निराचिकीर्षितकोटि-चतुष्कमभिसन्धाय पृच्छति—**अजडत्वमिति**। स्वप्रकाशे स्वसद्भावस्य प्रयोजकत्वमिति शङ्कते—**स्वसत्तेति**। अत्र स्वसत्तामात्रप्रयुक्तप्रकाशत्वस्यासिद्धत्वात् स्वसत्तायाः स्वप्रकाश-सामग्र्येकदेशत्वं वाच्यम्; तस्या अनात्मन्यपि वृत्तेः सपक्षवृत्त्यभावाच्च विरुद्धहेत्वाभास-त्वमभिप्रेत्याह—**तथेति**। स्वमते ज्ञातुरात्मतया तस्मिन् सपक्षे हेतुवृत्तेः साधारणानैका-न्तिकत्वमिहोच्यत इति केचित्। न चानुभूतेः सत्ताख्यो धर्मः, सत्ताशब्देन स्वरूपविवक्षा-यामपि तत्प्रयुक्तप्रकाशधर्मानभ्युपगमात्। हेतोः स्वरूपासिद्धिं तदभ्युपगमे सिद्धान्तविरोधं चाभिप्रेत्याह—**संविदिति**। उत्तरकोटिष्वपि दूषणद्वयमिदं द्रष्टव्यम्। यावत्सत्त्वं प्रकाश-मानत्वं हेतुरित्याशङ्क्याह—**अव्यभिचरितेति**। यद्यप्यस्मन्मते सुखादेर्ज्ञानविशेषत्वात्स्वप्र-काशत्वम्; यद्यपि च काश्यपादिमते तेषामस्मदादिमानसप्रत्यक्षविषयत्वं विषयोत्पत्तिसापेक्ष तया तदनन्तरभावि, तथापि त्वन्मतेऽध्यस्तान्तःकरणधर्मभूतेषु सुखादिषु विपक्षेषु हेतुवृत्तिः सिद्धा। तद्व्यतिरिक्तत्वे सतीति विशेषणेऽपि न निस्तारः।

प्रकाशाव्यभिचारो हि घटादिष्वपि ते समः।
भ्रान्तिसिद्धत्वसिद्धान्तान्न तेष्वात्मत्वमिच्छसि ॥ ४८९ ॥

अज्ञातत्वदशास्तीति घटादिषु यदि भ्रमः।
संविद्यपि तथास्त्येव तज्जाड्यं हि परे विदुः ॥ ४९० ॥

अज्ञातमपि ते पक्षे साक्षिणा ज्ञायते तथा।
अतो ज्ञातवदज्ञातं ज्ञातमित्यभिमन्यसे ॥ ४९१ ॥

आदिशब्देन परमते घटादेरपि सुखादितुल्यत्वं भाषितमेव। ननु सुखादिषु पुरुषभेदेन यावत्सत्त्वं प्रकाशमानत्वाभावान्न तत्रातिचार इति चेत्—न; संविदोऽपि तथात्वात्।

एकैव संवित् सर्वेषां प्रकाशत इति चेत्, एकमेव सुखं सर्वेषामिति किं न स्यात्? भेदक-बलादिति चेत्, सममेतत्।

मूलभावप्रकाशिका

किमजडत्वं स्वसत्ताप्रयुक्तप्रकाशकत्वं वा, अव्यभिचरितप्रकाशसत्ताकत्वं वा, एतद्विशेषितं प्रकाशकत्वलक्षणं स्वस्मै भासमानत्वं वेति विकल्प्य दूषयति—**अजडत्वमिति**। ततश्च भेदगर्भं सत्ताप्रयुक्तत्वं नास्तीति भावः। अभ्युपगमे दोषमाह—**विरोध इति**। ज्ञातृज्ञेय-व्यतिरेकेण लब्धसद्भावस्य ज्ञानस्य स्वाभाविक एव भेदः; तस्मान्न सजातीयभेदापलाप इत्यर्थः।*

श्रीभाष्यम्

**यद्युच्येत—सुखादिरव्यभिचरितप्रकाशोऽप्यन्यस्मै प्रकाशमानतया घटादिरिव जडत्वेनानात्मेति। ज्ञानं वा किं स्वस्मै प्रकाशते? तदपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते—'अहं सुखी' इतिवत् 'जानाम्यहम्' इति। अतः स्वस्मै प्रकाशमानत्वरूपमजडत्वं संविदसिद्धम्। तस्मात् स्वात्मानं प्रति स्वसत्तयैव सिध्यन्नजडोऽहमर्थ एवात्मा। ज्ञानस्यापि प्रकाशता तत्संबन्धायत्ता। तत्कृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयचेतनं प्रति प्रकटत्वम्, इतरं प्रत्यप्रकटत्वं च। अतो न ज्ञप्तिमात्रमात्मा, अपितु ज्ञातैवाहमर्थः।**

श्रुतप्रकाशिका

तस्यानात्मत्वेन संप्रतिपन्नेषु सुखदुःखादिषु व्यभिचार उक्तः; अथ तत्परिहार-मुखेन स्वस्मै प्रकाशमानत्वपक्षमुपक्षिपति—**यद्युच्येतेति**। परिहरति—**ज्ञानं वेति**। कस्येत्यत्राह—**तदपीति**। परस्मै भासमानत्वमुपपादयति—**अहमिति**। तस्मादेवं-रूपाजडत्वमसिद्धमित्याह—**अत इति**। अथ चतुर्थं शिरो दूषयन्नसिद्धिमाह—**तस्मा-दिति**। स्वयंप्रकाशत्वपक्षेऽपि स्वयंप्रकाशत्वं नाम किं ज्ञानकर्मतामन्तरेण व्यवहारानु-

* मूलभावप्रकाशिका एतावत्पर्यन्तमेवोपलभ्यते। उपरितनभागस्य नोपलभ्यते।

गुणत्वम्? उत ज्ञानान्तरनिरपेक्षप्रकाशत्वमित्यभिप्रेते विकल्पे प्रथमं शिरः **तस्मादिति** ग्रन्थेन दूषितम्। इतरात्मव्यावृत्त्यर्थं **स्वात्मान**मित्युक्तम्। **स्वसत्तयैव सिध्यन्** इत्यनेन स्वयंप्रकाशत्वमुक्तम्। स्वस्मै स्वयं भासमानत्वमहमर्थस्याधिकम्। स्वस्मै स्वयं भासमानस्य स्वयं भासमानत्वमस्तीत्यभिप्रायेण **स्वात्मानं प्रति स्वसत्तयैवे**त्युक्तम्। तेन ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वं ज्ञातर्यप्यस्तीति तद्व्यभिचरितम्, स्वपक्षेऽनात्मनि ज्ञातर्यपि विपक्षभूते वृत्तेरिति दर्शितम्। ज्ञानान्तरनिरपेक्षप्रकाशत्वं संविद्यसिद्धम्, तस्याः स्वरूपभूतज्ञानाधीनत्वात्; अहमर्थस्यैव हि तदित्यभिप्रायः **सत्तयैवे**त्यनेन सूचितः। तमेव विवृणोति—**ज्ञानस्यापीति**। तत्संबन्धायत्तत्वमुपपादयति—**तत्कृतमेव हीति**। ज्ञानस्फुरणस्याश्रयसंबन्धोऽपि सामग्र्यन्तर्भूत इति भावः। अजडत्वात्संविदात्मत्वासिद्धिं निगमयति—**अत इति**।

## भावप्रकाशिका

**परस्मै भासमानत्वमुपपादयतीति**; 'अहं सुखी' इत्यत्राहमर्थस्य सुखशेषित्वभानात् सुखस्यैव प्रकाशरूपत्वात् सुखप्रकाशशेषित्वलक्षणं प्रकाशफलित्वमपि 'अहं सुखी' इत्यत्र भासत इति भावः।

## श्रुतप्रदीपिका

तृतीयं शङ्कते—**यदीति**। असिद्ध्या दूषयति—**ज्ञानं वेति**। उक्तलक्षणमजडत्वमसिद्धमित्यर्थः। चतुर्थं तु स्वप्रकाशत्वम्; तद् दूषयति—**तस्मादिति**। ज्ञानकर्मतां विना भातं चेत् ज्ञातर्यपि स्वाभिमतविरोधः। ज्ञानान्तरानपेक्षत्वं चेदसिद्धम्, आश्रयापेक्षत्वादित्याह—**ज्ञानस्यापीति**। उपपादयति—**तदिति**। **प्रकटत्वम्**; अपरोक्षतया भासमानत्वम्। निगमयति—**अत इति**।

## तत्त्वटीका

अजडत्वं नाम स्वस्मै प्रकाशमानत्वमिति कोट्यन्तरे प्रस्तुतदोषातिक्रमशङ्कामनुवक्ति—**यदीति**। तत्रापि स्वरूपासिद्धिमाह—**ज्ञानमिति**। वाकारश्चार्थः। किं क्षेपे। तद्विवृणोति—**तदपीति**। तदभावशङ्कामुपलम्भेन परिहरति—**अहमिति**। दृढधीबलादसिद्धिं निगमयति—**अत इति**।

परेणैव घटाद्यर्थः परस्मा एव भासते।
स्वान्याभ्यां पुरुषः स्वस्मै परस्मै परधर्मतः॥ ४९२॥

धीः स्वान्याभ्यां स्वाश्रयाय तदन्यस्मै तु तद्धिया ।
परस्मा एव भातत्वात्पराची सा घटादिवत् ॥ ४९३ ॥

उक्तस्य कोटित्रयस्य संविद्यसिद्ध्यादिदुष्टत्वादहमर्थे संभवाच्च तस्यात्मत्वं दुस्त्यजमित्याह—तस्मादिति । कोट्यन्तरनिरासात्स्वयंप्रकाशत्वमवशिष्यते । तच्च स्वगोचरज्ञाननिरपेक्षप्रकाशत्वम् । तस्य ज्ञातरि स्थापितत्वात्तस्याप्यात्मत्वं स्यादित्यपि सूच्यते ।

अनिष्टे ज्ञातुरात्मत्वे तत्स्थो हेतुरसौ कथम् ।
इष्टे तु कथमात्मत्वं तद्धर्मस्य प्रसाध्यते ॥ ४९४ ॥

किंच अन्यनिरपेक्षत्वमात्रं वा ज्ञानमात्रनिरपेक्षत्वं वा हेतुश्चेत्, तयोः संविद्यसिद्धिमाह—ज्ञानस्येति । यद्वा ज्ञातृपरित्यागे ज्ञानस्य स्वयंप्रकाशत्वं न सिध्येदिति स्वरूपासिद्धिसूचनमिदम् । **प्रकाशता**; व्यवहारानुगुण्यापादकता । तत्संबन्धाभावे प्रकाशमानत्वमपि तस्या न सिध्येदित्यभिप्रायेणाह—**तत्कृतमिति** । **प्रकटत्वम्**; स्वयमपि स्वव्यवहारानुगुण्यापादकत्वमिति यावत् । परोक्तनिरसनं स्वोक्तस्थापनं च निगमयति—**अत इति** ।

श्रीभाष्यम्

अथ यदुक्तम्—अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयावभासते रजततयेव शुक्तिः, निरधिष्ठानभ्रमानुपपत्तेरिति । तदयुक्तम्, तथा सत्यनुभवसामानाधिकरण्येनानुभविताहमर्थः प्रतीयेत—'अनुभूतिरहम्' इति, पुरोऽवस्थितभास्वरद्रव्याकारतया रजतादिरिव । अत्र तु पृथगवभासमानैवेयमनुभूतिरर्थान्तरमहमर्थं विशिनष्टि दण्ड इव देवदत्तम् । तथा हि—'अनुभवाम्यहम्' इति प्रतीतिः । तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन् 'अनुभवाम्यहम्' इति प्रत्ययो दण्डमात्रे 'दण्डी देवदत्तः' इति प्रत्ययवद्विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत ।

श्रुतप्रकाशिका

अथाहमर्थस्य भ्रान्तिसिद्धत्वं दूषयितुमनुवदति—**अथ यदुक्तमित्यादिना** ।

संविदपि मिथ्या किं न स्यादित्यत्राह—**निरधिष्ठानेति**। अनुभूतिव्यतिरिक्तापारमार्थ्यसिद्धवत्कारेणायं हेतुरुक्तः। दूषयति—**तदयुक्तमित्यादिना**। अधिष्ठानसामानाधिकरण्येनाध्यस्तप्रतीतिं दृष्टान्तेनोपपादयति—**पुरोऽवस्थितेति**। पक्षे तद्विपर्ययं दर्शयति—**अत्र त्विति**। **पृथगवभासमाना** ; व्यधिकरणतयावभासमाना। तथा प्रतीतिं दर्शयति—**तथा हीति**। ततः किमित्यत्राह—**तदेवमिति**। **तदेवम्** ; उक्तप्रकारेण धर्मधर्मिभावप्रतीतौ विशेषणतया प्रतिपन्ने तद्विशेषणविशिष्टस्याध्यासोऽनुपपन्न इत्यर्थः। तत्र न संबन्धमात्राध्यासः, तथा सति संबन्धिनो ज्ञातुः पारमार्थ्यप्रसङ्गात्। न च तथाभ्युपेतम्। ननु विशेषणे विशिष्टाध्यासो दृश्यते ; यथा—प्रभायां मण्यध्यास इति। इदं चोद्यं **पृथगवभासमाने**त्यनेन परिहृतम्। न हि तथा वैयधिकरण्येन विशेषणीभूता प्रभा। किं तु 'अयं मणिः' इति मण्यध्यासाधिष्ठानभूता प्रभा मणिसामानाधिकरण्येनैव हि भाति। नन्वनुभवसामानाधिकरण्येन प्रतीतिप्रसञ्जनमयुक्तम्, 'दिक्षु मालिन्यम्' 'नभसि रागः' इति वैयधिकरण्येनाप्यध्यासदर्शनात्। नैवम् ; पदद्वयप्रवृत्तिनिमित्तयोरेकाश्रयवृत्तित्वं हि सामानाधिकरण्यम्। इह दिक्त्वमालिन्ययोः नभस्त्वारुण्ययोश्चैकाश्रयवृत्तित्वादर्थतः सामानाधिकरण्यमस्ति। वैयधिकरण्यं तु शब्दगतम्। 'दिशो मलिनाः' 'दिक्षु मालिन्यम्' इत्यत्र कोऽर्थभेदः? अध्यासेषु धर्मैक्यप्रतीतिरवर्जनीया। अतः सैवात्रापाद्यते—**अनुभूतिरहमितिप्रतीयेतेति**। ननु 'अनुभूतिरहम्' इति प्रतीतिप्रसङ्गो दुर्वचः। अनुभूतित्वं ह्यधिष्ठानासाधारणाकारः। तदस्फुरणं भ्रमानुगुणमेव, न हि 'शुक्ती रजतम्' इति प्रतीयत इति। एवं तर्ह्यनुभूतेर्निर्विशेषतया रूपान्तरेण स्फुरणाभावादनुभूतितया स्फुरणे विरोधाच्च तदधिकरणाध्यासानुदयः। अविरोधेन कृत्स्नाध्यासे ग्रन्थोक्तसामानाधिकरण्यप्रतीतिप्रसङ्गो दुर्वारः। एतदभिप्रायेण हि **पुरोऽवस्थितभास्वरद्रव्याद्याकारतया रजतादिरिवे**त्युक्तम्। नन्वध्यासानुदयो दुर्वचः। विषयोपश्लिष्टानुभूतिः 'अहं जानामि' इत्यत्र ज्ञात्रध्यासे प्रतीयते। सा तु नाधिष्ठानम्। निर्विषया निराश्रयानुभूतिरेवाधिष्ठानम्। तदप्रकाशादध्यासोदय इति। उच्यते—अप्रतिपन्नस्याधिष्ठानत्वायोगात् विषयाश्रयशून्यायाः संविदो योग्यानुपलब्धिनिरस्तत्वात्। विषयप्रकाशकसंविद एवात्मत्वाभ्युपगमेन त्वया स्वयंप्रकाशत्वसमर्थनाच्च सैवाधिष्ठानमिति तदवभासे तस्याश्च शुक्तित्ववत् भ्रमविरोधित्वेऽध्यासानुदय इति।

भावप्रकाशिका

**अथाहमर्थस्य भ्रान्तिसिद्धत्वमिति ;** न च भाष्ये **ज्ञातृतयावभासते** इति ज्ञातुरेव भ्रान्तिसिद्धत्वं प्रतीयते, नाहमर्थस्येति वाच्यम् ; अहमर्थस्यैव ज्ञातृत्वात् । अत एव परिहारभाष्ये **अनुभविताहमर्थः प्रतीयेत अनुभूतिरहमितीत्युक्तम्** । भाष्ये— **अनुभूतिः परमार्थतो निर्विषया निराश्रयेति ;** अत्राश्रयविषयशब्दौ भावप्रधानौ ; ज्ञानाश्रयत्वज्ञानविषयत्वशून्येत्यर्थः । सा ज्ञातृता भ्रान्तिसिद्धा रजततेव शुक्तिशकलस्य, अनुभूतेः स्वात्मनि कर्तुत्वायोगादिति पूर्वपक्षभाष्यानुरोधात् । अत एव ज्ञातृत्वस्य भ्रान्तिसिद्धत्वोपपादने परमार्थतो विषयाश्रयशून्यत्वोपपादनमनुपयुक्तमिति शङ्कापि निरस्ता । अत्र च ज्ञानविषयत्वशून्यविषयत्वोपपादनं दृष्टान्ततया, न प्रकृतोपयोगितयेति द्रष्टव्यम् । यद्वा **निराश्रया ;** तादात्म्यसंबन्धेनाध्यस्यमानज्ञातृशून्येत्यर्थः । अत एव **अनुभवसामानाधिकरण्येनाहमर्थः प्रतीयेतेति** ग्रन्थस्वारस्यं द्रष्टव्यत् । **तत्र न संबन्धमात्राध्यास इति ;** येनाहमर्थवैयधिकरण्येन प्रतीतिः 'दर्पणे मुखम्' इतिवदुपपद्येतेति भावः । **प्रभा मणिसामानाधिकरण्येनैव हि भातीति ;** ननु प्रभायां प्रभाश्रयमण्यध्यासवदनुभूतावनुभूत्याश्रयाहमर्थाध्यासः कुतो न संभवतीति चेत्—न ; अत्राधिष्ठानप्रभातिरिक्तप्रभाश्रयाभेदाध्यासः संभवेत् । अनुभूतौ द्वित्वाभावान्न तथा संभवतीति भावः । **पदद्वयप्रवृत्तिनिमित्तयोरिति ;** ननु मालिन्यपदप्रवृत्तिनिमित्तस्य मालिन्यत्वस्य रागपदप्रवृत्तिनिमित्तस्य रागत्वस्य च कथं दिङ्नभोवृत्तित्वम् ? कथं वा "सर्वदिक्ष्वपि सैव मे" इति सर्वासु दिक्षु कामिन्यध्यासे दिक्त्वकामिनीत्वसामानाधिकरण्यमिति चेत्— न ; तादृशस्थले संसर्गारोपरूपतया वैयधिकरण्येन भ्रमसंभवात् । न चात्रापि संसर्गारोपोऽस्त्विति वाच्यम्, तथा हि सति 'दिक्षु कामिनी' 'दिक्षु मालिन्यम्' इतिवत् 'अनुभूतावहम्' इति प्रतीतिप्रसङ्ग इति भावः । **तदधिकरणाध्यासानुदय इति ;** अनुभूतित्वास्फुरणस्य भ्रमहेतुत्वं वदता अनुभूतिस्फुरणमध्यासहेतुरित्युक्तं स्यात् । ततश्चाधिष्ठानस्फुरणरूपहेत्वभावादध्यासानुदयप्रसङ्ग इति भावः । अधिष्ठानस्फुरणस्य हेतुत्वाभावादध्यासोदयः संभवतीत्याक्षिपति—**नन्वध्यासानुदयो दुर्वच इति । तदप्रकाशादध्यासोदय इति ;** तत्प्रकाशस्याहेतुत्वादध्यासोदय इत्यर्थः । **अप्रतिपन्नस्याधिष्ठानत्वायोगादिति ;** अध्यासदशायामप्रतिपन्नस्येत्यर्थः । दूषणान्तरमाह—**विषयाश्रयशून्याया इति ।** केचित्तु—**अप्रतिपन्नस्य ;** सर्वथा अप्रतिपन्नस्येत्यर्थः । तदुपपादकमुत्तरवाक्यमिति वदन्ति ।

## श्रुतप्रदीपिका

ज्ञातृत्वस्याध्यस्तत्वमनुवदति—**अथेति**। दूषयति—**तदिति**। प्रसञ्जकप्रसक्तविपर्ययत्वमाह—**अत्र त्विति**। **पृथग**; वैयधिकरण्येन। तथात्वं दर्शयति—**तथेति**। ततः किमित्यत्राह—**तदेवमिति**; विशेषणतया प्रतिपन्ने तद्विशेषणविशिष्टाध्यासोऽनुपपन्न इत्यर्थः। समानाधिकरणधीर्न प्रसञ्जनीया, तथा सति विभ्रमायोगात्; न हि 'शुक्ती रजतम्' इति भ्रमः संभवतीति चेत्, धीरिदंस्थाने चेत् तथा प्रतीतिप्रसङ्गः। शुक्तिस्थाने चेत् भ्रमानुदय इति भावः।

## तत्वटीका

अथ वक्ष्यमाणच्छायापत्तिसंसर्गव्यञ्जनस्पक्षाणां साधारणं ज्ञातृत्वाध्यासं दूषयितुमनुवक्ति—**अथेति**। सविषये वृत्तिज्ञाने ज्ञात्रपेक्षेत्यभिप्रायेण **निर्विषयेत्युक्तम्**। अविद्यायामेव ज्ञातुरप्यध्यासः स्यात्; किमनुभूत्येत्यत्राह—**निरधिष्ठानेति**। अविद्यापि ह्यसत्यत्वादधिष्ठानसापेक्षेति भावः। निर्विशेषायां ज्ञातृत्वाध्यासः, तस्य त्वयाधिष्ठानापेक्षा च दुर्वचेत्यभिप्रायेणाह—**तदयुक्तमिति**। मिथ्यादोषादध्यासं वदतां मिथ्याधिष्ठानादपि स्यादिति भावः। परोक्तेऽनिष्टं प्रसञ्जयति—**तथेति**। यद्यपि रजतत्वमारोप्यं, तथापि तद्विशिष्टवाचिना रजतशब्देनाधिष्ठानवाचिन इदंशब्दस्य सामानाधिकरण्यं दृश्यते 'इदं रजतम्' इति; तद्वदिहाप्यधिष्ठानाध्यस्तयोः सामानाधिकरण्येन प्रकाशः प्रसज्येतेत्यर्थः। तत्प्रकाशं दर्शयति—**अनुभूतिरहमितीति**। भ्रान्तावपि 'शुक्तिरेव रजतम्' इति सामानाधिकरण्यं न दृष्टमित्यत्राह—**पुर** इति। अयं भावः—शुक्तिरजतादिभ्रमे प्रकाशमानेन सामान्याकारेण तत्सिद्धम्; शुक्तित्वाद्याकारस्तु न प्रकाशते; इह तु प्रकाशमानानुभूत्यतिरिक्ताकारानभ्युपगमादनुभूतित्वरूपशुक्तित्वसाम्येऽध्यासानुपपत्तेः। इदंत्वभास्वरत्वादिसत्त्वे तेनैव रूपेण सामानाधिकरण्यप्रकाशो दुस्त्यज इति। इष्टप्रसङ्गोऽयमित्यत्र विपर्ययं दर्शयति—**अत्रेति**। तुः भ्रमान्तरविषयाद्विशेषद्योतकः, शङ्कानिवृत्त्यर्थो वा। **पृथक्**, आरोप्यात्; अहंत्वविशिष्टवैयधिकरण्येनेत्यर्थः; न ह्यत्राधिष्ठानप्रकाशो दृष्ट इति भावः। अतद्रूपतया विशेषणतया च भानं विवृणोति—**तथा हीति**। उक्तं विशिष्टप्रतीतिविरोधं प्रसिद्धोदाहरणेन निदर्शयति—**तदेवमिति**। न हि स्वाध्यस्तदेवदत्तविशेषणतया भातीति भावः।

श्रीभाष्यम्

यदप्युक्तम्—'स्थूलोऽहम्' इत्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्येति; तदयुक्तम्; आत्मतयाभिमताया अनुभूतेरपि मिथ्यात्वं स्यात्, तद्वत एव प्रतीतेः। सकलेतरोपमर्दितत्त्वज्ञानाबाधितत्वेनानुभूतेर्न मिथ्यात्वमिति चेत्, हन्त! एवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या।

श्रुतप्रकाशिका

देहात्माभिमानवतो ज्ञातृत्वप्रतिभासात्तन्मिथ्येत्युक्तमनूद्य दूषयति—यदप्युक्तमित्यादिना। तदबाधादेवेति; ज्ञातृत्वस्याबाधितत्वं मुक्तावपि ज्ञातृत्वपरश्रुतिवाक्यात्।

भावप्रकाशिका

ज्ञातृत्वपरश्रुतिवाक्यादिति; "परात्परं पुरिशयं पुरुषमीक्षते" "सर्वं ह पश्यः पश्यति" इत्यादिवाक्यादित्यर्थः।

श्रुतप्रदीपिका

भ्रान्तस्य प्रतिभायाः मृषात्वमनूद्य परिहरति—यदपीत्यादिना। वैषम्यमाशङ्क्याविशेषमाह—सकलेत्यादिना। ज्ञानकर्तृत्वं विकारजडरूपं नाविकाराजडात्मनि, किंतु तादृश्यन्तःकरणे।

तत्त्वटीका

देहत्वादिवत् बोद्धृत्वादिकमपि भ्रान्तेरेव प्रतिपन्नत्वादध्यस्तम्; ततश्च मिथ्येति प्रागुक्तमनुवक्ति—यदपीति। अयं हेतुरतिप्रसञ्जक इति दर्शयितुमाह—तदिति। तत्र मिथ्याध्यासाधिष्ठानस्य वैषम्यं शङ्कते—सकलेति। परोक्तहेतोः स्वेष्टेऽपि वृत्तेरविशेषमाह—हन्तेति। हर्षाद्यर्थको वा हन्तकारः।

श्रीभाष्यम्

यदप्युक्तम्—अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न संभवति; अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरि-

**णामाहंकारग्रन्थिस्थमिति न ज्ञातृत्वमात्मनः, अपि त्वन्तःकरणरूपस्याहंकारस्य। कर्तृत्वादिर्हि रूपादिवद् दृश्यधर्मः। कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येवानात्मत्वपराक्त्वजडत्वादिप्रसङ्गश्चेति। नैतदुपपद्यते—देहस्येवाचेतनत्वप्रकृतिपरिणामत्वदृश्यत्वपराक्त्वपरार्थत्वादियोगादन्तःकरणरूपस्याहंकारस्य; चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य।**

### श्रुतप्रकाशिका

ज्ञातृत्वस्य विक्रियात्मकत्वं निराकर्तुं तदनुवदति—**यदप्युक्तमविक्रियस्येति**। ज्ञानस्य धात्वर्थतया क्रियात्वम्। तत्कर्तृत्वं च विकाररूपम्, अत एव जडं च, अविक्रियस्याजडस्यात्मनो न संभवति। विक्रियात्मकत्वाज्जडत्वाच्च तादृशाहंकारग्रन्थिस्थमित्यर्थः। सर्वाध्यासमूलत्वात् ग्रन्थित्वम्। अथ हेत्वन्तरेण च ज्ञातृत्वस्यान्तःकरणधर्मत्वमुपपादयति—**कर्तृत्वादिरिति**; दृश्यत्वादित्यर्थः। आत्मनो ज्ञातृत्वेऽनिष्टं प्रसञ्जयति—**कर्तृत्व इति**। अत्र व्यतिरेक्यनुमानान्यभिप्रेतानीति पूर्वमेवोक्तम्। परिहरति—**नैतदिति**। **देहस्येवे**त्यादिना अन्तःकरणस्य ज्ञातृत्वाभावोपपादनम्। आदिशब्दादन्तवत्त्वग्रहणम्। **चेतनासाधारणे**त्यादिना आत्मनो ज्ञातृत्वोपपादनम्। ज्ञातृत्वाभावः साध्योऽभिप्रेतः। अन्तःकरणं धर्मि। अचेतनत्वादयो हेतवः। देहस्येवेति सपक्षो दर्शितः। ज्ञातृत्वस्य चेतनासाधारणत्वकथनाद्व्यतिरेकव्याप्तिश्च कथिता। एवं परोक्तव्यतिरेकिणां प्रत्यनुमानान्युक्तानि भवन्ति। अन्तःकरणं न ज्ञातृ; अचेतनत्वात्, प्रकृतिपरिणामत्वात्, दृश्यत्वात्, पराक्त्वात्, परार्थत्वात् देहवदिति। नन्वचेतनत्वादज्ञातृत्वे साध्ये साध्याविशिष्टता—नैवम्; अचेतनशब्देनानात्मत्वस्य विवक्षितत्वात्। पुरुषार्थप्रतिसंबन्धित्वं वा देहं प्रति नियन्तृतया अन्तःप्रविष्टत्वं वा आत्मत्वम्; तदभावोऽनात्मत्वम्। **प्रकृतिपरिणामत्वम्**; प्रकृतिकार्यत्वम्। **दृश्यत्वम्**; नियमेन ज्ञानान्तराधीनसिद्धित्वम्। **पराक्त्वम्**; परस्मै भासमानत्वम्। **परार्थत्वम्**; परप्रयोजनैकफलत्वम्; जीवोपकरणत्वमित्यर्थः। आत्मनो ज्ञातृत्वे साध्ये अमी हेतवो यथासंभवं तर्का योजनीयाः। आत्मनो ज्ञातृत्वाभावे देहस्येवानात्मत्वप्रसङ्गः परार्थत्वप्रसङ्ग इति।

भावप्रकाशिका

**तादृशाहंकारग्रन्थिस्थमिति** ; विकारिजडद्रव्यस्थमित्यर्थः ; न तु विक्रियात्मकजडद्रव्यस्थमिति मन्तव्यम् , अविक्रियस्येति पूर्वग्रन्थानुसारात् विकारास्पदेति भाष्यानुगुण्याच्च । **दृश्यत्वादित्यर्थ इति** ; दृश्यत्वादिति शेष इत्यर्थः ।

श्रुतप्रदीपिका

परोक्तमनुवदति—**यदपीति** । आदिशब्दो विकारित्वार्थः । दूषयति—**नैतदिति** । आदिशब्देन जडत्वादि । अन्तःकरणं न ज्ञातृ, अचेतनत्वादिति ।

तत्त्वटीका

कर्तृत्वादेर्निर्विकारत्वादिभिर्विरोधं दृश्यत्वादनात्मधर्मत्वमात्मनोऽकर्तृत्वादिहेतुतर्कवर्गं च दूषयितुमनुवदति—**यदपीति** । **कर्तृत्वादिरिति** ; आदिशब्देन विकारित्वभोक्तृत्वयोः। **जडत्वादीति** आदिशब्देन परिच्छिन्नत्वादेश्च संग्रहः । अत्र विरोधचोद्यमेव विरोधहतमित्यभिप्रायेणाह—**नैतदिति** । आत्मन्यकर्तृत्वादिसाधकानामन्तःकरणे कर्तृत्वादिसाधकानां च प्रमाणविरोधमभिसंधायाह—**देहस्येति** । नन्वचेतनत्वहेतुर्ज्ञातृत्वनिषेधे साध्याविशिष्टः ; मैवम्, क्षेत्रवर्गान्तर्भूतत्वेन शास्त्रसिद्धत्वे तात्पर्यात् । दृश्यत्वमिह स्वगोचरबुद्ध्यैव प्रकाश्यत्वम् । यद्वा द्रष्टुरन्यतया तदुपकरणत्वेन दृशिविषयत्वम् । आदिशब्देन परिणामित्वविनाशित्वसंग्रहः ।

श्रीभाष्यम्

एतदुक्तं भवति—यथा देहादिर्दृश्यत्वपराक्त्वादिहेतुभिस्तत्प्रत्यनीकद्रष्टृत्वप्रत्यक्त्वादेर्विविच्यते, एवमन्तःकरणरूपाहंकारोऽपि तद्द्रव्यत्वादेव तैरेव हेतुभिस्तस्माद्विविच्यत इति ।

श्रुतप्रकाशिका

ननु यथा घटदेहयोरचेतनत्वादिके तुल्येऽपीन्द्रियाश्रयत्वादिकं देहासाधारणं भवति, तथा देहान्तःकरणयोरचेतनत्वादिके तुल्येऽपि ज्ञातृत्वमन्तःकरणासाधारणधर्मः स्यात् । अत इन्द्रियाश्रयत्वाभावस्येव ज्ञातृत्वाभावस्याप्यचेतनत्वादिकमप्रयोजकम् । अचिद्विशेषत्वमेव प्रयोजकम्। तथात्मनो ज्ञातृत्वाभावेऽपि प्रत्यक्त्वादिरुपपद्यतामित्युभयत्रापि विपक्षे बाधका-

भावमाशङ्क्य परिहरति—**एतदुक्तमिति**। येन दृश्यत्वादिविरुद्धधर्मेण देहस्य द्रष्टृत्वाद्यनुपपत्तिः, तेनान्तःकरणस्यापि तद्द्रव्यत्वाद् द्रष्टृत्वाद्यनुपपत्तिरित्यर्थः। ज्ञातृत्वाभावं प्रत्यचेतनत्वादिकमप्रयोजकं चेत्, देहस्य ज्ञातृत्वप्रसङ्गः। ततश्च चार्वाकं प्रति देहात्मभेदस्त्वयापि दुरुपपादः। न च देहस्य देहत्वादज्ञातृत्वम्, घटादौ देहत्वाभावेऽपि ज्ञातृत्वाभावात्। अतस्तत्राचित्त्वादिकस्य ज्ञातृत्वाभावप्रयोजकत्वमभ्युपगन्तव्यमिति क्वचित् ज्ञातृत्वाभावप्रयोजकस्य तस्याचित्त्वादेः क्वचिदप्रयोजकत्वमयुक्तम्। अतोऽचित्त्वादिभिर्देहस्येवान्तःकरणस्य द्रष्टृत्वाद्यनुपपत्तिरित्यर्थः। **प्रत्यक्त्वादेरिति**; आदिशब्दादजडत्वग्रहणम्। **विविच्यते**; प्रत्यक्त्वादिधर्मैः संबन्धरहितोऽवगम्यत इत्यर्थः। **तैरेव हेतुभिस्तस्माद्विविच्यते इति**; पराक्त्वादिभिर्देहस्य ज्ञातृत्वाभाव उक्ते, पराक्त्वं व्याप्यं ज्ञातृत्वाभावो व्यापक इति सिध्यति। ततश्च स्वाभावव्याप्तेषु पराक्षु निरवकाशं ज्ञातृत्वं यदि प्रत्यग्वस्तुन्यपि न स्यात्, तदा निराश्रयं प्रसजेदिति पूर्वोक्तव्याप्तिस्थापनाय विपक्षे बाधकस्तर्कोऽप्यत्राभिप्रेतः। तस्माद्विविच्यत इत्येतदुक्तमित्यन्वयः।

### भावप्रकाशिका

**देहात्मभेद इति**; देहस्य ज्ञातृत्वाभाव इत्यर्थः। **क्वचिज्ज्ञातृत्वाभावप्रयोजकस्येति**; नन्वेवं ज्ञातृत्वस्य चित्त्वप्रयोज्यत्वं स्यात्; न चेष्टापत्तिः, धर्मभूतज्ञाने ज्ञातृत्वप्रसङ्गः। न च चित्त्वमात्मत्वं, तदभावो ज्ञातृत्वाभावप्रयोजक इति वाच्यम्, आत्मत्वज्ञातृत्वयो प्रयोज्यप्रयोजकभावस्य काप्यग्रहादिति चेत्—न; आत्मत्वज्ञातृत्वयोः प्रयोज्यप्रयोजकभावाग्रहेऽप्यात्मत्वाभावस्य ज्ञातृत्वाभावप्रयोजकत्वदर्शनादिति भावः। वस्तुतस्तु अचेतनत्वादीत्यत्र तद्गुणसंविज्ञानबहुव्रीहिणा दृश्यत्वादिकमुक्तमिति ध्येयम्। **पूर्वोक्तव्याप्तिस्थापनायेति**; चेतनासाधारणधर्मत्वाच्च ज्ञातृत्वस्येति पूर्वोक्तव्याप्तिस्थापनायेत्यर्थः।

### श्रुतप्रदीपिका

अचित्त्वे तुल्येऽपि देहस्येन्द्रियाश्रयत्वादिवदचित्त्वादौ तुल्येऽप्यन्तःकरणस्य ज्ञातृत्वं स्यादिति ज्ञातृत्वस्य चेतनासाधारणत्वासिद्धिरित्यत्राह—**एतदुक्तमिति**। देहात्मभेदसिद्धये देहस्य द्रष्टृत्वं येन विरुद्धधर्मेण निवार्यते तेनैवान्तःकरणस्यापीत्यर्थः। यद्यपि दृशित्वानुपपत्त्या देहात्मभेदः, न द्रष्टृत्वादिना, तथापि दृशित्वमन्तःकरणस्य येन वार्यते तेनैव तस्य द्रष्टृत्वमपीति दृशित्वनिवारकमेव द्रष्टृत्वनिवारकमित्यर्थः। अनात्मत्वादिप्रसङ्गः प्रत्यक्षा

गमबाधितः। अबाधिताहंधीवेद्यत्वमात्मत्वस्यैव साधकम्। देहे तु बाधादनात्मत्वमिति वक्ष्यते।

### तत्त्वटीका

ननु प्राकृतत्वेऽपि यथा क्वचिदेवेन्द्रियत्वतदाश्रयत्वादिकं तद्विकारशक्त्या अध्यासशक्त्या वा, तथा क्वचिदेव ज्ञातृत्वं स्यात्। यत्तु 'चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य' इति, एतदपि तद्विवक्षितं न साधयेत्; अन्तःकरणस्यैवास्माभिश्चेतनत्वाङ्गीकारादित्यत्राह— **एतदुक्तमिति**। अयं भावः—"पृथिव्यापस्तेजो वायुरिति तत्त्वानि; तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्" इति बृहस्पत्युक्तं प्रतिवदता त्वयापि यैः स्वभावैर्देहादिर्द्रष्टृत्वप्रत्यक्त्वभोक्तृत्वादिरहितो निष्कृष्टः, तैरेवाहंकारद्रव्यमपि तद्रहितं स्थाप्यत इति। कर्तृत्वादिस्वीकारे जडत्वादिप्रसङ्गस्तु श्रुत्या शिथिलमूलः। देहेऽहंप्रत्ययस्य भ्रान्तित्वात् तत्रानात्मत्वम्। न च जडत्वादिकमहंधीयुक्तम्, उपहिते ब्रह्मणि तद्विषयत्वेऽपि त्वयैव जडत्वादिस्वीकारात्। आत्मनि वा अहंत्वादिकं प्रत्यक्षादिसिद्धं निर्बाधम्। चेतनासाधारणस्वभावोक्तिश्चान्तःकरणातिरिक्तात्मस्वभावतया प्रमाणसिद्धत्वप्रकाशनार्था।

### श्रीभाष्यम्

अतो विरोधादेव न ज्ञातृत्वमहंकारस्य, द्रष्टृत्ववत्। यथा द्रष्टृत्वं तत्कर्मणोऽहंकारस्य नाभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम्। न च ज्ञातृत्वं विक्रियात्मकम्। ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम्। ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम्। नित्यत्वं चात्मनः "नात्मा श्रुतेः" इत्यादिषु वक्ष्यति। "ज्ञोऽत एव" इत्यत्र "ज्ञः" इति व्यपदेशेन ज्ञानाश्रयत्वं च स्वाभाविकमिति वक्ष्यति। अस्य ज्ञानस्वरूपस्यैव मणिप्रभृतीनां प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम्। स्वयमपरिच्छिन्नमेव ज्ञानं संकोचविकासार्हमित्युपपादयिष्यामः।

## श्रुतप्रकाशिका

अतोऽचेतनत्वजडत्वादिस्वभावविरोधान्नाहंकारस्य ज्ञातृत्वमित्याह—**अत इति**। न हि वयं द्रष्टृत्वाद्यनुपपत्त्या देहात्मविवेकं ब्रूमः; स तु परमतानुसारात्कृतः; वयं तु दृशित्वानुपपत्त्येति शङ्कायां द्रष्टृत्वाभावस्याचेतनत्वादिप्रयोज्यत्वे मृषावाद्यसाधारणप्रतिबन्दीमाह—**दृशित्ववदिति**। तदेव विवृणोति—**यथेति**। दृश्यत्वाद्यविशेषेऽपि देहस्य घटादिविलक्षणस्येन्द्रियाश्रयत्ववदन्तःकरणस्य दृशित्वमुपपद्यताम्। अन्तःकरणस्यापि दृश्यत्वादिना देहस्येव दृशित्वं नोपपद्यत इति चेत्, तथा दृश्यस्यान्तःकरणस्य दृश्यत्वादिनैव देहस्येव द्रष्टृत्वमपि नोपपद्यते। अतो दृशित्वाभाव इव द्रष्टृत्वाभावेऽप्यचेतनत्वादिकं प्रयोजकम्। अन्वयव्यतिरेकयोस्तुल्यत्वादुपाध्यन्तरादर्शनाच्चेति भावः। अहंप्रत्ययगोचरत्वमनात्मत्वसाधकं देहस्येवेति यदुक्तं, तदयुक्तम्; बाधिताहंप्रत्ययगोचरत्वस्य पक्षे वृत्त्यभावात् अबाधिताहंप्रत्ययगोचरत्वस्य सपक्षे देहादावभावाच्च। यद्यहंप्रत्ययगोचरत्वमात्रेणात्मन्यनात्मत्वादिप्रसङ्गः, तर्हि रजतप्रत्ययगोचरत्वमात्रेण भ्रान्तवत् सम्यग्रजतेऽप्यरजतत्वाङ्गुलीयकनिर्माणानर्हत्वप्रसङ्गः स्यादित्यसंगतम्; श्रुतिभिः प्रत्यक्षेण च कालात्ययापदेशश्च। अनात्मत्वादिप्रसञ्जकं कर्तृत्वं किं प्रयत्नाधारत्वम्? उत स्पन्दरूपक्रियाश्रयत्वम्? उत धात्वर्थमात्राश्रयत्वम्? प्रथमे व्याप्त्यभावः, प्रयत्नाधारत्वानात्मत्वयोः क्वचित्सहदर्शनाभावात्। परमात्मन्यनात्मत्वादिप्रसङ्गश्चेत् "कर्तारमीशं पुरुषम्" इत्यादिना कालात्ययापदेशश्च। जीवे चेत् "साधुकारी साधुर्भवति" "कर्ता शास्त्रार्थवत्त्वात्" "यतः स्वकृतभुक् पुमान्" इत्यादिभिः प्रत्यक्षेण च कालात्ययापदेशश्च। द्वितीये परमात्मन्यसिद्धिः। जीवे तूत्क्रान्त्यादिश्रुतिभिः कालात्ययापदेशः। तृतीये भ्रमाश्रयतया स्वाभिमतात्मन्यनात्मत्वप्रसङ्गः। भेददर्शनं तदाश्रयत्वं चापारमार्थिकमिति चेत्, किं परमार्थभूतधात्वर्थाश्रयत्वमनात्मत्वसाधकम्? उत अपरमार्थभूतधात्वर्थाश्रयत्वम्? प्रथमे घटादावपि परमार्थभूतधात्वर्थान्वयानभ्युपगमात् व्याप्त्यभावः। द्वितीये त्वदभिमतस्य भ्रमाश्रयस्यात्मनोऽप्यनात्मत्वप्रसङ्गः। अथ विक्रियात्मकत्वं नेत्याह—**न चेति**। तदुपपादयति—**ज्ञातृत्वं हीति**। गुणक्रियाश्रयत्वेऽपि तत् कादाचित्कं चेत् क्रियाश्रयत्ववत् विक्रियात्मकं स्यादित्यत्राह—**ज्ञानं चास्येति**। धर्मस्य स्वाभाविकत्वेऽपि धर्मी अनित्यश्चेत् धर्मोऽप्यनित्यः स्यात्। धर्मिनित्यत्वे धर्मः सोपाधिकश्चेत्, उपाधिविगमे

धर्मो नश्यतीत्यनित्यः स्यात्। तदुभयव्यावृत्त्यर्थौ नित्यस्वाभाविकशब्दौ। अवस्थाविशेषेण कादाचित्कत्वं तु प्रामाणिकत्वादिष्टम्। अनेन पदद्वयेन "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" "अविनाशित्वादात्मनः" इति श्रुत्यर्थ उक्तो भवति। अस्याः श्रुतेरयमर्थः— ज्ञातृसंबन्धि विज्ञानं नित्यम्; कुतः? अविनाशित्वादात्मनः; विशिष्टस्य नित्यत्वेन विशेषणभूतज्ञानस्यापि नित्यत्वात्। यद्वा धर्मिनित्यत्वेन तत्स्वाभाविकधर्मस्यापि नित्यत्वादिति। आत्मनो नित्यत्वे ज्ञानस्य तत्स्वाभाविकधर्मत्वे च प्रमाणं स्मारयन् पूर्वमेव श्रुतिवाक्योपादानात् सूत्रमुदाहरति—**नित्यत्वं चेति**। सूत्रोदाहरणेन तद्विषयभूता श्रुतिरपि अर्थतो दर्शिता स्यात्। सूत्रं च पूर्वं ज्ञानगुणकत्वप्रदर्शनायोपात्तम्; इदानीं नित्यत्वज्ञापनायोपात्तम्। "ज्ञोऽत एव" इत्यत्र "ज्ञः" इति व्यपदेशस्य विवरणम्—"यावदात्मभावित्वाच्च न दोषः" इति सूत्रम्। अतः स्वाभाविकत्वसिद्धिरिति भावः। ज्ञानस्वरूपस्य ज्ञानाश्रयत्वं कथमित्यत्राह—**अस्येति**। ज्ञानं स्वाभाविकनित्यधर्मश्चेत् सर्वदा सर्वज्ञत्वप्रसङ्ग इत्यत्राह—**स्वयमिति**। **स्वयम्**; स्वतः। "संपद्याविर्भावः" इत्यादिसूत्रे उपपादयिष्याम इत्यर्थः। अनन्तरमेवेति वार्थः।

## भावप्रकाशिका

**न हि वयं द्रष्टृत्वादीति;** देहस्य जडत्वान्न द्रष्टृत्वम्; ततश्चानात्मत्वमिति चार्वाकं प्रति न देहभेदं साधयामः; अपि त्वात्मनो दृशिस्वरूपत्वात् देहस्य चातथात्वात् देहस्यानात्मत्वमित्येव साधयाम इत्यर्थः। **द्रष्टृत्वाभावस्याचेतनत्वादिप्रयोज्यत्व इति;** अचेतनत्वादीत्यत्र तद्गुणसंविज्ञानबहुव्रीहिवशात् दृश्यत्वस्य ग्रहणम्। **द्रष्टृत्वाभावेऽप्यचेतनत्वादिक**मित्युत्तरत्रापि दृश्यत्वमेव विवक्षितम्। **मृषावाद्यसाधारणेति;** यदि दृश्यस्य द्रष्टृत्वं तर्हि दृशित्वमपि किं न स्यात्? यदि कर्मणः क्रियात्वं न संभवतीत्युच्येत, तर्हि कर्मणः कर्तृत्वमपि न संभवति; कर्मकर्तृत्वक्रियात्वानां परस्परविरोधादिति भावः। यद्यपि सिद्धान्ते दृशेरपि दृश्यत्वमभ्युपगतं, तथापि परमतानुसारादेवमुक्तमिति द्रष्टव्यम्। **रजतप्रत्ययगोचरत्वमात्रेणेति;** रजतप्रत्ययस्य रजतविषयत्ववत् अहंप्रत्ययोऽप्यात्मविषयः, अहंत्वमेवात्मत्वमिति स्थितत्वात्। ततश्चाहंप्रत्ययविषयत्वं नात्मत्वबाधकं, प्रत्युतात्मत्वसाधकमेवेति भावः। **परमात्मन्यनात्मत्वादिप्रसङ्गश्चेदिति;** यदि परमात्मा कर्ता स्यादनात्मा स्यादित्यापादने, तस्मान्न कर्तेति विपर्यये पर्यवसाने, कर्तृत्वादिश्रुत्या

बाधप्रसङ्ग इत्यर्थः। **द्वितीये परमात्मन्यसिद्धिरिति ; कर्तृत्वेऽहंप्रत्ययगोचरत्वे चाभ्युपगम्यमान** इत्यस्य परमात्मनः स्पन्दरूपक्रियाश्रयत्वेऽहंप्रत्ययगोचरत्वे चाभ्युपगम्यमान इत्यर्थः पर्यवसितः। ततश्च तथाभ्युपगमोऽसिद्ध इत्यर्थः, तर्के पराभ्युपगतस्यैवापादकत्वादिति भावः।

## श्रुतप्रदीपिका

**न चेति** ; स्पष्टम् ; गुणशब्दोऽपृथक्सिद्धविशेषणपरः। ततः किमित्यत्राह— **ज्ञानं चेति**। धर्म्यनित्यत्वे धर्मानित्यत्वम् ; तन्नित्यत्वेऽप्यौपाधिकत्वं धर्मानित्यताहेतुरिति तद्व्युदासाय **नित्यस्य स्वाभाविकधर्मत्वेनेति** पदद्वयम्। उभयोश्च मानतया श्रुतेः सूत्रोपात्तत्वात् सूत्रद्वयमुदाहरति—**नित्यत्वं चेत्यादिना**। धियोऽप्याश्रयत्वं कथमित्यत्राह—**अस्येति**। तर्हि सर्वे सर्वदा सर्वज्ञाः स्युरित्यत्राह—**स्वयमिति**। **स्वयम्** ; स्वतः।

## तत्त्वटीका

अत्र शक्तिविशेषचोद्यं परिहरति—**अत इति**। यद्यात्मत्वमन्तःकरणस्य विरोधात् त्यज्यते, तथैव द्रष्टृत्वादिकमपि त्याज्यम् ; अन्यथा देहस्यैव तद् दुस्त्यजमिति भावः। अविक्रियात्मकत्वहेतोरात्मनि साक्षादन्वयविवक्षायामसिद्धिमप्याह—**न चेति**। व्यवहितसंबन्धं व्यञ्जयितुमाह—**ज्ञातृत्वमिति**। अपृथक्सिद्धविशेषणाभिप्रायेणात्र गुणशब्दः। नन्वागन्तुकज्ञानगुणाश्रयत्वे साक्षाद्विकारित्वं स्यादित्यत्राह—**ज्ञानमिति**। चः शङ्कानिवृत्त्यर्थः। धर्मिनाशाद्विरोधिगुणाद्वा गुणस्य नाशं परे वदन्ति ; अत्र तु नोभयमित्यभिप्रायेण **नित्यस्य स्वाभाविकधर्मत्वेनेत्युक्तम्**। द्वयोरपि नित्यत्वस्य श्रुतिसिद्धत्वेऽप्याप्रलयस्थायित्वादिपक्षाणामपसिद्धान्तत्वं दर्शयितुं श्रुतिस्वारस्यपुरस्कारकं सूत्रद्वयमाह—**नित्यत्वमित्यादिना** वाक्यद्वयेन। आत्मस्वरूपस्य ज्ञानत्वं वदद्भिर्वाक्यैस्तस्य ज्ञानाश्रयत्वमर्थान्निषिद्धं स्यादित्यत्राह—**अस्येति**। ननु मणिः पार्थिवः ; प्रभा तैजसी ; अतो मणिप्रभयोः पर्वतोत्सङ्गप्रकारेण संबन्धः। मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गादिति प्रागुक्तमपि चिन्त्यम्, अतिकठिनस्य पार्थिवांशस्य विशरणानभ्युपगमात्, मणिस्थस्य तेजोंऽशस्य नाशप्रसक्तेरिष्टत्वाच्च। तस्माद्विषमो दृष्टान्तः। मैवम् ; मणिर्हि नः पञ्चभूतमयः पिण्डः ; तत्र पिण्डमध्यस्थस्य तेजोंऽशस्य सप्रभाकत्वात्तद्विशरणे च प्रतिक्षणमनुपलब्धसंघातशैथिल्यक्लृप्तौ

गौरवप्रसङ्गे तात्पर्याच्चेति। नन्ववयविवादपरित्यागिनां प्रभाप्रभावद्रूपस्य ज्ञानतदाधाररूपस्य वा मिथोऽत्यन्तभिन्नस्य द्रव्यद्वयस्य कथमपृथक्सिद्धिः? द्रव्याद्रव्ययोरपि वा कथम्? यथादर्शनं स्वभावनियमादिति चेत्, तुल्यम्। अत एवेश्वरं प्रत्यपि चिदचिद्द्रव्याणामपृथक्सिद्धिरनपाया। यद्यात्मनां ज्ञानमीश्वरस्येव स्वाभाविकमनश्वरं च, तर्हि सर्वे सर्वदा सर्वज्ञाः स्युरित्यत्राह—**स्वयमिति**; स्वभावत इत्यर्थः।

श्रीभाष्यम्

**अतः क्षेत्रज्ञावस्थायां कर्मणा संकुचितत्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते। तच्चेन्द्रियद्वारेण व्यवस्थितम्। तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रवर्तते। ज्ञानप्रसरे तु कर्तृत्वमस्त्येव। तच्च न स्वाभाविकम्; अपितु कर्मकृतमित्यविक्रियस्वरूप एवात्मा। एवंरूपाविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्यात्मन एवेति न कदाचिदपि जडस्याहंकारस्य ज्ञातृत्वसंभवः।**

श्रुतप्रकाशिका

तर्हीदानीमपि कदाचित् सर्वज्ञत्वं मुक्तौ च कदाचित् ज्ञानसंकोचः किं न स्यात्? यदि क्षेत्रज्ञावस्थायां संकोचः, तर्हि सर्वेऽप्यज्ञाः स्युरित्यत्राह—**अतः क्षेत्रज्ञेति**। **अतः**; संकोचविकासार्हत्वात्। **कर्मणेति** संकोचकोपाधिः। **क्षेत्रज्ञावस्थायामिति**; तदानीमेव संकोच इत्यर्थः। सर्वेषामज्ञत्वप्रसक्तिश्च कर्मतारतम्यात् परिहृता। तरतमभावशब्देन

"तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता।
सर्वभूतेषु भूपाल तारतम्येन वर्तते॥"

इति वचनं स्मारितं भवति। **कर्मणेति** पदेन तयेति पदं श्लोकस्थं व्याख्यातं भवति। तया; कर्मरूपाविद्ययेत्यर्थः।

"अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा॥
संसारतापानखिलानवाप्नोत्यतिसंततान्॥"

इति हि प्रकृतम्। ज्ञानस्य नित्यत्वेनानुत्पत्तिकत्वादिन्द्रियनैरपेक्ष्यं स्यादित्यत्राह—**तच्चेति**।

यद्वा स्थावरादिष्वपि ज्ञानविकासः स्यादित्यत्राह— **तच्चेति** ; इन्द्रियद्वारकत्वं संकोचविकासार्थमित्यर्थः । तद्बुत्पत्तिविनाशव्यपदेशो न स्यादित्यत्राह—**तमिममिति** ; प्रसरान्वयव्यतिरेकावपेक्ष्योदयास्तमयव्यपदेश इत्यर्थः । यद्वा प्रसृतांशः प्रसरः, तस्य प्रसरणसंकोचावुदयास्तमयावित्यर्थः । संकोचविकासाभ्युपगमे विक्रियात्मकत्वं स्यादित्यत्राह—**ज्ञानप्रसरे त्विति** । तादृशविक्रियात्मकत्वं प्रामाणिकत्वादिष्टमित्यर्थः । अचेतनवत् परिणामे ह्यनभ्युपगम इत्येवकाराभिप्रायः । अनेनाविकारश्रुतीनां विषयो दर्शितः । मुखान्तरेणाप्यविकारश्रुतिनिर्वाहं दर्शयति—**तच्चेति** । स्वाभाविकविकारनिषेधपरा अविकारश्रुतय इत्यर्थः । स्वाभाविकं रूपं कथमित्यत्राह—**अविक्रियेति** । **स्वरूपम्** ; स्वाभाविकरूपम् । अविकारित्ववाक्यान्युपाधिविमुक्तस्वाभाविकरूपपराणीत्यर्थः । प्रसरणकर्तृत्वमपि विकाररूपत्वादन्तःकरणस्यैवेत्यत्राह—**एवंरूपविक्रियात्मकमिति** । स्वधर्मभूतज्ञानप्रसरणकर्तृत्वलक्षणविकारित्वम् **एवंरूप**शब्देन विवक्षितम् । **ज्ञानस्वरूपस्य** ; ज्ञानमेव स्वाभाविको धर्मो यस्य स ज्ञानस्वरूपः । स्वधर्मभूतज्ञानप्रसरकर्तृत्वलक्षणविकारस्तद्धर्मकस्यात्मन एव संभवति । न तु जडत्वादतद्धर्मकस्याहंकारस्येत्यर्थः । यद्वा स्वरूपशब्दो धर्मिपरः । ज्ञानस्वरूपस्यैव ज्ञानधर्मकत्वं संभवति । न तु जडस्वरूस्य, यथा घटादेरिति । ज्ञानस्वरूपत्वात् ज्ञानधर्मकस्यैव स्वधर्मभूतज्ञानप्रसरकर्तृत्वरूपविकारसंभवः, न तु जडस्वरूपत्वादतद्धर्मकस्याहंकारस्येत्यर्थः ।

### भावप्रकाशिका

**प्रसरमपेक्ष्योदयास्तमयव्यपदेश** इति भाष्ये प्रसरशब्दस्य प्रसरणार्थत्वमाश्रित्य प्रसरणान्वयव्यतिरेकाभ्यां ज्ञानस्यांशिन उदयास्तमयव्यवहार इत्यर्थः प्रतीयते ; प्रसरशब्दस्य पचाद्यजन्ततया प्रसरणकर्तृपरत्वमाश्रित्य प्रसृतांशमपेक्ष्य तन्मात्र एव प्रसरणसंकोचदशायामुदयास्तमयव्यपदेशः, न त्वंशिन्यपीत्यर्थः प्रतीयते ; अतोऽर्थद्वयपरतया व्याचष्टे—**प्रसरान्वयव्यतिरेकाविति** । **मुखान्तरेणापीति** ; तच्च न **स्वाभाविकम्** इति भाष्ये तत् स्वाभाविकं च न भवतीति चशब्दो भिन्नक्रम इति भावः । **स्वाभाविकं रूपं कथमित्यत्राहेति** ; अत्र केचित्—निर्विकारत्वश्रुतयः स्वाभाविकविकारनिषेधपरा इत्येका व्याख्या । उपाधिविनिर्मुक्तस्वाभाविकमुक्तस्वरूपे विकारमात्रनिषेधपरा इत्यपरा । अत्र पूर्वव्याख्यायां **तच्च न स्वाभाविकम्**, **अपि तु कर्मकृतमिति** भाष्ये

तच्छब्दः कर्तृत्वपरः । ततश्च कर्तृत्वमौपाधिकं, न स्वाभाविकम् । ततश्च विकारनिषेधश्रुतयः स्वाभाविकविकारनिषेधपरा इत्यर्थः । द्वितीयव्याख्यायां **तच्च न स्वाभाविकम्** इत्यत्र तच्छब्दो बुद्धिस्थकर्तृत्वाश्रयभूतजीवस्वरूपपरः । ततश्च कर्तृत्वाश्रयजीवस्वरूपं न स्वाभाविकम् , अपि त्वौपाधिकम् । स्वाभाविकरूपमविक्रियमेव । विकारनिषेधश्रुतयश्च स्वाभाविकस्वरूपपरा इत्यर्थः । इमां द्वितीयव्याख्यामभिप्रेत्य **स्वाभाविकं रूपं कथमित्यत्राहेति** ग्रन्थः प्रवृत्तः । पूर्वस्यां व्याख्यायां स्वाभाविकं रूपं कथम् ? इत्याक्षेपस्य वा अविकारित्ववचनान्युपाधिविनिर्मुक्तस्वाभाविकरूपपराणीत्युत्तरग्रन्थस्य वा असामञ्जस्यात् व्याख्याद्वयमेवेदमित्याहुः । **न कदाचिदपि जडस्याहंकारस्येति** ; जडत्वस्य प्रतिद्वन्द्वितया निर्देशात् स्वरूपपरशब्दस्वारस्याच्चान्यथा व्याचष्टे—**धर्मिपर इति** ।

### श्रुतप्रदीपिका

तर्हीदानीमपि कदाचित् सर्वविषयविकासः स्यात् ; मुक्तावपि कदाचित् ज्ञानसंकोचः स्यात् । बन्धमोक्षयोः संकोचविकासव्यवस्थायामपि बद्धाः सर्वेऽप्यज्ञाः स्युरित्यत्राह—**अत इति** । अनेन "अविद्या कर्मसंज्ञान्या" इत्यादिस्मृतिः स्मारिता । नोत्पत्तिश्चेत् किमिन्द्रियैः ? उत्पत्त्यभावात् प्रसरतारतम्यस्य कर्मतारतम्यकृतत्वाच्चेन्द्रियवैयर्थ्यमित्यत्राह—**तच्चेति** । कर्माधीनप्रसरणमिन्द्रियद्वारकमित्यर्थः । उत्पत्त्यादिव्यपदेशः कथमित्यत्राह—**तमिमामिति** । प्रसरकर्तृत्वं विकार इत्यत्राह—**ज्ञानेति** ; तन्नानिष्टम् ; अचेतनवद्विकारो ह्यनिष्ट इत्यर्थः । मुखान्तरेण विकारनिषेधविषयमाह— **तच्चेति** ; अचिद्वत् स्वतो निषिध्यत इत्यर्थः । प्रसरकर्तृत्वं विकारत्वादन्तःकरणस्येत्यत्राह—**एवंरूपेति** ; स्वधर्मधीप्रसरकर्तृत्वं नातद्धर्मकस्येत्यर्थः । स्वरूपशब्दो साधारणधर्मपरः । यद्वा जडं न धीधर्मकं घटवत् ; ततो ज्ञानस्वरूपस्यैवोक्तलक्षणकर्तृत्वमित्यर्थः ।

### तत्त्वटीका

एवं सति मुक्तावपि धीसंकोचः प्रलयमोक्षयोरिवेदानीमपि धीतारतम्यविरहः स्यादित्यत्राह—**अत इति** ; करिष्यमाणोपपादनप्रकारादित्यर्थः। मुक्तौ कर्माभावादद्य कर्मतारतम्याच्च शङ्काद्वयनिरासः । ननु धियः स्वाभाविकत्वे कर्मणैव तस्यास्तारतम्ये च किमर्थेन्द्रियसृष्टिः ? अतोऽपर्यनुयोज्याविद्यातारतम्यात् धीतारतम्याध्यासः, इन्द्रियादिसृष्टिश्चेत्यत्राह—**तदिति** ; तरतमभावेन वर्तमानमित्यर्थः । **व्यवस्थितम्** ; सद्वारकतयैव स्वतन्त्रेच्छासिद्धमिति यावत् ।

ज्ञानस्योत्पत्तिनाशौ प्राक् समर्थितौ ; अत्र तु तन्नित्यत्वोक्तिः कथमित्यत्राह—**तदिति**। श्रुतिप्रसिद्धं कर्मतारतम्यं चेत्यर्थः। **प्रसर**शब्द इह संकोचमभिप्रैति। तथापि ज्ञानात्यादिः पुरुषकर्तृक एव। अतः सविकारत्वं दुस्त्यजम्। ज्ञाननित्यत्वश्रुत्याप्यद्यतनसंकुचितप्रसर एव नित्यः स्यात्। तारतम्यं च केशलोमकपालादिवैचित्र्यवत् स्वभावात् स्यादिति चोद्यत्रये **ज्ञानप्रसर** इत्यादिवाक्यत्रयं प्रत्युक्तिः। अत्र देहविकारवत् व्यवहितविकारो नानिष्टः। श्रुतिश्च ज्ञानस्वरूपमात्रनित्यत्वमेव वक्ति। अतस्तारतम्यस्य न स्वाभाविकत्वम्। धीतारतम्यस्य कर्मतारतम्यहेतुकत्वं च "अविद्या कर्मसंज्ञा" इत्यादिशास्त्रसिद्धम्। तदनादरे लोकायतोत्थानप्रसङ्ग इति भावः। आत्मा स्वरूपतस्तावन्न मृदादिवद्विक्रियते; धर्मतोऽपि दोषरूपो विकार औपाधिक इत्यभिप्रायेण **अविक्रियस्वरूप एवे**त्युक्तम्। तथापि निर्विकारश्रुत्या व्यवहितविकारस्यापि निषेधे प्राप्ते ज्ञातृत्वमौचित्यादन्तःकरणस्येत्यत्राह—**एवंरूपेति**। **रूप**शब्दोऽत्र निरूपकधर्मपरः। यस्य ज्ञानवत्त्वं प्रमितं, तस्यैव हि तद्द्वारकविकारः संजायते। अतो निर्विकारश्रुतिरत्र संकोच्येति भावः। यद्वा त्वदुक्तयुक्त्यैवान्तःकरणस्य घटवदेवात्मत्ववत् ज्ञातृत्वमपि न स्यादिति।

### श्रीभाष्यम्

**जडस्वरूपस्याप्यहंकारस्य चित्संनिधानेन तच्छायापत्त्या तत्संभव इति चेत्, केयं चिच्छायापत्तिः? किमहंकारच्छायापत्तिः संविदः? उत संविच्छायापत्तिरहंकारस्य? न तावत्संविदः, संविदि ज्ञातृत्वानभ्युपगमात्। नाप्यहंकारस्य, उक्तरीत्या तस्य जडस्य ज्ञातृत्वायोगात्। द्वयोरप्यचाक्षुषत्वाच्च; न ह्यचाक्षुषाणां छाया दृष्टा।**

### श्रुतप्रकाशिका

एवं विक्रियात्मकत्वात् ज्ञातृत्वस्यात्मधर्मत्वानुपपत्तिर्निरस्ता। अथ परोक्तान् ज्ञातृत्वनिर्वाहप्रकारान् निरस्यति। ज्ञातृत्वं चिच्छायापत्तिकृतम्; चित्संपर्ककृतम्; चिदभिव्यञ्जकत्वकृतमिति त्रयः पक्षाः। तत्र प्रथमं चिच्छायापत्तिपक्षमाशङ्कते—**जडेति**। दूषयति—**केयमिमि**। **केयम्**; दुर्निरूपेत्यर्थः। विकल्पयति—**किमिति**। चिच्छायाशब्दयोः समासान्तर्गता विभक्तिः षष्ठी वा सप्तमी वेति भावः। **अहंकारच्छायापत्तिः**

**संविदः** ; अहंकारे संविद्गतज्ञातृत्वच्छायापत्तिरित्यर्थः । **संविच्छायापत्तिरहंकारस्येति** ; संविद्यहंकारगतज्ञातृत्वच्छायापत्तिरित्यर्थः । प्रथमं दूषयति—**न तावदिति** । शिरोऽन्तरं व्युदस्यति—**नापीति** । पूर्वमचेतनत्वप्रकृतिपरिणामत्वादिभिरहंकारस्य ज्ञातृत्वव्युदासमभिप्रेत्याह—**उक्तरीत्येति** । दूषणान्तरमाह—**द्वयोरपीति** । तद्विवृणोति—**न हीति** ।

## भावप्रकाशिका

**समासान्तर्गता विभक्तिरिति** ; छायापत्तिः प्रतिफलनम् । ततश्च 'दर्पणस्य करवालसंनिधानेन करवालप्रतिफलनम्' इत्युक्ते यथा करवाले दर्पणस्य प्रतिफलनमित्यपि प्रतीयते ; करवालस्य दर्पणे प्रतिफलनमित्यपि प्रतीयते ; एवं चित्प्रतिफलनमित्युक्ते चिति प्रतिफलनं, चितो वा प्रतिफलनमित्यर्थद्वयमपि संभवत्येव । एतेन 'देवदत्तस्य यज्ञदत्तधनप्राप्तिः' इत्युक्ते यज्ञदत्ते देवदत्तधनप्राप्तिरित्यर्थो यथा न लभ्यते, एवम् 'अहंकारच्छायापत्तिः संविदः' इत्युक्ते, अहंकारे संविच्छायापत्तिरित्यर्थः, कथं लभ्येतेति शङ्का गलहस्तिता । न हि वयं छायाशब्देन समासं वर्णयामः, येनायं दोषः स्यात् ; अपितु प्रतिफलनार्थेन छायापत्तिशब्देन । प्रतिफलनं च षष्ठ्यन्तमिव सप्तम्यन्तमप्याकाङ्क्षतीति नानुपपत्तिगन्धोऽपि । अत्र केचित्—भाष्ये 'केयं तच्छायापत्तिः' इति पाठो युक्तः, पूर्वत्र तच्छायापत्त्येत्युक्तेः । ततश्च तच्छब्दस्य किमहंकारपरामर्शित्वम्? उत संवित्परामर्शित्वम्? इति विकल्पो युज्यते । चिच्छायापत्तिरिति पाठेऽपि ज्ञातृत्वच्छायापत्तिरिति न व्याख्येयम्, भाष्ये तथाऽप्रतीतेः ; ज्ञातृत्वच्छायापत्तिपक्षस्य परैरनुद्भावितत्वाच्च । अत एव ज्ञानच्छायापत्तिसंपर्कौ कस्मान्न निरस्ताविति चोद्यस्य नावकाशः ।

"तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥"

इत्युक्तरीत्या चैतन्यसमानाधिकरणकृत्याश्रयत्वलक्षणज्ञातृत्वस्य चिदचित्संनिधानेन परस्परच्छायापत्त्या संभव इति चोदयति--भाष्ये **जडस्वरूपस्येति** । सामान्यतो ज्ञातृत्वसंभवमात्रप्रदर्शनेऽप्यन्तःकरणस्येति वा चैतन्यस्येति वा धर्मिविशेषस्यानुक्तेः **चिच्छायापत्त्ये**त्यत्रापि षष्ठीसप्तमीसमासद्वयसंभवं चाभिप्रेत्य **तत्संभव** इत्यत्र ज्ञातृत्वोत्पत्तिपरत्वं निश्चित्य कस्य च्छायापत्त्या कुत्र ज्ञानमुत्पद्यत इति पृच्छति—**केयं चिच्छायापत्तिरिति** । ततश्च ययां छायापत्त्या संविद्येव ज्ञातृत्वमित्यर्थसिद्धम् । उत्तरत्राप्युभयत्रापि ज्ञातृत्वासंभवभाष्य-

स्यायमर्थः—चैतन्यसमानाधिकरणकर्तृत्वं हि ज्ञातृत्वम्; यत्र च चैतन्यं न तत्र कर्तृत्वं, यत्र च कर्तृत्वं न तत्र चैतन्यमिति नोभयत्रापि छायापत्त्या वास्तवज्ञातृत्वोत्पत्तिः सिध्यतीति। अत एव **नोभयत्र वास्तवज्ञातृत्व**मित्युत्तरभाष्यं च स्वरसमिति वदन्ति।

### श्रुतप्रदीपिका

अथ परोक्तासु छायापत्तिसंपर्काभिव्यक्तिषु प्रथमं छायापत्तिपक्षमनूद्य दुर्निरूपत्वमाह—**केयमिति**। तदेव विवरीतुं विकल्पयति—**किमिति**। धीस्थं चरमं दूषयति—**न तावदिति**। अथ प्रथमम्—**नापीति**। **उक्तरीतिः**; अचित्त्वादिः। किं ज्ञातृत्वं छायात्पत्तिः? उत ज्ञप्तिः? इति विकल्पे प्रथमं शिरो दूषितम्। द्वितीयं दूषयति—**द्वयोरिति**; व्यापकनिवृत्त्याप्यत्र न छायापत्तिरित्यर्थः। अन्यतरस्याचाक्षुषत्वेऽपि न छाया, द्वयोरपि तथात्वे किं पुनरित्यपिशब्दार्थः।

### तत्त्वटीका

अथ जलादिषु मणिप्रभावेधन्यायेन चान्द्रादिच्छायापत्तिन्यायेन वा ज्ञातृत्वाध्यासं शङ्कते—**जडेति**। तत्र संविदहंकारयोर्मध्ये किमीया छाया कुत्रापन्नेति विकल्पासहत्वमभिप्रेत्याह—**केयमिति**। प्रकृतिपुरुषयोरनयोरितरेतरस्वभावाध्यासो हि सांख्यैरुक्तः; तदनुसारोऽत्र परस्य संभवतीति मत्वा **तच्छायापत्त्ये**त्यत्र विवक्षाभेदबुद्ध्या विकल्पयति—**किमिति**। किमहंकारे संविदश्छायापत्तिः, उत स्वाधिष्ठानभूतायां संविदि तदध्यासितस्यैवाहंकारस्येत्यर्थः। आद्यं परसंमतप्रकारेणैव दूषयति—**न तावदिति**। द्वितीये युक्तिविरोधमाह—**नापीति**। **उक्तरीत्या**; प्रकृतिपरिणामित्वादिनेत्यर्थः। यद्यप्यजडस्य ज्ञातृत्वमव्यापकं तथापि जडस्याज्ञत्वं व्यापकमित्यभिप्रायेण तस्य ज्ञातृत्वायोग उक्तः। अत्र विकल्पकोट्योर्व्युत्क्रमेणोत्तरं दत्तमिति केचित्। तदा तु षष्ठीनिर्दिष्टयोर्दर्पणस्थानीयत्वम्। तत्र किमिह तद्धर्माध्यासमात्रं तच्छायापत्तिः, उत तत्प्रतिबिम्बापत्तिरिति विकल्पे प्रथमस्य दत्तोत्तरत्वं मत्वा द्वितीयेऽपि तेनैव दूषिते दूषणान्तरमप्यस्तीत्याह—**द्वयोरिति**। अपिशब्द एकैकाचाक्षुषत्वेऽपि प्रतिबिम्बासंभवादत्र कैमुत्यार्थः। व्याप्तिं व्यनक्ति—**न हीति**। **अचाक्षुषाणामिति** अधिष्ठानानामारोप्याणां च तन्त्रोक्तिः।

### श्रीभाष्यम्

**अथाग्निसंपर्कादयःपिण्डौष्ण्यवच्चित्संपर्काज्ज्ञातृत्वोपलब्धिरिति**

चेत्—नैतत्; संविदि वास्तवज्ञातृत्वानभ्युपगमादेव न तत्संपर्कादहंकारे ज्ञातृत्वं तदुपलब्धिर्वा। अहंकारस्य त्वचेतनस्य ज्ञातृत्वासंभवादेव सुतरां न तत्संपर्कात् संविदि ज्ञातृत्वं तदुपलब्धिर्वा।

## श्रुतप्रकाशिका

चित्संपर्कपक्षं दूषयितुं शङ्कते—**अथेति**। पूर्ववद्विकल्प्य दूषयति—**नैतदिति**। इयं साधारणी प्रतिज्ञा। अहंकारे संवित्संपर्कात् ज्ञातृत्वं व्युदस्यति—**संविदीति**। अहंकारसंपर्कात् संविदि ज्ञातृत्वं दूषयति—**अहंकारस्य त्विति**। **सुतरामिति**; ज्ञानस्याजडत्वात् ज्ञानाश्रयत्वं स्वमते संभवति। अहंकारस्य जडत्वेन वस्तुतो ज्ञानाश्रयत्वस्य स्वपरपक्षयोरुभयोरप्यसंभवान्न तत्संपर्कात् संविदि ज्ञातृत्वमिति भावः। रुमागतकाष्ठादीनां लवणसंबन्धाल्लवणत्वोत्पत्तिर्दृश्यते; अयःपिण्डेऽग्निसंपर्कादुष्णत्वमुपलभ्यते; अतो ज्ञातृत्वं तदुपलब्धिर्वेति पृथगुक्तम्। ननु पूर्वोक्ते पक्षद्वयेऽपि ज्ञातृत्वस्य छायापत्तिसंपर्कौ निरस्तौ; ज्ञानच्छायापत्तिसंपर्कौ कस्मान्न निरस्तौ? वक्ष्यमाणाभिव्यक्तिपक्षान्तर्भावादिति ब्रूमः। ज्ञानस्याहंकारे छायापत्तिर्नाम दर्पणे मुखस्येव तदाधेयतयाभिव्यक्तता। संपर्कपक्षेऽप्यधिष्ठानतया संपर्को ज्ञातृत्वप्रतीत्यनुपयुक्तः। अत आधेयतया संपर्को वक्तव्यः। स च तत्स्थतयाभिव्यक्तावन्तर्गतः। अतस्तत्रानुपन्यासः। किंच छायापत्तिः संविदोऽचाक्षुषत्वेनैव निरस्ता। संपर्कश्चोपलम्भानुगुण्येन वक्तव्यत्वादपृथक्सिद्धधर्मधर्मिभावेन वक्तव्यः। स च नोपपन्नः, अचेतनस्य चैतन्यस्य च तथाविधधर्मधर्मिभावायोगात्; दण्डदेवदत्तयोरिव ज्ञानज्ञात्रोः पृथगवस्थानादर्शनात्; अपृथगवस्थितयोः संसर्गश्चानुपपन्न इत्यनुसंधेयम्।

## भावप्रकाशिका

**संपर्कश्चोपलम्भानुगुण्येनेति**; प्रमात्वौत्सर्गिकत्वात् रुमाकाष्ठलावण्यवदेवाभ्युपगन्तव्यम्; न त्वयःपिण्डौष्ण्यवदिति भावः। **दण्डदेवदत्तयोरिति**; अयःपिण्डाग्न्यादिषु तथा दर्शनादित्यर्थः। **अपृथगवस्थितयोः संपर्कश्चानुपपन्न इति**; नन्वपृथक्सिद्धयोर्वह्निधूमयोर्वा देहात्मनोर्वा संपर्को दृष्ट इति चेत्—मैवम्, ज्ञानाहंकारयोर्धर्मधर्मिभावेनोपलम्भानुगुण्येनापृथक्सिद्धत्वे ज्ञातृत्वमपि वास्तवमेव किं न स्यादिति भावः।

श्रुतप्रदीपिका

संपर्कं शङ्कते—**अथेति**। दूषयति—**नैतदिति**। रुमागतकाष्ठादिलवणत्ववज्जलौष्ण्यवच्चेत्यभिप्रायेण ज्ञातृत्वं तदुपलब्धिर्वेत्युक्तम्। जडत्ववैषम्यात् **सुतरामित्युक्तिः**। अजडस्य हि संभवेत्। एवं ज्ञातृत्वसंपर्कपक्षः कण्ठोक्त्या दूषितः। ज्ञप्तिसंपर्कोऽपि न; धर्मधर्मिभावेनान्वयःसंपर्कः; अचेतनज्ञप्त्योस्तदसंभवात्। न चापृथग्भूतयोः संयोगः, ज्ञातृत्वव्यतिरेकेण ज्ञप्त्यनुपलम्भादिति भावः।

तत्त्वटीका

"अयःपिण्डे यथा वह्निर्भिन्नस्तिष्ठत्यभिन्नवत्।
तथा विश्वमिदं देवो व्यावृत्य परितिष्ठति॥"

इत्यादिवाक्यानुसारी पक्षान्तरं शङ्कते—**अथेति**। किमत्र रुमाक्षिप्तपार्थिवान्तरवत्संसर्गस्वभावोत्पत्त्या तदुपलब्धिः, उत मञ्जिष्ठादिवत्तत्तदारोपादिति विकल्पं मत्वा द्विधाप्यसंभवमभिप्रेत्याह—**नैतदिति**। तत्र संविदोऽहंकारस्य वा रुमास्थानीयत्वमिति विकल्पे पूर्वं निरस्यति-**संविदीति**। आरोपितज्ञातृत्वेऽन्योन्याश्रयसूचनाय **वास्तव**शब्दः। परमपि प्रागुक्तयुक्त्यैव निरस्तमित्याह—**अहंकारस्येति**। तुशब्दोऽत्र चूर्णहरिद्रादिन्यायतोऽपि ज्ञातृत्वाभ्युपगमे स्वेष्टविरोधं द्योतयति। अत्र **अचेतनस्येति** प्रकृतिपरिणामित्वादिपरम्। असंभवसाम्येऽपि संविद्यजडत्ववैषम्यं, तत्संपृक्ताहंकारे तद्विशिष्टभ्रमः शङ्क्येतापि; अहंकारसंपृक्तायां तु संविदि तावदज्ञत्वजडत्वादिभ्रम एव स्यादित्यभिप्रायेण **सुतरामित्युक्तम्**।

श्रीभाष्यम्

यदप्युक्तम्—उभयत्र न वस्तुतो ज्ञातृत्वमस्ति; अहंकारस्त्वनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति, आदर्शादिवदिति; तदयुक्तम्, आत्मनः स्वयंज्योतिषो जडस्वरूपाहंकाराभिव्यङ्ग्यत्वायोगात्। तदुक्तम्।

"शान्ताङ्गार इवादित्यमहंकारो जडात्मकः।
स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत्॥"

इति । स्वयंप्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः । तत्र तदायत्तप्रकाशोऽचिदहंकारोऽनुदितानस्तमितस्वरूपप्रकाशमशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीत्यात्मविदः परिहसन्ति ।

## श्रुतप्रकाशिका

अथाभिव्यक्तिपक्षमनुभाषितुं छायापत्तिसंपर्कपक्षयोरभिव्यक्तिपक्षस्य चान्योन्यवैषम्यं दर्शयति- —**उभयत्रेति** । **वस्तुत इति** ; छायापत्त्यादिनाऽऽपाद्यमानादध्यासात्पूर्वमेव सिद्धत्वं विवक्षितम् , न तु पारमार्थिकत्वम् । अलातचक्रादेरपि प्रतिबिम्बदर्शनादुष्णजलसंपर्कादनुष्णेऽप्यौष्ण्योपलम्भाच्चैकत्र पूर्वसिद्धज्ञातृत्वाध्यासादन्यत्र ज्ञातृत्वनिर्वाहः पूर्वस्मिन् पक्षद्वये। अभिव्यक्तिपक्षे तु ज्ञातृत्वस्य पूर्वसिद्धिमनपेक्ष्य ज्ञानाध्यासात् ज्ञातृत्वनिर्वाह इति वैषम्यम् । अभिव्यक्तिपक्षमाह— **अहंकारस्त्वित** । दूषयति— **तदयुक्तमिति** । कुत इत्यपेक्षायामात्मनोऽभिव्यञ्जकापेक्षा च नास्ति ; अहंकारस्याभिव्यञ्जकत्वशक्तिरपि नास्तीत्याह— **आत्मन इत्यादिना** । स्वोक्तार्थस्य सांप्रदायिकत्वप्रदर्शनार्थं दृष्टान्तेन तद्विशदीकरणार्थं चात्मसिद्धिग्रन्थमाह— **तदुक्तमिति** । शान्ताङ्गार इत्यादिकं श्लोकं विवृणोति— **स्वयमिति** । स्वयंप्रकाशशब्देनाभिव्यञ्जकापेक्षाया अभाव उक्तः। **अनुभवाधीनसिद्धय** इत्यनेनाहंकारस्याभिव्यञ्जकत्वाभाव उक्तः । **अचिदहंकार** इत्यनेन चिन्मात्रातिरेकित्वात् तदायत्तप्रकाश इति परोक्तहेतुः सूचितः । **अनुभवाधीनसिद्धय** इत्यनेनाहं कारस्याभिव्यञ्जकत्वाभाव उक्तः । **अनुदितानस्तमितस्वरूपप्रकाशम्** ; कदाचिदप्रकाशं चेत्तदाभिव्यञ्जकापेक्षा स्यात् ; तदभावात्कदाचिदप्यभिव्यञ्जकापेक्षा नास्तीत्यर्थः । **अशेषार्थसिद्धिहेतुभूतम्** ; त्वयापि विषयप्रकाशकत्वेन हि स्वयंप्रकाशत्वं समर्थितमिति भावः । **परिहसन्तीति** ; ईदृशमनुभवमीदृशाहंकारोऽभिव्यनक्तीति त्वदीया एव त्वत्समीपस्था एव हसन्तीति भावः ।

## श्रुतप्रदीपिका

पक्षद्वयाद्वैषम्यं दर्शयन्नभिव्यक्तिं शङ्कते— **यदपीति** । दूषयति— **तदिति** ; व्यञ्जकापेक्षाव्यञ्जकत्वशक्त्योरभावादित्यर्थः । उक्तवैशद्याय सांप्रदायिकत्वाय चाह— **तदुक्तमिति** । आत्मसिद्धिग्रन्थार्थं वृणोति— **स्वयमिति** । **अचिदिति** ; चिदन्यत्वात्तन्निर्भास्य इति भावः । **अनुदितेति** ; कादाचित्कप्रकाशत्वेन व्यञ्जकापेक्षाव्युदासः ।

तत्त्वटीका

पक्षद्वयोक्तदोषातिक्रमाय "जलधरेष्विवांशुमान्" इत्याद्यनुगृहीतं प्रागुक्तव्यञ्जकस्वभावमनुवक्ति—**यद्पीति**। न हि युक्तिविरुद्धं दृष्टन्तमात्रेण सिध्येदित्यभिप्रायेणाह—**तदिति**। अयुक्तिं विवृणोति—**आत्मन इति**। **स्वयंज्योतिषः**; नित्यस्वयंप्रकाशे स्वरूपे व्यञ्जकान्तरनिरपेक्षस्येत्यर्थः। संवित्तेरिव साक्षाद्व्यञ्जकत्वं न संभवतीत्यभिप्रायेण जडस्वरूपत्वेनोक्तिः। उक्तवैशिष्ट्यार्थमेतत्प्रकरणोक्तानां परमाचार्यसंप्रदायसिद्धत्वमाह—**तदुक्तमिति**। श्लोकविवृतिमाह—**स्वयमिति**। न ह्यविद्यातद्विकारेषु किंचित्त्वयापि स्वप्रकाशतया स्वीकृतमिति भावः। अचिच्छब्दश्चिदायत्तप्रकाशत्वे हेतुपरः। नित्ये न कारणापेक्षेति दर्शयितुम् **अनुदितत्वादि**कथनम्।

श्रीभाष्यम्

किंच अहंकारानुभवयोः स्वभावविरोधादनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यङ्क्तृव्यङ्ग्यभावः। यथोक्तम्—

"व्यङ्क्तृव्यङ्ग्यत्वमन्योन्यं न च स्यात्प्रातिकूल्यतः।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा घटे॥"

इति। न च रविकरनिकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यङ्ग्यत्ववत् संविदभिव्यङ्ग्याहंकाराभिव्यङ्ग्यत्वं संविदः साधीयः, तत्रापि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात्। करतलप्रतिहतगतयो हि रश्मयो बहुलाः स्वयमेव स्फुटतरमुपलभ्यन्त इति तद्बाहुल्यमात्रहेतुत्वात्करतलस्य नाभिव्यञ्जकत्वम्।

श्रुतप्रकाशिका

अहंकारानुभवयोरभिव्यञ्जकत्वाभिव्यङ्ग्यत्वानभ्युपगमेन दूषणमुक्तम्। तयोरभिव्यञ्जकत्वमभिव्यङ्ग्यत्वं चास्तु। तत्परस्परं नोपपद्यत इत्याह—**किंचेति**। **स्वभावविरोधात्**; अनुभवस्याशेषार्थसिद्धिहेतुत्वं तद्व्यतिरिक्तत्वेनाहंकारस्य तदधीनसिद्धित्वं च विरोधः। यथा पितापुत्रयोरन्यं प्रति पुत्रत्वे पितृत्वे च सत्यपि परस्परं पितृत्वपुत्रत्वव्यत्ययो नोपपद्यते,

एवमन्यापेक्षया तयोर्व्यङ्क्तृव्यङ्ग्यभावसंभवेऽपि स परस्परं नोपपद्यत इत्यर्थः। दूषणान्तरं चाह—**अनुभूतेरननुभूतित्वप्रसङ्गाच्चेति**। अस्मिन्नर्थेऽप्यात्मसिद्धिग्रन्थं दर्शयति—**यथोक्तमिति**। **प्रातिकूल्यतः**; पूर्वोक्तस्वभावविरोधशब्देन प्रातिकूल्यशब्दो व्याख्यातः। तद्व्यङ्ग्यस्यैव तद्व्यञ्जकत्वे परोक्तदृष्टान्तं दूषयिष्यन्नाह—**न चेति**। दृष्टान्तस्य साध्यविकलत्वमाह—**तत्रापीति**। तत्र तथात्वस्यान्यथासिद्धिं दर्शयति—**करतलेति**। नहि त्वत्र प्रसरणस्वभावं द्रव्यम्। अतस्तद्बाहुल्यहेतुत्वमहंकारस्यानुपपन्नमित्यर्थः।

## श्रुतप्रदीपिका

अन्यापेक्षया तयोर्व्यङ्ग्यत्वे व्यञ्जकत्वे चाभ्युपेतेऽपि नान्योन्यं तथात्वमित्याह—**किंचेति**। प्रातिकूल्यमुक्तस्वभावविरोधः। व्यङ्ग्यस्य व्यञ्जकत्वे परोक्तदृष्टान्तं व्युदस्यति—**न चेति**। कुत इत्यत्राह—**तत्रापीति**। कथं तर्हि करतलायत्तो रविकरप्रकाशातिशय इत्यत्राह—**करेति**। नाहंकारः करादिवत् स्थूलः। ज्ञानं च रविकरवन्न बाहुल्यार्हमिति भावः।

## तत्त्वटीका

तदायत्तप्रकाशेत्यनेन सूचितं विरोधं व्यञ्जयितुमाह—**किंचेति**। स्वभावविरोधात्पूर्वोक्ताद्व्यञ्जकत्वायोगाच्चेत्येके। तात्पर्यान्तरमपि ब्रूमः—यथा कार्यस्य स्वकारणकारणत्वे स्वप्रागभावकालवृत्तित्वप्रसङ्गाद्विरोधः, तथात्रापीति। न ह्यहंकारः स्वयमव्यक्तो व्यञ्ज्यात्, संविन्निरपेक्षसत्ताकत्वेन स्वरूपसत्यत्वप्रसङ्गात्। अत एव न स्वयं व्यक्तः। तस्मात्संविदधीनसिद्धिर्व्यक्तिः। तदिदम् "अशेषार्थसिद्धिहेतुभूतम्" इत्यनेन सूचितम्। संविच्च नाव्यक्ता व्यञ्जयेत्, जडत्वप्रसङ्गात्। तदसौ स्वव्यक्तिसापेक्षाहंकारायत्तस्वव्यक्तिरित्यन्योन्याश्रय इति। एतदप्यात्मसिद्धौ श्लोकान्तरेण स्पष्टयति—**यथोक्तमिति**। प्रातिकूल्यमिह स्वभावविरोधशब्दोक्तम्। मिथो व्यङ्ग्यत्वसंभवे प्रागुक्तं दृष्टान्तं दूषयति—**न चेति**। पक्षवद् दृष्टान्तेऽपि व्यञ्जकत्वासंभवमाह—**तत्रापीति**। ननु स्फुटतरप्रकाशः करतलायत्तः प्राग्दर्शितः; तत्राह—**करेति**। बाहुल्यद्वारा व्यञ्जकत्वे कारणानां सर्वेषां व्यञ्जकत्वप्रसक्तिमात्रचा सूच्यते। न चाहंकारः संवित्स्रोतःप्रतिघाती; न च सा बहुलीकरणार्हा; यत इह करादिदृष्टान्तः स्यादिति च भावः।

श्रीभाष्यम्

किंचास्य संवित्स्वरूपस्यात्मनोऽहंकारनिर्वर्त्याभिव्यक्तिः किंरूपा? न तावदुत्पत्तिः, स्वतःसिद्धतयानन्योत्पाद्यत्वाभ्युपगमात्। नापि तत्प्रकाशनम्, तस्यानुभवान्तराननुभाव्यत्वात्। तत एव च न तदनुभवसाधनानुग्रहः; स हि द्विधा—ज्ञेयस्येन्द्रियसंबन्धहेतुत्वेन वा, यथा जातिनिजमुखादिग्रहणे व्यक्तिदर्पणादीनां नयनादीन्द्रियसंबन्धहेतुत्वेन; बोद्धृगतकल्मषापनयनेन वा, यथा परतत्त्वाव-बोधनसाधनस्य शास्त्रस्य शमदमादिना। यथोक्तम्—"करणानामभूमित्वान्न तत्संबन्धहेतुता" इति।

श्रुतप्रकाशिका

तथाहंकारेणास्याभिव्यक्तिं त्रिधा विकल्प्य दूषयति— **किंचेत्यादिना**; **किंरूपा**; किंशब्दः क्षेपार्थः। दुर्निरूपेत्यर्थः। कुत इत्यपेक्षायामभिव्यक्तिर्नाम किमुत्पत्तिः? उत प्रकाशनम्? उतानुभवसाधनानुग्रह इति त्रिधा विकल्पमभिप्रेत्योत्पत्तिपक्षं दूषयति—**न तावदिति**। अनुत्पन्नस्य घटादेरभिव्यक्त्यसंभवादुत्पादकस्यापि दण्डचक्रादेरुत्पादनद्वाराभिव्यक्तिहेतुत्वादुत्पत्तिरपि विकल्पशिरसि निवेशिता। किंच व्यङ्ग्यप्रकाशोत्पादकं व्यञ्जनम्। संविदः स्वयमेव प्रकाशरूपत्वात्तदुत्पत्तिरेव तत्प्रकाशोत्पत्तिरूपाभिव्यक्तिरिति विकल्पशिरस्युत्पत्तिनिवेशः। **स्वतः सिद्धतयेति**; स्वतः सिद्धतया हि प्रागभावाभाव उक्तः; अनादित्वादिति वार्थः। अथ द्वितीयं व्युदस्यति—**नापीति**। **प्रकाशनम्**; अनुभवविषयप्रकाशोत्पत्तिः। अथ तृतीयं प्रतिवक्ति—**तत इति**। **तत एव** प्रकाशनानुपपत्तेरेव। नन्वनन्तरग्रन्थोत्थानमनुपपन्नम्, अनुग्राहकद्वैविध्यस्य तन्निरासानुपयोगित्वात्। उत्तरत्रात्मसिद्धिग्रन्थोदाहरणं च न संगतम्, इन्द्रियासंबन्धवाचित्वेनानुग्रहद्वैविध्यानुपयोगात्। अत्रोच्यते—पूर्वमनुग्राह्यजन्यप्रकाशविषयानुभूतिपर्यालोचनया तदनुभवसाधनानुग्रहो दूषितः। इदानीमनुग्रहप्रकाशविशेषपर्यालोचनया दूषणमाह—**स हीति**। द्विविधस्याप्यनुपपत्तिं दर्शयितुं प्रथमं द्वैविध्यमाह—**ज्ञेयस्येति**। शमदमादेः शास्त्रानुग्राहकत्वोक्तिः परमतेन। तद्ध्युपासनानुग्राहकम्। ननु **स हि द्विधेति** वक्तुमयुक्तम्, अनुग्रहस्य कोटिद्वयेऽप्यनन्तर्भावात्;

अनुमानादे*र्व्याप्तिग्रहादिरनुग्रहोऽप्यस्तीति। उच्यते—करणानुग्रहः कर्त्रनुग्रहश्चेति कोटिद्वयमेव; व्याप्तिग्रहणमपि करणानुग्रहान्तर्भूतम्। यद्वा दृष्टमुखेनानुग्रहः, अदृष्टमुखेन चेति द्विधा; व्याप्तिग्रहणमपि दृष्टमुखेनानुग्रहः। तस्मादिन्द्रियसंबन्धहेतुत्वेनेत्येतत्करणानुग्रहस्य दृष्टमुखेनानुग्रहस्य चोपलक्षणम्। तत्राहंकाराभिव्यङ्ग्यायाः संविदोऽनुमानविषयत्वासंभवात् **इन्द्रियसंबन्धहेतुत्वेने**त्युक्तम्। **बोद्धृगतकल्मषापनयनेनेति**; कर्त्रनुग्रहस्यादृष्टमुखेनानुग्रहस्य चोपलक्षणमुक्तम्। आत्मसिद्धिग्रन्थेऽप्ययमेव भावः। एवं द्वैविध्यदर्शनेन द्विधाभूतोऽप्यनुग्रहोऽहंकारस्य न सुवच इत्यनुषङ्गेण योजना। कथमत्र द्विविधस्याप्यनुग्रहस्यानुपपत्तिरिति शङ्कायामात्मसिद्धिग्रन्थमाह—**यथोक्तमिति**। "करणानामभूमित्वान्न तत्संबन्धहेतुता" इति; अनेन इन्द्रियसंबन्धहेतुत्वलक्षणोऽनुग्रहोऽनुपपन्न इति दर्शितम्। बोद्धृगतकल्मषापनयनलक्षणानुग्रहानुपपत्तिर्न ग्रन्थस्था। अत्र केचिदाचार्या एवं व्याचक्षते—शमदमादेरनुग्राहकत्वं शास्त्रसिद्धम्; न तथाहंकारस्याप्यनुग्राहकत्वं शास्त्रसिद्धमिति स्फुटत्वान्न ग्रन्थे कण्ठोक्त्या निरास इति। पूर्वार्धोदाहरणेन श्लोकस्योत्तरार्धे बोद्धृगतकल्मषापनयनलक्षणानुग्रहानुपपत्तिर्द्रष्टव्येत्याचार्याः। तदिदमुत्तरार्धम्—"अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते" इति। एकस्यैव स्वप्रतियोगितया शोध्यत्वं शोधकत्वं चानुपपन्नमित्यर्थः। अयं तु भाष्याभिप्रायः—अहमर्थस्य बोद्धृगतकल्मषापनयने कर्तृत्वं किं स्वरूपेण? उतादृष्टकिंचित्कारमुखेन? प्रथमे कर्मकर्तृविरोधः, एकस्यैव स्वापेक्षया शोध्यत्वशोधकत्वानुपपत्तेः। द्वितीये निष्प्रमाणत्वम्; न ह्यन्तःकरणस्यादृष्टवशादन्तःकरणशुद्धिरित्यत्र प्रमाणमस्तीति।

## भावप्रकाशिका

**अनुत्पन्नस्येति**; अन्वयव्यतिरेकाभ्यामुत्पत्तेरभिव्यक्तिहेतुतयोत्पत्तिरभिव्यक्तिशब्दव्यपदेश्या भवति; अभिव्यज्यते अस्या इति व्युत्पत्त्या अपादाने क्तिन्यभिव्यक्तिशब्दस्योत्पत्तिपरत्वसंभवादिति भावः। एतदस्वरसादाह—**किंचेति**। **प्रकाशोत्पत्तिरूपाभिव्यक्तिरितीति**; ननु च तत्प्रकाशनमिति द्वितीयपक्षाभेदः स्यादिति चेत्—न; द्वितीयपक्षे विषयविषयिभावो भेदगर्भः, इह तु न तथेति द्रष्टव्यम्। एतदभिप्रायेण **प्रकाशनमनुभवविषयप्रकाशोत्पत्तिरिति** वक्ष्यति। स्वतः सिद्धशब्दस्यानन्यप्रकाश्यत्वा-

---

* **व्याप्तिस्मरणादिरिति भावप्रकाशिकासंमतः पाठः।**

नन्योत्पाद्यत्वरूपार्थद्वयसंभवादुभयथा व्याचष्टे—**स्वतः सिद्धतया हीत्यादिना**। **पूर्वमिति;** **तत एवेत्यादि**भाष्येणेत्यर्थः। **अनुग्राह्येति;** अनुग्राह्यमनुग्रहणसाधनम्। **अनुग्रहस्य-कोटिद्वयेऽप्यनन्तर्भावादिति;** सर्वस्याप्यनुग्रहस्य कोटिद्वयेऽप्यनन्तर्भावादित्यर्थः। **व्याप्तिस्मरणादिरनुग्रह इति;** तद्धेतुभूतव्याप्त्यनुभवादिरनुमानानुग्राहकः। न चानुग्रहः फलारम्भौन्मुख्यं, सामर्थ्योद्बोधनमन्यदेवेति कथं व्याप्तिस्मरणादेरेवानुग्रहरूपत्वमिति वाच्यम्, साधनव्यतिरेकेणानुग्रहसद्भावे प्रमाणाभावात्। व्याप्तिस्मरणानुगृहीतमनुमान-मित्युक्तिस्तु 'अनुभवेनानुभूयते' इतिवदुपपन्नेति भावः। **इन्द्रियसंबन्धहेतुत्वेनेत्यु-क्तमिति;** वस्तुतस्तु इदमनुमानादेरप्युपलक्षणम्, नेन्द्रियाणि नानुमानमिति निषेधस्य तुल्यत्वादिति द्रष्टव्यम्। **अनुषङ्गेणेति;** उत्तरभाष्यानुषङ्गेणेत्यर्थः। आचार्यैरुभयैरुक्तमपि तद्विकल्पमुखेन भाष्याभिप्रेतमित्याह—**अयं तु भाष्याभिप्राय इत्यादिना**।

## श्रुतप्रदीपिका

अथाभिव्यक्तिं विकल्प्य दूषयति—**किंचेति**। **किंरूपा;** दुर्निरूपा। उत्पादक-मप्युत्पत्तिद्वाराभिव्यक्तिहेतुरित्युत्पत्तिः शङ्किता। द्वितीयं दूषयति—**नापीति**। तृतीयं व्युदस्यति—**तत इति**। अनुभाव्यत्वमभ्युपेत्य दूषयितुमाह—**स हीति**। इन्द्रियसंबन्धहेतु-त्वोक्तिर्दृष्टानुग्रहस्य वा कारणानुग्रहस्य वोपलक्षणार्थः, विधान्तरासंभवात्। अन्यच्चादृष्टानु-ग्रहस्य कर्त्रनुग्रहस्य चोपलक्षणम्। शमादेः शास्त्रानुग्राहकत्वं परोक्तदिशा। द्विविधोऽप्यनुग्र-होऽनुपपन्न इत्यर्थसिद्धम्। अन्यथाऽनन्तरग्रन्थवैघट्यम्। दूषणस्य स्फुटत्वादनुक्तिः। यद्वा उत्तरार्धसिद्धदूषणं पूर्वार्धेन स्मारितमिति भावः। "अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते" इति हि तत्।

## तत्त्वटीका

व्यक्तिस्वरूपं निर्धार्य मिथो व्यञ्जकत्वं वाच्यम्; सैवात्र दुर्वचेति विवक्षुराह—**किंचेति**। **अस्येत्यनेन** स्वयंप्रकाशतया स्थापितत्वं सूच्यते। तत्र हेतुः संविद्रूपत्वम्। वक्ष्यमाणकोटीनां यथायोगं मानविरोधमभ्युपगमविरोधं च व्यञ्जयितुम् **आत्मन** इत्युक्तम्। **किंरूपा;** न किंचिद्रूपेत्यर्थः। विकल्पकोटीर्हृदि निधाय क्रमाद् दूषयति—**न तावदिति**। उत्पत्तिरेवाभिव्यक्तिरिति सांख्यैरुच्यते; परस्य चानिर्वचनीयोत्पत्तिर्बुद्धित एव सिध्यति; स्वमते च प्रत्यक्षधीहेतुभूतविषयोत्पादकमुत्पादनद्वारा व्यञ्जकतयैवोपचर्येत। उत्पत्तिकोटि-रिहाशङ्क्य निरस्ता। **स्वतः सिद्धतया;** अनादितयेत्यर्थः। **अनन्योत्पाद्यत्वाभ्युपगमात्;**

सौगतवदुत्पाद्यत्वस्यानङ्गीकारादिति यावत्। तदिदं कोट्यन्तरवन्निषेधति—**नापीति**। **तत्प्रकाशनम्**; आत्मगोचरप्रकाशजननम्। इदं च ज्ञापकत्वेन कारणत्वेन वा भाव्यम्। **अननुभाव्यत्वात्**; स्थापितं ह्येतत् त्वयैवेति भावः। कोट्यन्तरेऽप्युक्तदोषानतिवृत्तिमाह—**तत एवेति**। चोऽत्र भिन्नक्रमः। अस्मिन्पक्षे दत्तोतरत्वमप्युत्तरं व्यञ्जयितुं विकल्पयति—**स हि द्विधेति**। अत्र पूर्वः कल्पो दृष्टोपकाररूपकरणानुग्रहमुपलक्षयति; उत्तरस्त्वदृष्टमुखेन कर्तृसंस्कारद्वारकः। तत्र करणसंभाव्यानुग्रहान्तरं शङ्कते—**यथेति**। ग्राह्य इति शेषः। संयुक्तसमवायेन जातिग्रहणे व्यक्तिसंयोगोऽपेक्षित इत्येतावता व्यक्तिनिदर्शनम्। दर्पणादीनां तु नायनरश्मिप्रतिस्रोतःप्रवर्तनद्वारा। व्यक्तिदर्पणादीनां तु व्यञ्जकत्वमेव नास्तीति वक्ष्यति। **कल्मष**शब्द इह कषायशब्दोक्तं कृत्स्नमभिप्रैति। अनयोराद्यस्यात्मसिद्धौ दूषणमुक्तमित्याह—**यथोक्तमिति**। **अभूमित्वात्**; अविषयत्वादित्यर्थः। द्वितीये तु शब्देन प्रत्यक्षे जनयितव्ये शमादिरनुग्राहक इति। निष्प्रमाणकारणकल्पनासिद्धेर्दूषणस्य दुष्टत्वात्तदुक्तिरिह नादृता। "अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते" इत्युत्तरार्धेन दूषणम्। अहमर्थस्येति काकाक्षिवत्। अहंकारातिरिक्तस्य बोद्धुरनभ्युपगमात्तस्य च स्वरूपेण स्वकल्मषविरोधित्वे कल्मषनिबर्हणार्थं कर्तव्यविधयो निरर्थकाः स्युरिति भावः।

### श्रीभाष्यम्

**किंच अनुभूतेरनुभाव्यत्वाभ्युपगमेऽप्यहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः। स ह्यनुभाव्यानुभवोत्पत्तिप्रतिबन्धनिरसनेन भवेत्; यथा रूपादिग्रहणोत्पत्तिनिरोधिसंतमसनिरसनेन चक्षुषो दीपादिना। न चेह तथाविधं निरसनीयं संभाव्यते। न तावत् संविदात्मगतं तज्ज्ञानोत्पत्तिनिरोधि किंचिदप्यहंकारापनेयमस्ति। अस्ति ह्यज्ञानमिति चेत्, न; अज्ञानस्याहंकारापनोद्यत्वानभ्युपगमात्। ज्ञानमेव ह्यज्ञानस्य निवर्तकम्।**

### श्रुतप्रकाशिका

पूर्वमिन्द्रियगोचरत्वानभ्युपगमेन दूषणमुक्तम्; अथानुभाव्यत्वाभ्युपगमेन दूषणमाह—**किंचेति**। अनुग्रहस्वरूपं शिक्षयति—**स हीति**। व्यक्तिदर्पणादावनुग्रहप्रका-

रान्तरे दृष्टेऽपि कथं प्रतिबन्धनिरसनरूपानुग्रह एव परिशेषितः ? उच्यते—जातिव्यक्त्योर्नियतधर्मधर्मिभावेन व्यक्तिर्जातेर्व्यञ्जिका । न तथाहंकारानुभवयोर्नियतधर्मधर्मिभावोऽस्ति । स तु परेणैव निरस्तः । मूर्तद्रव्यभूतश्चाक्षुषरश्मिप्रतिहतिहेतुर्दर्पणो मूर्तद्रव्यभूतचाक्षुषरश्मिमुखेन संबन्धयति । न च तथाहंकारोऽमूर्तद्रव्यं कस्यचित्प्रतिहतिहेतुरिति वक्ष्यमाणामिहानुग्रहप्रकारान्तरानुपपत्तिमभिप्रेत्य प्रतिबन्धनिरसनरूपानुग्रह एव परिशेषितः । ईदृशानुग्रहे दृष्टान्तमाह—**यथा रूपादीति** । ततः किमित्यत्राह—**न चेहेति** । तदुपपादयति—**न तावदिति** । किं प्रागभावरूपमज्ञानं, किं वा भावरूपमज्ञानम् , उतान्यन्निरसनीयमुच्यत इति शिरस्त्रयमभिप्रेत्य तावच्छब्दः प्रयुक्तः । **न तावदिति** ग्रन्थेनान्यन्निरसनीयं निरस्तम् । यद्वा अहंकारस्याज्ञाननिरासकत्वमज्ञानस्य संवित्संबन्धित्वं चोभयमनुपपन्नमित्यभिप्रेत्य प्रथममहंकारापनेयत्वमज्ञानस्य प्रतिक्षिपति—**न तावदिति** । अहंकारापनेयमज्ञानमस्तीति शङ्कते—**अस्ति हीति** । दूषयति—**नेति** । अज्ञानशब्दो भावरूपस्याभावरूपस्य च साधारणः । दूषणमपि साधारणम् , द्विविधस्याप्यज्ञानस्याहंकारापनोद्यत्वाभावात् । किं निवर्तकमित्यत्राह—**ज्ञानमेव हीति** । प्रागभावस्यापि ज्ञानोत्पत्तिर्निवर्तिका ; भावरूपस्यापि ज्ञाननिवर्त्यत्वं पराभ्युपेतम् ।

### भावप्रकाशिका

**अहंकारोऽमूर्तद्रव्यमिति** ; अकठिनद्रव्यमित्यर्थः । पक्षद्वयनिरसनानन्तरमेवान्यपक्षनिरासस्य युक्तत्वात् **न ताव**दित्यनेन तन्निरासोऽनुपपन्न इत्यन्यथा व्याचष्टे—**यद्वाहंकारस्येति** ।

### श्रुतप्रदीपिका

ऐन्द्रियकत्वमभ्युपगम्य दूषयति—**किंचेति** । पूर्वमनुभवपर्यालोचनयानुग्रहो दूषितः ; अथानुग्रहपर्यालोचनया दूष्यते—**स हीति** । तत्स्वरूपमाह—**स हीति** । व्यक्तिदर्पणाद्यन्यथासिद्धेर्वक्ष्यमाणत्वात्प्रतिबन्धनिरासः परिशेषितः । अथानुभवपर्यालोचनया दूषयति—**न चेति** । अज्ञानस्याहंकारापनोद्यत्वसंविदाश्रयत्वयोः प्रथमं दूषयति—**न तावदित्यादिना** ।

### तत्त्वटीका

अनुभूतिस्वभावात्तदनुग्रहप्रकारस्वभावाच्चाहंकारस्य व्यञ्जकत्वं निरस्तम् ; अथानु-

मूतेरनुभाव्यत्वान्वारोहेऽप्यहंकारस्वभावात्तस्य करणानुग्राहकत्वं दुर्वचमिति वक्तुमाह—**किंचेति**। अत्र कोट्यन्तराणां दूषितत्वात्परबुद्ध्यनुसारेण संभावितमनूद्य दूषयति—**स हीत्यादिभि**स्त्रिभिः। प्रतिबन्ध इह विवक्षितकार्योपयुक्तस्वनिवृत्तिपदार्थः। ततश्च तथाभूतं द्रव्यमिति परैरेवाङ्गीकृतम्। अत्र निरसनीयस्य संविद्गतत्वं, तत्तिरोधायकत्वम्, अहंकारापनोद्यत्वं च दूष्यतयोपक्षिपन् उद्भटदोषं चरमं दूषयति—**न तावदिति**। गतशब्दोऽत्र मणौ मालिन्यवदाधेयतया छादकतया प्राप्तं वक्ति। **किंचिदपि**; रजस्तमःकलुषादिकमित्यर्थः। परमतप्रसिद्ध्या शङ्कते—**अस्ति हीति**। तत्र स्वमतविरोधं प्रमाणविरोधं चाभिप्रेत्याह—**नेति**। प्रथमं विवृणोति—**अज्ञानस्येति**। द्वितीयं विवृणोति—**ज्ञानमिति**। अज्ञानस्याहंकारेण निवृत्तौ किं पश्चान्निष्फलेन ज्ञानेन तदर्थप्रवृत्त्या चेति भावः। भावरूपे चाज्ञाने सममिदं दूषणम्।

**श्रीभाष्यम्**

**न च संविदाश्रयत्वमज्ञानस्य संभवति, ज्ञानसमानाश्रयत्वात् तत्समानविषयत्वाच्च। ज्ञातृभावविषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं भवितुमर्हति। यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वं तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात्। संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽप्यात्मतयाभ्युपगतायास्तस्या ज्ञानविषयत्वाभावेन ज्ञानेन न तद्गताज्ञाननिवृत्तिः। ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति, यथा रज्ज्वादौ। अतो न केनापि कदाचित् संविदाश्रयमज्ञानमुच्छिद्येत। अस्य च सदसदनिर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टाद्वक्ष्यते। ज्ञानप्रागभावरूपस्य चाज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन न तन्निरसनेन तज्ज्ञानसाधनानुग्रहः। अतो न केनापि प्रकारेणाहंकारेणानुभूतेरभिव्यक्तिः।**

**श्रुतप्रकाशिका**

एवमज्ञानस्य संविदाश्रयत्वे सत्यप्यहंकारापनोद्यत्वायोगात्तन्निरसनरूमानुग्रहो न

संभवतीत्युक्तम्; अथाज्ञानस्य संविदाश्रयत्वं चानुपपन्नमित्याह—**न चेति**। **संविदाश्रयत्वम्**; संवित्संबन्धित्वमित्यर्थः। आश्रयणं संबन्धः। संबन्धश्च कर्मत्वेनाश्रयत्वेन चेत्युभयविधसंबन्धपर आश्रयशब्दः। "आश्रयश्चेतसो ब्रह्म" इत्यादिप्रयोगाच्चाश्रयशब्देन विषयस्याप्युपस्थापनं युक्तम्। संविदोऽज्ञानसंबन्धः किमाश्रयतया? उत विषयतया? उभयथापि संबन्धो नोपपन्न इत्यर्थः। कुत इत्यत्राह—**ज्ञानेति**। ततः किमित्यत्राह—**ज्ञातृभावेति**। **साक्षिणि**; द्रष्टर्येव साक्षित्वम्; ज्ञप्तेस्तु साक्षित्वमपि व्याहतं भवतीत्यभिप्रायः। **भवितुमर्हतीति** निर्देशेनाश्रयतया विषयतया वा संबन्धमात्रं विवक्षितम्। अनेन व्यतिरेकव्याप्तिर्दर्शिता भवति। संविदाश्रयत्वाभावेऽन्वयव्याप्तिं दर्शयति—**यथेति**। अज्ञानाश्रयत्वं ज्ञानप्रागभावाश्रयत्वमनिर्वचनीयाज्ञानाश्रयत्वं वा; तत् घटादौ नास्तीत्यर्थः। **ज्ञानाश्रयत्वप्रसक्तीति**; ज्ञातुरप्यज्ञानाश्रयत्वं ज्ञानाश्रयत्वं च कालभेदादविरुद्धमिति भावः। ज्ञानात्यन्ताभावाश्रयत्वं हि घटादेः। ज्ञानं नाज्ञानाश्रयः, न चाज्ञानविषयः; अज्ञानाश्रयत्वे तद्विषयत्वे चोपगम्यमाने ज्ञातृत्वज्ञेयत्वप्रसङ्ग इति प्रतिकूलतर्क उक्तो भवति। एवमज्ञानाश्रयत्वानभ्युपगमेन दूषणमुक्तम्। तदभ्युपगमेन दूषणमाह—**संविद इति**। अवच्छिन्नज्ञानस्यानुभाव्यत्वेऽङ्गीकृतेऽप्यनवच्छिन्नस्यात्मभूतस्य ज्ञानस्यानुभाव्यत्वानभ्युपगमादित्यभिप्रायेणाह—**आत्मतयाभ्युपगताया इति**। ज्ञानविषयस्यैवाज्ञाननिवृत्तिं सदृष्टान्तमाह—**ज्ञानं हीति**। यद्यविषयेऽप्यज्ञाननिवृत्तिः, तर्हि शुक्तिज्ञानेन सर्पभ्रमनिवृत्तिः स्यादित्यभिप्रायः। एवं ज्ञाननिवर्त्याज्ञानत्वे ज्ञानविषयत्वप्रसङ्ग इत्युक्तं भवति। आश्रयत्वाभ्युपगमेनोक्तदूषणं निगमयति—**अत इति**। त्वयाहंकारापोह्यत्वेनोक्तमज्ञानं किं सदसदनिर्वचनीयम्, उत ज्ञानप्रागभावरूपमिति विकल्प्याह—**अस्य चेति**। द्वितीयं प्रतिवक्ति—**ज्ञानप्रागभावेति**। विरोधिशब्देन प्रतिबन्धकत्वं विवक्षितम्; न सहानवस्थानमात्रत्। अभिव्यक्तेर्दुर्निरूपत्वं निगमयति—**अत इति**। **केनापि प्रकारेण**; उत्पादकत्वेन वा प्रकाशकत्वेन वा तदनुभवसाधनानुग्राहकत्वेन वेत्यर्थः।

### भावप्रकाशिका

भाष्ये—**न केनापि कदाचित् संविदाश्रयमज्ञानमुच्छिद्यतेति**; नन्वहंकारापनेयत्वमज्ञानस्य वदन्तं प्रति कथमज्ञानस्यानुच्छेदापादनमिति चेत्—न; अहंकारनिवर्तकत्वपक्षस्य गर्भस्रावेण गतत्वात् ज्ञानमात्रनिवर्त्यत्वस्यैव वक्तव्यत्वं सिद्धवत्कृत्य तत्प्रसङ्गादेतद्दूषणोपादानमिति

द्रष्टव्यम् । अत एवानुभूतेरनुभाव्यत्वाभ्युपगमेऽपीत्यनुभाव्यत्वमभ्युपगम्य प्रवृत्ते ग्रन्थे **विषयभावविरहिते ज्ञानमात्र इति** विषयत्वाभावकथनं पूर्वोत्तरविरुद्धमिति शङ्कापि निरस्ता, **न च संविदाश्रयत्वमित्यादि**भाष्यस्य प्रासङ्गिकत्वादिति ध्येयम् । **व्यतिरेकव्याप्तिर्दर्शितेति** ; ज्ञानविषयत्वाभावादज्ञानविषयत्वं नास्तीत्यनुमाने ज्ञानविषयत्वाज्ञानविषयत्वाभावयोः पक्षादन्यत्रावृत्तेर्व्यतिरेकव्याप्तिरिति भावः । **ज्ञाननिवर्त्याज्ञानत्व इति** बहुव्रीहिः ।

## श्रुतप्रदीपिका

इहाज्ञानशब्दो भावाभावसाधारणः, दूषणं च तस्य तथा । संविद्गतत्वं दूषयति—**न चेति । संविदाश्रयत्वम्** ; संवित्संबन्धित्वत् । आश्रयणं हि संबन्धः । स च विषयत्वेनाधारत्वेन च । अतो विषयस्याप्याश्रयशब्देन विवक्षा युज्यते । "आश्रयश्चेतसो ब्रह्म" इतिवत् । तदनुपपत्तौ हेतुमाह—**ज्ञानेति** । ततः किमित्यत्राह—**ज्ञात्रिति** । निदर्शयति—**यथेति** । अज्ञानाश्रयत्वे देवदत्तवत् ज्ञानाश्रयत्वप्रसङ्गः । अज्ञानविषयत्वे ज्ञेयत्वप्रसङ्ग इत्यर्थः । अज्ञानाश्रयत्वमुपगम्याह—**संविद इति** ; ज्ञाननिवर्त्याज्ञानत्वे ज्ञानविषयत्वप्रसङ्ग इत्यर्थः । संवित्संबन्धानुपपत्तिमुपसंहरति—**अत इति** । भावरूपत्वे विशेषतो दूषणमाह—**अस्य चेति** । अभावरूपत्वेऽपि दूषणमाह—**ज्ञानेति । विरोधित्वम्** ; प्रतिबन्धकत्वम् ; न सहानवस्थितिः । अभिव्यक्त्यनुपपत्तिं निगमयति—**अत इति ; केनापि प्रकारेण** ; उत्पादकतया प्रकाशकतया तदनुग्राहकतया चेत्यर्थः ।

## तत्त्वटीका

अथ संविदात्मगतमित्युक्तं दूषयति—**न चेति** । संवित् आश्रयो यस्य तत्संविदाश्रयम् । आश्रयशब्द इह विषयतया आधारतया च संबन्धित्वमाह, **ज्ञानसमाने**त्यादिना तदुभयनिषेधहेतुद्वयोक्तेः । विषयेऽप्याश्रयशब्दः "चेतसो ये व्यपाश्रयाः" "आश्रयश्चेतसो ब्रह्म" इति प्रयुज्यते । शुक्तिकाद्यज्ञानं हि यदाश्रितं यद्विषयं च तदाश्रितेन तद्विषयेण च बाधकज्ञानेनापोद्यते । इह चाज्ञानाश्रयत्वे तद्विषयत्वे च ज्ञातृत्वज्ञेयत्वे प्रसज्येयातामिति भावः । उक्तस्यासंभवस्य व्यापकाभावफलितत्वमाह—**ज्ञात्रिति** । स्वरूपतो धर्मतोऽपि तिरोधेयत्वासंभवाय ज्ञानमात्रत्वोक्तिः । साक्षित्वोक्तिश्च स्वस्य परस्य वा तिरोधाने स्वपरसाक्षित्वं न स्यादिति सूचनार्था । अत्राज्ञानाधारत्वांशस्यासंभवं निदर्शि-

नेन निर्धारयति—**यथेति**। यद्यपि ज्ञानात्यन्ताभावरूपमज्ञानं घटादौ ज्ञानमात्रे चास्ति, तथापि तस्य तत्स्वरूपानुबन्धितया निवर्त्यत्वाभावादिह परेष्टाज्ञानाधारत्वासंभव उच्यते। भ्रान्त्या तत्संभवाभ्युपगमेऽनिर्मोक्षप्रसङ्गमाह—**संविद इति**। ज्ञानविषयत्वे तु जडत्वादिप्रसङ्गस्त्वयैवोक्त इति भावः। अज्ञानस्य स्वविरोधिनानिवर्त्यत्वे किं संविदोऽवेद्यत्वेनेत्यत्राह—**ज्ञानमिति**। **स्वविषये**; स्वविषयस्य छादकमेवेत्यर्थः। तन्निदर्शनेन व्यनक्ति—**यथेति**। मिथ्याभूतं रज्जुसर्पादिकं स्वविषय एव हि पूर्वभावं निवर्तयतीत्यव्याहतम्। एवं विषयतया आश्रयतया च अज्ञानसंबन्धित्वे मुक्त्यसंभवं निगमयति—**अत इति**। अत्र परेष्टभावरूपधर्मसिद्धौ हि तद्धर्मतयोक्तानां संभवासंभवौ चिन्त्यौ; सापि नास्तीत्याह—**अस्य चेति**। तिष्ठतु मदिष्टं भावरूपमज्ञानम्; ज्ञानप्रागभावरूपाज्ञाननिरासे-नाहंकारस्तज्ज्ञानसाधनमनुगृह्णात्वित्यत्र 'ज्ञानमेव ह्यज्ञानस्य निवर्तकम्' इत्यनेन दत्तोत्तरत्वेऽपि दूषणान्तरं दर्शयितुमाह—**ज्ञानेति**। प्रागभावस्य प्रतियोगिना समानकालत्वमेव हि विरुद्धम्; प्रतियोगिनं प्रति तु नियतपूर्वतया हेतुतैवेति भावः। अहंकारस्य व्यञ्जकत्वायुक्तिं विकल्पकोट्यन्तरासंभवव्यक्त्यै निगमयति—**अत इति**। व्यङ्क्तृव्यङ्ग्यव्यक्त्यादिस्वभावसमीक्षया दर्शितानां दोषाणां दुस्तरत्वादित्यर्थः। **केनापि**; उत्पादनद्वारा ज्ञापकतया तत्करणतया तदनुग्राहकतया चेत्यर्थः।

श्रीभाष्यम्

**न च स्वाश्रयतयाभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः; प्रदीपादिष्वदर्शनात्, यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च। तच्च स्वतःप्रामाण्यन्यायसिद्धम्। न च दर्पणादिर्मुखादेरभिव्यञ्जकः; अपि तु चाक्षुषतेजःप्रतिफलनरूपदोषहेतुः। तद्दोषकृतश्च तत्रान्यथावभासः। अभिव्यञ्जकस्त्वालोकादिरेव। न चेह तथाहंकारेण संविदि स्वप्रकाशायां तादृशदोषापादनं संभवति। व्यक्तेस्तु जातिराकार इति तदाश्रयतया प्रतीतिः, न तु व्यक्तिव्यङ्ग्यत्वात्। अतोऽन्तःकरणभूताहंकारस्थतया संविदुपलब्धेर्वस्तुतो दोषतो वा न किंचिदिह कारणमिति नाहंकारस्य ज्ञातृत्वं**

**तथोपलब्धिर्वा । तस्मात् स्वत एव ज्ञातृतया सिध्यन्नहमर्थ एव प्रत्यगात्मा, न ज्ञप्तिमात्रम् । अहंभावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तम् ।**

## श्रुतप्रकाशिका

अथ स्वात्मस्थतयाभिव्यक्तिं दूषयति—**न चेति** । व्यभिचारमाह—**प्रदीपादिष्विति** । हेत्वन्तरं चाह—**यथावस्थितेति** । **प्रतीतिः**; व्यवहारानुगुण्यम्; तदनुगुणात् ज्ञानादीनां स्वभावादित्यर्थः । तदेवोपपादयति—**तच्चेति** । प्रामाण्या प्रामाण्यविषयाश्चत्वारः पक्षाः—प्रामाण्याप्रामाण्ये द्वे च परतः; द्वे च स्वतः; प्रामाण्यं परतः, अन्यत् स्वतः; प्रामाण्यं स्वतः, अन्यत्परत इति । प्रथममनुपपन्नम्, निःस्वभावत्वादिप्रसङ्गात् । प्रामाण्याप्रामाण्ये अन्यत्र विद्येते चेत्, तत्संबन्धात् ज्ञाने तथात्वं तत्संबन्धाभावेऽनुभयत्वं च युक्तम्, अनुष्णाशीतवत् । अन्यत्र तयोरविद्यमानत्वात्परतस्त्वमनुपपन्नम् । प्रामाण्यबुभुत्सापरम्परयानवस्थाप्रसङ्गाच्च । द्वयोरपि स्वतस्त्वमनुपपन्नम्, विरुद्धधर्मत्वेन व्याघातात् । न च व्यक्तिभेदादविरोधः; इयं प्रामाण्याश्रयव्यक्तिः, इयं नेति नियामकाभावात् । अप्रामाण्यस्यैव स्वतस्त्वमनुपपन्नम्; प्रामाण्यस्यैव भूयस्त्वात्, अन्यस्याभूयस्त्वाच्च । भूयसां स्वतस्त्वमल्पीयसामौपाधिकत्वं च हि युक्तम् । घटपटादिज्ञानेषु शुक्तिरजतादिज्ञानानामिदमंशेष्वपि प्रामाण्यदर्शनात्तस्य भूयस्त्वम् । अतः स्वतः प्रामाण्यं परतोऽप्रामाण्यमिति । क्वचिदात्मस्थतयाऽभिव्यञ्जनमभ्युपेत्य व्यभिचार उक्तः; अथ क्वचिदपि तन्नास्तीत्याह—**न चेति** । तर्हि मुखदर्शनाय दर्पणादिकं नोपादीयेतेत्यत्राह—**अपि त्विति** । प्रतिफलनस्य दोषत्वमन्यथाज्ञानहेतुत्वादित्याह—**तद्दोषेति** । कस्तत्राभिव्यञ्जक इत्यत्राह—**अभिव्यञ्जकस्त्विति**। अहंकारस्य मूर्तस्वच्छस्थूलद्रव्यत्वाभावात् संविदो ज्ञेयत्वाभावादचाक्षुषत्वाच्चाहंकारेण संविद्विषयभूतायां तद्ग्राहकवस्तुप्रतिफलनदोषो न संभवतीत्याह—**न चेहेति** । व्यक्तौ जातिप्रतीतिर्नियतधर्मधर्मिभावात्, न तु व्यङ्ग्यत्वादित्याह—**व्यक्तेरिति** । एतत् दर्पणव्यक्तिनिर्वाहद्वयं हृदि निधाय पूर्वं प्रतिबन्धनिरसनरूपानुग्रहो दूषितः । धर्मधर्मिभावेन वस्तुतस्तात्स्थ्येनोपलब्धिर्व्यक्तौ; दर्पणे तु प्रतिफलनरूपदोषात् । एवं परपक्षे न संभवतीत्याह—**अत इति** । वस्तुतः कारणं धर्मधर्मिभावः, दोषतस्तात्स्थ्येनोपलब्धिकारणं

मूर्तस्वच्छस्थूलद्रव्यत्वम्; उभयमप्यहंकारे नास्तीत्यर्थः । वस्तुतः कारणाभावान्न ज्ञातृत्वं विद्यते; दोषरूपकारणाभावान्नोपलभ्यते चेत्यभिप्रायेणाह—**नाहंकारस्य ज्ञातृत्वं तथोपलब्धिर्वेति** । ज्ञातुरात्मत्वं निगमयति—**तस्मादिति** । ज्ञप्तेरात्मत्वमयुक्तम्, अहंत्वाभावे प्रत्यक्त्वायोगादित्याह—**अहंभावविगम इति** । 'अहम्' इति व्यवहारानुगुणभासनविरहे स्वस्मै भासमानत्वं न स्यात् । अतः प्रत्यक्त्वमप्यहमर्थस्यैवात्मत्वसाधकमित्यर्थः ।

## भावप्रकाशिका

**प्रतीतिर्व्यवहारानुगुण्यमिति**; प्रतीतिशब्देन ज्ञानस्य परिग्रहे, ज्ञानानुगुण्यस्य ज्ञानेऽभावात् **प्रतीत्यनुगुणस्वभावत्वात् ज्ञानतत्साधनयो**रित्यस्यासंगतिः स्यादिति भावः । प्रामाण्याप्रामाण्ययोर्द्वयोरपि परतस्त्वमिति कोऽर्थः? यथा पृथिव्याः शीतत्वमुष्णत्वं च परतः, स्वतस्त्वनुष्णाशीतत्वम्, एवं वा; उत ज्ञानसामान्यसामग्र्यतिरिक्तोत्पाद्यत्वे सति यावत्तद्ग्राहकसामग्र्यतिरिक्तसामग्रीग्राह्यत्वमिति विकल्प्य प्रथमं दूषयति—**निःस्वभावत्वादिप्रसङ्गादिति**; प्रामाण्याप्रामाण्ययोर्द्वयोरप्यभावे सर्वस्यापि वस्तुनस्तद्वत्त्वतदभाववत्त्वयोर्द्वयोरप्यभावेन तुच्छत्वमेव स्यादित्यर्थः । दूषणान्तरमाह—**प्रामाण्याप्रामाण्येति** । **तत्संबन्धात् ज्ञाने तथात्वमिति**; यथा रुमासंबन्धात् काष्ठे लावण्यम्, अनुष्णाशीतपृथिव्यामुष्णशीतयोरग्निजलयोः संपर्कादुष्णत्वादिप्रतिभासो वा तद्वत् प्रामाण्याप्रामाण्ययोस्तत्प्रतिभासस्य वोपपत्तिरित्यर्थः । **परतस्त्वमनुपपन्नमिति**; प्रामाण्याप्रमाण्ययोस्तुच्छत्वमेव स्यात्, अन्यत्राप्यभावात् अत्राप्यसत्त्वात्; उष्णत्वशीतत्वयोस्त्वन्यत्र वृत्तिसंभवान्न तुच्छत्वमित्यर्थः । द्वितीयं दूषयति—**प्रामाण्यबुभुत्सेति**; गृहीतप्रामाण्यस्यैव निश्चयरूपतया तत्रापि प्रामाण्यग्रहापेक्षायामनवस्थेत्यर्थः । यद्वा **निःस्वभावत्वादिप्रसङ्गादि**त्यादिशब्देनानवस्थापरिग्रहः । उभयं विवृणोति—**प्रामाण्याप्रामाण्ये इत्यादिना** । **क्वचिदात्मस्थतयाभिव्यञ्जनमभ्युपेत्येति**; दीपादिष्वनैकान्त्यप्रदर्शनमेव क्वचिदभ्युपगमसूचकमिति भावः । भाष्ये **चाक्षुषतेजःप्रतिफलनेति**; **प्रतिफलनम्**; प्रतिहतिः । भाष्ये **वस्तुतो दोषतो वा न किंचिदिह कारणमितीति**; वस्तुस्वरूपं वा दोषस्वरूपं वा न किंचित् कारणमित्यर्थः । प्रत्यक्षप्रमायां हि वस्तुशब्दवाच्यो विषयो हेतुः । अतो वस्तुनः कारणत्वमुपपद्यत इति द्रष्टव्यम् । **धर्मधर्मिभावेन वस्तुत इति**; तसेः सार्वविभक्तिकत्वात् वस्तुना धर्मधर्मिभावेनेत्यर्थः ।

**मूर्तस्वच्छस्थूलद्रव्यत्वमिति** ; मूर्तस्वच्छस्थूलद्रव्यत्वप्रयुक्तं चाक्षुषतेजःप्रतिफलनरूपं तात्स्थ्येनोपलब्धौ दोषरूपं कारणमित्यर्थः। **वस्तुतः कारणाभावान्न ज्ञातृत्वं विद्यत इति** ; धर्मधर्मिभावात्मकस्य वस्तुरूपकारणस्याभावान्न ज्ञातृत्वं प्रतीयत इत्यर्थः। **अतः प्रत्यक्त्वमपीति**। **ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरिति** भाष्ये, त्य अपिर्भिन्नक्रमः। प्रत्यक्त्वसिद्धिरपि नेत्यन्वय इति भावः।

## श्रुतप्रदीपिका

स्वाश्रयतयाभिव्यक्तिमनैकान्त्येन दूषयति—**न चेति**। दूषणान्तरमाह—**यथेति**। ज्ञानस्य प्रतीत्यानुगुण्यं नाम व्यवहारानुगुण्यम्। तच्च कथमित्यत्राह—**तच्चेति**। दृष्टान्तान्यथासिद्धिमाह—**न चेति**। दोषत्वमुपपादयति—**तद्दोषेति**। केनाभिव्यक्तिरित्यत्राह—**अभिव्यञ्जकस्त्विति**। **न चेहेति** ; अहंकारस्य स्थूलद्रव्यत्वाकाराभावादिति भावः। **व्यक्तेस्त्विति** ; **आकारः**, अयुतधर्मः। अहंकारस्य ज्ञातृत्वानुपपत्तिं निगमयति—**अत इति**। व्यक्तिदर्पणाभिप्रायेण वस्तुतो दोषतो वेत्युक्तम्। ज्ञातुरात्मत्वं निगमयति—**तस्मादिति**। यद्यप्यात्मत्वोपगमो धियः, तथाप्यहंभावविरहेण प्रत्यक्त्वायोग इत्याह—**अहमिति**।

## तत्त्वटीका

'स्वाश्रयतया अभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः' इति यत्प्रागुक्तं तत्' प्रामाण्यं स्वत इति वदद्भ्योऽबाह्येभ्यो न रोचेतेत्यभिप्रायेण दूषयति—**न चेति**। स्वभावक्लृप्तिरियं व्यभिचारादयुक्तेत्याह—**प्रदीपादिष्विति**। **आदि**शब्द इन्द्रियलिङ्गागमसंस्काराणां तदनुग्राहकाणां च संग्रहार्थः। संशयादिषु व्यभिचारेऽपि यथा धियां प्रमात्वं स्वभावः प्राचुर्यात् गृह्यते, तथेहापि स्यादिति शङ्कानिरासाय बहुवचनम्। स्वभावनिष्कर्षश्चात्र विपरीत इत्याह—**यथावस्थितेति**। प्रतीतिशब्द इह व्यवहारयोग्यतापादनपरः। **स्वाभाव्यं** स्वभाव एव। अयं भावः—

मुक्तनित्येश्वरधियां प्रमात्वं ह्यनुपाधिकम्।
क्षेत्रज्ञधीपरिच्छेदभ्रमत्वादि च दोषजम्॥ ४९५॥
भ्रान्तावपि यथार्थत्वमधिष्ठानादिषु स्थितम्।
अनुप्रविष्टबौद्धैरप्यवशादिदमीरितम्॥ ४९६॥

अनुपप्लवभूतार्थस्वभावस्य विपर्ययैः ।
न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥ ४९७ ॥

इति । उक्तस्यार्थस्य जैमिन्यादिसंमतत्वेन मीमांसानिष्ठैः दुस्त्यजत्वं सूचयति—**तच्चेति** ।

* * * * *

मानत्वामानत्वे स्वत इति सांख्याः कणाशनाः परतः ।
पूर्वं परतो बौद्धाः परं तु मीमांसका द्वयं केचित् ॥ ४९८ ॥
सौगताश्चापि चार्वाकाः सांख्यकाणादवर्त्मगाः ।
प्रामाण्यज्ञप्तिरप्येवं बहुधावादि वादिभिः ॥ ४९९ ॥

अत्र दृष्टान्तैकदेशे व्यञ्जकत्वमेव मृग्यम्; कुतः स्वनिष्ठतया व्यञ्जनमित्यभिप्रायेणाह—**न चेति** । कुतस्तर्हि सर्वैस्तेषु व्यञ्जकतोक्तिरित्यत्राह—**अपि त्विति** । दृष्टावभासकरणभूतदृष्टिप्रसरहेतुतामात्रेण व्यञ्जकत्वोपचार इति भावः । अगृहीतग्रहणोपायस्य तदीयदोषत्वं व्यनक्ति—**तद्दोषेति** ।

प्रतिबिम्बेऽल्पतादीनामाभिमुख्यस्थितेरतः ।
यथार्हं वासनानां च दोषतैवं व्यवस्थिता ॥
सव्यासव्यविपर्यासप्रभृतेरपि संभवः ॥ ५०० ॥

* * * * *

एवं तर्हि * * * दोषदर्पणादेरपि धीहेतवोऽन्यथा स्युः ।
धीहेतवो यथा दोषाश्च्व द्रागामित्यसत् (?) ।
अन्वयव्यतिरेकाद्यैर्हेतुः स इति निश्चयात् ॥ ५०१ ॥
तत्त्वधीरोधसंकोचे दोषाः स्युर्भ्रान्तिहेतवः ।
अन्वयव्यतिरेकाभ्यां दोषादिर्हि विविच्यते ॥ ५०२ ॥

इत्याशयः । तत एव दर्पणादेरपि व्यञ्जकत्वं स्यादित्यत्राह—**अभिव्यञ्जकेति** । **आलोकादिरेवेति**; आलोकादिसहितं प्रतिफलितं चाक्षुषं तेज इत्यर्थः । शुक्तिरज्ज्वादिवदधिष्ठानमात्रेण व्यञ्जकत्वं न शक्यमित्यवधारणाभिप्रायः । अस्त्वविद्यादोषार्थस्य दोषान्तरकन्दस्याहंकारस्यादर्शवद्दोषहेतुत्वमिति शङ्कां निरस्यति—**न चेहेति** । स्वरूपप्रकाशे तत्प्रकाशान्तरकरणे वा विकृत्यापादनमिह दुर्वचमिति भावः । दृष्टान्तान्तरेऽप्यन्यथासिद्धिमाह—**व्यक्तेरिति** । तुशब्दो दोषापादकाद्वैषम्यार्थः । आकारः; तदाश्रितस्वभाव इति यावत् ।

---

(* * *) **अत्र ग्रन्थपातः** ।

**तदाश्रयतया प्रतीतिरि**त्यनेन याथार्थ्यं व्यज्यते। ननु यथा दीपादयः स्वधर्मानपि प्रकाशयन्ति तथा व्यक्तिरपि जातिमित्यत्राह—**न त्विति**। व्यक्तिजात्योरत्रैकसामग्रीवेद्यत्वमेव ; इन्द्रियसंबन्धस्तु व्यक्तिद्वारेत्येतावतापि न सा व्यञ्जिका। व्यक्तिशब्दोऽत्र न व्यञ्जकत्वार्थ इत्याशयः। अहंकारस्य स्वाश्रयतया संविद्व्यञ्जकत्वानुपपत्तिमुपसंहरति—**अत इति**। उपलम्भयुक्त्यागमैर्विरोधद्योतनाय **अन्तःकरणभूत**त्वोक्तिः। सांख्यमृषावादिनोर्मतभेदं जातिमुखादेरिव धर्मत्वप्रतिफलनरूपहेतुद्वयं चाभिप्रेत्य **वस्तुतो दोषतो** वेत्युक्तम्। **ज्ञातृत्वं तथोपलब्धिरिति च** तत्फलितव्यञ्जनम्। ज्ञातुरहमर्थस्यात्मत्वं ज्ञानमात्रस्यानात्मत्वं च निगमयति—**तस्मादिति**। ननु सुषुप्त्यादावहंबुद्धिविरहेऽप्यात्मस्वरूपसत्त्वं वाद्यन्तरैरुक्तम् ; एवमात्मतयास्मदुक्तायां ज्ञप्तावपि स्यादित्यत्र "अहमर्थो न चेदात्मा" इत्यादिना दत्तोत्तरत्वमाह—**अहंभाव इति**। **ज्ञप्तेरिति** ; स्वप्रकाशत्वे सत्यपीति भावः।

### श्रीभाष्यम्

**तमोगुणाभिभवात् परागर्थानुभवाभावाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽप्या प्रबोधात् 'अहम्' इत्येकाकारेणात्मनः स्फुरणात् सुषुप्तावपि नाहंभावविगमः। भवदभिमताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम्।**

### श्रुतप्रकाशिका

अथ सुषुप्तावहमर्थस्फुरणमस्तीति साधयितुं वेदान्तावलम्बिभिः सर्वैः स्वयंज्योतिष्ट्वश्रुत्यनुसारात् सुषुप्तावात्मस्फुरणमभ्युपेत्यम्। तत्र "नाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति" इति श्रुत्या 'मामप्यहं न ज्ञातवान्' इति परामर्शाच्च नाहमर्थानुभवः ; अतोऽनुभूतिस्फुरणमेव तदानीमिति शङ्कायामहमर्थस्याविशदस्फुरणमस्तीति सोपपत्तिकं प्रतिजानीते—**तम इत्यादिना**। चस्त्वर्थः शङ्कानिवृत्तौ। तमोगुणाभिभवहेतुकात् परागर्थानुभावाभावात् स्फुटावभासाभावः। विविक्तप्रतिभासः, व्यावृत्तप्रतिभासः ; अनेकविशेषणविशिष्टावभासः स्फुटावभासः। व्यावर्तकब्राह्मणत्वादिबाह्यधर्मविशिष्टत्वेन बुद्धिसुखाद्यान्तरधर्मविशिष्टत्वेन च प्रतिभासाभावात् सकलेतरव्यावृत्ततया स्फुटतया च प्रतिभासाभावः। केनाकारेण स्फुरतीत्यत्राह—**अहमित्येकाकारेण स्फुरणादिति**। अहमिति न

शब्दानुकारः, अपि त्वेतद्वाच्यार्थानुकारः; प्रत्यक्त्वाकारेण स्फुरणादित्यर्थः। एकशब्देनाहंभावाविगमो विवक्षितः। यद्वा **एकाकारेण**; सर्वात्मसाधारणाकारेणेत्यर्थः। प्रत्यक्त्वादिको हि सर्वात्मसाधारणः। सुखदुःखादयो देवत्वादयश्च, न हि सर्वात्मसाधारणाः। सुषुप्तौ भासमान आत्मन्यहंभावः साध्यः, तथा स्फुरणं हेतुः। विशदावभासाभावादहमर्थस्फुरणं नास्तीत्यत्राह—**भवदभिमताया अनुभूतेरपीति**। न केवलमहमर्थस्फुरण एवावैशद्यदोषः, अनुभूतिस्फुरणेऽपि स तुल्यस्त्वया वाच्यः। अतो विशदावभासाभावान्नास्तित्वं चेत्, ज्ञाप्त्यात्मनोऽपि तदानीं स्फुरणं न स्यात्; ज्ञातृज्ञेयोपश्लेषविरहात् स्फुटानवभास इति हि त्वदभ्युपगम इत्यभिप्रायः। मृषावादिभिर्वाद्यन्तरैरपि जागरितावस्थायामेवाविशदावभासो निर्विकल्पकेऽङ्गीकृतः। ते यदि विशदावभासाभावादहमर्थास्फुरणं ब्रूयुः, तत्रापि निर्विकल्पके पृथक्पृथक् वस्तुमात्रावभासाभ्युपगमो नोपपद्यते। अविशदवस्तुमात्रावभासः परैरप्रामाणिको निर्विकल्पके स्वीकृतः। अत्र तु "अयात्र पुरुषः स्वयंज्योतिर्भवति" इत्यादिश्रुत्यनुसारादविशदावभासः प्रामाणिकः स्वीकृत इति भिदा।

### भावप्रकाशिका

**अनुभूतेरपि तथैव प्रथेति वक्तव्यमिति** भाष्ये **तथैवे**त्यस्याविशदावभासत्वेनेत्यर्थमभिप्रेत्यावतारयति—**विशदावभासाभावादिति**। ननु तथाशब्दस्याहंत्वेनेत्यर्थ एवास्तु; एवं च **न हि सुप्तोत्थितः** इति भाष्यमपि तदुपपादकतया तच्छेषभूतमस्त्विति चेत्—सत्यम्, युक्त्यन्तराविष्करणार्थमेवं व्याख्योपपत्तेः। **जागरितावस्थायामेवेति;** अविशदावभासायोग्यावस्थायामप्यविशदावभासाभ्युपगमे तद्योग्यावस्थायां तदभ्युपगन्तॄणां का नः क्षतिरित्यर्थः।

### श्रुतप्रदीपिका

अथ सुषुप्तावहमभिमानमाह—**तम इत्यादिना**। आन्तरो बुद्धिसुखादिः, बाह्यो मनुष्यत्वादिश्च परागर्थः। तदुभयानुभवाभावहेतुस्तमोगुणानुभवः। चस्त्वर्थः। **अहमितीति**; प्रत्यक्तयेत्यर्थः। अविशदावभासः पराभीष्टश्चेत्याह—**भवदिति**। तदनुपगमे धियोऽप्यप्रकाशत्वप्रसङ्ग इति भावः।

### तत्त्वटीका

ननु सुषुप्तावस्थायामहमर्थप्रकाशे जागरस्वप्नयोरिव तथा व्यवहारार्हत्वं स्यात्;

न च तदस्ति । अतो न तदा तत्प्रकाशः ; तत्राह--**तमोगुणाभिभवादिति** । स्वकर्मोपात्तत्रिगुणद्रव्यस्थेन तमोगुणेन सविकल्पादिरूपमनोवृत्तिनिरोधादित्यर्थः । तत्फलितमाह—**परागर्थानुभवाभावादिति** । परागर्थाः परस्मा एव भासमानाः; ते चात्रात्मधर्माः देहेन्द्रियविषयाश्च; तेषामान्तरबाह्यवर्गाणामननुभवात् । तत्तद्व्यावृत्ततया तत्तद्विशिष्टतया च स्फुरणाभावोऽपि **विविक्ते**त्यादिनानूद्यते । एतेन "अयमहम्" इत्यादि वदन्त्याः श्रुतेरभिप्रायो विवृतः । स्वप्नजागरयोर्नानाकारविशिष्टदृष्ट्या तदविरोधार्थम् **आ प्रबोधादि**त्युक्तम् । विविक्तस्फुटावभासविरहे निर्विशेषभानं स्वीकृतं स्यादित्यत्रोक्तम्—**अहमित्येकाकारेणेति** । सुखित्वदुःखित्वादिभिर्दैवतमनुष्यत्वादिभिश्च विशेषणैर्विशिष्टस्फुरणविरहेऽप्यनुकूलप्रत्यक्स्वरूपत्वेन भानाद्विशिष्टस्फुरणसिद्धिरिति भावः । औपनिषदमानुमानिकं वा स्वप्रकाशत्वमात्मन इच्छद्भिः सर्वैः सुषुप्त्यादिष्ववभासनात् स्वात्मस्फुरणमङ्गीकृतम् । अत्राहंभावशब्देनाहमर्थः प्रकाशश्चाभिप्रेतौ । नन्वेवमविशदस्फुरणं तदानीमिदानीं वा नोपलभ्यत इत्यत्र प्रतिबन्द्योत्तरमाह—**भवदभिमताया इति** । त्वदभिमतायां प्रमाणानुमतिर्नास्तीति च भावः । एवमविशिष्टार्थविषयनिर्विकल्पवादिनामपि प्रतिबन्दिर्वक्तव्या । **तथैव**; अस्पष्टतयेत्यर्थः ।

### श्रीभाष्यम्

**न हि सुप्तोत्थितः कश्चिदहंभाववियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयावतिष्ठ इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति । एवं हि सुप्तोत्थितस्य परामर्शः—'सुखमहमस्वाप्सम्' इति । अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वं च ज्ञायते ।**

### श्रुतप्रकाशिका

अतः सुषुप्तावात्मस्फुरणाभ्युपगमेऽविशदावभासाभ्युपगमे च तुल्ये मृषावादिमतादपि स्वपक्षे प्रमाणानुगुण्यं विवक्षुः परपक्षे प्रमाणाननुगुणत्वं दर्शयति—**न हीति** । **अहंभाववियुक्तार्थान्तरप्रत्यनीकाकारा**; ज्ञातृज्ञेयादिसमस्तविशेषरहितेत्यर्थः । प्रत्यक्त्वसिद्ध्यर्थं **ज्ञप्तिरह**मित्यत्राहशब्दोपादानम् । स्वपक्षे परामर्शानुगुण्यमाह—**एवं हीति** । अयं परामर्शः सुषुप्तिकाले सुखरूपतयानुभूतात्मगोचरः । अतीतकालसंबन्धस्वापौ तु

पूर्वकालानुभूतार्थप्रत्यभिज्ञानयोग्यानुपलब्धिभ्यामनुमेयौ । स्वतोऽनुकूलतयावभासमानस्याहमर्थस्यानुमानिककालस्वापवैशिष्ट्यगोचरप्रत्यभिज्ञाविशेषोऽयं परामर्शः—'सुखमहमस्वाप्सम्' इति । एवं स्वपरमतयोः परामर्शानुगुण्यतदभावरूपवैषम्यमुक्तम् । श्रुतिस्वारस्यं चास्मन्मते "अत्रायं पुरुषः स्वयंज्योतिर्भवति" इति पुरुषशब्दश्रवणात् । पुरुषशब्दो न संविन्मात्रपरः ; "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इति ज्ञातुरेव श्रवणात्, लोके ज्ञातरि पुरुषशब्दप्रसिद्धेश्च । प्रत्यक्त्वसिद्धिश्चास्मन्मत एवेति वक्ष्यते । उक्तपरामर्शफलितमर्थमाह—**अनेनेति** । 'सुखमहमस्वाप्सम्' इति परामर्शे सुखमित्यनेन तदानीमनुकूलतया भासनमनुसंहितं भवति । अहमित्यनेन स्वस्मै भासमानत्वरूपं प्रत्यक्त्वं चानुसंहितं भवति । यथा 'मन्दमगच्छं, मधुरमगायम्' इति परामर्शेन गमनेन सह तदानींतनं मान्द्यं गानेन सह तदानींतनं माधुर्यं चानुसंहितं भवति, तद्वदित्यर्थः । स्वस्मै स्वयमनुकूलमित्यानुकूल्यप्रतियोगित्वाभिप्रायेण ज्ञातृत्वमित्युक्तम् । स्वस्मै भासत इति भासनप्रतिसंबन्धित्वरूपप्रत्यक्त्वाभिप्रायेण ज्ञातृत्वमित्युक्तम्, न तु धर्मभूतज्ञानस्फुरणात् । ननु " विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव, न सर्वेषां सर्वदा तथैव " इति भाष्यस्वारस्यविरुद्धम् । "पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्" इति सूत्रस्वारस्यविरुद्धं च । अस्मरणनियमाद्युपपत्तिविरुद्धं च । संसारदशायां मनोव्यापारविरहेऽपि ज्ञानस्यात्मविषयत्वं तच्चेन्द्रियद्वारेण व्यवस्थितमिति भाष्यस्वारस्यविरुद्धं च । अन्यथैषां सूत्रभाष्यवचसां संकोचः स्यात् । स च संकोचकाभावादनुपपन्नः । तस्मात्तदानीमात्मा प्रत्यक्त्वेनानुकूलत्वेनानुसंहित इति परामर्शफलितार्थः । 'सुखमहमस्वाप्सम्' इति सुखस्य स्वापक्रियाविशेषणत्वे प्रतीयमाने कथमात्मविशेषणत्वमुच्यत इति चेत् ; नैवम्, क्रियायाः सुखाश्रयत्वायोगेन पुरुषद्वारा क्रियाविशेषणत्वस्य युक्तत्वादिति । आत्मनस्तदानीं 'न किंचिदवेदिषम्' इत्यज्ञानसाक्षित्वेन स्थितिं वदताऽज्ञानाश्रयभूताहमर्थानुभवोऽभ्युपगन्तव्यः ; यथा 'प्रातश्चत्वरे गजो नास्ति' इति परामर्शे पूर्वं गजाभावाश्रयभूतं चत्वरमनुसंहितं भवति, तद्वत् । 'अस्वाप्सम्' इति परामर्शेन 'मन्दमगच्छम्' इत्यत्र गमनवत् स्वापोऽपि तदानुसंहितः स्यादिति चेत्—न ; यथा 'प्रातश्चत्वरे गजो नास्ति' इत्यत्र पूर्वं गजाभावाननुसंधानेऽप्येवं परामर्शोपपत्तिः ; तद्वत्सकलज्ञाननिवृत्तिरूपस्वापस्य तदानीमननुसंहितत्वेऽप्येवं परामर्शोपपत्तेः । तत्र हि प्रातश्चत्वरमेवानुभूतं, न

गजाभावः, प्रतियोगिभूतगजास्मरणात् । पश्चात्तु 'गजः किं स्थितः' इति पृष्टेन योग्यार्थाननुस्मरणलिङ्गेनाभावोऽनुमीयते । तद्वत्सकलज्ञाननिवृत्तिरूपस्वापोऽपि योग्याननुस्मरणलिङ्गेनानुमीयते । ननु 'सुखमहमस्वाप्सम्' इति परामर्शस्वरूपे सति स्वापादेस्तदानीमननुभवः सुखित्वादेरनुभवश्च कथमुच्यते? सर्वमप्यनुभूतं स्यात्, न वा स्यात् । नैतत्—'सुखमहमस्वाप्सम्' इत्यत्र यस्मिन्नंशे प्रतीतिस्वारस्यापवादकमस्ति, तद्विषयप्रतिपत्तिस्वारस्यभङ्गेऽप्यनपोदितांशविषयप्रतिपत्तिस्वारस्यभङ्गायोगात् । तत्र स्वापदशायां योऽर्थो नानुभवितुं शक्यः, तद्विषयप्रतिपत्तिस्वारस्यं भज्यते । यस्तु तदानीमनुभवयोग्यः, तद्विषयप्रतिपत्तिस्वारस्यं तिष्ठत्येव । बाह्यान्तःकरणजन्यसमस्तज्ञानाभावरूपत्वान्न स्वापस्तदानुसंधातुं शक्यते । अनुसंधानमस्ति चेत् स्वाप एव न स्यात्, ऐन्द्रियकसमस्तज्ञाननिवृत्त्यभावात् । नैवं सुखादेः प्रतिपत्त्यनुपपत्तिरिति यथोक्त एवार्थः ।

## भावप्रकाशिका

**प्रत्यक्त्वसिद्ध्यर्थमिति ;** अतोऽहंभाववियुक्तेत्यनेन विरोध इति भावः । **प्रत्यभिज्ञाविशेषोऽयमिति ;** 'सुखमहम्' इत्यंशे स्मृतिरूपः 'अस्वाप्सम्' इति स्वापांशे कालांशे च प्रत्यभिज्ञायोग्यानुपलब्धिरूपलिङ्गद्वयप्रतिसंधानजन्यानुमितिरूपो नृसिंहाकारज्ञानविशेष इत्यर्थः । ननु—स्मृते पर्वते वह्निव्याप्यधूमवत्त्वज्ञानात् 'पर्वतो वह्निमान्' इत्यनुमितिः पर्वतांशेऽप्यनुमितिरूपा, न स्मृतिरूपा ; एवं स्मृते सुखरूपे आत्मनि स्वापकालसंबन्धानुमितिरात्मांशेऽप्यनुमितिरूपैव, न तु परामर्शरूपा ; अनुमितित्वस्याव्याप्यवृत्तित्वासंभवात् । अस्तु वानुमितित्वमव्याप्यवृत्ति ; तथापि 'सुखमहम्' इति ज्ञानमिदानींतनसुखरूपाहमर्थविषयकं कुतो न स्यात्? न हि तदंशे तत्तोल्लेखोऽस्ति, येन स्मृतित्वं स्वध्यवसानं स्यात् । स्वापकालीनानुभवस्य देशकालाद्यगोचरत्वेन स्वापकालीनात्मनि व्यावर्तकाकारस्य कस्याप्यभावेन तस्य पक्षीकरणासंभवेनानुमानेन कीदृश आत्मनि स्वापसंबन्धो बोध्येत? तस्मादात्मनि स्वापदशायां यावद्धर्मान्तरसंबन्धोऽवभासत इति नाङ्गीक्रियते, तावत् 'सुखमहम्' इत्यस्य स्वापकालीनसुखानुसंधानरूपत्वं न सूपपादम् । तस्मादेतत्प्रघट्टकं सर्वं न सुन्दरमिति चेत्—अत्राहुः—सुषुप्तिदशायां जाग्रद्दशाविलक्षणमानुकूल्यं भासत इति सिद्धम् । तच्च न स्वरूपभूतज्ञानेन ; तथात्वे जागरितदशायामपि तदानुकूल्यं भासेत । ततश्च यथा कैवल्यदशायां भासमानस्य विलक्षणस्यानुकूल्यस्य न स्वरूपभूतज्ञानप्रकाश्य-

त्वम्, एवं सुषुप्तिदशायामपि भासमानानुकूल्यं धर्मभूतज्ञानेनैव भासते। जाग्रद्दशायां तु जाग्रद्भोगप्रदकर्मप्रतिबन्धवशात् तदानुकूल्यं धर्मभूतज्ञाने न विषयः; सुषुप्तिदशायां तु विषय एव। ततश्च तादृशविषयलाभात् तज्ज्ञानस्य स्वप्रकाशत्वम्। अत एव **सुखित्वं ज्ञातृत्वं च ज्ञायत** इति भाष्यमपि सुसंगतम्। बहिर्विषयप्रसरे परमिन्द्रियापेक्षा। अत एव इन्द्रियद्वारेण व्यवस्थितमिति भाष्यमपि संगतमेव। ततश्च धर्मभूतज्ञानेनानुकूल्यविशेषवत्तया जाग्रदादिविलक्षणस्मरणं संभवति। तस्यानुभवस्य संस्काराधानासंभवेन स्मरणमपि संभवति, तद्दशायां कालस्यापि धर्मभूतज्ञानेन विषयीकरणसंभवात्, कालस्य ज्ञानमात्रविषयत्वात्, तत्कालीने आनुकूल्यविशेषवत्तया स्मृत आत्मनि ज्ञानाभावरूपस्वापस्य योग्यास्मरणलिङ्गगम्यत्वसंभवात्, स्वापांशस्यापि तदानुभवेऽपि बाधकाभावात्, सर्वांशे परामर्शस्य स्वरससिद्धत्वाच्चेति। वस्तुतस्तु धर्मभूतज्ञानेन व्यावर्तकाकारास्फुरणेऽपि जाग्रद्दशाविलक्षणे प्रमुष्टतत्ताकस्मृतिगोचरेऽतिशयितसुखविशेष आत्मनि तदानींतनार्थास्मरणलिङ्गेन ज्ञानाभावरूपस्य वा तस्य स्वापस्येदानीमसत्त्वेन लिङ्गेन स्वापगतातीतत्वस्य वानुमाने दोषाभावान्नानुपपत्तिरिति द्रष्टव्यम्। **तच्चेन्द्रियद्वारेण व्यवस्थितमिति भाष्यस्वारस्यविरुद्धं चेति**; "क्षेत्रज्ञावस्थायां कर्मणा संकुचितरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते; तच्चेन्द्रियद्वारेण व्यवस्थितम्" इति भाष्यविरुद्धमित्यर्थः। **न किंचिदवेदिषमित्यज्ञानसाक्षित्वेन स्थितिं वदेतेति**; सुप्तोत्थितस्य 'न किंचिदवेदिषम्' इत्याकारकस्मरणान्यथानुपपत्तिकल्पितं सुषुप्तिकालीनं 'न जानामि' इति यदज्ञानसाक्षित्वं, तेनेत्यर्थः। ततश्च सुषुप्तिदशायां 'न वेद्मि' इत्यज्ञानानुभवसंभवेऽपि 'नावेदिषम्' इत्याकारकाज्ञानानुभवासंभवात् कथमेतदिति न चोदनीयम्। **अज्ञानाश्रयभूताहमर्थेति**; अहमर्थस्याज्ञानाश्रयत्वमभ्युपगन्तव्यम्; तद्वानमप्यभ्युपगन्तव्यमित्यर्थः। **यथा प्रातश्चत्वरे गजो नास्तीतीति**; इदं गजाभावविशिष्टतयानुभूतस्य चत्वरस्य यदा स्मरणं तदेति द्रष्टव्यम्। परमते 'न किंचिदवेदिषम्' इत्यस्य सर्वांशे परामर्शरूपत्वात्तदनुसारेण दृष्टान्तस्य वक्तव्यत्वात्। उत्तरत्र तु सिद्धान्ते धर्म्यंश एव परामर्शरूपत्वात् तद्दृष्टान्ततया स्वमतानुगुण्येन वक्ष्यमाणा 'चत्वरे गजो नास्ति' इति योग्यानुपलब्धिलिङ्गकगजाभावानुमितिश्चत्वरांश एव परामर्शरूपा। अतश्चत्वरमात्रं यत्र प्रागनुभूतं तादृशमेवोत्तरत्रोदाहरिष्यते, स्वमतानुगुण्यादिति द्रष्टव्यम्। परमतवत् त्वन्मतेऽपि 'सुखमहमस्वाप्सम्' इति सर्वांशेऽपि परामर्शत्वमेव

स्यादिति शङ्कते—**अस्वाप्समिति परामर्शेनेति । अनुसंधानमस्ति चेत् स्वाप एव न स्यादिति ;** ननु बाह्यान्तःकरणजन्यसमस्तज्ञानाभावेऽपि साक्षिणैव स्वापशब्दिताज्ञानानुभवसंभवान्न सुषुप्तिव्याघात इति चेत्—न ; अज्ञानस्य साक्षिभास्यत्वे प्रमाणाभावादिति भावः ।

## श्रुतप्रदीपिका

स्वयंज्योतिष्ट्वश्रुत्या सर्वैर्वेदान्तिभिः सुषुप्तौ भानमात्मनोऽङ्गीकार्यम् । अविशदावभासश्च बाह्यन्तरैर्निर्विकल्पके । इह तु प्रामाणिकत्वम् । स्वापे तु धीर्वा अहमर्थो वेति विमतिः । परपक्षे मानाभावमाह—**न हीति** । प्रत्यक्त्वायाह—**ज्ञप्तिरहमिति** । स्वपक्षे मानमाह—**एवं हीति** । श्रुतिस्वारस्यमप्यनुसंधेयम्—"अत्रायं पुरुषः स्वयंज्योतिर्भवति" "मन्ता बोद्धा विज्ञानात्मा पुरुषः" इति । परामर्शफलितमाह—**अनेनेति** । आनुकूल्यप्रतिबन्धितया सुखित्वोक्तिः । **ज्ञातृत्वम्** ; प्रत्यक्त्वम् ; न तु धर्मधीस्फुरणम् , "तद्विषयप्रकाशनवेलायाम्" 'पुंस्त्वादिवत्' इति भाष्यसूत्रस्वारस्यविरोधात् , अस्मरणनियमाद्युपपत्तिविरोधाच्च न भाष्यकाराभिमतम् ।

## तत्त्वटीका

परोक्तेऽपि स्वाप्ट्याभावं मानाभावं च व्यनक्ति–**न हीति** । **ननु ज्ञप्तिरह**मित्यनुवादो न युक्तः, परमते तथात्वाभावात् , **अहंभावावियुक्त**स्येतद्वाक्यस्थपदविरोधाच्च ; मैवम् , प्रत्यगात्मनः प्रकाशाभ्युपगमेऽहंत्वेन स्फुरणं दुस्त्यजमिति सूचने तात्पर्यात् । **अवतिष्ठ** इति वर्तमानोक्तिस्तत्सामीप्यात् । ननु परामर्शः प्रमाणान्तरेण सेत्स्यतीत्यत्र विरुद्धपरामर्शबलात्तदसंभवं "स्वावसरे निपुणतरम्" इति प्रागुपक्षिप्ते स्वपक्षे मानं च दर्शयति—**एवामिति** । हिः प्रसिद्धिं परैरप्युदाहृतत्वं च द्योतयति । प्रकाशस्वरूपस्य प्रदीपस्य तथैव स्वप्रकाशत्वं श्रुत्यभीष्टमित्यभिप्रायेण **सुखमहा**मित्युक्तम् । तदेव विवृणोति—**अनेनेति** । नात्र विषयानुभवसुखं धर्मभूतधीप्रसरत्वं च विवक्षितम् ; सुषुप्तिव्याघातात् , "पुंस्त्वादिवत्" इति सूत्रविरोधात् , पूर्वापरभाष्यैः प्रतिक्षिप्तत्वाच्च । अतः स्वस्यैवानुकूलतया स्वेनैव प्रकाशमानत्वे तात्पर्यम् । यद्धि यस्यानुकूलतया भाति स तेन सुखीति व्यवह्रियते ; यस्य येन यद्भाति स तेन तस्य ज्ञातेति च ।

श्रीभाष्यम्

न च वाच्यम्—यथेदानीं सुखं भवति तथा तदानीमस्वाप्स-मित्येषा प्रतिपत्तिरिति, अतद्रूपत्वात् प्रतिपत्तेः। न चाहमर्थस्यात्मनोऽस्थिरत्वेन तदानीमहमर्थस्य सुखित्वानुसंधानानुपपत्तिः, यतः सुषुप्तिदशायाः प्रागनुभूतं वस्तु सुप्तोत्थितो 'मयेदं कृतम्' 'मयेद-मनुभूतम्' 'अहमेतदवोचम्' इति परामृशति। 'एतावन्तं कालं न किंचिदहमज्ञासिषम्' इति च परामृशतीति चेत्, ततः किम्? न किंचिदिति कृत्स्नप्रतिषेध इति चेत्—न; 'नाहमवेदिषम्' इति वेदितुरहमर्थस्यैवानुवृत्तेः। वेद्यविषयो हि स प्रतिषेधः। न किंचि-दिति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात्। सुषुप्तिसमये त्वनुसंधीयमानमहमर्थमात्मानं ज्ञातारम् 'अहम्' इति परामृश्य 'न किंचिदवेदिषम्' इति वेदने तस्य प्रतिषिध्यमाने तस्मिन्काले निषिध्यमानाया वित्तेः सिद्धिमनुवर्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव 'न किंचिदहमवेदिषम्' इति परामर्शेन साधयंस्त-मिममर्थं देवानामेव साधयतु।

श्रुतप्रकाशिका

अथास्य परामर्शस्य परोक्तामन्यथासिद्धिमनूद्य परिहरति—**न चेत्यादिना**। **अतद्रूपत्वादिति**; एवमर्थः किं प्रतिपत्तिस्वारस्यात्, उतानुपपत्त्याभ्युपगम्यत इति विकल्प्य **अतद्रूपत्वात्प्रतिपत्तेरिति** प्रतिपत्तिस्वारस्यं परिहृतम्; यथा 'मन्दमगच्छम्, मधुर-मगायम्' इति परामर्शवचनस्य। न हि तत्र 'यथेदानीं मान्द्यं माधुर्यं च भवति तथा अगच्छम्, अगायम्' इत्यर्थ उपपद्यते; अपितु गतिगानसमकालत्वमेव मान्द्य-माधुर्ययोरुपपन्नम्। तद्वत् प्रत्यक्त्वसुखित्वे अपि स्वापसमकालीने इत्यर्थः। अथा-नुपपत्तिं परिहरति—**न चेत्यादिना**। अनुपपत्तिश्चात्मनोऽस्थिरत्वमनुभवाभावो वा; तत्र

परामर्शेन स्थिरत्वमाह—**यत इति**। 'मयेदं कृतम्' इत्यादयो मानसवाचिककायिक-त्रिविधव्यापारविषयपरामर्शपराः। अथाहमर्थाननुभवसाधकनिषेधसामान्यविषयं परामर्शं शङ्कते—**एतावन्तमिति**। अहमर्थस्य निषेधविषयत्वाभावाभिप्रायेणाह—**ततः किमिति**। परविवक्षितं शङ्कते—**न किंचिदिति**। परिहरति—**नेति**। **वेद्यविषयः**; वेद्यप्रतिभास-विषयः। कृत्स्नविषयत्वेऽनिष्टमाह—**न किंचिदिति**। नानुभूतिनिषेधः, तस्या अनु-वृत्तेरित्याशङ्क्याह—**सुषुप्तिसमये त्विति**। भवत्पक्षस्य विपरीतोऽयं परामर्श इत्यर्थः। यथा प्रातश्चत्वरे गजानुभवं पृष्टेन पश्चाद्योग्याननुस्मरणलिङ्गेन चत्वरे गजाभावं वदता पुरुषेण पूर्वकालीनचत्वरानुभवेन विना गजाभावो न वक्तुं शक्यते, तथा अज्ञानाश्रयमहमर्थं वदता स्वापवेलायामहमर्थानुभवोऽभ्युपगन्तव्यः। अथाप्यहमर्थनिवृत्तिज्ञानानुवृत्तिकथनं चत्वरनिवृत्तिगजावस्थानवचनतुल्यमिति भावः। **देवानामेव साधयतु**; अर्चारूपा हि देवाः; प्रतिवचनमकुर्वतामित्यर्थः। क्षमावतामिति वा, प्रतिवाद्यसंनिधाविति वा, उल्लोक-मुक्तमिति वार्थः।

## भावप्रकाशिका

**परोक्तामन्यथासिद्धिमिति**; सुषुप्तौ सुखानुभवानभ्युपगन्तृनैयायिकाद्युक्तान्यथा-सिद्धिमित्यर्थः। न तु मृषावाद्युक्तेति मन्तव्यम्, मृषावादिभिः सुखानुभवस्यैवाभ्युपेत-त्वात्। न च 'सुखपरामर्शो दुःखाभावनिमित्तः'' इति पञ्चपादिकायामुक्तत्वात् मृषावादि-भिरपि सुखानुभवाभावोऽभ्युपेत इति वाच्यम्, तद्व्याख्यात्रा विवरणकृता तस्य परमतो-पन्यासरूपत्वाविष्करणात्। वस्तुतस्तु अहमर्थसदसद्भावचिन्तनप्रकरणत्वात् **यथेदानीं सुखं भवतीति** भाष्यस्य 'सुखं यथेदानीमहं भवति तथास्वाप्सम्' इत्येवमर्थपरतया व्याख्येयत्वात् मृषावादिमतेऽपीदृशोक्तेः संभवात् तन्मतेऽपि नानुपपत्तिरिति द्रष्टव्यम्। **अस्थिरत्वमनुभवाभावो वेति**; तदानीमहमर्थतदनुभवाभावे अहमर्थ-सुखित्वप्रतिसंधानानुपपत्तिवशात् 'इदानीं यथा सुखम्' इत्याद्यनुभवप्रकारः पर्यव-स्यतीति भावः। **अहमर्थस्य निषेधविषयत्वेति**; अहमर्थानुभवस्येत्यर्थः। भाष्ये—**नाहमवेदिषमिति वेदितुरिति**; 'नाहमवेदिषम्' इत्यत्राहमित्यंशस्य सुषुप्त्यनुभूतार्थस्मृति-रूपतया स्मृतेश्च स्मर्यमाणस्वरूपमात्रे प्रामाण्यसंभवात्। न च नैयायिकादिमत इव तदं-शेऽप्यनुभवत्वमस्त्विति शङ्क्यम्, स्मृतित्वस्यानुभवसिद्धत्वादिति भावः। एतेन 'राममहं

नाद्राक्षम्' इत्यादाविव तदानीमहमर्थाभावेऽपि 'नाहमवेदिषम्' इत्यहमर्थेऽतीतज्ञानसंबन्धित्वादिनिषेधेऽनुपपत्त्यभावात् कथमेतदिति शङ्का निरस्ता। **वेद्यप्रतिभासविषय इति;** न वेदितृप्रतिभासविषय इत्यर्थः। **अथाप्यहमर्थनिवृत्तीति;** अहमर्थज्ञानाभावेत्यर्थः। **चत्वरनिवृत्तीति;** चत्वरज्ञाननिवृत्तीत्यर्थः। "अहमर्थानुभवाभावसाधकं परामर्शं शङ्कते" इत्यवतारिकाप्रदर्शनादित्थं द्रष्टव्यम्। यद्वा अहमर्थानुभवाभावोऽप्यहमर्थाभावपर्यवसित इति न विरोध इति द्रष्टव्यम्।

### श्रुतप्रदीपिका

प्रतीतेरन्यथासिद्धिमाशङ्क्याह—**न चेति**। प्रतीतिस्वारस्यविरोधमाह—**अतदिति**। 'मन्दमगच्छम्, मधुरमगायम्' इतिवदिति भावः। 'अस्वाप्सम्' इति न तदा स्वापानुसन्धिः, यावत्यंशे नानुपपत्तिस्तावत एव भानाङ्गीकारात्। चत्वरे गजाभावं वदता न हि प्रातः सोऽनुसंहितः; योग्यानुपलब्ध्या पश्चाद्धि सोऽवगम्यते, तद्वत्। अन्यथानुपपत्त्या समकालीनत्वाभावादक्लृप्तिरित्याशङ्क्य ज्ञातुरस्थैर्यमनुभवो वेति मत्वा प्रथमं व्युदस्यति—**न चेति**। **मयेदमि**त्यादिना त्रिविधव्यापारपरामर्शो दर्शितः। विपर्ययेणाननुभवं शङ्कते—**एतावन्तमिति**। ज्ञातुरनिषेध्यत्वमभिप्रयन्नाह—**ततः किमिति**। पुनः शङ्कते—**न किंचिदिति**। परिहरति—**नाहमिति**। कृत्स्नप्रतिषेधत्वेऽनिष्टमाह—**न किंचिदिति**। निषेधस्याकृत्स्नविषयत्वे द्वयोस्तुल्ये धीव्यतिरिक्तविषयत्वं किं न स्यादित्यत्राह—**सुषुप्तीति**। निषेधस्य धीव्यतिरिक्तगोचरत्वेनाहमर्थस्यापि तद्विषयत्वकल्पनं प्रतीतिस्वारस्यविरुद्धम्। यथा 'प्रातश्चत्वरे गजो न' इत्युक्ते गज एव निषिद्धः; न चत्वरम्; तस्य तदभावाश्रयत्वेन ज्ञातत्वात्, तद्वदित्यर्थः। देवानामप्रतिवक्तृत्वात् **देवानामि**त्युक्तम्।

### तत्त्वटीका

सुषुप्तावहमर्थस्याहंबुद्धेर्वा विनाशमिच्छतां चोद्यमनूद्य क्षिपति—**न चेति**। 'मन्दमगच्छम्' "तत्र ते न्यवसन् सुखम्" इत्यादिवत्क्रियाविशेषणस्य तात्कालिकत्वे स्वारस्यं प्रत्यक्स्वरूपानादिसाक्षिप्रकाशे परसंमतिं चाभिप्रयन् हेतुमाह—**अतद्रूपत्वादिति**। 'तदानीं सुखमस्वाप्सम्' 'इदानीं दुःख्यामि' इत्यपि क्वचित्परामृश्यत इति भावः। ननु 'सुखमहमस्वाप्सम्' इत्यंशत्रये स्वापांशस्य तदानीमनुभवे सुषुप्तिविरोधात् 'प्रातर्गजा-

भावात्' इति न्यायेन स्मर्तव्यस्य स्मरणाभावात्प्रबोधाभावक्लृप्त्या तथा व्यवहार इत्यास्थेयम्, तद्वद्देशान्तरयोरपि गतिः स्यात्; मैवम्।

अयुक्तिर्यस्य तत्रैव स्वारस्यदमनं क्षमम्।
भवेद्विषये वृत्तिरन्यथातिप्रसङ्गकृत्॥ ५०३॥

अत्राप्ययुक्तिः समा; अहमर्थस्य तत्प्रकाशस्य वा सुषुप्तौ नाशादित्यत्राद्यमनूद्य क्षिपति—**न चेति**। अहमर्थस्य ह्यात्मत्वं स्थापितम्। अतोऽस्य न ध्वंस इति व्यञ्जनार्थ इह **आत्म**शब्दः। प्राच्यजागरस्थात्मीयकरणत्रयवृत्तिपरामर्शद्रढिम्ना परिहरति—**यत इति**। शुक्तिरूप्यवदध्यस्तस्याहमर्थस्य प्रकाशध्वंसतोऽपि स्वरूपध्वंसं शङ्कते—**एतावन्तमिति**। स्वेष्टविरुद्धं वदसीत्युपालम्भाभिप्रायेण पृच्छति—**ततः किमिति**। अज्ञातोपालम्भः पुनः शङ्कते—**न किंचिदिति**। अहमर्थप्रकाशस्यापि निषेधात्तत्स्वरूपनिषेधोऽपि फलित इति भावः। उक्तनिषेधार्थो नकारोऽर्थात्प्रतीयत इति कृत्वा स्वाभिप्रेतं विवृणोति—**नाहमिति**। 'अहं नावेदिषम्'इत्यत्र वेदनाभावाधिकरणभूतस्वात्मनिषेधस्तावदशक्यः। तत्प्रकाशनिषेधश्च स्वयंज्योतिष्ट्वश्रुतिविरुद्धः। बाह्यविषयेऽपि न स्वरूपं निषेध्यम्, सुषुप्तौ विश्वप्रलयस्यासंभवादसंमतेश्च। अतः स्वान्यप्रकाशनिषेध एव विवक्षित इत्यभिप्रायेण **वेद्यविषयो ही**त्युक्तम्। परेष्टार्थेऽनिष्टमाह—**न किंचिदिति निषेधस्येति**। त्वत्पक्षेऽनुभूतेः प्रकाशनिषेध एव स्वरूपनिषेधेऽपि स्यादिति भावः। वेदननिषेधस्याकृत्स्नविषयत्वे स्वीकृते धीव्यतिरिक्तवेदननिषेधविवक्षयास्मदिष्टं स्यादित्यत्राह—**सुषुप्तीति**। अहमर्थस्वरूपनिषेधः परामर्शबलविरुद्धः; अत एव तद्भाननिषेधस्त्वत्पक्षेऽप्ययुक्तः; इदमर्थवदहमर्थस्यापि प्रकाशाधीनस्वरूपत्वात् सर्वत्र चाधेयनिषेधोक्तिर्हास्येति भावः।

अभानं व्यवहार्यस्य सुषुप्तावहमः कथम्।
इति चोद्यं समं वित्तौ श्रुतिश्चात्रोत्तरप्रदा॥ ५०४॥

अहंभानस्य संस्कारमनुत्पादयतोऽपि नः।
त्वदिष्टधीभाननयात् स्यात्परामर्शहेतुता॥ ५०५॥

सुषुप्तौ भानसङ्गे तु धीरेव तव लुप्यते।
उपलब्धिपराहत्या न स्वरूपविपर्ययः॥ ५०६॥

**एव**शब्दो वैपरीत्यं विवृणोति। जानामीत्यहमर्थस्वरूपप्रकाशश्चेदात्मेत्युच्यते स तर्हि

तद्धर्मः । धातूपात्तश्चेत् इच्छाद्वेषादिधात्वन्तरार्थवदात्मस्वरूपादन्यः प्रसिद्धः । **एवकारो** दत्तोत्तरत्वद्योतकः । **देवानामेवे**त्यनेन सर्वज्ञा हि त्वदुक्तिप्रतिपत्त्यर्हा इत्युपालभते । अप्रतिवादिनामिति वा तात्पर्यम् । ननु "विनाशमेवापीतो भवति" इति श्रुत्यैवोच्यते विनाशः ; मैवम् ; प्रकरणाभिप्रेतपुरुषार्थविरहेणासत्कल्पत्वे तात्पर्यात् । अन्यथा "नाहं खल्वयम्" इत्यादिपूर्ववाक्यविरोधात् ।

स एव त्विति सूत्रे च सुषुप्तप्रतिबुद्धयोः ।
स्वयमेव च तादात्म्यं सूत्रकृत् स्थापयिष्यति ॥ ५०७ ॥
ततश्च स्वप्रकाशत्वजडत्वविमतावपि ।
सुषुप्तावहमर्थस्य ध्वंसो नास्तीति सुस्थितम् ॥ ४०८ ॥

## श्रीभाष्यम्

'मामप्यहं न ज्ञातवान्' इत्यहमर्थस्यापि तदानीमननुसंधानं प्रतीयत इति चेत्, स्वानुभवस्ववचनयोर्विरोधमपि न जानन्ति भवन्तः । 'अहं मां न ज्ञातवान्' इति ह्यनुभववचने । 'माम्' इति किं निषिध्यत इति चेत्, साधु पृष्टं भवता ; तदुच्यते— अहमर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं निषिध्यते, अपि तु प्रबोधसमयेऽनुसंधीयमानस्याहमर्थस्य वर्णाश्रमादिविशिष्टता । 'अहं मां न ज्ञातवान्' इत्युक्तेर्विषयो विवेचनीयः । जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो 'माम्' इत्यंशस्य विषयः । स्वाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थः 'अहम्' इत्यंशस्य विषयः । "अत्र सुप्तोऽहम्' 'ईदृशोऽहम्' इति च मामपि न ज्ञातवानहम्" इत्येव खल्वनुभवप्रकारः ।

## श्रुतप्रकाशिका

अथ निषेधविशेषविषयं परामर्शमाह—**मामपीति** । परिहरति—**स्वानुभवेति** । स्वानुभववचनयोर्नान्योन्यं विरोधः। किंतु उभयोरप्यहमर्थानुवृत्तिनिषेधशब्देन विरोध इत्यर्थः।

अनुभवैकदेशयोर्वचनैकदेशयोश्च मिथो विरोध इति वार्थः। विरोधमेव दर्शयति— **अहमिति**। 'अहं न ज्ञातवान्' इत्यत्राज्ञानसाक्षित्वेनाहमर्थानुवृत्तिः स्वानुभवसिद्धा। वचनमपि तदनुगुणमित्यनुभववचनाभ्यामहमर्थानुवृत्तिनिषेधवाक्यविरोध इत्यर्थः। निषेधशब्दतदर्थानुभवयोर्विरोध इति वार्थः। तत्र मामिति पदस्यार्थं वक्तुं परप्रश्नमनुभाषते— **मामितीति**। पूर्वं विरुद्धार्थकथनमसाधु। अर्थतत्त्वप्रश्नः साधुरित्यभिप्रायेणाह—**साध्विति**। निषेधानुवृत्त्योर्विषयविभागं दर्शयति—**तदुच्यत इत्यादिना**। 'अहं, माम्' इत्युभयोरपि पदयोर्विशिष्टविषयतैवोचिता, रीतिभेदप्रसङ्गादित्यत्राह—**अहं मामिति**। विधिनिषेधयोरेकविषयत्वे व्याघातः स्यादिति तन्निवृत्त्यर्थं विषयविभागः कार्य इत्यर्थः। विषयविभागविपर्यासशङ्कायां विषयविभागमुचितं दर्शयति—**जागरितेति**। यत्सामग्र्यभावात् तदानीं न प्रकाशते तदेव निषेधविषयः। यदनन्यापेक्षं स्वयं प्रकाशते तदेवानुवर्तत इत्यप्रकाशमानस्यानुवृत्तिः प्रकाशमानस्य निषेधश्चानुपपन्नावित्यर्थः। एवं विषयविभागानुगुणमनुभवं दर्शयति—**अत्रेति**। शब्दप्रयोगो विवक्षावशात् धीस्थं सर्वं वदति वा, तदेकदेशं वदति वा, न किंचिदपि वदति वा। अतः शब्दप्रयोगे वैवक्षिकेऽप्यनुभव एकरूपः ; स पुनरेवं विषयविभागानुगुण एवेत्यर्थः। अनेन "नाहं खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति" इति श्रुतिवाक्यस्थोऽयंशब्दो व्याख्यातः।

### भावप्रकाशिका

**अहं न ज्ञातवान्** इत्यादि भाष्यं पूर्वव्याख्यानद्वयानुरोधेन द्वेधा विरोधप्रदर्शनपरतया व्याचष्टे—**अहं न ज्ञातवानित्यादिना**। **विधिनिषेधयोरिति** ; 'अहम्' इत्यस्य सौषुप्तिकाहमर्थपरामर्शरूपतयाहमर्थप्रमाणत्वेन तद्विधिरूपत्वं, 'मां न जानामि' इत्यस्य ज्ञाननिषेधमुखेनाहमर्थनिषेधरूपत्वं चेति भावः।

### श्रुतप्रदीपिका

विशेषविषयं निषेधं शङ्कते—**मामिति**। प्रतिवक्ति—**स्वेति**। विरोधो न मिथः, किं त्वहमर्थनिषेधवचनेन। तद्दर्शयति—**अहमिति**। पृच्छति—**मामिति**। प्रागयुक्तभाषणमसाधु। प्रश्नः साधुरित्याह—**साध्विति**। विषयविभागमाह—**तदित्यादिना**। नायं शाब्द इत्यत्राह—**अहं मामिति**। अहमर्थनिषेधानुवृत्त्योर्व्याघातादर्शनायेति भावः। विपर्ययेण किं न स्यादित्यत्राह—**जागरितेति**। योग्यत्वायोग्यत्ववशादुक्त एवार्थ

इत्यर्थः । अनेन 'अयमहमस्मीति न जानाति' इति विशिष्टाहमर्थानुभवनिषेधेन "नाहं खलु" इत्यादिश्रुतिरपि व्याख्याता । स्वोक्तानुगुणमनुभवं दर्शयति--**अत्रेति** । ईदृगेव सदानुभवः ; अनुभूतं कृत्स्नमेकदेशं वा वदति, न वा, शब्दप्रयोगस्य वैवक्षिकत्वादिति-भावः ।

### तत्त्वटीका

पुनरपि तदानीमहमर्थवेदनस्यापि विशेषतो निषेधात्तत्स्वरूपनिषेधमपि शङ्कते—**मामपीति** । अहमर्थनिषेधं वदता स्ववाक्येन स्वपरामर्शेन चाभीष्टविरोधमाह—**स्वानुभवेति** । उभाभ्यामहमर्थनिषेधस्याशक्यत्वं व्यनक्ति--**अहमिति** । हिशब्दोऽत्र **अनुभववचने** इति शब्दस्य सप्तमीत्वेनोत्तरत्रान्वये ह्यनपेक्षितः स्यात् । स्वरूपप्रकाश-निषेधमुखेन स्वरूपस्यापि निषेधमन्तरेण का गतिरिति पृच्छति—**मामिति** । सोपालम्भं प्रतिवक्ति—**साध्विति** । असमीचीनत्यागेन प्रश्नेऽवतारात् सानुकम्पं वा । **तदुच्यते** ; तस्मादुत्तरमुच्यत इत्यर्थः । यद्वा किमिति पृष्टनिषेध्यमुच्यत इत्यर्थः । स्वरूपतत्प्रकाशयो-र्निषेधो न शक्य इत्यभिप्रायेणाह—**अहमर्थस्येति** । 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्यबाधे' इति न्यायात्, "अयमहमस्मि" इति श्रुता-वयंशब्दाभिप्रेतविशेषमाह--**अपि त्विति** । **वर्णाश्रमादिविशिष्टता** ; तदभिमान इत्यर्थः । ज्ञेयत्वेनेति वोपस्कार्यम् । आदिशब्द आन्तरं जडपण्डितत्वाद्यपि संगृह्णाति । ननु "नो एवेमानि भूतानि" इत्यत्र यथा बाह्यार्थानां स्वरूपवेदननिषेधपर इदंशब्दोऽपि स्वरूप-मात्रपरः, तथा "अयमहम्" इत्यत्रापि स्यादिति शङ्कां निरस्यति—**अहं मामिति** । अयं भावः—अहमर्थस्वरूपतत्प्रकाशनिषेधयोरशक्यत्वं ह्युक्तम् । अतः प्रकारभूतवर्णा-श्रमादिवैशिष्ट्यमिह निषेध्यम् । तथा च श्रुत्यन्तरे तद्वैशिष्ट्यमपि निषिध्यते "तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति । सुषुप्तौ तत्तद्वैशिष्ट्येऽपि तत्तद्वेदनवैधुर्यप्रतिसंधानस्य श्रुतेश्चानुगुणं विषयविवेकं विवृणोति--**जागरितेत्यादिना** ग्रन्थ-द्वयेन । निषेधवचनतात्पर्यव्यञ्जकमनुभवप्रकारं निर्धारयति—**अत्रेति** । व्यवहारस्य वैवक्षिकत्वादीदृशोक्त्यभावेऽप्यनुभवो दुर्निषेध इत्यवधारणाभिप्रायः ।

### श्रीभाष्यम्

**किंच सुषुप्तावात्मा अज्ञानसाक्षित्वेनास्त इति हि भवदीया**

प्रक्रिया । साक्षित्वं च साक्षाज्ज्ञातृत्वमेव । न ह्यजानतः साक्षित्वम् । ज्ञातैव हि लोकवेदयोः साक्षीति व्यपदिश्यते, न ज्ञानमात्रम् । स्मरति च भगवान् पाणिनिः—"साक्षाद्द्रष्टरि संज्ञायाम्" इति साक्षाज्ज्ञातर्येव साक्षिशब्दम् । स चायं साक्षी 'जानामि' इति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत । आत्मने स्वयमवभासमानः 'अहम्' इत्येवावभासत इति स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानः 'अहम्' इत्येवावभासत इति सिद्धम् ।

**श्रुतप्रकाशिका**

परमतेनेममर्थमुपपादयति—**किंचेत्यादिना** । साक्षित्वेनात्माभ्युपगम्येत ; ततः किमित्यत्राह—**साक्षित्वं चेति** । **साक्षाज्ज्ञातृत्वं** ; साक्षात्काररूपज्ञानाश्रयत्वम् । असाक्षात्कर्तरि साक्षिशब्दः प्रयुक्तश्चेदौपचारिकः । उपपादयति—**न हीति** । **अजानतः** ; अज्ञातुरित्यर्थः । कुत इत्यत्राह—**ज्ञातैव हीति** । शब्दप्रयोगनियामकं लक्षणमाह—**स्मरतीति** ; साक्षिशब्दं स्मरतीत्यन्वयः । ततः किमहमर्थस्यात्मत्व इत्यत्राह—**स चेति** । अस्मिन्नर्थेऽनुमानमुत्तरत्र विस्तरेण विवक्षितमत्र संग्रहेणाह—**आत्मने स्वयमिति** । आत्मने स्वयमवभासमानः 'अहम्' इत्येवावभासत इति व्याप्तिवचनम् । जाग्रदात्मा सपक्षः ; स्वस्मै प्रकाशमानत्वादिति हेतुः । निगमयति—**स्वापादीति** । अविशदावभासस्य सर्वाभ्युपगतत्वात्, श्रुतिस्वारस्यात्, परामर्शस्वारस्यात्, साक्षित्वोपपत्तेः, प्रत्यक्त्वासिद्धेश्च सुषुप्तावात्मा 'अहम्' इति स्फुरतीत्युक्तं भवति ।

**भावप्रकाशिका**

भाष्ये **साक्षित्वं च साक्षात् ज्ञातृत्वमिति** ; मुख्यज्ञातृत्वमित्यर्थः । ज्ञातृत्वस्य मुख्यत्वं द्रष्टृत्वे पर्यवस्यति; तेन साक्षाच्छब्दस्य कृद्योग एव गतिसंज्ञाविधानेन ज्ञाधात्वर्थान्वयः कथमिति चोद्यस्य नावकाश इति द्रष्टव्यम् । ननु **अजानत** इति शतुर्लडादेशतया ज्ञानवर्तमानत्वं विवक्षितं स्यात् ; ततश्च तत्साक्षात्काररूपज्ञानात्ययेऽपि 'साक्षी' इति व्यपदेशो न स्यादित्याशङ्क्याह—**अज्ञातुरित्यर्थ इति** । तृजादेः सर्वकालसाधा-

रणत्वात् तृजादिषु वर्तमानकालोपादनमिति पूर्वपक्षं कृत्वा "न वा कालमात्रे दर्शनादन्येषाम्" इति वार्तिककृता सिद्धान्तितत्वादिति भावः। भाष्ये **साक्षाद् द्रष्टर्येवेति** साक्षाच्छब्दात् द्रष्टर्यभिधेये साक्षिशब्दं स्मरतीत्यन्वयः। अनेन सूत्रं व्याख्यातम्। एवं हि सूत्रार्थः—साक्षाच्छब्दात् द्रष्टर्यभिधेये संज्ञायां विषये इनिप्रत्ययो भवतीति। **जाग्रदात्मा सपक्ष इति**; आत्मा अहमित्यवभासते, स्वस्मै भासमानत्वात् जाग्रदात्मवदित्यनुमानशरीरम्। न च जाग्रदात्मनः 'अहम्' इति भासमानत्वमसिद्धमिति वाच्यम्, 'अहम्' इति बुद्धेश्चिदचित्संघातविषयत्वस्य तैरभ्युपेतत्वात् 'अहं भूयासम्' इति प्रतीतिबलेनात्मनि परमप्रेमास्पदत्वस्योपपादितत्वाच्च 'अहम्' इति भासमानत्वं जाग्रदात्मनः सिद्धमेवेति सपक्षत्वं युज्यत एवेति मन्तव्यम्।

## श्रुतप्रदीपिका

परमतप्रक्रिययापि ज्ञात्रनुवृत्तिमुपपादयति—**किंचेत्यादिना**। ततः किमित्यत्राह—**साक्षित्वमिति**। कथमित्यत्राह—**न हीति**। तदुपपादयति—**ज्ञातैव हीति**। अनुशासनानुगुण्यमाह—**स्मरति चेति**। ततः किमित्यत्राह—**स चायमिति**। उत्तरत्र विस्तरेण विवक्षितमनुमानमिह संक्षेपेण दर्शयति—**आत्मन इति**। **अवभासत** इत्यन्तेन व्याप्त्युक्तिः। स्वस्मै भानं हेतुः। व्याप्तमर्थं पक्षेऽतिदिशति—**स्वापेति**। जाग्रदात्मा सपक्षः।

## तत्त्वटीका

सुषुप्तौ ज्ञातुरविनष्टत्वं परोक्तप्रक्रिययाप्यभ्युपगमयति—**किंचेति**। अस्त्वज्ञानसाक्षित्वम्; तत्तु तत्प्रकाशात्मत्वमेवेत्यत्राह—**साक्षित्वमिति**। ननु किमत्र ज्ञातृत्वेन? साक्षात्काररूपत्वमेव साक्षित्वमस्त्वित्यत्राह—**न हीति**। उक्तमर्थं लौकिकवैदिकसर्वशब्दार्थनिर्णयनिदानभूतेनानन्यथासिद्धेन व्यवहारेण स्थापयति—**ज्ञातैवेति**। साक्षिशब्दस्यास्तु ज्ञानविशेषे शक्तिः, तदाश्रये तु लक्षणेत्यत्राह—**न ज्ञानमात्रमिति**। अयं भावः—न हि सर्वत्र विशिष्टगोचरे विशेषणमात्रे शक्तिस्त्वयापि स्वीक्रियते। तथा सति विशिष्टवाचिषु सत्यादिपदेषु जहदजहल्लक्षणोक्तिरपि विरुध्येतेति। अन्यथा शब्दानुशासनविरोधमप्याह—**स्मरतीति**। अस्तु सुषुप्तौ साक्षिप्रकाशः; ततोऽप्यहमर्थप्रकाशः कथमित्यत्राह—**स चायमिति**। व्यवहारव्याकरणाभ्यां ज्ञातृत्वेन प्रसिद्ध इत्यर्थः। अज्ञानसाक्षिणस्तथैव स्वप्रकाशत्वाभ्यु-

पगमात् **जानामीति प्रतीयमान**त्वोक्तिः । ज्ञातुः स्वग्रहणं हि जानामीत्येव; तत्र "अस्मद्युत्तमः" इत्यनुशिष्टमित्यभिप्रायेण **अस्मदर्थ एवे**त्युक्तम् । उक्तानभ्युपगमे स्वेष्टं स्वस्मै भासमानत्वमपि न स्यादित्यभिप्रायेणाह-- **आत्मन इति** । तत्र व्याप्तिपूर्वकं साध्यवचनेऽपि प्रसङ्गे तात्पर्यादुत्तरत्रानुमानोक्तेरपुनरुक्तिः । पूर्व इतिर्हेतौ, उत्तरस्तु प्रकारे ।

### श्रीभाष्यम्

**यत्तु मोक्षदशायामहमर्थो नानुवर्तत इति, तदपेशलम्; तथा सत्यात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात् । न चाहमर्थो धर्ममात्रम्, येन तद्विगमेऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत । प्रत्युत स्वरूपमेवाहमर्थ आत्मनः; ज्ञानं तु तस्य धर्मः, 'अहं जानामि' 'ज्ञानं मे जातम्' इति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव ।**

### श्रुतप्रकाशिका

अथ मुक्तावहमर्थाननुवृत्तिमनूद्य दूषयति—**यत्त्वित्यादिना** । तुरर्थगौरवविशेषे । **अपेशलम्** ; असाध्वित्यर्थः । कुत इत्यत्राह—**तथा सतीति** । सौगतान् ज्ञानसंतत्युच्छेदं मोक्षं वदतः स्वरूपनाशस्यापुरुषार्थत्वेन दूषयता त्वया शब्दान्तरेण स्वरूपनाश एवोक्तः स्यादित्यर्थः । नैयायिकाद्युक्ते मोक्षेऽप्यपुरुषार्थत्वं तुल्यम् । दुःखनिवृत्तिः सुखप्राप्तिश्चोभयं पुरुषार्थः । अत्रापुरुषार्थभूतदुःखाभावात्पुरुषार्थान्वयः सुखाभावादपुरुषार्थान्वयश्चेति मुक्तेः पुरुषार्थापुरुषार्थमिश्रत्वं हि स्यात् । अहमर्थो ह्यारोपितः ; अतस्तद्विगमे स्वरूपनाशो न प्रसजेदित्यत्राह—**न चेति** । कुत इत्यत्राह—**अहमिति** । **अहमर्थधर्मतया ज्ञानप्रतीतेरेव** ; पूर्वोक्तहेतोरेवेत्यर्थः । अहमर्थात्मत्वसमर्थनोपजीवनेन स्वरूपनाशप्रसङ्ग उक्तः ।

### श्रुतप्रदीपिका

मुक्तावहमर्थाननुगमं व्युदस्यति—**यत्त्वित्यादिना** । सौगतानां त्वदुक्तदोषस्तवैव स्यादित्यर्थः । न स्वरूपनाशः, धीस्थितेरित्याह---**न चेति** । एवकारः प्रागुक्तार्थद्योतकः ।

### तत्त्वटीका

सुषुप्तिमुक्त्योर्नान्वेतीति पूर्वपक्षोक्ते दूषितावशिष्टं **यत्त्वि**त्यादिनानूद्य दूषयति---**तदपे-**

**शलमिति**; असुन्दरम्, अयुक्तमित्यर्थः। अयुक्तिं विवृणोति—**तथा सतीति**। **प्रतिज्ञातः स्यादि**त्येतत् परोक्त्यैव सिद्धवत्करणं ज्ञातव्यशेषाभावप्रसङ्गार्थम्। 'आत्मभूतधीसंततिविनाशो मोक्षः' इति वदन्तः सन्ति केचित्सौगताः, तन्मते त्वदुक्तो दोषस्तवाप्यागत इति सूचयितुं **प्रकारान्तरेणे**त्युक्तम्। नन्वविद्यादेहादिधर्मोऽप्यात्मन उपाधिरेव; अतस्तन्निवृत्तौ कथमात्मनाश इत्यत्राह—**न चेति**। त्वदुक्तविपरीतं हि सिद्धमित्यभिप्रायेण **प्रत्युते**त्यादिवाक्यत्रयम्। **एव**कारेण प्रागेव स्थापितत्वं द्योत्यते।

**श्रीभाष्यम्**

अपि च यः परमार्थतो भ्रान्त्या वाऽऽध्यात्मकादिदुःखैर्दुःखितयात्मानमनुसंधत्ते 'अहं दुःखी' इति, 'सर्वमेतद् दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलः स्वस्थो भवेयम्' इत्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते। स साधनानुष्ठानेन यदि 'अहमेव न भविष्यामि' इत्यवगच्छेत्, अपसर्पेदेवासौ मोक्षकथाप्रस्तावात्। ततश्चाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात्। अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इति चेत्, किमनेन? मयि नष्टेऽपि किमपि प्रकाशमात्रमपवर्गेऽवतिष्ठत इति मत्वा न हि कश्चित् बुद्धिपूर्वकारी प्रयतते। अतोऽहमर्थस्यैव ज्ञातृतया सिध्यतः प्रत्यगात्मत्वम्। स च प्रत्यगात्मा मुक्तावपि 'अहम्' इत्येव प्रकाशते, स्वस्मै प्रकाशमानत्वात्। यो यः स्वस्मै प्रकाशते, स सर्वः 'अहम्' इत्येव प्रकाशते, यथा तथावभासमानत्वेनोभयवादिसंमतः संसार्यात्मा। यः पुनः 'अहम्' इति न चकास्ति, नासौ स्वस्मै प्रकाशते, यथा घटादिः। स्वस्मै प्रकाशते चायं मुक्तात्मा। तस्मात् 'अहम्' इत्येव प्रकाशते।

**श्रुतप्रकाशिका**

एवं धर्मधर्मिभावेन प्रतीत्यानुवृत्तिरुपपादिता। अथ श्रुत्यर्थापत्तिमाह—**अपि**

**चेत्यादिना**। पूर्वमहमर्थस्यात्मत्वसमर्थनाय श्रुत्यर्थापत्तिरुक्ता; इदानीमहमर्थस्य मुक्तावनुवृत्त्युपपादनाय तामेव श्रुत्यर्थापत्तिं विस्तरेणाह—**य इति**। यः स्वात्मानं दुःखिनमनुसंधत्ते, स एव तन्निवृत्तिसाधने प्रवर्तते। स चाहमर्थ एव। दुःखित्वं भ्रान्तिसिद्धमिति चेत्, यः स्वात्मानं भ्रमवन्तमनुसंधत्ते स एव भ्रमनिवृत्तिसाधने प्रवर्तते; स चाहमर्थः। द्विचन्द्रज्ञानादिभ्रान्तिमतोऽपि स्वभ्रान्तिनिवृत्तिरेवापेक्षिता, न तु स्वविनाशः। अतोऽहमर्थविनाशोऽपुरुषार्थ इत्यभिप्रायेण परमार्थतो भ्रान्त्या वेत्युक्तम्। **अनुसंधत्त** इत्यनेन "निरस्ताखिलदुःखोऽहम्" इत्यत्रापेक्षितं वक्तव्यमुक्तम्। **निरस्तेत्यादि**श्लोकं विवृणोति—**सर्वमेतदित्यादिना**। **अनाकुलः स्वस्थो भवेयमिति**; **अपुनर्भवमपोह्येत्ये**तत्फलमुक्तम्—**अनाकुल इति**। आगामिदुःखशङ्कया मनःक्षोभ आकुलत्वम्; तदभावोऽनाकुलत्वम्। **स्वस्थः**; स्वस्मिन् स्थितः; स्वभावस्थितः; यथावस्थितस्वात्मानुभवपरः; **अनन्तानन्दभागिति** फलम्। **स एव**; पूर्वं दुःखित एव। य उत्पन्नानिष्टनिवृत्तीष्टप्राप्त्यभिलाषः स एवेत्यर्थः। श्रवणादाविति पूर्वमुक्तत्वादिह **तत्साधन** इत्येतावदुक्तम्। "अपसर्पेदसौ" इति ग्रन्थेन फलितमर्थमाह—**ततश्चाधिकारीति**। श्रवणाद्यायाससाध्यस्य शास्त्रस्यापुरुषार्थपर्यवसायित्वे श्रवणाद्यधिकारिविरहात् श्रवणादिसापेक्षस्य शास्त्रस्य प्रमितिजनकत्वलक्षणं प्रामाण्यं न स्यादित्यर्थः। **मयि नष्टेऽपी**त्येतद्विवृणोति—**अहमुपलक्षितमित्यादिना**। **बुद्धिपूर्वकारीत्यनेन कस्यापीति** पदं विवृतम्। श्रुत्यर्थापत्तिं निगमयति—**अत इति**। अहमर्थविगमे ज्ञप्त्यसिद्धिरप्यनुसंधेया। अनुमानमाह—**स चेति**। किंच अनुमानमप्यस्तीति चार्थः। अन्वयव्याप्तिमाह—**यो य इति**। **तथावभासमानत्वेन**; स्वस्मैप्रकाशमानत्वेन। व्यतिरेकव्याप्तिं दर्शयति—**यः पुनरिति**। उपनयमाह—**स्वस्मा इति**। निगमनमाह—**तस्मादिति**। स्वस्मै प्रकाशमानत्वं हेतुः 'अहम्' इति व्यवहारार्हत्वं साध्यमिति न साध्याविशिष्टता। **अहमित्येव प्रकाशते**; 'अहम्' इति व्यवहारार्हं प्रकाशत इत्यर्थः।

## भावप्रकाशिका

**अपि च यः परमार्थत इति** भाष्यस्य यः परमार्थत आध्यात्मिकादिदुःखैरात्मानम् 'अहं दुःखी' इति दुःखितयानुसंधत्ते, भ्रान्त्या वा आत्मानमनुसंधत्ते 'अहं भ्रान्तिमान्' इति स एवेति योजना। **भ्रान्त्येति** इत्थंभूते तृतीयेत्यभिप्रयन्नाह—

**यः स्वात्मानंश्रमवन्तमनुसंधत्त इत्यादि । स एव श्रमनिवृत्तिसाधन इति ;** दुःखित्वं भ्रान्तिसिद्धमिति वदता हि दुःखित्वनिवृत्तये न प्रवृत्तिर्वक्तुमुचिता, दुःखित्वस्य स्वतो निवृत्तत्वात् ; ततश्च 'मम दुःखित्वभ्रान्तिरनुवर्तते, सा निवर्तताम्' इति प्रतिसंधाय भ्रान्तिनिवृत्तिसाधने प्रवर्तत इति वक्तव्यम् । तदपि त्वन्मते अनुभूतेर्न संभवति, भ्रान्तिमत्त्वप्रतिसंधातृत्वस्याप्यनुभूतावभावात् । अतोऽहमर्थस्यैव स्वभ्रान्तिनिवृत्त्यै प्रवृत्तिर्वक्तव्या, न **तु** स्वविनाशायेत्यर्थः । **अनुमानमाहेति** ; मुक्तावहमिति भासमानत्व इति शेषः । **अनुमानमप्यस्तीति चार्थ इति** ; चशब्दस्य गत्यन्तराभावादेवमन्वयो दर्शित इति द्रष्टव्यम् । **तथावभासमानत्वेन चेति** व्याख्येयं पदम् । **स्वस्मै भासमानत्वेनेति** तद्व्याख्यानम् । अहमिति भासमानत्वेनेति शेषः । साध्यसाधनयोरुभयोरपि प्रदर्शनीयत्वादिति द्रष्टव्यम् । **न साध्याविशिष्टतेति ; अहमिति प्रकाशत** इत्यस्याहमिति व्यवहारार्हत्वं ह्यर्थः ; तच्च संप्रतिपन्नमेव, संसारदशायाम् 'अहम्' इति व्यवह्रियमाणतया योग्यतायाः सर्वदा सत्त्वात् सिद्धसाधनमिति न वाच्यमित्यर्थः । **साध्याविशिष्टत्वम्** ; साध्यस्य साधनेनाविशिष्टत्वं, सिद्धत्वमित्यर्थः । **अहमित्येव प्रकाशत** इत्येवकारेण सर्वदा व्यवहारानुगुण्यं प्रकाशे विवक्षितम् । तत्तु परसंमतं न भवतीति न सिद्धसाधनमित्यर्थः । ततश्चान्यशेषतयाऽभासमानत्वरूपस्य संप्रतिपन्नस्य स्वस्मै भासमानत्वस्य, मुक्तौ विप्रतिपन्नस्य 'अहम्' इति भासमानत्वस्य चैक्याशङ्कया अभावात् कथं साध्याविशिष्टत्वमिति शङ्का निरस्ता ।

### श्रुतप्रदीपिका

ज्ञात्रात्मत्वसमर्थने संक्षिप्तां श्रुत्यर्थापत्तिं मुक्तावनुगमहेतुतया विस्तरेणाह—**अपि चेति** । दुःखित्वं भ्रान्तमित्याह—**भ्रान्त्या वेति** । द्विचन्द्रज्ञाने तन्निवृत्तिमिच्छति, न स्वनिवृत्तिमिति भावः । ततः किमित्यत्राह—**ततश्चेति** । धीः स्थितेत्यत्राह—**अहमिति । परमार्थत** इत्यादि **ततश्चेत्यादि बुद्धिपूर्वेत्यादि** ग्रन्थजातं प्रागुक्तविवरणरूपम् । अनुमानमाह—**स चेति** । स्वस्मै प्रकाशमानत्वेनान्वयव्याप्तिमाह—**यो य इति** । तथावभासमानत्वेन व्यतिरेकमाह—**यः पुनरिति** । 'अहम्' इति व्यवहारार्हत्वं साध्यमिति न साध्याविशिष्टता । उपनयमाह—**स्वस्मा इति** । निगमनमाह—**तस्मादिति** ।

### तत्त्वटीका

पूर्वं ज्ञातुरेवात्मत्वे परमसाध्ये संग्रहेणोक्तां युक्तिं तस्य मुक्तिदशानुवृत्तिरूपावान्तरसाध्येऽपि हेतुतया विस्तृणीते—**अपि चेति** । स्वमतपरमतभेदेन **परमार्थतो भ्रान्त्या**

वेत्युक्तम् । उत्तरत्र तद्गतस्य दुःखकारणस्य भ्रमकारणस्य वा निवृत्तिरित्युच्यते, न तु दुःखभ्रमाश्रयस्वरूपस्येति भावः । अत्र य इत्यादिना **प्रवर्तते** इत्यन्तेन प्रागुक्तमेव विवृतमित्यपुनरुक्तिः । अर्थादामोक्षस्थायिपक्षनिरासश्च सिद्धः । उक्तयुक्तेः परमसाध्यपर्यन्ततां व्यनक्ति—**अत इति** । अवान्तरसाध्येऽपि प्राक्प्रसङ्गसूचितमनुमानं मूढबोधनायान्वयव्यतिरेकिण एवानुमानत्वमिति वदतः संतोषाय च व्याप्तिद्वयोपेतं प्रयुङ्क्ते—**स चेति** । नात्र साध्याविशेषः, 'अहम्' इति व्यवहारविषयतया प्रकाशस्य साध्यत्वात् । नापि हेत्वसिद्धिः, अभानस्य परस्मा एव भानस्य वा त्वयानभ्युपगमात् ; अकस्मैचिद्भासमानत्वस्य दुर्वचत्वाच्च । नापि पक्षस्य दृष्टान्ताविशेषः, एकस्मिन्नेव संमतविमतदशाभेदेन तद्विभागात् ; तथा च लोकेऽपि दृष्टतया परीक्षकैरनुमन्तव्यत्वाच्च । विपक्षे बाधस्तु प्रत्यक्त्वाभावप्रसङ्ग इति प्रागुक्त इह प्रतिसंधेयः । अत्र पञ्चावयववाक्यप्रयोगात्कैश्चिन्मीमांसकैरुक्तस्त्र्यवयवनिर्बन्ध उपेक्षितः । क्वचित् त्र्यवयवं च प्रयुङ्क्ते ; अतः प्रतियोगिधीसिद्ध्यै यथाकामं त्रयो वा पञ्च वा प्रयोक्तव्याः । "पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित्" इति भारतोक्तिस्तु संभावितविषयतया, नान्यनिषेधार्थेति भावः ।

### श्रीभाष्यम्

**न च 'अहम्' इति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः ; मोक्षविरोधात्, अज्ञत्वाद्यहेतुत्वाच्चाहंप्रत्ययस्य । अज्ञानं नाम स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा । 'अहम्' इत्येवात्मनः स्वरूपमिति स्वरूपज्ञानरूपोऽहंप्रत्ययो नाज्ञत्वमापादयति, कुतः संसारित्वम् । अपि तु तद्विरोधित्वान्नाशयत्येव ।**

### श्रुतप्रकाशिका

साध्यविपरीतविशेषसाधकतया विशेषविरुद्धत्वं शङ्कते—**न चेति** । आदिशब्दाद्रागद्वेषदुःखादि विवक्षितम् । ननु व्यापकं हि प्रसञ्जनीयम् ; न च कार्यं कारणस्य व्यापकम् ; सत्यम् ; कारणजातीयस्य तु कदाचित्कार्यप्रसक्तिर्व्यापिका । अतोऽहंप्रत्ययेनात्मनोऽज्ञत्वादिप्रसञ्जनम् । अज्ञत्वादिप्रसक्तिः श्रुतिविरुद्धेत्याह—**मोक्षेति** । "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्" इति हि श्रुतिः । अतो यथा सहदर्शनमात्रेण

पर्वते भाण्डादिप्रसक्तिः प्रत्यक्षबाधाद्वार्यते, तद्वत्कालात्ययापदेश इत्यर्थः। सोपाधिकत्वमाह—**अज्ञत्वादीति**। संसारित्वाहमर्थत्वयोः सहदर्शनमात्रेण मुक्तावपि संसारित्वादिप्रसङ्गश्चेदनुभवस्यापि तत्सहभावदर्शनात् त्वत्पक्षेऽपि मुक्तौ संसारित्वप्रसङ्गः। तन्मोक्षग्राहिप्रमाणविरोधात्कालात्ययापदिष्टम्। संसारित्वादेरनुभवप्रयुक्तत्वाभावात्सोपाधिकत्वं चेति चेत्, तदस्मत्पक्षेऽपि समानमित्यभिप्रायः। अनेन 'अहम्' इति भासमानं न स्वस्मै भासमानत्वप्रयुक्तम्, अपि त्वज्ञत्वप्रयुक्तमिति हेतोः सोपाधिकत्वं च श्रुतिबलेन व्याप्तेर्भग्नतया सह दर्शनमात्रमेवेति परिहृतं भवति। एवं कालात्ययापदेशसोपाधिकत्वे उक्ते। तत्र सोपाधिकत्वमुपपादयितुमज्ञानत्वेन संभावितशिरांसि विकल्पयति—**अज्ञानं नामेति**। धर्म्यैक्ये सति प्रकारान्तरारोपणेन ज्ञानमन्यथाज्ञानम्; यथा—'पीतः शङ्खः' इति। इदं रजःकार्यम्, धर्म्यन्तरस्य धर्म्यन्तरत्वेन ज्ञानं विपरीतज्ञानम्; यथा शुक्तौ 'इदं रजतम्' इति। इदं तमःकार्यम्,

"अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी।
अधर्मं धर्ममिति या मन्यते तमसा वृता।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी॥"

इति स्मृतेः। अहंप्रत्ययस्य स्वस्वरूपज्ञानरूपत्वात्तत्प्रागभावान्यथाज्ञानविपरीतज्ञानानि विरोधादेवापगतानीत्याह—**अहमित्येवेति**। **अहमित्येवात्मनः स्वरूपम्**; 'अहम्' इति व्यवहारबुद्ध्यर्हत्वमेवात्मनः स्वरूपमित्यर्थः। अहंप्रत्ययस्याज्ञत्वादिप्रयोजकत्वदूषणेनाज्ञत्वादेरविद्यान्वय एवोपाधिरित्यर्थादुक्तं भवति। अथवा कार्यकारणभावेन व्याप्तिमङ्गीकृत्य परेणाज्ञत्वादिप्रसङ्ग उक्त इति व्याप्तिप्रतिक्षेपाय कार्यकारणभावं प्रतिक्षिपति—**अज्ञत्वाद्यहेतुत्वाच्चेत्यादिना**। अज्ञत्वफलमपि नास्तीत्याह—**कुतः संसारित्वमिति**।

## भावप्रकाशिका

**साध्यविपरीतविशेषसाधकतयेति**; पक्षधर्मताबललभ्यस्य साध्यस्य मुक्तनिष्ठस्य 'अहम्' इति भासमानत्वस्य च विरुद्धं संसारित्वम्; तत्साधकतयाभिमतविशेषविरुद्धत्वं शङ्कत इत्यर्थः। बाधस्य तर्कानुगुणत्वात् दूषणान्तरमाहेत्याह—**सोपाधिकत्वमाहेति**। संसारित्वाज्ञत्वादिहेतुः कर्मरूपाविद्यान्वयः; सोऽत्र नास्तीति भावः। **धर्म्यैक्ये सतीति**; संसर्गारोपो रजोजन्यः; तादात्म्यारोप स्तमोजन्य इति भावः। केचित्तु—तद्वि-

त्वे तदारोपमात्रं रजसा ; तद्विरोधिनि तदारोपस्तमसेत्याहुः । **अज्ञत्वाद्यहेतुत्वादित्यस्या**वि-द्यारूपोपाध्यवगमकत्वस्य क्लिष्टत्वात् पक्षान्तरमाह—**अथवेति** ।

### श्रुतप्रदीपिका

विशेषविरोधमाशङ्क्यागमविरोधसोपाधिकत्वाभ्यां परिहरति—**न चेत्यादिना** । "न पश्यो मृत्युं पश्यति" इत्यादिश्रुतिविरोधो मोक्षविरोधः । सोपाधिकत्वं विवृणोति—**अज्ञानमिति** । धर्म्यैक्ये सति प्रकारान्तरारोपेण ज्ञानमन्यथाज्ञानम् । धर्म्यन्तरस्य धर्म्यन्तरत्वेन ज्ञानं विपरीतज्ञानम् । अज्ञत्वफलमपि नेत्याह—**कुत इति** ।

### तत्त्वटीका

विशेषविरोधप्रसङ्गमनूद्य निषेधति—**न चेति** । **संसारित्वम्** ; कर्मकृतदेहादिसंततिमत्त्वम् । आदिशब्देन पुनरावृत्त्यादिग्रहणम् । मुक्तव्यवस्थाविषयैः "सर्वं ह पश्यः पश्यति" "अहमन्नम्" इत्यादिभिर्विहतया तर्कस्य मूलशैथिल्यमाह—**मोक्षविरोधादिति** । अन्यथा प्रसञ्जनीयमेवोत्तरं प्रयुक्तं स्यात् । अज्ञत्वादेरुपाधित्वशङ्काप्यनेन निरस्ता । प्रसङ्गस्य सोपाधित्वमभिप्रेत्याह—**अज्ञत्वेति** । अयं भावः—कर्मोपाधिकमज्ञानादिकं सर्वकर्मक्षये न स्यात् ।

पक्षात्साध्यमुपाधिर्हि स्वनिवृत्त्या निवर्तयेत् ।
स्वसाहचर्याद्ध्यस्तां व्याप्यतामपि साधनात् ॥ ५०९ ॥

तदिह तर्के व्याप्तिस्तावद्दुःसाधा ; साहचर्यमात्रं त्वप्रयोजकमतिप्रसञ्जकं च । त्वत्पक्षेऽप्यनुभूतिमात्रस्यात्मनः प्रकाशमानत्वे बद्धदशायामिव सर्वे दोषाः स्युः ; न च ते तदा सन्ति; अतो मुक्तौ प्रकाशमानत्वभङ्गात् स्वरूपोच्छेदप्रसङ्ग इति । अज्ञत्वादेरुपाधित्वव्यक्त्यै विकल्पव्याजेन स्वोक्तं विवृणोति—**अज्ञानमिति** । **स्वरूपाज्ञानं** ; कर्मणा तिरोधानात् स्वरूपगोचरज्ञानप्रसराभावः ; अन्यथाज्ञानं विपरीतज्ञानं च रजस्तमःकार्यतया गीतम् । तयोरज्ञानशब्दार्थतया विकल्पस्तु सम्यग्ज्ञानान्यतया तद्विरुद्धतया वा । उदाहरणं तु स्वनिष्ठात्मभ्रमाद्येव । आत्मभ्रमादिषु त्रिष्वपि कल्पेष्वहंप्रत्ययस्य प्रयोजकत्वं नेत्याह—**अहमिति** । इतिर्हेतौ । अयं भावः—न तावदहंप्रत्यय एवाज्ञानादिस्वरूपम् , तत्त्वधीरूपत्वात् । न तद्धेतुः, कर्मविरहे तदयोगात् । न च तेषां व्याप्यः, यतस्तेन तत्प्रसङ्गः स्यादिति । एवमज्ञानप्रसङ्गाभावे तत्फलप्रसङ्गो दूरापास्त इत्याह—**कुत इति** । आत्मतत्त्व-

ज्ञानं ह्यज्ञत्वादिनिवर्तकतया शास्त्रप्रसिद्धम्; अतोऽत्र प्रसञ्जकप्रसञ्जनीययोर्व्याघात इत्यभिप्रायेणाह—**अपि त्विति**।

**श्रीभाष्यम्**

ब्रह्मात्मभावापरोक्षनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनाम् 'अहम्' इत्येवात्मानुभवदर्शनाच्च। श्रूयते हि—"तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे 'अहं मनुरभवं सूर्यश्च' इति" "अहमेव च वर्तामि भविष्यामि" इत्यादि। सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव—"हन्ताहमिमास्तिस्रो देवताः" 'बहु स्यां प्रजायेय' "स ईक्षत लोकान्नु सृजै" इति। तथा—

"यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥"

"अहमात्मा गुडाकेश" "न त्वेवाहं जातु नासम्"

"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।"
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।"
"तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।"

"अहं बीजप्रदः पिता" "वेदाहं समतीतानि" इत्यादिषु।

**श्रुतप्रकाशिका**

निवृत्ताविद्यानामपि 'अहम्' इत्यात्मप्रतिपत्तिदर्शनेनाहंप्रत्ययस्य मुक्तावनुवृत्तिमाह—**ब्रह्मात्मभावेति**। **तद्धैतत्पश्यन्निति**; ब्रह्मात्मकत्वसाक्षात्कारकथनेन निर्धूतनिरवशेषाविद्यत्वं गम्यते। ब्रह्मणोऽपि तथा प्रतिपत्तिमाह—**सकलेतरेति**। **सकलेतराज्ञानविरोधिनः**; न हि सकलेतरविषहरणनिपुणस्य वैनतेयस्य विषवश्यत्वसंभव इति भावः। **सच्छब्दप्रत्ययमात्रभाजः**; सच्छब्दस्य 'सत्' इति प्रत्ययस्य च विषयभूतस्य। मात्रचा पाश्चात्त्यनामरूपभाक्त्वव्यावृत्तिः। अनेनाहंकारसृष्टेः पूर्वमप्यहंप्रत्ययं ज्ञापयति। अहंप्रत्ययस्फुटीकरणाय "अहमिमाः" इति वाक्यं पूर्वमुपादत्ते—**हन्तेति**। 'बहु

स्याम्' इति वाक्ये "अहमद्युत्तमः" इत्युत्तमपुरुषबलात् 'अहम्' इति प्रत्ययः सिद्धः। **अहमिमास्तिस्रः** इत्यत्राहंशब्दः कण्ठोक्तः। न ह्यहंकारस्य नामरूपव्याकर्तृत्वमिति-भावः। बहुषूपनिषत्सु 'अहम्' इति निर्देशज्ञापनायोपादत्ते—**स ईक्षतेति; सृजा** इत्युत्त-मपुरुषेणाहंशब्दाकर्षसिद्धिरिति भावः। स्मृतिं दर्शयति—**तथा यस्मादिति**। **यस्मा-दिति** वचनं क्षराक्षरातीतस्वाभाविकरूपेणाहंप्रत्ययज्ञापनार्थमुपात्तम्। न ह्यहंकारः क्षराक्षरा-तीतः। **अतोऽस्मी**त्युत्तमपुरुषेणाप्यहमर्थसिद्धिः। आत्मनोऽहंप्रत्ययं ज्ञापयति—**अहमा-त्मेति**। न ह्यहंकारश्चिदचिदन्तरात्मा। स्वाभाविकनित्यरूपेऽहंप्रत्ययं दर्शयति—**न त्वेवाहमिति**। न ह्यहंकारो नित्यः। मृत्युविरोधिमुक्तिप्रदोऽप्यहंप्रत्ययविषय इत्याह—**तेषामिति**। न ह्यहंकारो मुक्तिप्रदः। एवमनेकश्रुतिस्मृतिवचनोपादानं परविवक्षितद्वित्र-तादृशवचनापनोदनार्थम्। एभिरहंशब्दैश्चिन्मात्रमुपलक्ष्यते चेदनेकवाक्यस्थाहंशब्दलक्षणैव दोषः।

### श्रुतप्रदीपिका

तत्त्वविदामनुभवेन चाहमर्थात्मत्वमाह—**ब्रह्मेति**। ब्रह्मापरोक्ष्यमविद्यानाशलिङ्गम्। ब्रह्मवचसाप्युपपादयति—**सकलेति**। **सच्छब्दप्रत्ययेति**; प्रत्ययस्य विषयभूतेत्यर्थः। अनेनाहंकारसृष्टेः प्रागप्यहंप्रत्ययं ज्ञापयति। अहंशब्दः श्रुत इत्युपात्तं प्रथमम्—**हन्ताहमिति**। **बहु स्याम्**; उत्तमपुरुषकाष्ठा स इति भावः। स ईक्षतेत्यनेकमुखप्रसिद्धिः। स्मृतिमाह—**यस्मादिति**। क्षराक्षरातीतत्वचिदचिदन्तरात्मत्वनित्यत्वमहदादिकारणत्वमो-क्षप्रदत्वादयो नाहंकारस्येति भावः। एभिरहंशब्दैश्चिन्मात्रोपलक्षणं चेत्, अनेक-वचनलक्षणैव दोषः।

### तत्त्वटीका

तत्त्वविदात्मापरोक्ष्येऽहमर्थप्रकाशं वदन्त्या श्रुत्या तस्याज्ञत्वाद्यनापादकत्वमाह—**ब्रह्मात्मे**त्यादि। **दर्शना**दित्युक्तं विवृणोति—**श्रुतय इति**। ब्रह्मापरोक्ष्यमविद्यानाशस्य कारको ज्ञापकश्च हेतुः। आदिशब्देन प्रह्लादभरतादिग्रहः। **तद्धैतत्पश्यन्**; जगत्कारणं ब्रह्म स्वान्तरात्मत्वेन पश्यन्नित्यर्थः। अत एवात्राहमर्थसामानाधिकरण्यं स्वविशेष्यस्य सर्वा-त्मत्वप्रकाशकम्। तदेतत् "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रे व्यक्तीभ-विष्यति। अथर्वशिरसोऽप्येवमेव निर्वाहो वेदार्थसंग्रहे स्थापितः। आदिशब्देन "स

एवाहमवस्थितः" "अहं त्वं च तथान्ये च" इत्युपबृंहणानि गृह्यन्ते। स्वतः सर्वज्ञतया स्वयमज्ञानप्रसङ्गरहितस्य स्वाश्रिताज्ञानादिनिरासकतया स्वयमेव गीतस्य परब्रह्मणः स्वात्मन्यहंशब्दप्रयोगाच्चाज्ञत्वाद्यापादकत्वं निरस्यति—**सकलेति**। **सच्छब्दप्रत्ययमात्रभाजः**; सच्छब्दमात्रजन्यधीविषयस्येत्यर्थः। अहंकारसृष्टेः प्रागेव सच्छब्दवाच्यं ब्रह्म "बहु स्याम्" इति संकल्पयतीति भावः। शाखान्तरेऽपि प्रसिद्धिमाह—**स ईक्षतेति**। "हन्ताहम्" इत्यत्राहंशब्दः कण्ठोक्तः; "बहु स्यां प्रजायेय" "सृजै" इत्यादिषूत्तमपुरुषाक्षिप्तः। "पूर्वमेवाहमिहासम्" इत्यादयश्च ग्राह्याः। स्मृतावप्यहंत्वेन व्यवहारमाह—**तथेति**। क्षरान्तर्भूतस्याहंकारस्य क्षराक्षरान्यत्वम्, अचेतनस्य चिदचिदन्तरात्मत्वम्, उत्पत्तिनाशभाजस्तद्राहित्यं, महदादिजन्यस्य सर्वकारणत्वं, स्वाश्रितबन्धकस्य तन्मोचकत्वम्, अचिद्विकारस्य स्वसंकल्पेन सर्वत्र बीजाधानकर्तृत्वं, त्रैकालिकसर्ववस्तुवेदितृत्वादिकं च विरुद्धमित्यभिप्रायेण तत्तद्वाक्योपादानम्। न चैतेष्वहंशब्देन चिन्मात्रलक्षणेति वाच्यम्, मुख्यसंभवे तदयोगात्। आदिशब्देन "अहमज्ञानजं तमः" "अहं त्वा सर्वपापेभ्यः" इत्यादिसंग्रहः।

**श्रीभाष्यम्**

यद्यहमित्येवात्मनः स्वरूपं कथं तर्ह्यहंकारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते—"महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च" इति? उच्यते—स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात्तथैवात्मस्वरूपप्रतिपत्तेश्चाहमित्येव प्रत्यगात्मनः स्वरूपम्। अव्यक्तपरिणामभेदस्याहंकारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते। स त्वनात्मनि देहेऽहंभावकरणहेतुत्वेनाहंकार इत्युच्यते। अस्य त्वहंकारशब्दस्याभूततद्भावे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या। अयमेव त्वहंकार उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते। तस्माद्बाधकापेताहंबुद्धिः साक्षादात्मगोचरैव। शरीरगोचरा त्वहंबुद्धिरविद्यैव। यथोक्तं भगवता पराशरेण—

“ श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ।
अनात्मन्यात्मबुद्धिर्या ” इति ।

यदि ज्ञप्तिमात्रमेवात्मा, तदाऽनात्मन्यात्माभिमाने, शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात् । न ज्ञातृ(त्व)प्रतिभासः । तस्माज्ज्ञाताहमर्थ एवात्मा । तदुक्तम्—

“ अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् ।
अविद्यायोगतश्चात्मा ज्ञाताहमिति भासते ॥ ”

इति । तथा च

“ देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी ॥ ”

इति । अनन्यसाधनः ; स्वप्रकाशः । व्यापी; अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः ।

श्रुतप्रकाशिका

“ महाभूतान्यहंकारः ” इति क्षेत्रान्तर्भाववचनमेकम् ;

“ अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ”

इति त्याज्यत्वपरं वचनं द्वितीयम् ; “ अहंकारविमूढात्मा” इत्यपरम् ; एतत्त्रयमनुदाहृतमप्यभिप्रेतत् ; उत्तरत्र परिहारात् । पूर्वमेतद्वचनाभिप्रायेण सुषुप्तिमुक्त्योर्नान्वेतीत्युक्तम् । इममर्थमवलम्ब्य चोदयति— **कथं तर्हीति** । परिहरति—**उच्यत इति** । अहमर्थाहंकारयोरभेदबुद्ध्या परेण परिचोदिते प्रकृतिप्रत्यययोरर्थविभागव्युत्पादनाय प्रकृत्यर्थभूत आत्मन्यहंबुद्धेः प्रामाणिकत्वस्थैर्यं दर्शयति—**स्वरूपोपदेशेष्विति** । अथान्यथासिद्धिं दर्शयंस्तत्राहंकारशब्दविवक्षितमाह—**अव्यक्तेति** । **अव्यक्तपरिणामभेदस्येति;** न त्वहमर्थस्येत्यर्थः। “ अथातोऽहंकारादेशः ” इत्यादिषु शुद्धस्वरूपस्याहंकारशब्देनाभिधानाभ्युपगमेऽपि न विरोधः । स त्वहंकारशब्दोऽहमर्थविषयबुद्धिपरः । यद्यहंकारशब्दवाच्यत्वमात्रात् प्रत्यगा

त्मापि जडक्षेत्रभेदः स्यात्, तर्हि हरिशब्दवाच्यत्वसाम्यात् सिंहो मण्डूकः स्यात्। अतोऽनेकार्थाभिधायिशब्दैकत्वमर्थभेदाविरोधीति भावः। यथा आगमप्रामाण्ये—

"तथा च हरिशब्दस्य दृष्टा मण्डूकवाचिता।
इति तच्छब्दवाच्यत्वात् सिंहो मण्डूक एव किम्॥
तथा गोशब्दवाच्यत्वात् शब्दश्चापि विषाणवान्।"

इति। अथाहंकारशब्दस्याव्यक्तपरिणामविशेषवाचकत्वप्रकारं दर्शयति—**स त्विति**। **अहंभावः**; अहमिति बुद्धिः। भावशब्दस्य बुद्धिवाचकत्वमभिप्रायपरतया प्रयोगादवगम्यते। सर्वत्राहंशब्दार्थमेकरूपमङ्गीकृत्याहंकारशब्दस्याव्यक्तपरिणामवाचित्वं शब्दानुशासनप्रक्रिययोपपादयति—**अस्य त्विति**। च्विप्रत्ययस्य सर्वलोपः। कृञः करणे घञ्। क्षेत्रान्तर्भावोपदेशस्य निर्वाहः कृतः। "अहंकारं बलं दर्पम्" इति त्याज्यतयोपदेशस्य निर्वाहः क्रियते—**अयमेव त्विति**; अयंशब्देन प्रस्तुताहंभावो विवक्षितः; न त्वहंभावकरणहेतुः, गर्वापरनामेति वचनात्। न हि महदहंकारयोरन्यतरोऽहंकारो गर्वापरपर्यायः। अतोऽत्राहंभाव एवायंशब्दविवक्षितः। प्रशस्तदेहेऽहंबुद्धिरुत्कृष्टजनावमानहेतुः। **अहंकारः**; अहंबुद्धिः। मानसव्यापारवाचिनः करोतेर्बुद्धिपरत्वं युज्यते। यथा "तदेकावयवं देवं चेतसा हि पुनर्बुधः। कुर्यात्" इति। मनसा करणं हि वेदनम्। अतोऽहंबुद्धिरहंकारः। च्विप्रत्ययार्थगर्भत्वादनहम्यहंबुद्धिगर्भाविमावहंकारशब्दौ। अत्र भावे व्युत्पत्तिः। पूर्वत्र करणे व्युत्पत्तिः "गर्वोऽभिमानोऽहंकारः" इति नैघण्टुकाः। ननु कथं भावे व्युत्पन्नस्याहंकारशब्दस्योपादेयगोचरतया प्रयोगः—"अथातोऽहंकारादेशः" इति। उच्यते स त्वहंकारशब्दः साक्षादहमर्थबुद्धिवाची; न त्वनात्मन्यात्मबुद्धिपरच्विप्रत्ययार्थगर्भः। हेयोपादेयरूपेण शब्दप्रतिपन्नयोरहंबुद्ध्योर्विषयविभागं निगमयति—**तस्मादिति**। अस्मिन्नर्थे प्रमाणमाह—**यथोक्तमिति**। अत्रैव पुराणे अनात्मविषयाहंबुद्धिवचनयोर्भ्रान्तत्वमात्मविषये त्वभ्रान्तत्वं च स्पष्टम्। यथा—

"आकाशवाय्वग्निजलपृथिवीभ्यः पृथक्स्थिते।
आत्मन्यात्ममयं भावं कः करोति कलेबरे॥
पञ्चभूतात्मके देहे देही मोहतमोवृतः।
अहं ममैतदित्युच्चैः कुरुते कुमतिर्मतिम्॥"

इति । आदिभरतचरिते—

" आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ।
अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥ "

इति । एतद्वचनार्थमप्यहमर्थात्मत्वहेतुत्वेनाह—**यदीति** । **अनात्मनीति** ; अनात्मन्यहंप्रतीतिः कथमात्माभिमान इत्यर्थः । अहमर्थात्मत्वं निगमयति—**तस्मादिति** । अस्मिन्नर्थे आत्मसिद्धिग्रन्थमुदाहरति—**तदुक्तमिति** । धर्मधर्मिभावेन प्रतीतिः, प्रत्यक्षसिद्धिः, स्थिरत्वास्थिरत्वादिवैषम्यं, श्रुत्यर्थापत्तिश्च न्यायः । आगम उदाहृतोपनिषद्वाक्यानि । **अविद्यायोगः**; अनन्तरोक्तभ्रान्तियोगः । अहमर्थस्यानात्मत्वे 'स्थूलोऽहम्' इति भ्रान्तेरयोग इति वार्थः। ज्ञातुरात्मत्वे संवादिग्रन्थो दर्शितः । ज्ञप्तेरनात्मत्वे चात्मसिद्धिग्रन्थमाह-**तथा चेति** । **धीभ्योऽन्यः** इत्येतदत्रोपयुक्तम् । साधनस्योत्पादकज्ञापकसाधारणत्वात्तद्याचष्टे—**अनन्येति** । जीवस्वरूपविभुत्वशङ्काव्युदासार्थं व्यापीति शब्दं व्याचष्टे—**अतिसूक्ष्मेति** । पुराणादिषु व्यापिशब्दप्रयोगात् स एवात्र श्लोके प्रयुक्तः । यत्र यत्र जीवस्य व्याप्तिवाचिनः शब्दाः, तत्र तत्रायमेवार्थो द्रष्टव्य इति भावः । जीवस्य धर्मभूतज्ञानेन व्याप्तिरात्मसिद्धावेवोच्यते—" व्याप्तिरपि चैतन्यमात्रेणैव न स्वरूपेण " इति । अतो यथोक्त एवार्थः ।

**भावप्रकाशिका**

कथं तर्हीति भाष्यमवतारयति—**महाभूतान्यहंकार इतीति** । **क्षेत्रान्तर्भाववचनमेक**मित्यादिना । उत्तरत्र परिहारादिति छेदः । **अहंभावः अहमिति बुद्धिरिति ;** ननु करणशब्दस्य बुद्धिपरत्वसंभवात् **अहंभावकरणम्,** अहंभावप्रतीतिः, अहंत्वप्रतीतिरिति यावदिति कुतो नाश्रीयत इति चेत्—सत्यं, तथा स्वारस्यमस्ति ; तथापि **अयमेवोत्कृष्टजनावमानहेतु**रित्युत्तरभाष्ये 'अयम्' इत्यनेन करणशब्दार्थः परामर्शानर्हः, तस्य नपुंसकत्वात् । तेन भावशब्दार्थस्य परामर्शो वक्तव्यः । अत्र चाहंभावशब्दस्य यद्यहंत्वमर्थः स्यात्, तस्य गर्वशब्दितत्वायोगादसंगतिः स्यात् । अतोऽहंभावशब्देनाहंबुद्धिरेव परामृष्टव्येत्यभिप्रायः । **अयंशब्देन प्रस्तुताहंभावो विवक्षित इति ; अयमेव त्वहंकार इति** भाष्यस्य उत्कृष्टजनावमानहेतुर्गर्वापरनामा योऽहंकारः शास्त्रेषु हेयतया प्रतिपाद्यते, सोऽयमेवेति योजनेत्यभिप्रायः । इतरथा '**अयमेव त्वहंकार**' इत्यनेन प्रस्तुतस्य महत्त्वकार्याहंकारस्यैव परामर्शप्रसङ्गात्, अहंभावलक्षणाहंकारस्य प्रागसिद्धत्वात्, अयमेवाहं-

कार इति सिद्धवन्निर्देशासंभवाच्च। **करोतेर्बुद्धिपरत्वं युक्तमिति**; "शब्ददर्दुरं करोति" इत्यत्र करोतेर्ज्ञानार्थकत्वाभिधानात्। अत एव "शब्दं करोति, शाब्दिकः" इत्युपपद्यत इति द्रष्टव्यम्। **अनहम्यहंबुद्धिगर्भाविमावहंभावाहंकारशब्दाविति** बहुषु कोशेषु पाठो दृश्यते; अत्राहंभावशब्दो लेखकस्खलनकृतः। **अनात्मनि देहेऽहंभावेत्यत्राहं-**भावशब्दस्य "अविद्याहंमतिः स्त्रियाम्" इत्यत्राहंमतिशब्दवत् च्विप्रत्ययान्तत्वाभावात्। **अत्र भावे व्युत्पत्तिरित्युपरितनवाक्ये** अहंकारशब्दस्यैव व्युत्पत्तिप्रदर्शनाच्च। **अत्र भावे व्युत्पत्तिरिति**; अनात्मन्यात्मबुद्धिरूपभ्रम इत्यर्थः। **पूर्वत्रेति**; अहंकाराख्ये महत्तत्त्वकार्य इत्यर्थः। **उपादेयगोचरतयेति**; "अथातोऽहंकारादेशः" इत्यहंबुद्धेः कर्तव्यत्वाभिधानादिति भावः। **स त्वहंकारशब्द इति**; अयमत्र विवेकः—अहंकारशब्दो द्विविधः। च्विप्रत्ययान्तादुत्पन्नोऽनुत्पन्नश्च। उत्पन्नश्च द्विविधः—भावसाधनः करणसाधनश्चेति। च्विप्रत्ययान्तादुत्पन्नो भावसाधनो गर्ववाची। च्विप्रत्ययान्तादुत्पन्नः करणवाची त्वहंकारशब्दोऽहंकारतत्त्ववाची। अच्व्यन्तोत्पन्नभावसाधनशब्द उपादेयभूताहंप्रत्ययवाचीति द्रष्टव्यम्। ननु "श्रूयतां चाप्यविद्यायाः" इत्यस्मिन् श्लोके अनात्मन्यात्मबुद्धेः परमनुपादेयत्वमुच्यते, न त्वनात्मन्यहंबुद्धेः; अतः कथमस्योक्तार्थे प्रमाणत्वमिति शङ्कायामाह—**अत्रैव पुराण इत्यादिना**। **अनन्तरोक्तभ्रान्तियोग इति**; अनात्मन्यात्मबुद्धिरूपभ्रान्तियोग इत्यर्थः। अविद्याया अयोग इति छेदसंभवमभिप्रेत्य तमेवार्थं विपर्ययतव्याचष्टे—**अहमर्थस्यानात्मत्व इति**। **भ्रान्तेरयोग इति**; आत्मभ्रान्तित्वायोग इत्यर्थः।

## श्रुतप्रदीपिका

पूर्वपक्षबीजं परिहर्तुमाह—**यदीति**। परिहरति—**उच्यत इति**। वक्ष्यमाणनिर्वाहौपायिकत्वेन ज्ञात्रात्मत्वं द्रढयति—**स्वरूपेति**। तस्यार्थमाह—**अव्यक्तेति**। वाचकत्वं दर्शयति—**स त्विति**। अहंशब्दार्थ एकरूप उक्तः, प्रयोगान्यथासिद्धौ शक्तिभेदकल्पनायोगात्। अथ मोक्षे त्याज्यतया "अहंकारं बलं दर्पम्" इत्यादिशास्त्रेषूच्यमानोऽहंकारः क इत्यत्राह—**अयमेव त्विति**। अयंशब्दः पूर्वप्रकृताहंभावपरः; न तद्धेतुपरः, गर्वाख्यत्वायोगात्। विषयविभागं निगमयति—**तस्मादिति**। पुराणोक्तिं दर्शयति—**यथोक्तमिति**। "शब्दोऽहम्" इत्यादीन्यप्यभिप्रेतानि। एतद्वचनार्थमप्यहमर्थात्मत्वहेतुत्वेनाह—**यदीति**। निगमयति—**तस्मादिति**। अहमर्थात्मविषयात्मसिद्धिग्रन्थमुदाहरति—**तदुक्त-**

**मिति । अविद्यायोगतः**; अहमर्थात्मत्वेनानात्मबुद्धिरूपाया अविद्याया योगत उपपत्तितः। यद्वा विपर्यये तस्याः अयोगतः अनुपपत्तितः। धियोऽनात्मत्वे च तद्ग्रन्थमाह—**तथा चेति**। साधनशब्दस्य ज्ञप्त्युत्पत्तिसाधारण्याद्व्याचष्टे—**अनन्येति**। अणुत्वाविरोधाय व्याप्तिशब्दं व्याचष्टे—**अतिसूक्ष्मतयेति**।

**तत्त्वटीका**

उपात्तकृत्स्नवचनबाधेच्छया गीतायामेवोक्तमिति शङ्कते—**यदीति**। अत्र **कथं**शब्दस्य प्रतिषेधपरत्वायोगात्प्रश्नवत्कारेण प्रतिवक्ति—**उच्यत इति**। पृष्टस्य साक्षादुत्तरं दित्सुस्तदर्थं स्वपक्षे भूयसां बलीयस्त्वं प्रत्यक्षानुगुण्यं च प्रथममाह—**स्वरूपेति**। रूढिविशेषानुसारेण गीताभिप्रेतमाह—**अव्यक्तेति**। न ह्यहंकारशब्दोऽहंशब्दपर्याय इति भावः। नन्वहंशब्द एवाहंकारशब्दावयवतया प्रत्यभिज्ञातः; न चोभयत्रशक्तिभेदक्लृप्तिर्न्याय्येत्यत्र यौगिकमप्याह—**स त्विति**। अहंभावोऽत्राहमित्यभिमानः। ननु भूमविद्यायाम् "अथातोऽहंकारादेशः" इत्यहंबुद्धिकरणमेवाहंकार इत्युच्यते। तत्प्रत्यभिज्ञयात्र स एवार्थः किं न स्यादित्यत्र "अनात्मनि" इत्यभिप्रेतया व्युत्पत्त्या वैषम्यमाह—**अस्य त्विति**। अनहमर्थस्याहमर्थभ्रमहेतुत्वमिह विवक्षितम्। भूमविद्यायां तु भूमविशिष्टस्य यथार्थमहंग्रहोपासनमिति भावः। ननु "अहंकारं बलं दर्पम्" इत्यादिभिस्त्याज्यतयोक्तस्य कथं मोक्षार्थविद्यायाम् "अथात आदेशः" इतिवदुपादेयतोपदेश इत्यत्राह—**अयमिति**; अनात्मनि देहेऽहंभाव इति निर्दिष्ट इत्यर्थः, अन्यथा **गर्वापरनामे**त्यनन्वयात्। यद्वा कार्ये गर्वे कारणभूताहंकारोपचारः। **एवकारो**ऽहंग्रहोपास्तिव्यवच्छेदार्थः। **उत्कृष्टे**त्यादिना हेयत्वनिदानोक्तिः। ननु "अविद्याहंमतिः" इति पठ्यते; तत्कथमहंग्रहोपास्तिर्यथार्था विधीयत इत्यत्र विद्याविद्यात्मके अहंमती विभजन्निगमयति—**तस्मादिति**। साक्षाच्छब्द उपहितरूपव्यवच्छेदार्थः। अविद्यानिष्कर्षं पुराणोक्त्या संवादयति—**यथोक्तमिति**। एतच्चान्याधीनत्वादिप्रमाणोपलक्षणम्। एवमविद्यादिरूपतया प्रसिद्धां देहाहंबुद्धिमपि परेष्टभङ्गिकामाह—**यदीति**। स्वेष्टेऽपि तामेव प्रमाणयन् परमप्रकान्तमुपसंहरति—**तस्मादिति**। आत्मनोऽहंत्वज्ञातृत्वादिसाधकवर्गस्य संकलितबोधार्थमात्मसिद्धौ निगमितं दर्शयति—**तदुक्तमिति**। **अविद्यायोगतः** इत्येतत्परेष्टेऽनुपपत्तिं स्वेष्टे चोपपत्तिं तन्त्रत आवृत्त्या वा वक्ति। आत्मनो विषयग्राहिधियोऽन्यत्वे स्वप्रकाशत्वादौ च तत्प्रकरणारम्भे संगृहीतमाह—

**तथा चेति** । अत्र साधनशब्दस्योत्पादनपरत्वे नित्यत्वोक्त्या पुनरुक्तिः स्यात् । तद्व्युदासाय **स्वप्रकाश** इत्युक्तम् । **व्यापि**शब्देन विभुत्वविवक्षायाम् उत्क्रान्त्यादिसूत्रविरोधादर्थान्तरमाह—**अतिसूक्ष्मतयेति** । एतत्पदद्वयार्थस्तत्रत्यविस्तरे व्यक्तः ।

### श्रीभाष्यम्

यदुक्तं दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति । कोऽयं दोष इति वक्तव्यम्, यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः । अनादिभेदवासनैव हि दोष इति चेत्, भेदवासनायास्तिमिरादिवद्यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम्? अनेनैव शास्त्रविरोधेन ज्ञास्यत इति चेत्; न, अन्योन्याश्रयणात्—शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनाया दोषत्वनिश्चयः, भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चय इति । किंच यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वं शास्त्रमपि तन्मूलत्वेन तथैव स्यात् ।

### श्रुतप्रकाशिका

अथ शास्त्रप्रत्यक्षविरोधे शास्त्रप्राबल्यमनूद्य निरस्यति—**यदुक्तमित्यादिना** । परेण पूर्वं मूलमूलिभावपरोक्षापरोक्षरूपत्वादिर्न बाध्यबाधकभावे कारणं, ज्वालाभेदानुमाने व्यभिचारात्; "आदित्यो यूपः" इत्यादावपि यूपादित्यैक्याद्यप्रतिपादनं न दौर्बल्यात्, अपि तु यूपाञ्जनविधिशेषत्वेनैक्ये तात्पर्याभावादित्युक्तम् । अत्र ज्वालाभेदानुमानाच्छास्त्रस्य त्रिधा वैषम्यमस्ति—प्रमाणान्तरेण दोषत्वानिश्चयादन्योन्याश्रयः; बाध्यबाधकयोस्तुल्यदोषत्वम्; मूलोच्छेदित्वं चेति । एतत्त्रयं ज्वालाभेदानुमाने नास्ति; तथा हि—एकवर्तिकावर्तित्वनिबन्धनसादृश्याख्यदोषस्यासत्यप्यैक्ये ऐक्यप्रतीतिहेतुत्वमचिरनिर्वापितारोपितप्रदीपे दृष्टमिति चक्षुषा ज्वालैक्यप्रतिपत्तेः क्वचिद्दोषमूलत्वनिश्चयादन्यत्रैक्यप्रतिपत्तावपि दोषमूलत्वसंभवाज्ज्वालैक्यप्रत्यक्षं शङ्कितं न निश्चयजननक्षमं परीक्षकस्य भवेत् । ज्वालायां

सादृश्यरूपदोषस्यासत्यप्यैक्ये ऐक्यप्रतीतिहेतुत्वं प्रमाणान्तरेण न दृष्टं चेत्, अन्योन्याश्रयः स्यात्——अनुमानप्राबल्यात्प्रत्यक्षस्यान्यथासिद्धिः ; तदन्यथासिद्ध्यानुमानस्य प्राबल्यमिति। ऐक्यप्रतीतेरन्यथासिद्धिसंभवः प्रमाणान्तरदृष्ट इति नान्योन्याश्रयः। अत्र न तथा प्रमाणान्तरेण भेदवासनाया दोषत्वं दृष्टम्। किंच दीपे बाध्यस्य ज्वालैक्यज्ञानस्य सादृश्याख्यदोषमूलत्वेऽपि बाधकस्य ज्वालाभेदानुमानस्य न सादृश्यदोषमूलत्वं दृष्टम्। अत्र तु बाध्यस्य प्रत्यक्षस्य बाधकस्य शास्त्रस्य चोभयोः पराभ्युपेतदोषमूलत्वमविशिष्टं विद्यत इति तुल्यदोषत्वम्। किंच तत्र ज्वालाख्यधर्मिग्राहिणः प्रत्यक्षस्य प्रथमवर्त्यवयवाग्निसंयोगे चरमवर्त्यवयवाग्निसंयोगविनाशे चोत्पत्तिविनाशयोर्व्याप्तिग्राहिणः प्रत्यक्षस्य प्रत्यवयवमग्निसंयोगवर्त्यवयवविनाशाख्यलिङ्गग्राहिणः प्रत्यक्षस्य च न भेदानुमानबाध्यविषयत्वम्। ऐक्यप्रतिपत्तेरेव तत्। अत्र तु शब्दाख्यधर्मिग्राहिणस्तस्य निर्दोषत्वसाधकलिङ्गग्राहिणस्तल्लिङ्गव्याप्तिग्राहिणः षड्विधतात्पर्यलिङ्गग्राहिणश्च प्रत्यक्षस्य तेषां तात्पर्यलिङ्गानां च शास्त्रेणैव बाधोपगमान्मूलोच्छेदित्वमिति त्रिधा वैषम्यम्। एतद्वैषम्यत्रयमुपपादयिष्यन् पूर्वपक्षमनुवदति— **दोषमूलत्वेनेति। सकलभेदावलम्बिप्रत्यक्षस्येति**; अत्रायं भावः——तत्त्वशुद्धिकारादिभिः कैश्चित्काचतिमिरादिरेव प्रत्यक्षस्य दोष उक्तः। स नोपपद्यते, काचतिमिरादेः काचित्कत्वात्। एतेन प्रत्यक्षान्तराणां दोषमूलत्वमनुमीयते चेत् शब्दत्वाच्छास्त्रस्यापि दोषमूलत्वमनुमीयताम्। शास्त्रदोषस्य योग्यानुपलम्भनिरासश्चेत्, प्रत्यक्षेऽपि तथैव स्यात्। किंच आयुर्वेदे दोषाणां स्वरूपं तन्निवृत्त्युपायादिकं च निरूपितम्। सर्वप्रत्यक्षस्य दोषमूलत्वानुमानं तद्विरुद्धं च। किंच सर्वप्रत्यक्षस्य दोषमूलत्वे सन्मात्रग्राहिणः प्रत्यक्षस्य च दोषमूलत्वात् सन्मात्रमपि मिथ्या स्यादिति दूषयति—**कोऽयमित्यादिना। कोऽयं दोष इति वक्तव्यमिति**; 'कोऽयं दोषः' इत्यनया वचनव्यक्त्या दोषरूपं मूलं यदुक्तं तत्किमिति पृष्टे 'अयं दोषः' इति वक्तव्यमित्यर्थः। यद्वा यच्छब्दसामर्थ्यात् तत्रेत्याक्षेपसिद्धम्। **दोषमूलत्वेने**त्यादिना यदर्थजातमुक्तं तत्र कोऽयं दोष इति पृष्टे वक्तव्यमित्यर्थः। कुतो वक्तव्यमित्यत्राह——**यन्मूलतयेति**; न हि दोषमनुक्त्वान्यथासिद्धिः सुवचेत्यर्थः। दोषमाह——**अनादीति**। स्वरूपसंप्रतिपत्तिपर एवकारः। हिशब्देन दोषान्तरासंभवसिद्धवत्कारः। स्वमते दोषत्वसंप्रतिपत्त्यभिमानाद्वा हिशब्दः। दोषत्वं हि विपरीतज्ञानहेतुत्वम्; अतो विपरीतज्ञानहेतुत्वेन व्याप्तेरदृष्टतया भेदवासनास्वरूपसंप्रतिपत्तावपि

दोषत्वासंप्रतिपत्तेः पृच्छति---**भेदवासनाया इति** । **तिमिरादिवदि**त्यादिशब्देन सादृश्यादि विवक्षितम् । तद्धि ज्वालायामैक्यभ्रमहेतुः । अन्यत्र ज्ञातपूर्वत्वस्य दुर्वचत्वाच्छङ्कते—**अनेनैवेति** । दूषयति---**नेति** । एवं प्रमाणान्तरेण दोषत्वानिश्चयेनान्योन्याश्रयणापत्तिरूपवैषम्यमुक्तम् । अथ तुल्यदोषत्वं बाध्यबाधकयोराह---**किंचेति** ।

## भावप्रकाशिका

**एतेन प्रत्यक्षान्तराणां दोषमूलत्वमनुमीयते चेदिति** ; केषुचित् प्रत्यक्षेषु काचादिदोषमूलत्वदर्शनेन प्रत्यक्षान्तराणां काचादिदोषमूलत्वमनुमीयते चेदित्यर्थः । एवमुत्तरत्रापि दोषपदं काचादिदोषपरं द्रष्टव्यम् । ततश्च मुख्यमृषावादिनः स्वैकदेशिनं प्रति स्वव्याघातकरीयमुक्तिः कथं स्यादिति शङ्का निरस्ता । **कोऽयं दोष इति** भाष्यस्य यदुक्तमित्यनेनान्वयं घटयितुमुपायं प्रदर्शयति---**कोऽयं दोष इत्यादि** । **अनया वचनव्यक्त्येति** ; दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदप्रत्यक्षस्य शास्त्रबाध्यत्वमिति यत् दोषरूपमूलमुक्तं तत् किमित्येवं 'को दोषः' इति वचनव्यक्त्या पृष्ट इत्यर्थः । **यदुक्तमिति** नपुंसकस्य **को दोष** इति पुंलिङ्गस्य च सामानाधिकरण्यसंपादनस्यातिक्लिष्टत्वादन्यथा व्याचष्टे---**यद्वा यच्छब्दसामर्थ्यादिति** । **हेतुत्वेन व्याप्तेरदृष्टतयेति** ; भेदवासनात्वस्येति शेषः । यद्वा भेदवासनाया विपरीतज्ञानहेतुत्वेन व्याप्तेः साकल्येन संबन्धस्येत्यर्थः । भाष्ये **श्रवणावगतनिखिलभेदोपमर्दादिति** ; श्रवणवेलायां निखिलभेदोपमर्दित्वेन प्रकारेणावगतस्य ब्रह्मात्मैकत्वविज्ञानस्याभ्यासरूपत्वान्मननादेरित्यर्थः । न च मननस्य ब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वेऽपि ब्रह्मात्मैकत्वविज्ञानस्य निखिलभेदोपमर्दित्वाभ्यासरूपत्वं किमर्थमिति शङ्कनीयम् , ब्रह्मात्मैकत्वसिद्ध्यर्थं तदितरमिथ्यात्वसिद्ध्यै ब्रह्मात्मैकत्वविज्ञानस्य भेदोपमर्दित्वस्य चिन्त्यत्वात् आरम्भणाधिकरणे मननात्मकैतच्चिन्तायाः क्रियमाणत्वाच्च ।

## श्रुतप्रदीपिका

अथ प्रत्यक्षाच्छास्त्रस्य प्राबल्यमनुवदति---**यदुक्तमिति** । 'कोऽयं दोषः' इति वचनव्यक्त्या यद्दोषरूपं मूलमुक्तं, तत्कोऽयं दोष इति प्रष्टव्यम् । न हि दोषमनुक्त्वान्यथासिद्धिर्वाच्येत्यर्थः । शङ्कते---**अनादीति** । काचादेः काचित्कत्वात् क्लृप्तावतिप्रसङ्गाच्चानुक्तिः । मूलमूलिभावादेरप्रयोजकत्वम् । ज्वालाभेदानुमानं ह्युदाहृतम् । तस्मात् वैष-

म्यत्रयं विवक्षन् प्रथममन्यत्र दोषत्वानिर्णयादन्योन्याश्रयमाह—**भेदेत्यादिना** । प्रत्यक्षाविरोधे यूपादित्यैक्यवाक्यवत् प्रमितिहेतुत्वायोगात् प्रत्यक्षस्य दोषमूलत्वनिश्चयसापेक्षः शास्त्रस्य निर्विशेषबोधकत्वनिश्चय इत्यन्योन्याश्रय इत्यर्थः । एकवर्तिकावृत्तित्वसाम्यस्य दोषत्वं हि भिन्नयोरप्यैक्यधीहेतुतया दृष्टमचिरनिर्वापितारोपितदीप इति भावः । बाध्यबाधकयोस्तुल्यदोषत्वमाह— **किंचेति** । न ह्यर्चिर्भेदानुमा तदैक्यधीवत् सादृश्यदोषमूलेति भावः ।

**तत्त्वटीका**

एवं प्रत्यक्षवैघट्यं नास्तीत्युक्तं न्यषिध्यत ।
ततः शास्त्रबलीयस्त्वं यदित्यन्वाह बाधितुम् ॥५१० ॥

**कोऽयमित्यादि** । यदुक्तं दोषरूपं मूलं तत्र कोऽयं दोष इति पृष्टे विशेषतः प्रतिवक्तव्यमित्यर्थः । न हि कश्चिद्दोषोऽस्तीति सामान्योक्त्यान्यथासिद्धिः सुवचा; त्वन्मतेऽपि प्रसङ्गात्; विशेषतश्चात्र दोषो दुर्वचः । काचादेरव्यापित्वात् तावतैवान्यत्र शङ्कायामविषयवृत्तेश्चेति भावः । प्रागेव दोषविशेष उक्त इति शङ्कते—**अनादीति** । दोषत्वमस्या दुर्वचमित्याह—**भेदेति** । यदि द्विचन्द्रभ्रमादौ भेदवासनाया दोषत्वं दृष्टमित्युच्येत, तदा भिन्नेष्वभिन्नत्वबुद्धावभेदवासनापि दोषत्वेन दृष्टा; ततश्चैक्यधीरपि दुर्बला न बाधिका स्यात् । अन्यत्रादृष्टमप्यद्वैतश्रुत्यन्यथानुपपत्त्या कल्प्यमिति शङ्कते—**अनेनेति** । कल्पकासंभवमभिप्रेत्याह—**नेति ; अन्योन्याश्रयणा**दित्यनेनान्वयः । भेदवासनामात्रस्य दोषत्वं निर्विशेषाद्वैतशास्त्रविरोधात्कल्प्यम् ; सिद्धे च प्रत्यक्षमात्रस्य तादृशदोषमूलत्वे यूपादित्यैक्यन्यायातिक्रमेण शास्त्रस्य निर्विशेषपरत्वमिति मिथः संशयात्कृत्स्नप्रत्यक्षदौर्बल्यं दुर्वचमिति भावः । ज्वालैक्यप्रत्यक्षे हि,

व्युत्पत्तिव्याप्तिपूर्वेषु प्रत्यक्षमुपजीवतोः ।
कृत्स्नप्रत्यक्षवैरं न क्षमं शास्त्रानुमानयोः ॥ ५११ ॥
अस्तु ते बाह्यतुल्यत्व...नोब...हुत्वमपि ॥ ५१२ ॥

ज्वालाभेदानुमानाद्वैषम्यमाह—**किंचेति** । न हि ज्वालाभेदधीस्तदैक्यधीजनकदोषजन्येति भावः । ........दीपसादृश्यं तद्वर्तिकासाम्यं चाचिरनिर्वापितारोपितदीपैक्यभ्रमे दोषत्वेन निर्णीतम् । अतस्तत्र नान्योन्याश्रयः । न च तत्र भेदानुमानं स्वोपजीव्यप्रत्यक्षव्यक्तिविरोधीति भावः ।

नान्यपर्यादमानत्वं न च वाच्यं तदेव तत् ।
यूपादित्येति वाक्यादौ बाधादेव समानता ॥ ५१३ ॥

अतोऽनन्यपरस्यापि बुद्धिर्निगमवद्भवेत् ।
त्र्यन्तस्याप्रमाणत्वं दोषे बाधे च दुस्त्यजम् ॥ ५१४ ॥

श्रीभाष्यम्

**अथोच्येत—दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात् तत् प्रत्यक्षस्य बाधकमिति, तन्न; दोषमूलत्वे ज्ञाते सति परत्वमकिंचित्करम् । रज्जुसर्पज्ञाननिमित्तभये सति 'भ्रान्तोऽयम्' इति परिज्ञातेन केनचित् 'नायं सर्पो मा भैषीः' इत्युक्तेऽपि भयानिवृत्तिदर्शनात् । शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातम्, श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वान्मननादेः ।**

श्रुतप्रकाशिका

अथ दोषमूलत्वे तुल्येऽपि परत्वाद्बाधकत्वं शङ्कते—**अथेति** । अपच्छेदादिषु 'इदं रजतं, नेदं रजतम्' इत्यादिषु च परं बाधकं दृष्टम् । अतो निषेध्योपस्थापकमानापेक्षया निषेधकस्य परत्वाद्बलीयस्त्वमित्यर्थः । एवं ब्रह्मप्रतिपादकशास्त्रस्यापि व्युत्पत्त्यादेः प्रत्यक्षादिमूलतया तत्पूर्वकस्य तस्य प्रत्यक्षाद्यपेक्षया परत्वात् तत्प्रतिपाद्यनिर्विशेषवस्तुसत्यत्वमपि तुल्यन्यायतया सिद्धम्; तद्दूषयति—**तन्नेति** । परत्वस्याकिंचित्करत्वमुपपादयति—**रज्जुसर्पेति** । उत्तरज्ञानस्य दोषमूलत्वेन प्रामाण्यानिश्चयाद्भयानिवृत्तिः । ननु भ्रान्तत्वे ज्ञाते परत्वमकिंचित्करमस्तु; अत्र तु भ्रान्तत्वज्ञानं नास्तीत्यत्राह—**शास्त्रस्य चेति**; ज्ञातत्वमुपपादयति—**श्रवणावगतेति** । शास्त्रस्य भेदवासनामूलत्वं तावत्संप्रतिपन्नम्; तस्याश्च दोषत्वं भेदमिथ्यात्वज्ञानादवगम्यते; तन्मिथ्यात्वावगतिश्च ज्ञाननिवर्त्यत्वावगमात्; ज्ञाननिवर्त्यत्वावगमश्च ब्रह्मात्मैकत्वज्ञानस्य निखिलभेदोपमर्दित्वावगतेः । अत ईदृशनिवर्तकज्ञानाभ्यासरूपमननं कुर्वता शास्त्रस्य दोषमूलत्वमवगतमित्यर्थः ।

## भावप्रकाशिका

भाष्ये **श्रवणावगतनिखिलभेदोपमर्दीति**; श्रवणवेलायां निखिलभेदोपमर्दित्वेन प्रकारेणावगतस्य ब्रह्मात्मैकत्वविज्ञानस्याभ्यासरूपत्वान्मननादेरित्यर्थः । न च मननस्य ब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वेऽपि ब्रह्मात्मैकत्वविज्ञानस्य निखिलभेदोपमर्दित्वाभ्यासरूपत्वं किमर्थमिति शङ्कनीयम्, ब्रह्मात्मैकत्वसिद्ध्यर्थं तदितरमिथ्यात्वसिद्ध्यै ब्रह्मात्मैकत्वविज्ञानस्य भेदोपमर्दित्वस्य चिन्त्यत्वात्; आरम्भणाधिकरणे मननात्मकत्वचिन्तायाः क्रियमाणत्वाच्च । **भेदवासनामूलत्वं तावत् संप्रतिपन्नमिति**; प्रकृतिप्रत्ययादिभेदवासनामूलत्वादिति भावः । **तस्याश्च दोषत्वमिति**; ननु दोषस्य भ्रान्तिकल्प्यत्वाद्वेदान्तजन्यचिन्मात्रविषयकज्ञानस्य प्रमात्वेन दोषजन्यत्वं कुतः कल्प्यत इति चेत्—न; वृत्तिरूपज्ञानस्यापि ब्रह्मव्यतिरिक्तत्वेन मिथ्यात्वात् दोषजन्यत्वस्यावश्यकत्वात्, योग्यताभ्रमजन्यतया शास्त्रजन्यज्ञानस्यापि भ्रमत्वस्य वक्तव्यत्वाच्चेति भावः । **मिथ्यात्वावगतिश्च ज्ञाननिवर्त्यत्वावगमादिति**; ननु श्रवणवेलायां ब्रह्मव्यतिरिक्तमिथ्यात्वस्य "नेह नानास्ति" इति शास्त्रेणैव प्रतीतेः मिथ्यात्वावगतेश्च दोषमूलत्वेन भेदवासनाया एव दोषमूलत्वं पर्यवस्यतीति ऋजुमार्गे सति किमनेन वक्रमार्गाश्रयणेनेति चेत्; अत्र केचित्—ननु श्रवणवेलायां दोषजन्यत्वं नावगतम्, आरम्भणाधिकरण एव ब्रह्मव्यतिरिक्तमिथ्यात्वस्य भेदप्रतीतेर्दोषजन्यत्वस्य च निरूप्यमाणतया आरम्भणाधिकरणस्य च मननात्मकद्वितीयाध्यायगतत्वात् श्रवणवेलायां दोषजन्यत्वाज्ञानात् शास्त्रजन्यज्ञानस्य परतया बाधकत्वं भविष्यतीत्याशङ्कानिराकरणार्थं **श्रवणावगते**त्यादि भाष्यम् । ततश्च मननस्य श्रवणावगतार्थदृढीकरणार्थतया श्रवणवेलायामपि भेदमिथ्यात्वप्रतीत्यवश्यंभावेन तत्प्रतीतेर्दोषजन्यत्वप्रतीत्यवश्यंभावात्; अन्यथा श्रवणकालीनशास्त्रजन्यावगतेः परत्वेऽपि भेदमिथ्यात्वाविषयत्वेन बाधकत्वाप्रसक्तेरिति भाव इत्याहुः ।

## श्रुतप्रदीपिका

परत्वं वैषम्यं शङ्कते—**अथेति** । परिहरति—**तन्नेति** । कथमित्यत्राह—**रज्ज्वाति** । ज्ञाते सति ह्यनिवृत्तिः; न च तज्ज्ञातमित्यत्राह—**शास्त्रस्य चेति** । हेतुमाह—**श्रवणेति** । शास्त्रमपि काल्पनिकनिखिलभेदान्तर्गतमिति भावः ।

### तत्त्वटीका

यथा निर्दोषत्वसाम्येऽपि पूर्वापरापच्छेदयोः परो बलीयान्, तथा सदोषत्वसाम्येऽपि परत्वादागमः प्रमाणमिति शङ्कते—**अथेति**। तत्र रज्जौ सर्पभूरन्ध्रबुद्ध्योरिव पौर्वापर्यमकिंचित्करमित्यभिप्रायेणाह—**तन्नेति**। तदेवोदाहरणेन व्यनक्ति—**रज्ज्वेति**। तद्वदुत्तरस्य दोषमूलत्वं न ज्ञातमित्यत्राह—**शास्त्रस्येति**। अन्यथा मननादिकारणोच्छेदात्कार्यासिद्धिं सूचयति—**श्रवणेति**। निखिलशब्दः प्रमातृप्रमेयप्रमाणशास्त्रस्वरूपपदवाक्यतदर्थविकल्पादिसंग्रहार्थः।

### श्रीभाष्यम्

**अपि चेदं शास्त्रमसंभाव्यमानदोषम्, प्रत्यक्षं तु संभाव्यमानदोषमिति केनावगतं त्वया? न तावत् स्वतःसिद्धा निर्धूतनिखिलविशेषानुभूतिरिममर्थमवगमयति; तस्याः सर्वविषयविरक्तत्वात्, शास्त्रपक्षपातविरहाच्च। नाप्यैन्द्रियकं प्रत्यक्षम्, दोषमूलत्वेन विपरीतार्थत्वात्। तन्मूलत्वादेव नान्यान्यपि प्रमाणानि। अतः स्वपक्षसाधनप्रमाणानभ्युपगमान्न स्वाभिमतार्थसिद्धिः।**

### श्रुतप्रकाशिका

एवं बाध्यबाधकयोस्तुल्यदोषत्वरूपं वैषम्यमुक्तम्; अथ मूलोच्छेदित्वमाह—**अपि चेति**। इदं **शास्त्रमिति** शब्दराशिव्यावृत्तिः। **असंभाव्यमानदोषमिति** बौद्धागमादिव्यावृत्तिः। **त्वया**; प्रमाणप्रमेयादिकं तात्त्विकत्वेनानभ्युपगच्छता। **न तावदिति**; स्वतः सिद्धत्वेन निर्धूतनिखिलविशेषत्वम्। एतद्विशेषणं निर्विषयत्वप्रदर्शनार्थम्। कुतो नावगमयतीत्यत्राह—**तस्या इति**। **सर्वविषयविरक्तत्वात्**; निर्विषयत्वादित्यर्थः। न हि ज्ञानमसंबध्य विषयं प्रकाशयति। वस्तुतो निर्विषयापि भ्रान्त्याऽविद्यमानमपि शास्त्रप्राबल्यमवगमयतीत्यत्राह—**शास्त्रपक्षपातविरहाच्चेति**। असंबद्धाविद्यमानत्वाविशेषात् सौगतादिशास्त्रान्तरप्रामाण्यमप्यवगमयेदित्यर्थः। प्रत्यक्षादिकं नावगमयतीत्याह—**नापीति**। योगिप्रत्यक्षादेरप्यैन्द्रियकप्रत्यक्षमूलशास्त्रजन्यज्ञानहेतुकादृष्टकार्यत्वादैन्द्रियकप्रत्यक्षं प्रथममुपात्तम्। **तन्मूलत्वात्**; भेदवासनामूलप्रत्यक्षमूलत्वात्। एवं प्रकृतगोचरतयोक्तं

प्रमाणाभावं पराभिमतसर्वगोचरत्वेनोपसंहरति—अत इति । **न स्वाभिमतार्थसिद्धिः**; स्वाभिमतं प्रत्यक्षदौर्बल्यशास्त्रप्राबल्यादिकम् । एतत् खण्डनकाराद्युक्तकुतर्कनिरसनोपलक्षणार्थमुक्तम् । **तत्र** प्रमाणव्याप्त्यादिभङ्गः क्रियते: तत्रेदं प्रष्टव्यम्—स्वाभिमतव्यतिरिक्तार्थपरं शास्त्रान्तरमपरमार्थार्थकमित्यस्मिन्नर्थे किं तव प्रमितिस्तत्साधनं वास्ति ? उत नास्ति ? अस्ति चेत् न प्रमाणादिभङ्गः । नास्ति चेत् तत एव न प्रमाणादिभङ्गः । प्रमितितत्साधनादिकमस्त्येव, तद्व्यावहारिकमिति चेत्; किमिदं व्यावहारिकत्वम्? किं परमार्थत्वम् ? उतापरमार्थत्वम् ? अपरमार्थ भूतं प्रमाणं किं साधकम् ? उतासाधकम् ? साधकं चेत्, अपरमार्थसंज्ञितमन्येषां च प्रमाणं तत्तत्पक्षसाधकमेव स्यात् । अथासाधकम्, ततो नितरां वाद्यन्तराभ्युपगतप्रमाणादिकं साधकं भवेत् । त्वदुक्तं प्रमाणादिकं परमार्थभूतं चेत् द्वैतं विजयि स्यादिति । स्वपक्षपरपक्षभेदः किं परमार्थः? उतापरमार्थः? परमार्थश्चेत्, न भेदमिथ्यात्वम् । अपरमार्थश्चेत् परपक्ष एव त्वयाङ्गीकृतः स्यादिति भेदपारमार्थ्यं त्वयैवोक्तं स्यादिति । एवमादिव्याघातः सर्वत्रानुसंधेय इत्यभिप्रायः ।

### भावप्रकाशिका

**शब्दराशिव्यावृत्तिरिति**; आकाशभूतशब्दराशिव्यावृत्तिरित्यर्थः । **त्वयेति** व्याख्येयं पदम् । **स्वतः सिद्धत्वेन निर्धूतनिखिलविशेषत्वमिति**; स्वतः सिद्धत्वे प्रागभावाभावेनोत्पत्त्यभावात्, उत्पत्तिप्रतिबद्धाश्चान्ये विकारा न सन्तीति पूर्वमुक्तत्वादिति भावः। परमार्थत्वविकल्पशिरसि परवाद्यनभ्युपगमरूपदूषणस्य स्पष्टत्वादपरमार्थपक्षं दूषयति— **साधकं चेदिति**। यद्यपि भाष्ये **कोऽयं व्यावहारिको नाम**ेत्यादिना व्यावहारिकत्वं दूषयिष्यत इति तत्रैवेदं वक्तुमुचितम्, तथाप्यस्मिन्नपि वाक्य एषां दूषणानां संभवमभिप्रेत्यैतदुक्तमिति द्रष्टव्यम्।

### श्रुतप्रदीपिका

अथ मूलोच्छेदित्वमाह—**अपि चेति** । शास्त्रमित्यक्षरराशेर्व्युदासः । **असंभाव्येति** सौगतागमादेः । **विरक्तत्वात्**; वस्तुतो निर्विषयत्वात् । यदि निर्विषयमपि बोधकं तदा विपरीतमपि बोधयेदित्याह— **शास्त्रेति**; प्रामाण्यापारमार्थ्यानुभूत्यसंबन्धित्वयोः सुगतागमादावपि तुल्यत्वादिति भावः । प्रत्यक्षादिकमवगमयतीत्यत्राह— **नापीति** । परोक्तकृत्स्नकुतर्कव्याघातप्रदर्शनायाह— **अतः स्वपक्षेति** । **स्वाभिमतेति**; शास्त्रप्राबल्यादिकं न सिध्येदिति भावः ।

तत्त्वटीका

अथ परोक्ते तत्प्रक्रिययैव प्रमाणाभावमभ्युपगम्य परमतस्य निर्मूलत्वं वक्तुमाह–**अपि चेति**। **इदं शास्त्रम्**; अबोधकात् प्रत्यक्षादेश्च व्यावृत्तमित्याशयः। **असंभाव्यमानदोषम्**; प्रमाणाभासवर्गाद्विलक्षणमिति यावत्। बाह्यागमवैषम्यमप्यत्र दुर्वचमिति भावः।

कल्पितं हि प्रमाणत्वं वेदे बाह्यागमेऽपि च।
अव्यवस्था ततो बाधस्तटस्थ्याच्छुद्धसंविदः॥ ५१५॥

**केन**; न केनापि प्रमाणेनेत्यर्थः। तत्र परेष्टशुद्धसंवित्स्वरूपं तदन्यद्वा मानमिति विकल्पं मत्वा आद्यं निरस्यति—**न तावदिति**। न हि तस्याः कतिपयवैराग्यं त्वयानुशिष्टमित्यभिप्रायेणाह—**तस्या इति**। एतादृशी तस्याः सहसा विरक्तिर्जातेत्यत्राह—**शास्त्रेति**। अवच्छेदकं दुर्लभमिति भावः। **नान्यान्यपीति**; स्वरूपातिरिक्तज्ञानं तु भ्रान्तिरूपत्वान्नार्थव्यवस्थापकम्, अन्यथातिप्रसङ्ग इति भावः। अत्र प्रत्यक्षस्य तन्मूलानुमानादेश्च निरासः। बहुवचनं त्विह तत्तद्वादिमतानुसारेण। एवं साधकाभावादभिमतं शास्त्रप्राबल्यं न सिध्यतीत्याह—**अत इति**।

ज्वालाभेदानुमाने तु धर्मिलिङ्गादिबुद्धयः।
न दोषमानबाध्याश्च नात्मनस्तन्निदर्शनम्॥ ५१६॥
स्वपक्षस्थापकादेव स्वव्याघातादिदोषतः।
निर्मूलमखिलं शास्त्रमित्युक्तं भवति त्विह॥ ५१७॥

श्रीभाष्यम्

**ननु व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येव। कोऽयं व्यावहारिको नाम? आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथावस्थित इति चेत्, किं तेन प्रयोजनम्? प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात्! अथोच्येत—शास्त्रप्रत्यक्षयोरविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते; शास्त्रविषयस्य सदद्वितीयब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थ इति; तदयुक्तम्, अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात्।**

### श्रुतप्रकाशिका

अथ स्वपक्षसाधकप्रमाणाभावं प्रति विवक्षुश्चोदयति—**नन्विति**। **कोऽयमि**त्याक्षिपति। व्यावहारिकस्वरूपं शिक्षयति—**आपातेति**। दूषयति—**किं तेनेति**। साध्यनिश्चयरूपप्रयोजनं नेत्यर्थः। कुत इत्यत्राह—**प्रमाणतयेति**। युक्त्या बाधो **यौक्तिकबाधः**। धूमबुद्ध्या गृहीतबाष्पादेः साध्यनिश्चयाहेतुत्वादर्शनादित्यर्थः। एवं मूलोच्छेदित्वं वैषम्यमुपपादितम्। एवं पूर्वं परोक्तं परत्वाद्वैषम्यं दूषितम्; अथास्मात्परस्य कस्यचिद्बाधकस्याभावं ब्रह्मप्रतिपादकशास्त्रस्य प्रत्यक्षाद्वैषम्यं शङ्कते—**अथोच्येतेत्यादिना**। बाधदर्शनाभावरूपं वैषम्यं शास्त्रस्य वक्तुं प्रत्यक्षविषयस्य बाधदर्शनमाह—**शास्त्रेति**। प्रत्यक्षविषयात् शास्त्रविषयस्य वैषम्यमाह—**शास्त्रविषयस्येति**। पाश्चात्त्यबाधादर्शनाभ्युपगमेन दूषयति—**तदयुक्तमिति**। कुत इत्यत्राह—**अबाधितस्येति**। यस्य दुष्टं करणं यस्य च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्यय इति हि नीतिविदः। अतो दुष्टमूलत्वबाधकप्रत्ययौ प्रत्येकं मिथ्यात्वसाधकौ।

### भावप्रकाशिका

**युक्त्या बाधो यौक्तिकबाध इति**; "तेन दीव्यति" इति दीव्यत्याद्यर्थे ठगिति भावः।

### श्रुतप्रदीपिका

चोदयति—**नन्विति**। परिहरति—**कोऽयमिति**। **प्रमाणकार्याभावात्**; बाष्पारोपितधूमवदिति भावः। परान्तराभावं शङ्कते—**अथेति**। उपेत्य परिहरति—**तदिति**।

### तत्त्वटीका

अथ सौगतसर्वस्वे संवृत्याख्ये प्रलम्भने।
परः शब्दान्तरं न्यस्यन् समाधित्सति नन्विति ॥ ५१८ ॥

अत्र व्यवहारसंबन्धादिमात्रमतिप्रसञ्जकमित्यभिप्रायेण प्रतिक्षिपति—**कोऽयमिति**। बहुधा विकल्पितेषु त्वदिष्टानुगुणो न कश्चित्कल्प इत्याशयः। परेष्टं कोटयन्तरं शङ्कते—**आपातेति**। एतत्स्वोक्त्यादिविरुद्धमिति सूचयति—**किं तेनेति**। लिङ्गविभ्रमबाह्यागमन्यायमुद्धाटयति—**प्रमाणतयेति**। **प्रमाणकार्याभावात्**, स्वपक्षसत्यत्वादेरलाभादिति भावः। शास्त्रस्य

प्रत्यक्षं बाधित्वोदयात्तस्य बाधकान्तरानुदयाच्च प्रत्यक्षाद्बलीयस्त्वं, शास्त्रस्य स्वार्थसाधकत्वं च शङ्कते—**अथेति** । बाधकान्तरानुदयमन्वारुह्य प्रतिवक्ति—**तदिति** । अप्रामाण्यज्ञप्तौ बाधकवत्कारणदोषस्यापि पृथगेव हेतुत्वं प्रसिद्धमित्यभिप्रायेणाह—**अबाधितस्यापीति** ।

"दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे ।
अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥"

इति चाहुः ।

### श्रीभाष्यम्

**एतदुक्तं भवति—यथा सकलेतरकाचादिदोषरहितपुरुषान्तरागोचरगिरिगुहासु वसतस्तैमिरिकजनस्याज्ञातस्वतिमिरस्य सर्वस्य तिमिरदोषविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते; न तत्र बाधकप्रत्ययोऽस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतं द्विचन्द्रत्वमपि मिथ्यैव; दोषो ह्ययथार्थज्ञानहेतुः ; तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैवेति । भवन्ति चात्र प्रयोगाः—विवादाध्यासितं ब्रह्म मिथ्या, अविद्यावत उत्पन्नज्ञानविषयत्वात् प्रपञ्चवत् ; ब्रह्म मिथ्या, ज्ञानविषयत्वात् प्रपञ्चवत् ; ब्रह्म मिथ्या, असत्यहेतुजन्यज्ञानविषयत्वात् प्रपञ्चवदेव ।**

### श्रुतप्रकाशिका

ननु व्याहतमिदं—यदबाधितस्याप्यपारमार्थ्यनिश्चय इति ; अपरमार्थत्वेन निश्चितत्वं हि बाधितत्वमित्यत्राह—**एतदुक्तमिति** । **अज्ञातस्वतिमिरस्येति** पदं क्वचित् दृश्यते ; दोषज्ञाननिबन्धनपरोक्षबाधकज्ञानोदयव्युदासः प्रयोजनम् । ज्ञातस्वतिमिरस्येति तु पाठो लेखकस्खलनकृतः । स हि पुरुषान्तरागोचरत्वोक्तिविरुद्धः । बाधकाभावे कथं मिथ्यात्वमित्यत्राह—**दोषो हीति** । भ्रान्तिसमानाश्रयबाधकज्ञानाभावेऽपि पुरुषान्तरज्ञानेन मिथ्यात्वनिश्चयो न व्याहत इत्यर्थः । तिरश्चां यावज्जीवं बाधोदयाभावेऽपि देहात्मधीर्मिथ्यार्थविषया, तस्याः संसर्गरूपदोषमूलत्वात् । बाह्यभ्रमेषु स्पष्टोदाहरणस्य विवक्षित-

त्वादेव तदनुक्तिः । ननु तिरश्चां देहात्मभ्रमो नास्माकं प्रत्यक्षः, कार्यानवगमात्; भ्रमकारणदोषोऽपि दुरवगमः, तत्कथं दोषमूलत्वसंभावनाज्ञानमात्रेण मिथ्यात्वनिश्चयः? उच्यते—अस्मदादेः शास्त्रश्रवणात्पूर्वं देहात्मभ्रमदर्शनात् तेषां च शास्त्राधिकाराभावाद्देहात्मभ्रमस्तन्मूलदेहसंसर्गरूपदोषवत्त्वं चानुमीयते । दोषमूलत्वनिश्चयान्मिथ्यात्वनिश्चयः । एवं तैमिरिकजनस्य तिमिरान्वये आप्तवाक्यादिकमन्वेष्टव्यम् । ततो मिथ्यात्वनिश्चयः । एवं सपक्षे शिक्षितमर्थं दार्ष्टान्तिके निगमयति—**तथेति** । ज्ञानमिथ्यात्वं परमताभ्युपगमादुक्तम् । पाश्चात्यबाधादर्शनमुत्तरत्र निरसिष्यते । शास्त्रस्याविद्यामूलत्वाभ्युपगमेऽनिष्टं प्रसञ्जयति—**भवन्ति चेत्यादिना** । व्याप्तिप्रदर्शनवचनत्वात्प्रयोगा इत्युक्तम् । प्रतिज्ञादृष्टान्तहेतुरूपेण कथनमनिष्टप्रसङ्गः एवमपि न्याय्य इति ज्ञापनार्थम् । ज्ञानविषयत्वमात्रमेको हेतुः । एको दुष्टपुरुषज्ञानविषयत्वम्; एकोमिथ्याभूतसामग्रीजन्यज्ञानविषयत्वमिति भिदा । पूर्वं सपक्षीभूत एवार्थोऽत्र सपक्ष इत्येवकारार्थः । नन्वसत्यहेतुजन्यधीविषयत्वमन्यतरासिद्धम्; प्रपञ्चवदिति दृष्टान्तश्च साध्यविकलः; कथमेवं प्रसङ्गः? उच्यते—ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते । इतिवत् प्रसञ्जकप्रसञ्जनीयधर्मव्याप्तिं परमतेनाभ्युपगम्य दूषणमुक्तमिति न विरोधः ।

## भावप्रकाशिका

**लेखकस्खलनकृत इति**; अत्र केचित्—तदभावावगाहिप्रत्यक्षादिज्ञानाबाधितस्यापि दोषजन्यज्ञानविषयत्वैकशरणा अपरमार्थत्वप्रतीतिर्भवतीत्यस्यार्थस्य प्राक् प्रस्तुतत्वात् तस्यैवात्रापि प्रतिपिपादयिषिततया ज्ञातस्वतिमिरस्य तैमिरिकजनस्य चन्द्रद्वित्वे नास्तीत्येवं बाधकप्रमाणानवतारेऽपि स्वदोषप्रतिसंधानमात्रेण चन्द्रद्वित्वं दोषजन्यज्ञानविषयत्वान्मिथ्याभूतमिति मिथ्याभूतप्रतिपत्तेस्तेषामेव दर्शनात् निर्विशेषब्रह्मण्यपि नास्तितताग्राहकस्य परोक्षस्यापरोक्षस्य वा प्रमाणस्य कस्यापि जनस्याप्रवृत्तावपि दोषजन्यज्ञानविषयत्वेनैव ब्रह्ममिथ्यात्वं ज्ञास्यत इत्यर्थः, परत्वात्, पुरुषान्तरागोचरत्वोक्तेश्च, उपदेशादिलक्षणपरोक्षरूपाभावग्राहिप्रमाणानुदयप्रतिपादनपरत्वेन साफल्याच्च, तैमिरिकजनस्य तिमिरान्वये आप्तवाक्यादिकमन्वेष्टव्यमिति क्लेशस्याप्यभावाच्च । अत एव **पुरुषान्तरज्ञानेन मिथ्यात्वनिश्चय** इत्युत्तरग्रन्थोऽपि न युक्तः । पुरुषान्तरज्ञानेन बाधोदये बाधकज्ञानेनैव मिथ्यात्वनिश्चय आपन्न इति बाधकज्ञानशून्ये कथमिव मिथ्यात्वप्रत्यय उपपादितः स्यात् । यदि पुरुषान्तराणां

प्रकारान्तरेण बाधकज्ञानानुदयेऽपि दोषजन्यज्ञानविषयत्वैकशरणमिथ्यात्वप्रतीतिः, तर्हि ज्ञातस्वतिमिराणामेव तैमिरिकजनानां दोषजन्यज्ञानविषयत्वेन मिथ्यात्वप्रतीतिसंभवात् पुरुषान्तरोपन्यासो व्यर्थः। अतो **ज्ञातस्वतिमिरस्येति** पाठमाद्रियन्ते। ननु **स्वविषयेण ब्रह्मणा सह मिथ्यैवेति** भाष्यमयुक्तम्, दोषजन्यज्ञानविषयस्यैव मिथ्यात्वस्यापादनार्हत्वाद्दोषजन्यज्ञानस्वरूपस्य मिथ्यात्वाभावादित्याशङ्क्याह— **परमताभ्युपगमादुक्तमिति**। चन्द्रद्वित्वज्ञानस्य विषयेण सह मिथ्यात्वमित्यभ्युपगमादिहापि ज्ञानविषययोर्द्वयोरपि मिथ्यात्वमापाद्यत इति भावः। ननु परमते चन्द्रैकत्वज्ञानमपि मिथ्यैवेति विशिष्य कथं द्विचन्द्रज्ञानस्य दोषजन्यतया मिथ्यात्वमुच्यते? न च चन्द्रैकत्वज्ञानं व्यावहारिकं, द्वित्वज्ञानं तु न तथेति वाच्यम्, ब्रह्मप्रामाण्याबाध्यत्वेन द्वयोरप्येकरूपत्वादिति चेत्—न; इदमंशावच्छिन्नचैतन्यस्थाऽविद्या रजताभासाकारेण विवर्तते। इदमाकारवृत्त्यवच्छिन्नचैतन्यस्थाविद्या रजतज्ञानाभासाकारेण विवर्तत इत्युपगमेन रजतज्ञानस्याप्याभासत्वप्रदर्शनात्। प्रातिभासिकत्वेन द्विचन्द्रज्ञानस्य चन्द्रैकत्वज्ञानविलक्षणत्वात् आगन्तुकदोषजन्यत्वाच्चेति द्रष्टव्यम्। अनुमान एव प्रयोगशब्दौचित्यात् कथं तर्के प्रयोगशब्द इत्याशङ्क्याह—**व्याप्तिप्रदर्शनवचनत्वादिति। अन्यतरासिद्धमिति**; मन्मते अप्रसिद्धमित्यर्थः। ततश्चापादकान्यतरासिद्धिर्न दोष इति दूषणमल्पकं वेदितव्यम्। केचित्तु—तर्कत्वं विस्मृत्यासिद्धिदूषणोद्भावनम्; अत एव तर्कत्वावलम्बनेनैव परिहरिष्यत इति वदन्ति।

## श्रुतप्रदीपिका

बाधो न चेत् कथं दोषमूलत्वम्? अन्यतरेणापारमार्थ्यनिश्चयः कुत्रेत्याह—**एतदिति**। यदि न बाधः कथं मिथ्यात्वमित्यत्राह—**दोषो हीति**। उक्तं दार्ष्टान्तिकेऽतिदिशति—**तथेति**। धीमिथ्यात्वं परमतानुसारात्। व्याप्तिमूलत्वात् **प्रयोगा** इत्युक्तिः। प्रसङ्गतर्का एते। यूपादित्यैक्यवाक्यस्य विधिशेषत्वात् अमानत्वोक्तिरपसिद्धान्तः। प्रत्यक्षबाधोऽपि तात्पर्याभावादन्तर्गतः। अपूर्वत्वं हि साधकबाधकागोचरत्वम्। अतो नाध्यक्षाच्छास्त्रं बलवत्।

## तत्त्वटीका

अनुत्पन्नबाधकज्ञानस्यानवगतकारणदोषस्य कस्यचित् स्वज्ञाने कथं मिथ्यात्वसिद्धिरित्यत्राह— **एतदुक्तमिति**। संभावनया कल्पितेनापि परसंमन्तव्येन निदर्शनेन बोधयति—

**यथेति** । बाधानुदयार्थं **सकलेतरे**त्यादिकमुपात्तम् ; **अविशिष्टं जायत** इति च । अविदितदोषस्य कथमप्रामाण्यसिद्धिरित्यत्राह—**दोष इति** । अप्रामाण्यस्वरूपस्य दोषस्वरूपं हेतुः, तद्बोधस्य च तद्बोध इति विभागोऽभिप्रेतः । एवं भ्राम्यतो दोषधीबाधयोरभावेऽपि तद्बुद्धेर्भ्रमत्वादिकं परीक्षकस्थाप्यं पक्षे योजयति—**तथेति** ।

त्वदुक्तदोषसद्भावादप्रामाण्यसमुद्भवः ।
तज्ज्ञप्तेरप्रमाणत्वज्ञप्तिरप्यत्र सिद्ध्यति ॥ ५१९ ॥

ऐन्द्रियकबोधावबोधमभिप्रेत्य **बाधकज्ञानरहितमपी**त्युक्तम् । तद्व्याप्तिप्रसङ्गपरान् प्रयोगानाह—**भवन्तीति** । सगुणब्रह्ममिथ्यात्वस्य परसंमतेस्तद्व्यवच्छेदाय **विवादाध्यासितमिति** । यद्यप्यत्र परेष्टव्याप्त्या ज्ञानविषयत्वे मिथ्यात्वं स्यादित्येक एव प्रयोगः साधीयान्, तथापि प्रथमतृतीयौ सविशेषणप्रयोगौ प्रसङ्गहेतोः साधकत्वव्यक्त्यर्थौ । यद्वा, यथा प्रपञ्चस्य मिथ्यात्वं ज्ञानविषयत्वमात्रेण तद्विशेषविषयत्वेन वा त्वया साध्यते, तथैव ब्रह्मणोऽपि साधयित्वा माध्यमिकयूथमध्यमध्यास्स्व ; ततश्चास्मत्प्रयोगानिमान्मत्वा आत्माश्रयासिद्धिविशेषणवैयर्थ्यव्याप्तिभङ्गादिदोषान् मोज्जीघट इति भावः । अथवा त्वत्सयूथ्यस्य तुर्यबौद्धस्य प्रयोगास्त्वया दुर्वाराः स्युरित्याशयः ।

### श्रीभाष्यम्

न च वाच्यं—स्वाप्नस्य हस्त्यादिविज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववदविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावो न विरुद्ध इति ; स्वाप्नज्ञानस्यासत्यत्वाभावात् । तत्र हि विषयाणामेव मिथ्यात्वम् ; तेषामेव हि बाधो दृश्यते, न ज्ञानस्य । न हि 'मया स्वप्नवेलायामनुभूतं ज्ञानमपि न विद्यते' इति कस्यचिदपि प्रत्ययो जायते । 'दर्शनं तु विद्यते, अर्था न सन्ति' इति हि बाधकप्रत्ययः । मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः, तत्रापि ज्ञानस्याबाधितत्वात् । विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिवि-

**ज्ञानं सत्यमेव भयादिहेतुः। सत्यैवादृष्टेऽपि स्वात्मनि सर्पसंनिधानात् दष्टबुद्धिः। सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता। वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः। एषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते। हस्त्यादीनामभावे कथं तद्बुद्धयः सत्या भवन्तीति चेत्—नैतत्; बुद्धीनां सालम्बनत्वमात्रनियमात्।**

### श्रुतप्रकाशिका

नासत्यहेतुजन्यज्ञानविषयत्वादसत्यत्वं ब्रह्मणः; असत्यादपि सत्यप्रतिपत्तिर्दृश्यत इति शङ्कामनूद्य परिहरति—**न चेत्यादिना**। किमसत्यस्य सत्योत्पत्तिहेतुत्वानुपपत्तिः? उत तज्ज्ञप्तिहेतुत्वानुपपत्तिरिति विकल्पमभिप्रेत्य, उत्पत्तिहेतुत्वे ज्ञप्तिहेतुत्वे चोदाहरणानि दर्शितानि। तत्र स्वाप्नविषयाणां सत्यत्वेऽभिमतेऽपि विषयासत्यत्वमभ्युपगम्य परिहरति—**स्वाप्नेति**। ज्ञानस्य सत्यत्वमुपपादयति—**तत्र हीति**। अवधारणं कथमित्यत्राह—**तेषामेवेति**। ज्ञानस्याबाधं दर्शयति—**न हीति**। कथं जायत इत्यत्राह—**दर्शनं त्विति**। अन्यविषयो बाधो नान्यत्र संचारयितुं युक्त इत्यर्थः। अत्रानेकोदाहरणप्रदर्शनं तत्तज्ज्ञानसामग्रीविशेषाणां सत्यत्वज्ञापनार्थम्। तच्च ज्ञानसत्यत्वनिर्वहणार्थम्। स्वप्नकारणं पूर्वानुभवसंस्कारः सत्यः। प्रसिद्धत्वात्तदनुक्तिः। **मायाविन इति**; अत्र **मन्त्रौषधादिप्रभवमि**त्यनेन कारणसत्यत्वमुक्तम्। **मायामयम्**; मिथ्याविषयमित्यर्थः; विचित्रविषयं वा। **विषयेत्यादि**; विषयदोषः सादृश्यादिः, इन्द्रियदोषः काचादिः। आदिशब्देन देशगतदूरत्वादिदोष उच्यते। दोषश्च सत्यः। **सत्यैवेति**; सर्पसंनिधानं कारणं सत्यम्। दष्टबुद्धिश्च सत्या। शङ्काविषबुद्धावपि सामग्री सत्या। निर्विषोरगदंशनं वा, अन्धकारेऽश्मलोष्टादिनिपीडनं वा सत्यं हि भवति। **वस्त्विति**; जलादि सत्यम् तत्कृतचाक्षुषतेजःप्रतिहतिश्च सत्या। संवेदनानां सत्यत्वे निश्चिते ह्युक्तोदाहरणेषु सत्यात्सत्यप्रतिपत्तिरित्यत्राह—**एषामिति**। उत्पत्तिमत्त्वमर्थक्रियाकारित्वं च द्वयमपि प्रत्येकं सत्यत्वसाधकम्। न हि शुक्तौ रजतमुत्पत्तिमत्; न च कार्यकरम्। अथ ज्ञानसत्यत्वं विषयसत्यताव्याप्तमिति तन्निवृत्त्या ज्ञानसत्यत्वनिवृत्तिरिति शङ्कते—

**हस्त्यादीनामिति**। **अभावे**; प्रतिपन्नोपाधौ तथात्वाभावे। ज्ञानसत्यत्वं सालम्बनत्व-मात्रव्याप्तम्, अबाधितत्वादिति परिहरति—**नैतदिति**। सालम्बनत्वमात्रशब्देन सत्या-लम्बनत्वव्यावृत्तिः।

### भावप्रकाशिका

भाष्ये **सत्यैवादष्टेऽपीति**; पूर्वस्मात् भयादिहेतुरित्यनुषज्यत इति द्रष्टव्यम्। भाष्ये **वस्तुभूत एव जलादाविति**; **वस्तुभूत** इति मुखादिप्रतिभासविशेषणम्, न जलादिविशेषणम्; प्रतिभासमानत्वमेव विषयत्वमित्यर्थः। प्रतिभासमानत्वमेवालम्बनत्व-व्यवहारेऽपेक्षितमिति भाष्यार्थ इति भावः।

### श्रुतप्रदीपिका

अथासत्यात् सत्यप्रतिसंधिमाशङ्क्याह—**न चेति**। असत्यस्य सत्योत्पत्तिहेतुत्वं ज्ञप्तिहेतुत्वं वा निरस्यत इत्यभिप्रायेणोत्पत्त्युदाहरणम्। स्वमते सत्यात् सत्यसिद्धिः; परमते त्वसत्यादसत्यसिद्धिः। अतो नासत्यात् सत्यधीः। विषयमिथ्यात्वोक्तिः परमतानु-सारात्। ज्ञानाबाधं दर्शयति—**न हीति**। ज्ञानमात्रेऽतिप्रसङ्गात् तद्विशेषस्य हेतुत्वे विषय स्योपलक्षणत्वे ज्ञानावृत्तितयावभासहेतुत्वं विशेषणत्वे शुभाशुभप्रतिपत्तिहेतुत्वमिति। असत्य-स्यापि हेतुत्वे धियां तद्व्यवहारानुगुण्यधर्मैः स्वतो व्यावृत्तत्वात् सामग्र्यवच्छिन्नत्वाद्वा यदा शुभाशुभधीस्तदा सामग्री जायते; यदा न, न तदा शुभाशुभादिधीरिति धियां विषयानपेक्षः सामग्रीभेद एवावच्छेदक इति भेदज्ञापनाय बहूदाहरणोपन्यासः। **मायामयं** मिथ्याविषयः। संस्कारमन्त्रौषधसादृश्यसर्पसंनिधिनिर्विषोरगपीडनचाक्षुषतेजःप्रतिफलनानि तत्कालज्ञाना-निवर्त्यानि। सत्यत्वमुपपादयति—**एषामिति**। व्यापकनिवृत्त्या व्याप्यनिवृत्तिं शङ्कते—**हस्त्यादीनामिति**। परिहरति—**नैतदिति**। मात्रचा विभ्रमानत्वव्यावृत्तिः।

### तत्त्वटीका

एतावता तूष्णींभावे प्राप्तेऽपि प्रत्यक्षात् शास्त्रप्राबल्यमसत्यात्सत्यसिद्धिनिदर्शनैः सिषाधयिषन्तं प्रत्याह—**न चेति**। दृष्टान्तं दूषयति—**स्वाप्नज्ञानस्येति**। अनेन दोषरूपसत्यहेतुजन्यत्वमपि सूच्यते। तर्हि तत्कथं मिथ्याज्ञानमित्यत्राह—**तत्रेति**। ज्ञाने मिथ्यात्वोक्तिर्लाक्षणिकीति भावः। अत्रापि सन्ध्याधिकरणे स्वाप्नप्रपञ्चसत्यत्वे स्थापयिष्य-माणेऽपि परमतान्वारोहेणान्यथाख्यातिपक्षेण विषयबाधोक्तिः। ननु स्वप्नभुक्तिवत्कर्ममि-

थ्यात्वे सिद्धे ज्ञानक्रियापि मिथ्यैव स्यात्; नेत्याह—**तेषामिति**। अन्ततो यथादर्शनं सर्वत्र व्यवस्थेत्याशयः। अत्र विषयविषयिणोर्बाधाबाधौ विवृणोति—**न हीति**। सर्वत्र...

ज्ञानस्य लिङ्ग(ङ्गा)भावेऽपि विषयोऽत्र न बोधकृत्।
अतीतागामिविषयैर्ज्ञानैरप्यनुमोदयात् ॥ ५२० ॥

एवं स्वाप्नादिभिरेवासत्यैर्लिङ्गैरसत्यात्सत्योत्पत्तिरपि दृष्टा, किमुत ज्ञप्तिरिति मन्यमानस्यान्यदप्युदाहरणमन्यथयति–**मायेति। मायामयम्**; आश्चर्यभूतं मिथ्यार्थगोचरमिति यावत्।

नासत्यः कस्यचिद्धेतुर्न तरां ज्ञप्तिकारणम्।
नतमां सत्यधीहेतुरित्युत्पत्तिरुदाहृता ॥ ५२१ ॥

परप्रलापैरीदृग्भिर्मा भूद्बालप्रतारणम्।
इत्यभिन्नसमाधानबहूदाहृतिखण्डनम् ॥ ५२२ ॥

सत्यहेतूद्भवःसत्यो धीहेतुस्तत्र तत्र नः।
हेतुरित्यपि च ज्ञप्त्यै बहुभ्रान्तिनिवारणम् ॥ ५२३ ॥

यद्यपि धीमात्रस्य कार्यविशेषहेतुत्वेऽतिप्रसङ्गः, तथापि विशेषणैरुपलक्षणैर्वा मिथ्याविषयैरवच्छेदे तु यथार्हमसत्यात्सत्योत्पत्तिज्ञप्ती दुस्त्यजे; अथाप्यपरोक्षसामग्रीशक्तिसिद्धैः स्वभावविशेषैरेव भयविस्मयादिप्रतिनियतव्यवहारकार्यसिद्धेः स्वप्रकाशवादे वादान्तरे च विषयविषयिणोर्युगपदेवप्रकाशः सिध्यन् प्रत्ययान्तरेषु न विषयायत्तः। ईश्वरादीनां बुद्धिषु च व्यवहारानुगुण्यमनुपाधिकम्। क्षेत्रिणां तु तत्तद्विषयविशेषोल्लेखस्तत्तत्कर्मोपनीतहेतुभेदायत्तः प्रागेव स्थापितः।

अतो नः सत्यधीः सत्यात् तवासत्यादसत्यधीः।
सत्यादसत्यधीर्वेति त्वसत्यात्सत्यधीर्न च ॥ ५२४ ॥

व्यावहारिकसत्यस्य त्वसत्यात् सिद्धिरित्यसत्।
बुद्धीनामयथार्थत्वे व्यावहारिकसत्यता ॥ ५२५ ॥

असत्यात् सत्यबुद्धिश्च यथादृष्टि यथेष्यते।
तथैव ब्रह्मणोऽपि स्यात् सत्यत्वं व्यावहारिकम् ॥ ५२६ ॥

अत्र संस्कारमन्त्रौषधादिविशेषैः सत्याः स्वप्नादिधियः सिद्धाः। ताभिश्च सत्याभिरेव तत्तत्सत्यसिद्धिर्दर्शिता। **दष्टबुद्धिरित्यत्रापि** मरणहेतुभूतेति योज्यम्। शङ्काविषो-

दाहरणं तु निर्विषसर्पदष्टादौ च्छिन्नकण्टकवेधादौ च भाव्यम् । जलादिर्मुखादिप्रतिभासहेतुरित्यस्य प्रागुक्तत्वादिह नोक्तिः । पूर्वं बाधकाभावाद् बुद्धीनां सत्यत्वं साधितम् ; हेत्वन्तरतोऽपि तदाह—**एषामिति** । व्यावहारिकवादिनापि बुद्धीनां कारणान्वयव्यतिरेकाभ्यामुत्पत्तिमत्त्वम् ; कार्याणां तदन्वयव्यतिरेकार्थक्रियाकारित्वं च दुरपह्नवम् ; न चेदुभयं रज्जुसर्पादौ दृष्टमिति भावः । गत्यभावात् स्वमतं प्रस्मृत्य बुद्धीनां सत्यालम्बनत्वं व्यापकं मन्वानस्तन्निवृत्त्या तन्निवृत्तिं चोदयति—**हस्त्यादीनामिति** । आशामोदकभक्षणन्यायेन वा । विषयमिथ्यात्वात् विषयिमिथ्यात्वं साधयत एव धियां सत्यालम्बनत्वनियमः प्रमाणतर्कविरुद्ध इत्यभिप्रायेण प्रत्याह—**नैतदिति** । तद्व्यनक्ति—**बुद्धीनामिति** । मात्रचा विषयसत्यत्वमनियतमिति व्यज्यते ।

### श्रीभाष्यम्

**अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितम् । प्रतिभासमानता चास्त्येव, दोषवशात् । स तु बाधितोऽसत्य इत्यवसीयते । अबाधिता हि बुद्धिः सत्यैवेत्युक्तम् ।**

### श्रुतप्रकाशिका

मिथ्याभूतस्यालम्बनत्वं कथमित्यत्राह—**अर्थस्येति** । आलम्बनं विषयः । **प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितमिति** ; प्रतिभासमानत्वमेव विषयत्वमित्यर्थः । अविद्यमानस्याप्यतीतानागतादेः प्रतिभासमानस्यालम्बनत्वदर्शनाद्विद्यमानस्याप्यप्रतिभासमानस्य तदभावाच्चेति भावः । पक्षे प्रतिभासमानत्वमप्याह—**प्रतिभासेति** । **प्रतिभासमानता** ; संविदपेक्षया प्रतिसंबन्धित्वम् । अविद्यमानस्य विद्यमानतया भासनात्तेन रूपेणासत्यता । तथा साक्षादवभासमानो विषयोऽपि ज्ञानहेतुः स्यात्, संप्रतिपन्नविद्यमानविषयवत् विद्यमानतया भासमानत्वाविशेषात् । तथा सत्यसत्यात्सत्योत्पत्तिरित्यत्राह—**दोषवशादिति** । अविद्यमानस्य विद्यमानतया भासनहेतुर्दोष एव ; न त्वविद्यमानो विषयः । अविद्यमानो विषयो न ज्ञानस्य हेतुतयापेक्षितः, केवलं विषयतया । विद्यमानस्तु तथात्वेन भासमानो विषयतया हेतुतया चापेक्षितः । अतो वस्तुतो विद्यमानत्वमेव विषयस्य ज्ञानहेतुत्वे उपाधिः । नियतपूर्वकालवर्तिनो हि हेतुत्वं दृष्टम् । तस्मादविद्यमानस्य हेतुत्वायोगाद्दोष एव हेतुरिति

नासत्यात्सत्योत्पत्तिरित्यर्थः। प्रतिभासमानत्वे द्वयोरप्यविशिष्टे कथमन्यतरस्यासत्यत्वनिश्चय इत्यत्राह—**स त्विति**। बुद्धिरप्यसत्या किं न स्यादित्यत्राह—**अबाधितेति**। विषयासद्भावेन ज्ञानस्यासत्यताकथनं कालात्ययापदिष्टमित्यर्थः। ननु स्वाप्नादिविषयज्ञाने किं ज्ञानमात्रं शुभाशुभप्रतिपत्तिहेतुः? उत ज्ञानविशेषः? ज्ञानमात्रपक्षेऽतिप्रसङ्गः। ज्ञानविशेषश्चेत्, कस्तस्यावच्छेदकः? विषयश्चेत् किं विषय उपलक्षणतयावच्छेदकः? उत विशेषणतयावच्छेदकः? यदि विशेषणतया—विशेष्येण सह कार्यान्वयि हि विशेषणम्—अतो हस्त्यादेरपि शुभाशुभप्रतिपत्तिहेतुत्वादसत्यात्सत्यप्रतिपत्तिः। यद्युपलक्षणतया—उपलक्ष्यबहिर्भूत उपलक्ष्यप्रतिपत्त्युपायो ह्युपलक्षणम्—अतो विषयस्य ज्ञानप्रतिपत्तिहेतुत्वादसत्यात्सत्यप्रतिपत्तिः। ज्ञानानां तत्तद्व्यवहारानुगुण्यलक्षणस्वभावविशेषैर्व्यावृत्तत्वान्नातिप्रसङ्ग इति न च वाच्यत्, व्यवहारानुगुण्यमात्रस्य व्यावर्तकत्वेऽतिप्रसङ्गात्। व्यवहारविशेषानुगुण्यस्य व्यावर्तकत्वे तद्विशेषश्च तत्संग्राहकविषयाधीन इति व्यवहारावच्छेदकतयानृतस्य सत्यहेतुत्वमिति। अत्रोच्यते—व्यावृत्तमेव ज्ञानं शुभाशुभाद्यनुमापकम्। व्यावृत्तिश्च स्वालम्बनेन। अविद्यमानस्याप्यालम्बनत्वं दोषवशादित्युक्तम्। अन्यथाख्यातिपक्षेऽप्यालम्बनसत्यता सर्वज्ञानानामिष्यत एव, विशेषणविशेष्यतत्संसर्गाणां क्वचित्सत्यत्वात्। विशेषणविशेष्ययोस्तथात्वनिर्वाहकः संसर्गः स्वस्य तदीयत्वे संसर्गान्तरनिरपेक्षः। स तु संसर्गः पुरोवर्तिनि भ्रमाधिष्ठाने प्रतीयमानः पुरोवर्त्यपेक्षया स्वयं स्वस्य संसर्गरूपत्वनिर्वहणासामर्थ्यात् स पुरोवर्तिनि नास्तीति पुरोवर्त्यपेक्षया संसर्गोऽपरमार्थः, न तु स्वरूपेण। आलम्बनत्वे च संनिहितत्वरूपमनपेक्षितम्, असंनिहितस्याप्यालम्बनत्वदर्शनात्। अतः सत्येन रूपेणालम्बनत्वमिति हस्त्यारोहणादिज्ञानान्यपि सत्यभूतहस्त्याद्यालम्बनावच्छिन्नानि परमार्थभूतया स्वप्नावस्थयाऽवच्छिन्नत्वाज्जाग्रदवस्थाज्ञानविलक्षणानि शुभाशुभप्रतिपत्तिनिमित्तानि। अतो नातिप्रसङ्गः। नासत्यात्सत्यप्रतिपत्तिश्च। न च प्रतिबिम्बाद्बिम्बानुमितावसत्यात्सत्यप्रतिपत्तिः, प्रतिबिम्बप्रतिभासस्य सत्यस्यैवानुमापकत्वात्। परमार्थतस्तु तत्र नानुमापकानुमेयविभागः, दर्पणादिप्रतिहतैश्चाक्षुषतेजोभिर्बिम्बस्यैव दर्पणस्थतया गृह्यमाणत्वात्। अतः क्वचिदर्थात्प्रतिपत्तिः; क्वचित्तत्प्रतिभासात्तत्तदर्थप्रतिपत्तिरिति नासत्यस्य लिङ्गत्वम्। किंच—असत्यात्सत्यप्रतिपत्तिः किं भवत्पक्षेणोच्यते? उतास्मत्पक्षेण? न तावद्भवत्पक्षे सा सिध्यति; शुभाशुभयोरपि मिथ्यात्वेनासत्यादसत्यप्रति-

पत्तिरेव हि स्यात्। न चास्मत्पक्षे, यथार्थख्यात्यभ्युपगमात्सत्यादेव सत्यप्रतिपत्तेः। एषां स्वाप्नहस्त्यादिज्ञानादीनां शुभाशुभप्रतिपत्त्यादिहेतुभूतानां षण्णामुदाहरणज्ञानानां संस्कारादिसत्यसामग्रीकत्वं स्पष्टम्। ज्ञानानां सत्यत्वमुपपादितम्। अत उत्पत्तौ ज्ञप्तौ च हेतुसत्यत्वं सिद्धम्।

## भावप्रकाशिका

**तेन रूपेणासत्यतेति**; न तु प्रतिभासमानत्वरूपेणापीत्यर्थः। **तथा साक्षादवभासमान इति**; विद्यमानतया साक्षात्क्रियमाण इत्यर्थः। अतः परोक्षज्ञानस्थले व्यभिचार इति दोषो निराकृतः। **न ज्ञानस्य हेतुतयापेक्षित इति**; हेतुत्वं नास्ति, विषयत्वमस्ति; विद्यमानस्थले तु द्वयमप्यस्तीति वाक्यार्थः। **वस्तुतो विद्यमानत्वमेवेति**; प्रतिभासमानत्वरूपेण विद्यमानस्यापि वस्तुतो विद्यमानत्वं नास्तीति भावः। अयं भावः—केचन धर्मा धर्मिसत्तासापेक्षाः; केचन तन्निरपेक्षाः। तत्र च प्रतिभासमानत्वासत्त्वातीतत्वादयो धर्मास्तन्निरपेक्षाः। कारणत्वरूपित्वादयो धर्मास्तत्सापेक्षाः। तत्र धर्मिसत्तासापेक्षैर्धर्मैर्विशिष्टतयावस्थितिरेव वस्तुतो विद्यमानत्वमिति। **व्यावृत्तिश्च स्वालम्बनेनेति**; न च व्यावृत्तिजनकत्व आलम्बनस्यासत्यत्वादसत्यात् सत्यसिद्ध्यापत्तिरिति वाच्यम्, व्यावृत्तिधीजनकज्ञानविषयत्वरूपं तदीयतानियामकस्वरूपविशेषरूपं वा व्यावर्तकत्वं तत्र तदाऽविद्यमानस्याप्युपपद्यत इति भावः। **अन्यथाख्यातिपक्षेऽपीति**; नन्वविद्यमानानामेव दोषवशादालम्बनत्वं तत एव व्यावर्तकत्वं च संभवति, व्यावर्तकत्वस्य हेतुत्वरूपत्वाभावादिति समर्थनेनैव समीहितसिद्धेः किमेतन्निरूपणेनेति चेत्; सत्यम्; आलम्बनत्वमत्यन्तासतो न संभवतीति प्रासङ्गिकत्वादुपपाद्यत इति द्रष्टव्यम्। **क्वचिदर्थात्तत्प्रतिपत्तिरिति**; दर्पणप्रतिहतनायनरश्मिसंपृक्तादर्थादित्यर्थः। **क्वचित्प्रतिभासादिति**; स्वाप्नस्थल इति भावः।

## श्रुतप्रदीपिका

तस्य कियदपेक्षितमित्यत्राह—**अर्थस्येति**। अतीतादेर्विषयत्वदर्शनात् विद्यमानत्वेऽप्यभातस्य तदभावाच्चेत्यर्थः। इह चास्तीत्याह—**प्रतीति**। अविद्यमानस्य भानं कथम्? भातं चेत् हेतुत्वं च संप्रतिपन्नवत् स्यादित्यत्राह—**दोषेति**। असत्यस्य पूर्वभानाभावात् अधीहेतुत्वम्। भाति चेदर्थः सत्य इत्यत्राह—**स त्विति**। धीश्च तथा किं न स्यादित्यत्राह—**अबाधितेति**।

### तत्त्वटीका

अर्थाभावे कथमालम्बनत्वमित्यत्राह—**अर्थस्येति**। एवकारो विद्यमानस्यैवालम्बनत्वमिति व्यवच्छेदार्थः। खपुष्पस्येवालम्बनत्वमसतः कथमित्यत्राह—**प्रतिभासमानतेति**। अवधारणेन दुरपह्नवत्वं द्योत्यते।....एवालम्बनमर्थसत्यत्वं च न भासमानत्वे....त्यक्तेन्द्रियस्य......बन्ध......कारण......भावः। **दोषवशादिति**। वध......तर्हि कारणाविशेषवैशि......दित्यत्राह—**स त्विति**। **स** इत्यर्थपरामर्शः। मिथ्याविषयिणोऽपि मिथ्यात्वशङ्कां निरस्यति—**अबाधितेति**।

### श्रीभाष्यम्

रेखया वर्णप्रतिपत्तावपि नासत्यात् सत्यबुद्धिः; रेखायाः सत्यत्वात्। ननु—वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः, वर्णात्मता त्वसत्या; नैवम्; वर्णात्मताया असत्याया उपायत्वायोगात्। असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टम्, अनुपपन्नं च। अथ तस्यां वर्णबुद्धेरुपायत्वम्, एवं तर्ह्यसत्यात् सत्यबुद्धिर्न स्यात्; बुद्धेः सत्यत्वादेव। उपायोपेययोरेकत्वप्रसङ्गश्च, उभयोर्वर्णबुद्धित्वाविशेषात्। रेखाया अविद्यमानवर्णात्मनोपायत्वे चैकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात्सर्ववर्णप्रतिपत्तिः स्यात्। अथ पिण्डविशेषे देवदत्तादिशब्दसंकेतवच्चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसंकेतवशाद्रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति; हन्त! तर्हि सत्यादेव सत्यप्रतिपत्तिः, रेखायाः संकेतस्य च सत्यत्वात्। रेखागवयादपि सत्यगवयबुद्धिः सादृश्यनिबन्धना; सादृश्यं च सत्यमेव।

### श्रुतप्रकाशिका

अथ ज्ञानव्यतिरिक्तासत्यहेतुना सत्यप्रतिपत्तौ हेतुसत्यत्वमुपपाद्यते—**रेखयेत्यादिना**। हेतोरसत्यत्वं दर्शयंश्चोदयति—**नन्विति**। परिहरति—**नैवमिति**। वर्णात्मता किं सत्तया वर्णप्रतिपत्तेरुपायः, उत प्रमिततया? उत प्रतीततयेति विकल्पमभिप्रेत्याह—

**असत इति**। असत्यत्वात्सत्तयोपायत्वमनुपपन्नमित्यसत इति पदस्याभिप्रायः। **असतः**; सद्व्यतिरिक्तस्येत्यर्थः। असत्त्वादेव प्रमिततयोपायत्वं चानुपपन्नमिति निरुपाख्यशब्दाभिप्रायः। उपाख्या, प्रमितिः; तदविषयत्वं निरुपाख्यत्वम्। प्रतीतिविषयतयोपायत्वानुपपत्तिस्तु वक्ष्यते। सत्ताप्रमित्योरभावेऽपि वर्णात्मताया उपायत्वमस्तीति कल्प्यते चेत्, तदनुपपन्नम्, व्याप्तिविरोधात्। व्याप्त्यनुगुणं हि कल्पनं प्रवर्तत इत्यभिप्रायेणाह—**अनुपपन्नं चेति**। अथ भ्रान्तितः प्रतीताया वर्णात्मताया वर्णप्रतिपत्तिहेतुत्वपक्षेऽपि बुद्ध्यंशस्य हेतुत्वे परस्यानुपपत्तिं दर्शयितुमाह—**अथेति**। दूषयति—**एवं तर्हीति**। कुत इत्यत्राह—**बुद्धेरिति**। दूषणान्तरमाह—**उपायेति**। तदुपपादयति—**उभयोरिति**। बुद्ध्यंशस्य हेतुत्वे दूषणमुक्तम्; वर्णात्मतांशस्य हेतुत्वे सिंहावलोकितकेन दूषणमाह—**रेखाया इति**। **अविद्यमानवर्णात्मना**; अविद्यमानवर्णात्मत्वेनेत्यर्थः। अतिप्रसङ्गपरिहारार्थं शङ्कते—**अथेति**। तत्रापि स्वमतसिद्धिमाह—**हन्तेति**। तदुपपादयति—**रेखाया इति**। उदाहरणान्तरं परिहरति—**रेखागवयादपीति**।

**भावप्रकाशिका**

**असतो निरुपाख्यस्येत्य**नयोः पौनरुक्त्यं परिहरन् पक्षद्वयदूषणपरतया व्याचष्टे—**असतः सद्व्यतिरिक्तस्येत्यर्थ इत्यादिना**। भाष्ये **उपायोपेययोरित्यादि**; यद्यपि "अकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः" इति आरम्भणाधिकरणशांकरभाष्यं व्याकुर्वता वाचस्पतिनोक्तम्—"यद्यपि रेखास्वरूपं सत्यं, तथापि तत् यथासंकेतमसत्यम्; न हि संकेतयितारः संकेतयन्ति 'ईदृशेन रेखाभेदेनायं वर्णः प्रत्येतव्यः' इति, अपि तु ईदृशो रेखाभेद एवाकार इति; ततश्चासमीचीनात्संकेतात्समीचीनवर्णावगतिः" इत्यनृताक्षरप्रतिपत्तेः सत्याक्षरप्रतिपत्तिहेतुत्वकथनान्न साध्यसाधनयोरभेदः, तथापि पूर्वदूषण एव तात्पर्यम्। **सिंहावलोकितकेनेति**; ननु वर्णात्मना प्रतीता रेखेति तृतीयपक्ष एव बुद्ध्यंशहेतुत्वपक्षे दूषणमुक्तं, वर्णात्मतांशे दूषणमुच्यत इत्युपपत्तौ सिंहावलोकनं किमर्थमिति चेत्; अत्र केचित्—वर्णात्मतांशस्य प्रथमपक्षानुप्रविष्टत्वाभिप्रायेण सिंहावलोकनोक्तिरुपपन्नेति वदन्ति। केचित्तु—सिंहावलोकनेनेत्येतदंशविकल्पमुखेन ग्रन्थप्रवृत्तिमनभ्युपगच्छतामिदं व्याख्यानान्तरम्; अतो वाशब्दोऽध्याहर्तव्य इति मन्यन्ते। **अविद्यमानवर्णात्मनेत्य**त्र अविद्यमानत्वं वर्णात्मकत्वविशेषणं, वर्णस्य विद्यमानत्वेऽपि वर्णात्मताया अविद्यमानत्वमभिप्रेत्य

तद्विशेषणतया व्याचष्टे- **अविद्यमानवर्णात्मत्वेनेति**। **रेखागवयादपीति** भाष्यस्यायमर्थः– रेखायामारोपितेनासत्यगवयेन सत्यगवयप्रतिपत्तिरिति नाभ्युपगन्तव्यम्, रेखायां गवयारोपे प्रमाणाभावात्; अपि तु गवयसदृशरेखां प्रदर्श्य 'एतत्सदृशो गवयः' इति बोधयन्ति; तथैव प्रतिपद्यन्ते च; तच्च सादृश्यं सत्यमेवेति।

### श्रुतप्रदीपिका

अथ धीव्यतिरिक्तासत्यहेतुभिः सत्यसिद्धिं व्युदस्यति—**रेखयेति**। असत्यतां दर्शयंश्चोदयति—**नन्विति**। परिहरति—**नैवमिति**। सत्तया प्रमिततया च हेतुत्वायोगमाह—**असतो निरुपाख्यस्येति**। उपाख्या प्रमितिः। कृतिश्च व्याप्तिविरुद्धेत्याह–**अनुपपन्नमिति**; रेखायां वर्णधीर्वर्णप्रतीतिहेतुरिति पक्षे प्रतीत्यंशस्य हेतुत्वे दूषणमाह—**अथेति**। दूषणान्तरमाह—**उपायेति**। ऐक्यमुपपादयति—**उभयोरिति**। वर्णात्मताया उपायत्वे सिंहावलोकितकेन दूषणमाह—**रेखाया इति**। शङ्कते—**अथेति**। स्वमतसिद्धिमाह—**हन्तेति**।

### तत्त्वटीका

एवं सत्यसिद्धिहेतुतयोक्तानां धियामसत्यत्वमपास्तम्; अथासत्यात्सत्यसिद्ध्युदाहरणानि निरस्यन्ते। तत्र रेखानिदर्शने बह्वीर्विकल्पकोटीर्हृदि निधाय रेखाया वर्णमात्रत्वपक्षेऽनिष्टमाह—**रेखायेति**। रेखायामेव कार्योपयुक्तकल्पितरूपस्य सत्यस्य हेतुत्वम्; असत्यतया कल्पितस्य हेतुत्वं नेत्याह—**नैवमिति**। असत्या वर्णात्मता वर्णधीहेतुत्वेन दुःसाधेत्याह—**वर्णात्मताया इति**। दोषवशात्तस्याः प्रतीतत्ववदुपायत्वमपि किं न स्यादित्यत्राह—**असत इति**। रेखायां हि वर्णात्मता नास्ति।......करे च ग्रहम्। अतः संप्रतिपन्नतुच्छवदस्यापि हेतुत्वमयुक्तम्। किंच निरुपाख्यशब्देन प्रमाणशून्यत्वं विवक्षितम्; तेनासत्त्वे हेतूक्तिः। किंचासत्त्वादेव प्रख्याविषयत्वासंभवादुपाख्याविषयत्वमपि न स्यात्। ततस्तत्रोपायतोक्तिर्न क्रमेत। एतेन नियतपूर्वभावित्वरूपहेतुलक्षणाभावोऽपि दर्शितः।

"पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा॥"

इति खण्डनोक्तिस्तु खपुष्पस्यापि हेतुत्वप्रसङ्गान्निरस्ता। ख्यातितदभावादिवैषम्यं चात्र दुर्वचमिति भावः। **न दृष्टम्**; न प्रत्यक्षम्। **अनुपपन्नं च**; कल्पयितुमप्यशक्यमित्यर्थः।

रेखायां वर्णधीर्मिथ्याविषयत्वान्मिथ्यार्था ; सा हेतुरिति कोट्यन्तरमनुवक्ति—**अथेति**। तत्र दत्तोत्तरत्वमाह–**एवं तर्हीति**। एतेन वर्णधीविशिष्टरेखापक्षोऽपि निरस्तः। अधिकमपि दूषणमाह—**उपायेति**। ननु रेखायां वर्णधीरुपायः, पाठ्यवर्णधीःसाध्या, कथमनयोरैक्यम्? तत्राह—**उभयोरिति**। अयं भावः—अभ्यस्तलिपिदर्शनोद्बुद्धसंस्कारजनितवर्णस्मृतिपूर्विका हि रेखायां वर्णधीः; तथा च न साध्यमवशिष्यत इति। अथ रेखावर्णात्मतयोः सत्यानृतयोः संभेदात्सत्यवर्णधीसिद्धिरिति कोट्यन्तरस्य दत्तोत्तरत्वेऽपि दार्ढ्यायातिप्रसङ्गमाह—**रेखाया इति**। संकेतसहकृतरेखाहेतुत्वपक्षमनुवक्ति—**अथेति**। चक्षुर्ग्राह्यत्वादिकथनं रेखावर्णयोरैक्यभ्रमनिरासार्थम्। विशेषशब्दस्त्वतिप्रसङ्गनिवारकः। अत्रापि दत्तोत्तरत्वमाह—**हन्तेति**। एतेन संकेतमात्रपक्षोऽपि निरस्तः। रेखायामेव संकेतनिरपेक्षोदाहरणं दूषयति—**रेखागवयादीति**। **सादृश्यं चेति**; चकारेण रेखासत्यत्वं पूर्वोक्तमिति व्यज्यते। एवकारो जातिरूपं पदार्थान्तररूपं वा दृष्टं सादृश्यं दुरपह्नवमिति द्योतयति।

### श्रीभाष्यम्

**न चैकरूपस्य शब्दस्य नादविशेषेणार्थभेदबुद्धिहेतुत्वेऽप्यसत्यात् सत्यप्रतिपत्तिः, नानानादाभिव्यक्तस्यैकस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैः सह संबन्धग्रहणवशादर्थभेदबुद्ध्युत्पत्तिहेतुत्वात्। शब्दस्यैकरूपत्वमपि न साधीयः, गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात्। अतोऽसत्याच्छास्त्रात् सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा।**

### श्रुतप्रकाशिका

स्फोटवादावलम्बनेनोच्यमानमुदाहरणान्तरं परिहरति—**न चैकरूपस्येत्यादिना**। नादैः स्फोट्यत इति व्युत्पत्त्या स्फोट एकरूपः शब्दः। तदभिव्यञ्जकनादविशेषा बहवः। कत्वखत्वादिभेदो व्यञ्जकगतः शब्दे आरोपितोऽर्थविशेषप्रतिपत्तिहेतुः। तत्रासत्यात्सत्योत्पत्तिरित्यपि न युक्तमित्यर्थः। कुत इत्यत्राह—**नानानादेति**। कत्वखत्वादिविशेषान्वितत्तन्नादकृतोऽभिव्यक्तिविशेषः सत्यः। तद्विशिष्टः सत्यः शब्दोऽर्थप्रतिपत्तिहेतुरित्यर्थः। यद्यपि कत्वखत्वादिवैशिष्ट्यं शब्दस्यारोपितं, तथापि तज्ज्ञानं सत्यमेवार्थप्रतिपत्तिहेतुः। ज्ञानस्य च सत्यत्वेनैवालम्बनेन स्वाप्नज्ञानवद्व्यावृत्तिरनुसंधेया। कत्वाद्यालम्बनाभिव्यक्तिवि-

शिष्टरूपेण स्फोटस्यार्थप्रतिपत्तिहेतुत्वसंभवात्कत्वादिवैशिष्ट्यस्यासत्यस्यार्थस्य नार्थप्रतिपत्तावुपयोगः। एवं शब्दस्यैकरूपत्वमभ्युपगम्य परिहृतम्; अथ तदनभ्युपगमेन परिहरति— **शब्दस्यैकरूपत्वमपीति**। कुत इत्यत्राह— **गकारादेरिति**। एवकारेणैकरूपः शब्दो व्यावर्त्यते, न तु दुन्दुभिशब्दादिः। स त्वनभिव्यक्तविशेषाकारो गकारादिरेव। "अथ गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्षः" इति गकारादेरेव बोधकत्वं व्याचख्युः। ननु "तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता" इति शास्त्रवशादेकरूपं शब्दमात्रमभ्युपगन्तव्यम्; तत्कथं तत्प्रतिक्षेपः? नैवम्, तन्मात्रावस्थसूक्ष्मभूतकारणगुणानामिन्द्रियग्राह्यत्वायोगात्। पञ्चीकृतभूतगुणानामेव ह्यैन्द्रियकत्वम्। किंच दध्यवस्थायां दुग्धावस्थेव तन्मात्रावस्थाकाशगुणभूतं शब्दमात्रं स्थूलाकाशसृष्टेः पश्चान्न विद्यते। यथा च महाभूततृतीये तेजसि शुक्लकृष्णादिवर्णव्यतिरेकेण रूपमात्रं किंचिदस्ति; शुक्लत्वकृष्णत्वादयश्चाभिव्यञ्जकगता एकरूप आरोपिता इति च वक्तुमयुक्तम्—एवमिदानीमेकरूपशब्दस्य विद्यमानत्वं तत्राभिव्यञ्जकगतानां कत्वखत्वादीनामारोपितत्वं च सर्गप्रतिपादकशास्त्रानुसारिभिरभ्युपेतुमयुक्तम्। अत्रायमभिसंधिः— वर्णातिरिक्त एकरूपः शब्दः किं स्फुटप्रतिपन्नत्वादभ्युपगम्यते? उत कल्पनावशात्? न प्रथमः, गकारादिव्यतिरिक्तस्य कस्यचिदनुपलम्भात्। न द्वितीयः, कल्पकाभावादिति। ननु वर्णानां वाचकत्वानुपपत्तेः 'एकं पदम्' इत्यादिप्रत्ययस्य वर्णेष्वनुपपत्तेः भिन्नेषु वर्णेषु 'शब्दः शब्दः' इत्यनुवृत्तबुद्धिवशाच्च वर्णातिरिक्तपदस्फोटसिद्धिः; तत एव न्यायात्पदसंघातातिरिक्तवाक्यस्फोटसिद्धिश्चेत्यत्राह—**गकारादेरिति**। गकारादिवर्णानामेव समुदितानां वाचकत्वम्। 'एकं पदम्' 'एवं वाक्यम्' इति प्रत्ययश्च वर्णसमुदायविषयः। 'शब्दः शब्दः' इत्यनुवृत्तबुद्धिश्च श्रोत्रग्राह्यत्वोपाधिनिबन्धना। अतः कल्पकानामन्यथासिद्धत्वान्नैकरूपशब्दसिद्धिरित्यर्थः। ननु न कल्पकान्यथासिद्धिः; तथा हि—न तावदेकैकस्य वर्णस्य वाचकत्वम्; वर्णान्तरवैयर्थ्यात्, गकारमात्रेण गोगवयगजाद्यप्रतीतेश्च। नापि वर्णसमुदायो वाचकः, क्रमोच्चारितश्रुतानां वर्णानां यौगपद्याभावेन वृक्षादीनामिव समुदायभावानुपपत्तेः। न च पूर्वपूर्ववर्णश्रवणजनितसंस्कारसचिवोऽन्त्यवर्णो वाचक इति युक्तम्, वर्णानुभवजन्यसंस्काराणामनुभूतवर्णविषयस्मरणहेतुतयाऽननुभूतार्थान्तरप्रतीतिहेतुत्वाभावेनाकिंचित्करत्वात् तत्साचिव्यविरहितान्त्यवर्णस्य चार्थप्रत्याय-

कत्वायोगात् । तथा वर्णानां भिन्नत्वात् 'एकं पदम्' इति प्रत्ययश्च तदतिरिक्तार्थविषयो भवितुमर्हति । न च वनसेनादिप्रत्ययवत्समुदायविषयकत्वमेकप्रत्ययस्य युक्तम्, एक प्रदेशसंबन्धित्वादिवदेकीकारनिमित्तोपाध्यभावात् । एकस्मृत्यारूढत्वमुपाधिरिति चेत्—न; 'द्वे पदे' 'त्रीणि पदानि' 'बहूनि वाक्यानि' इत्यनेकेषामप्येकप्रत्ययारूढत्वदर्शनात् । न चैकार्थावच्छिन्नवर्णसमुदाय एकं पदम्, वर्णानां वाचकत्वानुपपत्तेरवैकार्थ्यप्रतिपादनाभावात् । किंच बहुषु वर्णेषु 'अयं शब्दोऽयं शब्दः' इत्यनुवृत्तः शब्दशब्दो वर्णातिरिक्तार्थविषयो युक्तः । घटकरकापवरकादिभेदेऽप्येकार्थविषयस्याकाशशब्दस्य हि घटकरकाद्यतिरिक्तार्थविषयत्वं दृष्टम् । न च श्रोत्रग्राह्यत्वोपाधिना शब्दशब्दानुवृत्तिरिति युक्तम्, श्रोत्रस्य श्रोत्रग्राह्यत्वायोगेन श्रोत्रग्राह्यताया अपि श्रोत्रेण ग्रहीतुमशक्यत्वात् । मानान्तरेण श्रोत्रग्राह्यताप्रतीतावविलम्बितशब्दसाक्षात्कारानुपपत्तिः । अतः कल्पकान्यथासिद्ध्यभावाद्वर्णातिरिक्तः शब्दः स्फोट इति ।

अत्रोच्यते—न तावद्वर्णानां वाचकत्वानुपपत्त्या स्फोटसिद्धिः, तेषां स्फोटाभिव्यञ्जकत्वेऽपि चोद्यपरिहारयोस्तुल्यत्वात् । लाघवन्यायेन वर्णानामेव वाचकत्वाश्रयणस्य न्याय्यत्वात्; तथा हि—न तावदेकैकवर्णः स्फोटव्यञ्जकः, द्वितीयवर्णवैयर्थ्यात्; गकारमात्रेण गवयादिपदस्फोटाभिव्यक्तिप्रसङ्गाच्च । नापि वर्णसमुदायो व्यञ्जकः, क्रमोच्चरितश्रुतानां वर्णानां यौगपद्याभावेन समुदायभावानुपपत्तेः । न च पूर्वपूर्ववर्णजनितसंस्कारसचिवोऽन्त्यवर्णो व्यञ्जकः, वर्णानुभवजन्यसंस्काराणामनुभूतवर्णस्मृतिमात्रहेतुतयाऽननुभूतस्फोटप्रतीतिहेतुत्वायोगेन तत्संस्कारानुपकृतस्यान्त्यवर्णस्य च तदभिव्यञ्जकत्वायोगात् । यदुच्येत—पदं तावत्प्रतीयते; अतस्तत्प्रतीत्यनुरूपं कारणं कल्प्यम्; क्रमभाविनामपि संस्काराणां युगपत्कार्यकरत्वं युक्तम्, क्रमदृष्टयोरपि घटयोः 'तौ घटौ' इति स्मरणदर्शनात् । अतो युगपद्भाविपूर्ववर्णस्मरणसचिवोऽन्त्यवर्णो वा युगपत्स्मर्यमाणसर्ववर्णसमुदायो वा स्फोटाभिव्यञ्जक इति । एवं तर्हि स्फोटाभिव्यञ्जकतयाभ्युपेतायाः सामग्र्या अर्थाभिव्यञ्जकत्वमास्थीयताम्, चोद्यपरिहारयोस्तुल्यत्वात्, अन्यथासिद्धस्यार्थान्तरकल्पकत्वायोगात, वर्णानामेव वाचकत्वसंभवे तदतिरिक्तकल्पनामनुपपत्तेः, लाघवन्यायस्य बलीयस्त्वाच्च । वर्णानां भिन्नत्वेऽपि युगपद्बुद्धिस्थैकविभक्त्यन्तानेकवर्णसमुदायविषयतया पदैकत्वबुद्धिरपि नार्थान्तरकल्पिका । न चार्थैकत्वात्पदैकत्वं पदैकत्वादर्थैकत्वमित्यन्योन्याश्रयः, एकविभक्त्यन्तवर्णसमुदायस्यैकपदत्वनिश्चयात्;

"सुप्तिङन्तं पदम्" इति हि पदनिष्कर्षः। तस्य चोक्ताभिप्रायत्वे सत्यव्याप्तिर्न स्यात्। एकव्युत्पत्तिसिद्धैकार्थप्रतीत्युपयुक्तवर्णसमुदायस्य वा पदत्वम्। बहुषु वर्णेषु 'अयं शब्दोऽयं शब्दः' इति प्रत्ययेऽपि श्रोत्रग्राह्यत्वोपाधिनिबन्धनत्वादन्यथासिद्ध इति नार्थान्तरसिद्धिः। न च श्रोत्रग्राह्यताया अपि श्रोत्रेण ग्रहणापेक्षा, यथा चाक्षुषाणां धवलिमनीलिमपीतिम्नां चाक्षुषत्वज्ञाने न चक्षुरपेक्षा। 'इदं चाक्षुषम्, इदमपि चाक्षुषम्' इति व्यवहारश्च चाक्षुषत्वज्ञाननिबन्धन एव। प्रमाणान्तरावगतचक्षुःश्रोत्राद्यन्वयव्यतिरेकानुविधायिज्ञानगोचरत्वेन चाक्षुषत्वश्रावणत्वादिज्ञानम्। न हि सहसैव 'शब्दोऽयम्' इति जानन्ति। प्रथमं गकारादिरूपेणैव शब्देऽवसिते व्युत्पन्नशब्दस्मरणपूर्वकमेव 'शब्दः' इत्यवगम्यते। अतः शब्देन स्मरणकृतविलम्बवच्छ्रोत्रानुमानविलम्बोऽप्यभ्यासपाटवकृताच्छैघ्र्यान्न विविच्यते। अतो वर्णसमुदाय एव पदं पदसमुदाय एव वाक्यमिति स्थितम्। असत्यात्सत्यप्रतिपत्तिनिराकरणमुपसंहरति—**अत इति**।

## भावप्रकाशिका

**कत्वखत्वादिभेद इति**; अत्रादिपदेनोदात्तत्वानुदात्तत्वमन्द्रत्वदीर्घत्वादयो गृह्यन्ते। **शब्द आरोपित इति**; स्फोटरूपशब्दे आरोपित इत्यर्थः। कत्वादिकमुदात्तत्वादिकं च सर्वं नादगतमेव, स्फोटनादोभयव्यतिरेकेण कत्वाद्याश्रया वर्णा एव न सन्तीति हि स्फोटवादिनां प्रक्रिया। वर्णनित्यत्ववादिनां तु कत्वाद्याश्रयवर्णा नित्याः; तारत्वदीर्घत्वादिकं तु नादगतमिति विवेकः। **अभिव्यक्तिविशेषः सत्य इति; अभिव्यक्तिः**; ज्ञानम्। अत एवोत्तरत्र **कत्वाद्यालम्बनाभिव्यक्तिविशिष्टरूपेणेति** वक्ष्यति। ननु दुन्दुभ्यादिः कुतो न व्यावर्त्यत इत्यत्राह—**स त्वनभिव्यक्तेति**। तस्यापि गकारादित्वेन तद्भिन्नत्वात्, एवकारेण न व्यावृत्तिरित्यर्थः। **अननुभूतार्थान्तरप्रतीतिहेतुत्वाभावेनेति**; अयं भावः—संस्काराणां साचिव्यं किं शब्दादर्थप्रतीतौ साक्षात्? उत सर्ववर्णविषयस्मृतिद्वारा,? नोभयथापि संस्कारस्य हेतुत्वं संभवति, शब्दार्थप्रत्ययस्य वर्णसंस्काराजन्यतया तत्प्रतीतौ न साचिव्यम्। नापि सर्ववर्णस्मृतिद्वारा, संस्काराणां स्वविषयमात्रस्मारकत्वेन समूहालम्बनस्मृत्यसंभवादिति। अत एवोत्तरत्र वक्ष्यति—**युगपत्कार्यकरत्वं युक्तमिति**। एकार्थावच्छिन्नवर्णसमुदायत्वलक्षणपदत्वपरित्यागेनैकविभक्त्यन्तानेकवर्णसमुदायस्य पदत्वाश्रयणादन्योन्याश्रयणं निरस्तमित्याह—**न चार्थैकत्वादिति**। **पदैकत्वादर्थैकत्वमिति**;

अनुगतप्रवृत्तिनिमित्तरूपार्थकल्पनस्यैकपदप्रयोगरूपप्रयोगानुगत्यधीनत्वादिति भावः। उक्तं च—"एकशब्दप्रवृत्तिनिमित्तत्वादेकसंस्थानत्वं नीलेन्दीवरत्वस्य; खण्डगोत्वं तु न तथा, एकशब्दाभावात्" इति। यद्वा घटव्यक्तीनां नानात्वेन स्वत ऐक्याभावाद्वाचकशब्दैक्य-निबन्धनमेव वाच्यैक्यमिति भावः। **अव्याप्तिर्न स्यादिति**; सुबन्तमात्रत्वस्य वा तिङन्त-मात्रत्वस्य वा पदत्वप्रयोजकत्वेऽव्याप्तिः स्यात्; विभक्तित्वेन द्वयोरप्येकीकरणे तु न तथेति भावः। केचित्तु—एकविभक्तीत्यत्र एकपदं व्यर्थम्, विभक्त्यन्तत्वमात्रस्यानतिप्रसक्तत्वात्; 'नीलो घटः' इत्यादिपदसमुदायस्य प्रत्ययग्रहणपरिभाषया विभक्त्यन्तत्वाभावात्। न हि समुदायात् विभक्त्युत्पत्तिः, अन्यथा "सुप्तिङन्तं पदम्" इति पदत्वस्यापि प्रसङ्गात्। समासावयवपदेष्वप्यन्तर्वर्तिनीं विभक्तिमाश्रित्य पदसंज्ञासंभवान्नाव्याप्तिरित्यर्थ इति वदन्ति। सैन्धवादिशब्दानामनेकार्थप्रतीत्युपयुक्तानां पदत्वं न स्यात्; अत आह—**एकव्युत्पत्ति-सिद्धेति**; तत्र चानेकार्थप्रतिपादकत्वं व्युत्पत्तिभेदेनेति भावः। अतश्च वाक्यस्यापि संसर्ग-लक्षणविशिष्टरूपैकार्थप्रत्यायकत्वेनातिप्रसङ्गः परिहृतः। वाक्यस्य विशिष्टरूपार्थप्रत्यायकत्व-माकाङ्क्षादिमत्पदसमभिव्याहारलभ्यं न व्युत्पत्तिलभ्यमिति द्रष्टव्यम्। **चाक्षुषत्वज्ञाने न चक्षुरपेक्षेति**; यथा चक्षुर्जन्यज्ञानविषयत्वलक्षणचाक्षुषत्वज्ञानं न चक्षुर्जन्यम्, एवं श्रोत्र-ग्राह्यत्वलक्षणशब्दत्वज्ञानं न श्रोत्रजन्यमित्यर्थः। **ज्ञानगोचरत्वेन चाक्षुषत्वश्रावणत्वादि-ज्ञानमिति**; ननु श्रावणत्वस्य चाक्षुषत्वस्थानाभिषिक्तत्वेऽपि न शब्दत्वं चाक्षुषत्वस्थानाभि-षिक्तम्; अपि तु रूपत्वस्थानाभिषिक्तम्; ततश्च यथा चाक्षुषत्वाद्रूपत्वं भिद्यते, एवं शब्दत्वं श्रोत्रग्राह्यत्वात् भिन्नं भवितुमर्हति; इतरथा 'शब्दः श्रावणः' इति पुनरुक्तिः स्यादिति चेत्—न; चाक्षुषत्वस्यैव रूपत्वस्वरूपत्वे घटादावपि रूपत्वप्रसङ्गेन रूपत्वस्य चाक्षुषत्वभिन्नत्वेऽपि शब्दत्वस्य श्रोत्रग्राह्यत्वरूपत्वे बाधकाभावात्। न च श्रोत्रग्राह्यत्वं कत्वादावतिप्रसक्तमिति वाच्यम्, श्रोत्रग्राह्यगुणत्वस्य शब्दत्वरूपत्वे बाधकाभावात्। केचित्तु—रूपत्वमपि चक्षुर्ग्राह्यगुणत्वमेवेति वर्णयन्ति। **व्युत्पन्नशब्दस्मरणपूर्वकमिति**; कत्वखत्वादेः श्रोत्रग्राह्यत्वलक्षणशब्दत्वव्याप्तिमवगतवतः पुंसो व्याप्तिस्मरणादिपूर्वकमेव शब्दत्वानुमितिरित्यर्थः।

## श्रुतप्रदीपिका

उदाहरणान्तरं प्रतिक्षिपति--**न चेति**। कत्वखत्वादयः क्रमोदात्तत्वादयो वाभिव्यञ्ज-

कगताः शब्दा आरोपिता अर्थधीहेतव इति स्फोटवादाभ्युपगमेऽपि नासत्यात् सत्यधीरित्यर्थः। कुत इत्यत्राह— **नानेति**। कत्वादिभिः क्रमोदात्तादिभिर्वा विशिष्टनादाभिव्यक्तशब्दोऽर्थधीहेतुरित्यर्थः। ऐकरूप्यं नेत्याह— **शब्दस्येति**। एवकार एकरूपशब्दव्युदासकः। एकरूपशब्दोपगमः किं बोधकत्वाय? उत व्यवहारानुगमाय? न प्रथमः, वर्णैरेव बोधोपपत्तेः। न द्वितीयः, श्रावणत्वोपाधिना तदनुगमसिद्धेरिति भावः। असत्यात् सत्यप्रतिपत्तिनिरासं निगमयति— **अत इति**।

**तत्त्वटीका**

अथैवं दृष्टेष्वगत्या वैयाकरणोक्तपुरस्कारिणं प्रत्याह— **न चेति**। **एकरूपस्य**; कत्वखत्वादिभिरुदात्तादिक्रमेण चोज्जृम्भितस्येत्यर्थः। **शब्दस्य**; स्फोटाख्यस्य। **नादविशेषण**; स्वरव्यञ्जनरूपवर्णभेदेनेति यावत्। अपिः अन्वारोहद्योतकः। अत्र व्यङ्ग्यव्यञ्जकतयोक्तयोर्नादस्फोटयोस्तदर्थसंबन्धस्य तद्ग्रहणस्य चासत्यत्वं दुर्वचम्, नादधर्माणां कत्वादीनां शब्देऽध्यासश्च नास्ति, तदभावेऽपि तादृशनादाभिव्यक्ततयैव तत्तद्बोधकसिद्धेरित्यभिप्रायेण प्रतिवक्ति— **नानेति**। वृत्तिकारोपज्ञं स्वमतमाह— **शब्दस्येति**। **अपिः** दूषणसमुच्चयार्थः। अत्र शाबरम्— "गौरित्यत्र कः शब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्षः" इति। वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्वं नाम*। तदिह पातञ्जलादिप्रोक्तं प्रामाणिकमिति न भ्रमितव्यम्; तेषां बाह्यप्रतिक्षेपार्थं वैभवोक्तेरपि स्यात्, युक्तिविरोधाच्च। स्फोटवादस्यानपेक्षत्वमाह— **गकारादेरिति**। अयं भावः— किमत्र वर्णातिरिक्तमेकरूपं वाचकं दृष्टत्वात् गृह्यते? बोधकान्यथानुपपत्त्या वा? 'शब्दः शब्दः' इत्यनुवृत्तव्यवहारसिद्ध्यर्थं वा? शास्त्राद्वा? नाद्यः; वर्णानामेव श्रोत्रेण गृह्यमाणत्वात्। अतिरिक्तमपि श्रवणेन गृह्यत इति धार्ष्ट्यादलीकवादः। 'शब्दादर्थं प्रतीमः' इत्येकवचनोक्तिस्तु वर्णसमुदायेऽपि स्यात्। न द्वितीयः; यादृशां वर्णानां प्रतिनियतस्फोटव्यञ्जकत्वमिष्यते तादृग्भिरेव तैर्नियतार्थधीसिद्धेः किमन्तर्गडुना स्फोटेन। क्रमयौगपद्यविकल्पानुपपत्तिश्च स्वेष्टेऽपि स्यात्। न तृतीयः; श्रोत्रग्राह्यत्वोपाधिना वर्णावर्णात्मकेषु सर्वेषु शब्दव्यवहारोपपत्तेः। न चतुर्थः; "स्फोटस्त्वं वर्णसंश्रयः" इत्यत्र स्फुटीकरणशक्तौ तात्पर्यादिति। एवं छायाद्यैः श्येनानुमानेऽपि न त्वदिष्टसिद्धिरित्यभिप्रायेण निगमयति— **अत इति**।

---

* केचिदत्र 'स्यान्नाम' इति पठन्ति। आन्ध्रलिपिस्थमातृकासु 'स्वं नाम' इत्यपि पठितुं शक्यते। स्वरसश्चायं पाठ इति स प्रवादतः।

श्रीभाष्यम्

ननु—न शास्त्रस्य गगनकुसुमवदसत्यत्वम्, प्रागद्वैतज्ञानात् सद्बुद्धिबोध्यत्वात्। उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य। न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः। यदोपायस्तदास्त्येव शास्त्रम्, अस्तीति बुद्धेः। नैवम्; असति शास्त्रे 'अस्ति शास्त्रम्' इति बुद्धेर्मिथ्यात्वात्। किं ततः? इदं ततः—मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम्; यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम्। पश्चात्तनबाधादर्शनं चासिद्धम्, "शून्यमेव तत्त्वम्" इति वाक्येन तस्यापि बाधदर्शनात्। तत्तु भ्रान्तिमूलमिति चेत्, एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम्। पाश्चात्त्यबाधादर्शनं तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेन।

श्रुतप्रकाशिका

सत्यप्रतिपत्तिहेतुषु सत्यतयाभिमतेषु यादृशं सत्यत्वं तादृशं सत्यत्वं शास्त्रस्याप्यस्तीत्यभिप्रायेण चोदयति—**नन्विति**। **गगनकुसुमवदिति**; युक्तिबाधो ह्युक्तः; न त्विदानीमेव लौकिकपुरुषैर्नास्तीति प्रतिपन्नत्वम्। अतस्तादृशमसत्यत्वं नेत्यर्थः। हेतुमाह—**सद्बुद्धिबोध्यत्वादिति**। सदिति बोध्यत्वमेव कार्यकरत्वानुगुणं सत्यत्वमित्यर्थः। तर्हि सदद्वैतभङ्गः स्यादित्यत्राह—**उत्पन्न इति**। तर्हि न बोधकत्वमित्यत्राह—**न तदेति**। परिहरति—**नैवमिति**। **नैवम्**; उपायकालेऽपि सत्यत्वं नास्तीत्यर्थः। ज्ञानस्य मिथ्यात्वं मिथ्यार्थविषयत्वात्। ज्ञानस्य दोषमूलत्वाद्विषयमिथ्यात्वे निदर्शनमाह—**यथेति**। पूर्वं पश्चात्तनबाधादर्शनमभ्युपेत्य दूषणमुक्तम्; इदानीं तदेव नास्तीत्याह—**पश्चादिति**। तदुपपादयति—**शून्यमिति**। तद्वाक्यं तत्प्रामाण्यमपि भ्रान्तिसिद्धमिति शङ्कते—**तत्त्विति**। तुल्यत्वमाह—**एतदपीति**। पाश्चात्त्यबाधादर्शनस्य प्रामाण्यहेतुत्ववचनं सर्वशू-

न्यवादिन एव साधकम् , ततः परं निषेध्याभावेन निषेधानुदयादित्याह––**पाश्चात्त्येति** । प्रामाण्यादीनां दोषमूलत्वं द्वयोरपि तुल्यम् ; पाश्चात्त्यबाधादर्शनं तु शून्यवादिनोऽधिकमित्यर्थः । सर्वशून्यवादिनोऽपरो निषेधोऽस्ति ; 'सर्वमस्ति' इति वचनं हि तन्निषेध इति चेत्, तर्हि प्रपञ्चमिथ्यात्ववचनस्यापि प्रपञ्चसत्यतावचनं निषेधः स्यात् । 'नास्ति' इति वचनमेव निषेध इति चेत्, तत्तु शून्यवादिन एवेति भावः । इदं च वेदाप्रामाण्यं मृषावादिनां सौगतानां च समानम् । यदाहुः—

" वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् ।
बोद्धानृतो बुद्धिफले तथानृते यूयं च बौद्धाश्च समानसंसदः ॥ "

इति । ननु विषयसत्यत्वरूपं शास्त्रप्रामाण्यं विद्यत इति महदिह वैषम्यमस्माकमिति चेत्––न ; किं कतिपयविषयसत्यत्वं विवक्षितम् ? उत कृत्स्नविषयसत्यत्वम् ? कतिपयविषयसत्यत्वं बुद्धागमस्याप्यस्ति, संवित्स्वयंप्रकाशत्वादेः संप्रतिपन्नत्वात् । कृत्स्नविषयसत्यत्वं तु श्रुतेरपि त्वया न स्वीकृतमिति । किंच विषयसत्यत्वं दुर्वचम् , सत्यतयाभ्युपेतस्य ब्रह्मणः प्रमाणविषयत्वानभ्युपगमात् । यत्तु––"आदित्यो यूपः" इत्यत्र यूपादित्यैक्याप्रतिपादनं तात्पर्यलिङ्गाभावात् , न तु प्रत्यक्षप्राबल्यादित्युच्यते, तत्र तात्पर्यलिङ्गाभावोऽभ्युपेत एव । तेन प्रत्यक्षविरुद्धार्थप्रतिपादनाक्षमत्वमवर्जनीयमापतति । न हि वेदान्तिभिरर्थवादादेरन्यपरत्वात्स्वार्थे प्रामाण्यं त्यज्यते, मन्त्रार्थवादानामपि स्वार्थे प्रामाण्यस्य भवद्भिरेवोपपादितत्वात् । अतः स्तुतिपरत्वाद्यूपादित्यैक्याप्रतिपादनमित्यपसिद्धान्तः । अर्थवादानां स्वार्थे तात्पर्यमस्ति चेत् कथं तद्यूपादित्यैक्याप्रतिपादनमिति चेत् ; उच्यते–प्रमाणाविरोधश्च तात्पर्यलिङ्गम् । उपक्रमोपसंहारादिष्वपूर्वत्वमपि तात्पर्यलिङ्गतया ह्युक्तम् "अभ्यासोऽपूर्वता फलम्" इति । अपूर्वत्वं च साधकबाधकप्रमाणागोचरत्वम् । यथाहुः––

" असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ।
ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा ॥ "

इति । अतः प्रमाणान्तरागोचरत्वलक्षणं तात्पर्यलिङ्गमत्र नास्तीति यूपादित्यैक्याप्रतिपादनम् , न त्वर्थवादत्वेन स्वार्थे प्रामाण्याभावादिति । अतस्तात्पर्यलिङ्गाभावो नाम प्रत्यक्षादिविरोधे

पर्यवसित इति शास्त्रं न तद्विरुद्धार्थप्रतिपादनक्षमम्। शास्त्रप्राबल्यनिरसनं परिसमापयति— **अलमिति**। यद्वा यत्तु प्रत्यक्षमित्यादिना न्यायमुखेन कृतं परपक्षप्रतिक्षेपमुपसंहरति— **अलमिति**। प्रमाणविरुद्धस्तर्कः कुतर्कः; तत एवाप्रतिष्ठितत्वम्! स्वविरुद्धबौद्धमतोपयुक्त-युक्तिकथनात्परिहसनीयत्वम्। परेण प्रत्यक्षादपि शास्त्रस्य प्राबल्यं वदता प्रबलतयाभिमतं शास्त्रं पुरस्कृत्य पश्चात्तर्कः प्रतिपादितः। सिद्धान्ते तु प्रबलतयाभिमतलौकिकप्रमाणगतिं प्रथमं निरूप्य परोक्तदुस्तर्कं निरस्य लौकिकप्रमाणविरोधे शास्त्रप्राबल्यं च प्रतिक्षिप्तम्।

### भावप्रकाशिका

**सत्यप्रतिपत्तिहेतुष्विति**; प्रपञ्चसत्यत्ववादिमत इति शेषः; न तु स्वमतानुसा-रेण, स्वमते सत्यप्रतिपत्तिहेतोर्वेदान्तातिरिक्तस्य कस्याप्यभावादिति द्रष्टव्यम्। भाष्ये— **मिथ्याभूतशास्त्रजन्यज्ञानस्येति**; असति शास्त्रे 'अस्ति शास्त्रम्' इति भ्रान्तिजन्यायाः प्रतीतेर्भ्रान्तित्वावश्यंभावादित्यर्थः। पूर्वग्रन्थे 'अस्ति शास्त्रम्' इति बुद्धेर्भ्रान्तित्वस्योप-पादितत्वात्; इतरथा पूर्वोत्तरग्रन्थयोरुपपाद्योपपादकभावाभावात् पूर्वग्रन्थवैयर्थ्यमेव स्यात्, **मिथ्याभूतशास्त्रजन्यज्ञानस्येत्यादि**नैव चारितार्थ्यादिति द्रष्टव्यम्। **स्तुतिपरत्वाद्यूपादि-त्यैक्याप्रतिपादनमित्यपसिद्धान्त इति**; ननु-स्तुतितात्पर्यपरस्य तत्रापि तात्पर्ये वाक्यभे-दप्रसङ्गात् अतोऽतत्परत्वात् "आदित्यो यूपः" इत्यादेर्न प्रत्यक्षबाधकत्वम्। न चैवं देवताविग्रहादेरपि सिद्धिर्न स्यात्, तात्पर्याभावादिति शङ्कनीयम्; असति मानान्तरविरो-धे तात्पर्याभावेऽपि प्रामाण्यं प्रतीयमानार्थे उपपद्यते। देवताविग्रहादौ मानान्तरविरोधाभा-वात् तात्पर्याविषयस्य विग्रहादेः सिद्धावपि यूपादित्यैक्यस्थले मानान्तरविरुद्धस्य तस्य तात्पर्याभावेन सिद्धिः। प्रपञ्चमिथ्यात्वस्थले षड्विधतात्पर्यलिङ्गसत्त्वान्न प्रत्यक्षविरोधाद्भयमिति हि तत्सिद्धान्त इति चेत्—न; स्तुतिपरस्यार्थवादस्य स्तुतिद्वारभूतार्थेऽवान्तरतात्पर्येऽपि वाक्यभेदाभावात्। इतरथा देवताविग्रहादेरप्यसिद्धिप्रसङ्गात्। तात्पर्यविषय एव वेदानां प्रामाण्यमिति सर्वैरपि वैदिकैरभ्युपेतत्वाच्च स्तुतिपरत्वान्न यूपादित्यैक्यप्रतिपादनमित्ययु-क्तमेव। अपि तु मानान्तरविरोधेन यूपादित्यैक्यतात्पर्यासंभवात् न यूपादित्यै-क्यमित्येव परमा गतिः। ततश्च प्रपञ्चमिथ्यात्वेऽपि मानान्तरविरोधान्न तात्पर्यमिति सिद्धमिति भावः। **असंनिकृष्टेति** श्लोकस्यायमर्थः—"शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे"

इति शास्त्रलक्षणे असंनिकृष्ट पदेन द्वयं व्यावर्त्यतयाभिप्रेतम्—ताद्रूप्येण परिच्छित्तिः; तद्विपर्ययतः परिच्छित्तिश्च; साधकबाधकप्रमाणाभाव इति यावत्। **प्रमाणान्तरागोचरत्वलक्षणमिति**; प्रमाणान्तराबाधितत्वमित्यर्थः। **इत्यलमप्रतिष्ठितेति** भाष्ये इतिशब्दस्य संनिहितशास्त्रप्राबल्यनिरासपरत्वमुचितमित्यभिप्रयन्नाह—**शास्त्रप्राबल्यनिरसनमिति**। **कुतर्केति** तर्कशब्दस्वारस्यमभिप्रयन्नाह—**यत्तु प्रत्यक्षमिति**।

## श्रुतप्रदीपिका

अथ सत्यत्वमुखेन चोदयति—**नन्विति**। तर्हि सत्यत्वमित्यत्राह—**उत्पन्न इति**। तर्हि न बोधकत्वमित्यत्राह—**न तदेति**। दूषयति—**नैवमिति**। उपपादयति—**असतीत्यादिना**। प्रागुपेत्योक्तम्; इदानीं नेत्याह—**पश्चादिति**। धीसत्यत्वमेव तद्बाधश्चेत्प्रपञ्चसत्यत्ववचनं तवापि बाधः। नञर्थोल्लिखितं वचनमेव बाधश्चेत्, तन्माध्यमिकस्यैवेत्यर्थः।

## तत्वटीका

अथ खपुष्पवन्नित्याप्रतीतत्वलक्षणमसत्यत्वं शास्त्रे नास्ति; अतः सत्यधीहेतुत्वं स्यादिति शङ्कते—**नन्विति**। कादाचित्कधीविषयतया तुच्छधीव्यावृत्तिं व्यनक्ति—**प्रागिति**। असत्यस्य कथं सद्बुद्धिबोध्यत्वम्? तत्सत्यत्वे वा कथं सदद्वैतमित्यत्राह—**उत्पन्न इति**। पूर्वं सद्बुद्ध्या सत्यत्वं, पश्चाद्बाधकादसत्यत्वं चेत्यविरोध इति भावः। तर्ह्यसत्यस्य कथं धीहेतुत्वमित्यत्रोत्तरावस्थायामिष्टप्रसङ्गत्वं तावदाह—**न तदेति**। पूर्वावस्थायां तु प्रसञ्जकासिद्धिमाह—**यदेति**। अत्रास्त्येवेत्युक्तौ स्वमतविरोधमाह—**नैवमिति**। अयं भावः—

यदि पूर्वं सतः पश्चादसत्त्वमभिसंहितम्।
असत्यत्वमिहोक्तं स्यान्न मिथ्यात्वादिसंभवः॥ ५२७॥

पूर्वधीमात्रतः सत्त्वमसत्त्वं बाधकं हि चेत्।
बाधात्पश्चादिव प्रागप्यसत्त्वात्कार्यकृन्न तत्॥ ५२८॥

कस्यचिद्बाधितं वस्तु यदान्येषामबाधितम्।
सत्त्वासत्त्वविरोधोऽपि तदा ते संपतेदिति॥ ५२९॥

लिङ्गविभ्रमादिन्यायेनोपपादयति—**असतीति** । बुद्धेर्मिथ्यात्वमिह स्वमते विषयतः, परमते स्वरूपतोऽपि । इष्टोपन्यासोऽयमित्यभिप्रायेण चोदयति—**किं तत इति** । अनिष्टमेव प्रसञ्जितमित्याह—**इदमिति** । तदिष्टप्रक्रियया विवृणोति—**मिथ्येति** । लोकदृष्ट्यापि स्थापयति—**यथेति** । सन्मात्रस्य बाधादर्शनमन्वारुह्य प्रागुक्तम् ; अथ तदपि नेत्याह—**पश्चात्तनेति** । असिद्धिं माध्यमिकोक्त्या व्यनक्ति—**शून्यमिति** । नन्विदं भ्रान्तिमूलं बुद्धवाक्यं नित्यनिर्दोषानन्यपरवेदोक्तस्य कथं बाधकमिति शङ्कते—**तत्त्विति** । त्वदुक्तयुक्त्यैव वेदान्तोऽपि न कस्यचित्साधको बाधको वा स्यादिति प्रतिबन्द्यभिप्रायेणाह—**एतदपीति**।

भ्रान्तिमूलेन वाक्येन धीसत्यत्वं यदीष्यते ।
तन्मिथ्यात्वादिकं तद्वदिष्यतामिति चाशयः ॥ ५३० ॥

एवकारस्तु वक्तव्यनैरपेक्ष्यार्थः । अन्येऽप्याहुः—

" वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् ।
बोद्धानृतो बुद्धिफले तथानृते यूयं च बौद्धाश्च समानसंसदः ॥ "

इति । त्वदुक्त्या न केवलं बाह्यसमीकारः, तस्याधिक्यमेव फलतीत्याह—**पाश्चात्त्येति** । 'सर्वं नास्ति' इत्येतदपि न सुवचमिति चेत्, तदा 'धीव्यतिरिक्तं नास्ति' इत्येतदपि नेति वक्तुं शक्यम् । अत्रानवस्थयापि परमतमात्रस्य बाधकप्रयोजकत्ववद्.........मेवो.........मूल्येत्युपात्तेन चुलकमात्रेण दोग्धी.........ङ्दितं दर्शित इत्यभिप्रायेण विरमति—**इत्यलमिति** । स्ववचनविरोधादिभिरप्रतिष्ठितत्वम् । उपजीव्य विरोधात्कुतर्कत्वम् ।

---

**इति जिज्ञासाधिकरणे प्रागद्वैतज्ञानाच्छास्त्रसत्यत्वदूषणम् ।**

---

